[illegible] ( [illegible] ) पुण्यं स्मारकं–

श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः परीक्षोपयोगि-प्रसूनं–

महाकवि-श्रीकालिदास-प्रणीतम्—

# अभिज्ञान-शाकुन्तलं

## नाम नाटकम् ।

परीक्षोपयोगिन्या, सरलया–

'अभिनवराजलक्ष्मी' समाख्यया संस्कृतटीकया,

विस्तृतया भाषाटीकया, दाक्षिणात्यपाठेन च विराजितम् ।


संस्कृतटीकाकाराः—

**श्रीगुरुप्रसादशास्त्रिणः ।**

व्याकरणाचार्याः, न्यायाचार्याः, दर्शनाचार्याः ।

[ अध्यक्षाः—श्रीराजस्थान-संस्कृत-कालेज, मीरघाट, बनारस ] ।

भाषाटीकादिपरिष्कारकारकः—

आचार्य-श्रीसीतारामशास्त्री, व्याकरणाचार्यः साहित्यरत्नं, राजशास्त्री,

प्रिन्सिपल-सेठ राधाकृष्णपोद्दार-संस्कृत-विद्यालय, रामगढ़ (जयपुर) ।



प्रकाशक—भार्गवपुस्तकालय, गायघाट, बनारस १.

( ब्राञ्च–कचौड़ीगली, बनारस ) ।

सं० २००८ तृतीयं संस्करणम् } मुद्रणाऽधिकारः प्रकाशकायत्तः । { मूल्यं ६)

1935

छप गया ! परीक्षोपयोगी नया संस्करण छप गया !!

काशी की नयी राजकीय नियमावली के अनुसार परीक्षा में पाठ्य

# नागानन्दनाटक

परीक्षोपयोगी, सरल, 'अभिनवराजलक्ष्मी' टीका और 'कलभाषिणी' भाषाटीका-सहित

टीकाकार—काशी के सुप्रसिद्ध विद्वान्

**पं० श्रीगुरुप्रसादशास्त्री**

व्याकरणाचार्य, न्यायाचार्य, दर्शनाचार्य,

अध्यक्ष—श्री राजस्थान संस्कृत कालेज, मीरघाट, काशी।

विद्वद्वृन्द !

नागानन्द नाटक के परीक्षोपयोगी सर्वगुणसम्पन्न, अति सरल संस्करण की परीक्षार्थी छात्रों को बड़ी आवश्यकता थी। अतएव बिना गुरु की सहायता के भी जिसकी सहायता से छात्रगण स्वयमेव अर्थ, भावार्थ आदि समझ सकें—ऐसी टीका की कमी को दूर करने के लिये यह दो टीकाओं के साथ नवीन संस्करण निकाला गया है।

इसमें एक-एक शब्द के आवश्यकतानुसार अनेक पर्याय देकर पदार्थ अच्छी तरह समझा कर लिखे गये हैं। पर्यायशब्द भी साधारण संस्कृत की योग्यता रखने वालों के हितार्थ—सरल ही रखे गये हैं। साथ में पाठान्तर भी दिये गये हैं। अतः यह संस्करण परीक्षार्थी छात्रों के लिए बड़ा ही उपादेय हो गया है। एक प्रति मँगाकर अवश्य अपने पास रखनी चाहिए। कागज की कमी के कारण थोड़ी ही प्रतियाँ छपी हैं। जल्दी मँगा लें, नहीं तो पीछे द्वितीय संस्करण की प्रतीक्षा करनी पड़ेगी। मूल्य ३)

---

प्रथमपरीक्षोपयोगी

# रामवनगमन—विदुलोपाख्यान

अभिनवराजलक्ष्मी नामक अत्युत्तम टीका तथा भाषाटीका सहित

छात्रों के विशेष आग्रह से छपकर तैयार हो गया है।

रामवनगमन १।।) विदुलोपाख्यान ।।।)

---

प्रकाशक—भार्गवपुस्तकालय, गायघाट, बनारस १.

[ ब्राञ्च-कचौड़ीगली, बनारस ]।

# विज्ञप्तिः

नाटकस्याऽस्य प्रणेता महाकविः श्रीकालिदासो विक्रमार्कस्य सभायामदभ्रं शारदावैभवं विस्तारयन्नासीत्।

तेन वत्सराणां द्विसाहस्री ( २००० वर्षाणि ) समतीताऽस्य जन्मत आरभ्याऽद्य यावदिति प्रसिद्धमेतत्।

## काचन कल्पना।

अत्र नाटके वर्णितः—'काश्यपाश्रम' इदानीं 'काशीपुर'-(नैनीताल) नाम्ना प्रसिद्धः स्यात्। अप्सरस्तीर्थञ्च—'हापुड' ( मेरठ- ) नाम्नाऽद्य प्रसिद्धं स्यात्। शक्रावतारतीर्थञ्च—'सूकरताल' नाम्ना वा ('सोरों-एटा' प्रान्ते ) इदानीं प्रसिद्धं स्यात्। 'हापुड़' समीपे वा तीर्थान्तरं स्यात्।

राज्ञश्च दुष्यन्तस्य हस्तिनापुरं—( 'गढमुक्तेश्वर'-'गजरौला'-'परीक्षितपुर' ) पर्यन्तं विस्तृतं प्रसिद्धं निवासस्थानं राजधानी स्यात्।

किंपुरुषवर्षश्च—इदानीं 'रूस' इति प्रसिद्धः स्यात्। साइबेरिया-प्रान्ते, काश्यपसागरे वा मारीचाश्रमः स्यादिति। देवनिवासश्च 'उत्तरध्रुव'प्रान्ते स्यात्—इत्यादि रीत्या केषांचन कल्पना।

केचित्तु सहारनपुरसमीपे मालिनी नदी, कण्वाश्रमश्चास्तीति प्रतिपादयन्ति।

अस्मिन्त्संस्करणे दाक्षिणात्यपाठोऽपि परिशिष्टतया निवेशितश्छात्राणामुपकाराय प्रभवेदिति स्वर्ण-सौरभयोग एवायम्। अद्य यावदेकत्र संस्करणे गौड-दाक्षिणात्यपाठानां समन्वयस्याऽभावादिदमेवोभययोगि संस्करणं सर्वातिशायीति चेति—

काशी, १-११-५१

—श्रीगुरुप्रसादशास्त्रिणः।
आचार्य-श्रीसीतारामशास्त्री च।

# अथ
# अभिज्ञानशाकुन्तलम् ।

अभिनवराजलक्ष्मी–भाषाटीकाद्वयाऽलङ्कृतम् ।

या सृष्टिः स्रष्टुराद्या, वहति विधिहुतं या हविर्या च होत्री,

॥ श्रीः ॥

* श्रीगुरुप्रसादशास्त्रिकृता अभिनव-राजलक्ष्मीः *

श्चोतन्मदभरोदग्रकरं करिवराननम् ।
गुञ्जदिन्दिन्दिरोद्गीताऽवदानं ढुण्ढिमाश्रये ॥ १ ॥
नमो विद्वच्छिरोभूषारत्नाय न्यायवार्द्धये ।
पितामहाय गुरवे स्नेहिरामजिशास्त्रिणे ॥ २ ॥

अथ—

'धर्माऽर्थ-काम-मोक्षेषु वैचक्षण्यं, कलासु च ।
करोति, कीर्त्तिं प्रीतिं च, साधु काव्यनिषेवणम् ॥'—

—इति भामहोक्तेर्विद्वद्भिः साधुकाव्यं निषेवणीयम् । तच्च द्विधा ।
तदुक्तं साहित्यदर्पणे—

'दृश्य-श्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।
दृश्यं तत्राभिनेयं, तद्रूपारोपात्तु रूपकम् ॥
भवेदभिनयोऽवस्थानुकारः, स चतुर्विधः ।

आचार्य—

श्रीसीतारामशास्त्रिपरिष्कृता अभिज्ञानशाकुन्तलभाषाटीका

अर्थ—जो मूर्त्ति विधाता-ब्रह्माजी की पहिली सृष्टि है, ( –अर्थात् जल, )

आङ्गिको, वाचिकश्चैवमाहार्यः, सात्त्विकस्तथा ॥' इति ।

तत्र—दृश्यं = नाट्यम् । तदुक्तं दशरूपके—

'अवस्थाऽनुकृतिर्नाट्यम्' इति ।

अग्निपुराणेऽपि—

'त्रिवर्गसाधनं नाट्यम्' इति ।

रसार्णवसुधाकरेऽपि—

'शृङ्गारादिरसाधारं नाट्यं रूपकमित्यपि ।
नटस्यातिप्रवीणस्य कर्मत्वान्नाट्यमुच्यते ॥
यथा मुखादौ पद्मादेरारोपो रूपकप्रथा ।
तथैव नायकारोपो नटे रूपकमुच्यते ॥'—इति ॥

तदेवंरूपे नाटके समुपनिबद्धं वृत्तं-'वस्तु' इत्युच्यते ।

तत्र—नाटकलक्षणमुक्तं साहित्यदर्पणे—

'नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम् ।
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥
सुख-दुःखसमुद्भूति, नानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्याऽदिव्यो वा गुणवान्नायको मतः ॥
एक एव भवेदङ्गी शृङ्गारो, वीर एव वा ।
अङ्गमन्ये रसाः सर्वे, कार्यो निर्वहणेऽद्भुतः ॥
चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः ।
गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्तितम् ॥'—इति ॥

तदेवंरूपस्य नाटकस्य—पूर्वमाचरणीयः पूर्वरङ्गः ।

तथा च भारतः—

'यस्माद्रङ्गप्रयोगोऽयं पूर्वमेव प्रयोज्यते ।
तस्मादयं पूर्वरङ्गः—' ॥ इति । [ ५ अध्याये ]

विश्वनाथोऽपि—

"यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।

ये द्वे कालं विधत्तः, श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।

कुशीलवाः प्रकुर्वन्ति 'पूर्वरङ्गः' स उच्यते ॥
प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।
तथाप्यवश्यं कर्त्तव्या 'नान्दी' विघ्नोपशान्तये ॥"

इत्युक्त्याऽवश्यमाचरणीयाम्,—

'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।
देव-द्विज-नृपादीनां तस्मान् 'नान्दी' ति सञ्ज्ञिता ॥' इति—
'आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः ।
'नान्दी' ति कथ्यते'—इति,
'सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः ।
नान्दी पदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृता ॥'

—इति च भरतादिभिर्व्याकृतस्वरूपां, मङ्गलाचरणात्मिकां—

'श्लोकपादः 'पदं' केचित्सुप्तिङन्तमथाऽपरे ।
परेऽवान्तरवाक्यैकस्वरूपं 'पद'मूचिरे ॥'

—इति नाट्यप्रदीपकृत्संमतावान्तरवाक्यात्मकाष्टपदभूषितां सकलानन्दिनीं पूर्वरङ्गाङ्गभूतां—'नान्दीं' नाटकादौ सूत्रधारः पठति—या सृष्टिरिति । [१ पृष्ठे] ।

[ अन्वयः ] या—स्रष्टुराद्या सृष्टिः, या—विधिहुतं हविर्वहति, या च—होत्री, ये द्वे—कालं विधत्तः, श्रुतिविषयगुणा या—विश्वं व्याप्य स्थिता, याम्—'सर्वबीजप्रकृति' रित्याहुः, यया—प्राणिनः प्राणवन्तः, प्रत्यक्षाभिः ताभिरष्टाभिस्तनुभिः प्रपन्न ईशः—वः अवतु ।

[ अर्थः ] या=तनुः, स्रष्टुः—वेधसः । 'स्रष्टा प्रजापतिर्वेधाः' इत्यमरः । आद्या=प्रथमा, सृष्टिः=सर्गः । ब्रह्मणा सर्वतः प्रथमं रचिता । जलमयी मूर्त्तिरिति यावत् । तथा च मनुः—

'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ, तासु बीजमवासृजत् ॥' इति ।

और जो मूर्त्ति विधिपूर्वक हवन की हुई हवि=घृत आदि की आहुति को देवताओं तक पहुँचाती है, ( अर्थात् अग्नि ), और जो मूर्त्ति हवन करने वाली है, ( अर्थात् यजमानरूपी मूर्त्ति ), और जो दो मूर्त्तियाँ काल=समय का विधान

यामाहुः 'सर्वबीजप्रकृति'रिति, यया प्राणिनः प्राणवन्तः,

या च = तनुः, विधानं—विधिः, विधिना हुतं=कल्पसूत्र-गृह्यसूत्रादिबोधितेतिकर्त्तव्यतापूर्वकं समुपक्षिप्तं, हविः = हवनीयं घृतादिकं, वहति = देवान् प्रापयति। वह्निमयी मूर्त्तिरिति यावत्।

वह्नेर्हविर्नेतृत्वं च मनुस्मृतौ—

'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं, ततः प्रजाः॥' इति।

—"अग्निमुखा हि देवाः" इति च।

अत एव कोशे देवनामसु—'बर्हिर्मुखा' इति नाम दृश्यते। तत्र बर्हिः = अग्निः।

या च = अपरा तनुः—जुहोतीति,—होत्री = हवनकर्तृत्वेन निर्दिष्टा। यजमानरूपा भगवतो विश्वेश्वरस्य तनुः।

ये द्वे = तनू, कालं = सौर-सावन-चान्द्रमासादिकं, विधत्तः = कुरुतः। सूर्यरूपा चन्द्ररूपा च भगवतस्तनुः कालविधातृत्वेन प्रसिद्धैव।

या च तनुः—श्रुतेर्विषयो गुणो यस्याः सा—श्रुतिविषयगुणा = श्रोत्रेन्द्रियग्राह्यशब्दाख्यविशेषगुणशालिनी, विश्वं=जगत्, व्याप्य = अवष्टभ्य, स्थिता = वर्त्तते। आकाशाख्या भगवतो मूर्त्तिरिति यावत्। 'आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः' इति विश्वनाथः। 'श्रोत्रेन्द्रियग्राह्यो गुणः शब्दः' इति च।

'श्रुतिः श्रोत्रे तथाऽऽम्नाये' इति विश्वः।

किञ्च–यां=तनुं, सर्वाणि बीजानि सर्वबीजानि, सर्वबीजानां प्रकृतिः—सर्वबीजप्रकृतिः = सर्वविधसस्याद्यङ्कुरयोनिः। "बीजन्तु रेतसि। स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे" इति हैमः। "प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गे" इति मेदिनी। इत्याहुः = इति लोका वदन्ति। पृथिवीरूपा हि तनुः सर्वाङ्कुरकारणभूता लोके विदितैव।

करने वाली हैं, ( अर्थात् सूर्य और चन्द्र रूपी शङ्कर भगवान् की दो मूर्त्तियाँ ), और जो मूर्त्ति शब्द गुण वाली है, और विश्व को व्याप्त करके भी अवस्थित है, ( अर्थात् आकाश रूपी मूर्त्ति ), और जो मूर्त्ति संपूर्ण बीजोंकी उत्पन्न करनेवाली

**प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ १ ॥**

यया च = मूर्त्या, प्राणिनः = शरीरिणः, प्राणवन्तः = चैतन्यभाजः, जीवन्ति। वायुरूपा भगवतो मूर्त्तिः प्राणापानादिभिर्जगदिदमुद्बिभर्त्ति, प्राणयति चेति स्पष्टमेव ।

"प्राणोऽहन्मारुते बोले काव्ये जीवेऽनिले बले" इति विश्वः । "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" इत्यमरः। "प्राणोऽपानः समानश्चोदानव्यानौ च वायवः" इत्यमरः ।

ताभिः = एताभिः पूर्वोक्ताभिः, अष्टाभिः = जल-वह्नि-यजमान-सूर्य-चन्द्र-गगन-धरणि-पवमानाख्याभिः, प्रत्यक्षाभिः [ प्रत्यक्षमुपलभ्यमानाभिः ], तनुभिः = प्रत्यक्षात्मकज्ञानविषयीभूताभिर्मूर्त्तिभिः, प्रपन्नः = युक्तः, ईशः = शम्भुः—

वः = युष्मान्, सभासदः, अवतु = रक्षतु, अभीष्टसिद्धिं वितरतु ।

वायोस्त्वगिन्द्रियेण प्रत्यक्षं, शब्दरूपविशेषगुणस्य श्रोत्रेन्द्रियेण प्रत्यक्षं, तदाश्रयस्य च गगनस्यौपचारिकं प्रत्यक्षं बोध्यम्। अत एवैकतारं नभो न पश्येदित्यादयः प्रयोगाः प्रामाणिकानां सुष्ठूपपद्यन्ते, विशेषणप्रत्यक्षेण विशेष्य प्रत्यक्षाभ्युपगमात् ।

[ भावार्थः ]—जलरूपया, पावकरूपया, यजमानरूपया, चन्द्ररूपया, सूर्यरूपया, गगनरूपया, धरणीरूपया, वायुरूपया च मूर्त्या युक्तोऽष्टमूर्त्तिः प्रत्यक्ष-मनुभूयमानमाहात्म्यातिशयो भगवान् शिवः सभ्यान्, नटादींश्च अवतु—शुभोदयेन योजयतु, भद्रं वितरतु च सर्वेभ्यः।

---

है, (अर्थात् पृथिवी), और जिस मूर्त्ति से प्राणी मात्र अनुप्राणित जीवित होते हैं, ( अर्थात् वायु रूपी मूर्त्ति ), इस प्रकार प्रत्यक्ष सिद्ध आठ मूर्त्तियों से युक्त भगवान् श्री शङ्कर आप सभासद लोगों की रक्षा करें ।

भावार्थ—देवताओं के भी देवता भगवान् श्रीशङ्कर की लोक प्रसिद्ध आठ मूर्त्तियाँ(विभूति) हैं। अर्थात् भगवान् के आठ प्रकारके शरीर हैं । जिनके नाम हैं—१ जल, २ अग्नि, ३ यजमान ( यज्ञकर्त्ता ), ४ सूर्य, ५ चन्द्रमा, ६ आकाश,

---

१. 'प्रसन्नः' इति पाठान्तरम् । तत्र-अष्टाभिर्मूर्तिभिरुपलक्षितः, प्रसन्नः=भक्त-जनोपरि कृतप्रसादः, ईशः-अवतु-इत्यर्थः ।

अत्र यथा—'एकतारं नभो न पश्येत्' इत्यादिवाक्यानां—गगनस्य साक्षाद्दर्शनाऽसम्भवेऽपि गुणप्रत्यक्षेण गुणिप्रत्यक्षमाश्रित्यौपचारिकतयोपपादनं क्रियते, एवमेवात्रापि गगनस्य शब्दप्रत्यक्षेण प्रत्यक्षव्यवहार औपचारिक इति सूचनाय—श्रोत्रेन्द्रियग्राह्यशब्दगुणवत्त्वं नभसि विशेषणमुपादीयते। एवञ्च शब्दस्य प्रत्यक्षज्ञानसत्त्वान्नभसोऽपि प्रत्यक्षत्वमुपचर्यते इति—साधु सूचितम्।

अनेनैव श्लोकेनैतन्नाटकप्रतिपाद्यो विषयोऽपि सूचनीयः।

तथा च विश्वनाथः—

'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः' इति।

स चेत्थं—

( १ ) या स्रष्टुराद्या सृष्टिः = शकुन्तला, सौन्दर्यातिशयशालित्वात्। ( २ ) या च—विधिहुतं = गर्भाधानादिविधिना निहितं, हविः = लक्षणया—, दुष्यन्तबीजं,–वहति = धत्ते। तेनास्या गर्भावस्था सूचिता। ( ३ ) या च होत्री = कण्वो मुनिः। ( ४ ) ये द्वे = सख्यौ, कालं = शापावसानकालं, विधत्तः = जानीतः। एतेनानुसूया–प्रियंवदे सख्यौ निर्दिष्टे। ( ५ ) श्रुतिविषयो गुणानाम् अयः = शुभावहो विधिर्यस्याः सा–'श्रुतिविषयगुणाऽया'। एतेन—शकुन्तलाऽऽगमनं,तत्तिरोधानं च सूचितम्। विषयो देशोऽपि, तेन–श्रुतो–विषयैः = विषयवास्तव्यैर्लोकैर्गुणानामयः—शुभावहो विधिर्यस्याः–सेत्येवमपि तस्या दुष्यन्तराष्ट्रागमनं सूच्यते। ( ६ ) व्याप्य विश्वं = सकलं विलङ्घ्य स्थितेति सुदूरकश्यपाश्रमनिवासः सूच्यते। ( ७ ) 'यामाहुः सर्वबीजप्रकृति' रित्यनेन–नामैकदेशे नामग्रहणात्सर्वदमनाख्यबीजस्य योनिरुत्पत्तिकारणमित्यर्थलाभात्–सर्वदमनः कुमारः, तदुत्पत्तिर्वा सूच्यते। ( ८ ) 'यया प्राणिनः = प्रजाः, प्राणवन्तः = प्रहृष्टा' इत्यनेन शकुन्तला-सर्वदमन-दुष्यन्तानां पुनः स्वराज्ये प्रत्यागमनम्। ईशः = राजा दुष्यन्त इत्थमष्टाभिर्विभूतिभिः, प्रपन्नः = युक्तः, अष्टलोकपालांशत्वादष्टाभिः-

---

७ पृथिवी ८ वायु। ये आठों मूर्त्तियाँ (भगवान् के आठों स्वरूप) जगत् प्रसिद्ध हैं, और प्राणिमात्र को इनका अनुभव प्रत्यक्ष होता है। इन आठों मूर्त्तियों से विराजमान होने कारण ही भगवान् श्रीशिवजी का नाम 'अष्टमूर्त्ति' लोक में प्रसिद्ध है। जैसे अमर कोश में लिखा है—'अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः।'

( नान्द्यन्ते— )

तनुभिः=कलाभिः प्रपन्न इति वाऽर्थः । स्वराज्यम्-अवत्विति नाटकोक्तोऽर्थो-ऽपि सूचितः ।

इत्थमपि नाऽत्र नान्दीत्वहानिः ।

—"स्तुतिर्यस्मात्प्रयुज्यते ।

देव-द्विजनृपादीनां तस्मान्नान्दीति सञ्ज्ञिता'-इति नृपस्तुतेरपि तत्र परिगणितत्वात् ।

'पत्त्रावली' नामिका चेयं नान्दी । तदुक्तं नाट्यदर्पणे—

'यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः ।

श्लेषेण वा, समासोक्त्या नान्दी पत्त्रावली तु सा ॥'—इति ।

अत्र च्छेकवृत्तिश्रुत्यनुप्रासाः, पर्यायोक्तञ्च ॥ १ ॥

नान्द्यन्त इति । 'या सृष्टि'रित्यादिश्लोकरूपनान्दीपाठानन्तरमित्यर्थः । पद्यस्याऽस्याऽवान्तराष्टवाक्यघटिततयाऽऽशीर्वचनसंयुक्तशिवस्तुत्यात्मकतया च नान्दीत्वं स्पष्टमेव । तदुक्तं—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।

देव-द्विज-नृपादीनां तस्मान्नान्दीति सञ्ज्ञिता ॥"

मङ्गल्य-शङ्ख-चन्द्रा-ऽब्ज-कोक-कैरव-शंसिनी ।

पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥' इति [ साहि० ६ प० ] ।

इत्थञ्च प्रकृते 'ये द्वे कालं विधत्तः' इतिरीत्या चन्द्रनिर्देशान्नान्दीव्यवहारे बाधकाऽभावः ।

किञ्च—सृष्टिमात्र का संचालन भी इन आठ मूर्त्तियों से ( आठ तत्त्वों से ) ही होता है। ये आठ मूर्त्तियाँ—पृथिवी, जल, तेज, वायु, आकाश, काल (=[1]सूर्य), आत्मा (=यजमान) और मन (=[2]चन्द्रमा ) ही हैं । और सृष्टि के ये ही मुख्य तत्त्व भी हैं ॥ १ ॥

( नान्दी=मङ्गलाचरण—श्लोक–के पाठ के अन्त में— )

१ 'कालो हि भगवान् सूर्यः' इत्युक्तेः । २ 'चन्द्रमा मनसो जातः इत्युक्तेः । कार्यकारणयोश्चाऽभेदः प्रसिद्ध एव ।

केचित्तु—'या सृष्टिः स्रष्टु'रित्यादिपद्यं 'रङ्गद्वार'मेव, न तु नान्दी। तदुक्तं भरतनाट्यशास्त्रे—

'यस्मादभिनयो ह्यत्र प्राथम्यादवतार्यते।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्' ॥ इति।

'नान्दी' तु रङ्गद्वारात्पूर्वमेव नटैरेव क्रियते।

अत एव नाट्यशास्त्रे—

'नान्दी, शुष्कावकृष्टा च, रङ्गद्वारं तथैव च।
चारी चैव ततः कार्या महाचारी तथैव च ॥' इत्यादिना रङ्गद्वारात्पूर्वमेव 'नान्दी' परिगणिता। इत्थञ्च 'या सृष्टि'रित्यादि मङ्गलं-रङ्गद्वाराख्यं पूर्वरङ्गस्याङ्गं, नान्दी तु—इतो रङ्गद्वारात्पूर्वमेव नटैः सम्भूयैव बहिः कृता, ग्रन्थे च नोपनिबद्धे"ति प्राहुः।

तन्मते—नान्द्यन्ते = नटकृतनान्दीपाठसमाप्त्यनन्तरं, सूत्रधारः,—'या सृष्टिः स्रष्टुराद्ये'ति मङ्गलश्लोकं रङ्गद्वाराख्यं पूर्वरङ्गाऽङ्गभूतं—पपाठेति योजनीयम्।

इत्थञ्च केचित्–'या सृष्टि' रिति पद्यं 'नान्दीं मन्यन्ते, केचिच्च 'रङ्गद्वार'-मिति सङ्क्षेपः।

अस्य श्लोकस्य नान्दीत्वमिति पक्षे—

नान्द्यन्ते = 'नान्दी'पाठानन्तरं, सूत्रधारः = नटमण्डलपतिः।—'रङ्गाद्बहिर्निर्गतः' इति शेषः। तदुच्यते—

"पूर्वरङ्गं विधायैव सूत्रधारो[1] निवर्त्तते ॥" इति।

सूत्रधारलक्षणं तु मातृगुप्ताचार्या आहुः—

"चतुरातोद्यनिष्णातोऽनेकभूषासमावृतः।
नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥
नानागतिप्रचारज्ञो रसभावविशारदः।
नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः ॥

---

१. 'नाट्योपकरणादीनि 'सूत्र'मित्यभिधीयते।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥

**सूत्रधारः**—अलमतिविस्तरेण । ( नेपथ्याभिमुखमवलोक्य— ) आर्ये ! यदि नेपथ्यविधानमवसितं, [1]तदिहाऽऽगम्यताम् ।

---

छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः ।
तत्तद्गीतानुगलयकलातालावधारणः ॥
अवधाय प्रयोक्ता च योक्तृणामुपदेशकः ।
एवंगुणगणोपेतः—सूत्रधारोऽभिधीयते" ॥ इति ॥

सूत्रधारः = सूत्रधारतुल्यः 'स्थापक'नामा नटोपाध्यक्षः । इत्थमाहेत्येवं योजनीयम् ।

तदुक्तं—

'प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्ततः' ॥ इति

[ साहित्यदर्पणे ६ प० ]

अलमिति । अतिविस्तरेण = प्रपञ्चेन, अलम् = नास्ति किमपि प्रयोजनम् । एकं श्लोकं पठित्वैव विरम्यतेऽस्माभिरित्यर्थः । 'विस्तारो विग्रहो व्यासः, स च शब्दस्य विस्तरः' इत्यमरः ।

नेपथ्येति । कविवाक्यमेतत् । नेपथ्यं = यवनिका [ 'पर्दा' इति भाषा ] । तस्याभिमुखं नेपथ्याभिमुखं = नेपथ्यं प्रति । रूपपरिवर्तनगृहं प्रतीत्यप्यर्थः । 'नेपथ्यं स्याद्यवनिका रङ्गभूमिः प्रसाधन' मिति कोशात् ।

'आर्ये ! प्रिये' । 'पत्नी चार्येति संभाष्या' इति भरतः ।

विश्वनाथोऽपि—

'वाच्यौ नटी-सूत्रधारावार्यनाम्ना परस्परम्' इति ।

नेपथ्यस्य विधानं नेपथ्यविधानं = वेषरचना । 'रामादिव्यञ्जको वेशो नटे नेपथ्यमुच्यते' इति नाट्यशास्त्रम् ।

---

सूत्रधार—अब और ज्यादा विस्तार की आवश्यकता नहीं है । ( नेपथ्य= पर्दे पीछे स्थित नटशाला—की ओर देखता हुआ— ) प्रिये ! यदि नाटकोचित वेश—परिवर्त्तन ( रूप बदलना, बनाव श्रृङ्गार आदि आवश्यक कार्य ) तुमारा समाप्त हो चुका हो तो यहाँ आना ।

---



१ 'इतस्तावदागम्यताम्' । पाठान्तरम् ।

**नटी**—( प्रविश्य ) [1]अज्ज, इअम्हि, आणवेदु अज्जो को णिओओ अणुचिट्ठीअदुत्ति ।

[ [1]आर्य! इयमस्मि, [2]आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति]।

**सूत्रधारः**—[3]आर्ये ! इयं हि रस-[4]भाव-विशेष-दीक्षागुरोर्विक्रमा-

---

'गृहमात्रे गणिकायाः सद्मानि वेशो भवेत्तु तालव्यः ।
तालव्यो मूर्धन्योऽलङ्करणे कथित आचार्यैः' इत्यूष्मविवेकश्च ।

यदि अवसितं=यदि सम्पूर्णं जातम्, तत्=तर्हि, इह=रङ्गशालायां [ 'स्टेज' इति 'थियेटरहाल' इति च प्रसिद्धे ] ।

आर्य !=हे प्रिय !। 'वाच्यौ नटीसूत्रधारावार्यनाम्ने'त्युक्तेः स्थापकनाम्नो नटस्य सम्बोधनमेतत् । इयमस्मि=इयमहं भवन्नियोगादुपस्थिताऽस्मि । [ एवञ्च नेपथ्यविधानमवसितमित्यर्थादवसेयम् ] । आज्ञापयतु=निर्दिशतु भवान् । को नियोगः ?=कः खल्वादेशः । अनुष्ठीयताम्=मया अनुष्ठेयः । कर्त्तव्यः । मया किं करणीयमित्यर्थः ।

'रङ्गं प्रसाद्य[2] मधुरैः श्लोकैः काव्यार्थसूचकैः ।
रूपकस्य, कवेराख्यां, गोत्राद्यपि स कीर्त्तयेत् ॥
ऋतुं च कञ्चित्प्रायेण 'भारतीं' वृत्तिमाश्रितः ।'
[ साहित्यदर्पणे ६ प० ]

—इत्युक्तेः-नाटकस्य कवेश्च नाम निर्दिशन्,—

'भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः ।
तस्याः प्ररोचना वीथी तथा प्रहसना-ऽऽमुखे ॥
अङ्गानि,—अथोन्मुखीकारः प्रशंसातः प्ररोचना ॥'—}

---

**नटी**—( रङ्गशाला में प्रविष्ट हो ) आर्यपुत्र! ( हे प्राणनाथ! ) मैं उपस्थित हूँ, कहिए, आपकी किस आज्ञा का मैं पालन करूं ? ।

**सूत्रधार**—प्रिये ! रस ( श्रृङ्गार आदि ) और भाव ( = रति आदि

---

१ अज्जउत्त । [ आर्यपुत्र ] । २ अयं पाठः क्वचिन्नास्ति ।
३ 'आर्ये ! अभि[illegible] ४ 'प्रसाध्य' ।

ऽऽदित्यस्य अभिरूपभूयिष्ठा परिषत्। अस्याञ्च खलु कालिदासग्रथित-वस्तुनाऽभिज्ञानशाकुन्तलनामधेयेन[1] नवेन नाटकेनोपस्थातव्यमस्माभिः, तत्प्रतिपात्रमाधीयतां यत्नः।

—इत्युक्तस्वरूपां भारतीवृत्त्यङ्गभूतां प्ररोचनामारचयति—

आर्ये इति। आर्ये != श्रेष्ठे !

रसाश्च भावाश्च रसभावाः, तेषां विशेषाः रस-भावविशेषाः, तेषां दीक्षा-दायको गुरुः—रस-भावविशेषदीक्षागुरुस्तस्य रस-भावविशेषदीक्षागुरोः=शृङ्गा-रादिरस-देवादिविषयकरत्यादिभाव-प्रभेदप्रवर्त्तकस्य। महाकवेरित्यर्थः।

रस-भावविवेकश्च साहित्यदर्पणे—

"विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।
रसतामेति रत्यादिः स्थायीभावः सचेतसाम्॥" इति,—

"सञ्चारिणः प्रधानानि, देवादिविषया रतिः।
उद्बुद्धमात्रः स्थायी च 'भाव' इत्यभिधीयते॥" इति च।

अभिरूपा भूयिष्ठा यस्यां सा—अभिरूपभूयिष्ठा=पण्डितप्रचुरा। विद्वत्सङ्कु-लेत्यर्थः। चेतश्चमत्कारकारिणी वा। "अभिरूपो-बुधमनोज्ञयो"—रित्यमरः। परिषत्=राजसभा। एतावता सभ्यप्रशंसोपन्यस्ता।

अस्याञ्च=एवंप्रसिद्धायां, विद्वत्प्रचुरायां राजसभायाञ्च। कालिदासेन ग्रथितं वस्तु यस्मिन् तेन—कालिदासग्रथितवस्तुना=कालिदासगुम्फितकथाभागशालिना, नवेन=प्रत्यग्ररचितेन, अभूतपूर्वेण वा, अभिज्ञानशाकुन्तलनामधेयेन=अभिज्ञान-शाकुन्तलाख्येन। अभिज्ञायतेऽस्मिन् तदभिज्ञानं, शकुन्तलामधिकृत्य कृतं शाकुन्तलं, अभिज्ञानं च तत्—शाकुन्तलं च—अभिज्ञानशाकुन्तलम्, उपचारान्नाटकमपि

स्थायी भाव, देव गुरु आदि विषयक रति आदि ) के दीक्षा गुरु=प्रधानवेत्ता और मर्मज्ञ महाराज विक्रमादित्य की विद्वानों से परिपूर्ण यह परिषद् ( सभा ) है। इस विद्वत्परिषत् के सामने हम लोगों को ( महाकवि ) कालिदास के बनाए हुए 'अभिज्ञान शाकुन्तल' नामक नवीन नाटक का खेल दिखाना है। अतः

[1] 'शाकुन्तल'।

**नटी**—सुविहिदप्पओअदाए अज्जस्स ण किं वि परिहाइस्सदि ।
[ सुविहितप्रयोगतयाऽऽर्यस्य न किमपि [1]परिहास्यते ] ।

**सूत्रधारः**—( सस्मितम् ) आर्ये ! कथयामि ते भूतार्थम्—

आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥२॥

---

तथा । नाटकेन = रूपकभेदेन, उपस्थातव्यम् = अभिनेतव्यम् । तत् = तस्मात्, पात्रं पात्रं प्रतीति–प्रतिपात्रं = प्रतिनटम्, यत्नः = प्रत्यवेक्षणम् । आधीयतां = क्रियताम् ।

एवं विधायाः परिषदो रञ्जने प्रवृत्तैरस्माभिः परमवहितैर्भाव्यमित्याशयः । 'पात्रं–नाट्यानुकर्तरी'ति हैमः । एतावता—नाटकस्य, कवेश्च नामादि समुपन्यस्तं वेदितव्यम् ।

सुविहितः प्रयोगो येन, तस्य भावस्तया–सुविहितप्रयोगतया = बहुशः कृतनाटकाभिनयतया, निपुणस्य, आर्यस्य=भवतः [1]परिहास्यते=त्रुटितं भविष्यति । सर्वेषां नटानां, भवतश्चाभ्यासनैपुण्येन सर्वं शोभनमेवेदं भवेदिति नट्याः सम्भावनमेतत् ।

**सस्मितमिति** । आत्मप्रशंसयाऽत्र स्मयः । भूतार्थम् = तत्त्वम् । "भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः" इति विश्वः । कथयामि=निर्दिशामि ।

---

प्रत्येक पात्र ( नाटक के खेलनेवाले नटों ) को बड़ी सावधानी से कार्य करना होगा। अर्थात् पात्रों को पूरी तरह से तैयार करना, कोई त्रुटि न होने पावे, क्योंकि बड़े २ विद्वानों के सामने महाराज विक्रमादित्य की सभा में नाटक खेलना है ।

**नटी**—आप (तथा आपकी मण्डली) नाटक खेलने में अत्यन्त निपुण व सिद्धहस्त हैं, अतः किसी प्रकार की त्रुटि होने का भय है ही नहीं ।

**सूत्रधार**—(थोडा हंसकर) आर्ये ! मैं तुमसे सच (असली) बात कहता हूँ—

---

१ परिहापयिष्यते इति 'परिहायिष्यते' इति च पाठे णिजन्तस्य शुद्धस्य च कर्मणि रूपं बोध्यम् ।

**नटी**—( सविनयम् ) अज्ज, एवं णेदम्। [1]अणन्तकरणिज्जं दाणीं अज्जो आणवेदु।

[ [1]आर्य ! एवमेतत्[2], अनन्तरकरणीयमिदानीमार्य आज्ञापयतु ]।

**सूत्रधारः**—आर्ये ! किमन्यदस्याः परिषदः [3]श्रुतिप्रमोदहेतोर्गीतात्करणीयमस्ति ?।

---

भूतार्थमेवाह—**आ परितोषादिति**। आ परितोषात् = सहृदयप्रीतिं यावत्, प्रयोगस्य विशिष्टं ज्ञानं=प्रयोगविज्ञानम्=अभिनयकौशलं, न साधु मन्ये = न शोभनं मन्ये। यतः—बलवदपि = दृढतरमपि, शिक्षितानां = कृताभ्यासानाम्, विदुषामपि, आत्मनि = स्वात्मनि, चेतः = चित्तम्, अप्रत्ययम् = अविश्वासि। भवतीति शेषः।

अत्र विद्वांस एव सत्प्रयोगपरिचयकौशलं ज्ञास्यन्तीति हृदि निहितो भावः।

[ अत्रोत्तरार्द्धेन–'बलवदपी'त्यादिना–पूर्वार्द्धोपात्तविशेषार्थस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः। पूर्वार्द्धे च गम्यस्य—'पण्डितैरेव विज्ञेयमस्मन्नाटककौशल'-मित्यस्यार्थस्य स्फुटं प्रतिपादनात्पर्यायोक्तमलङ्कारः ]॥ २॥

**एवमेतदिति**। यथा भवानाह तथैव तत्। सत्यमिदमित्यर्थः। अनन्तरं करणीयमनन्तरकरणीयम् = किमग्रे विधेयमिति।

**किमन्यदिति**। अस्याः परिषदः श्रुतिप्रमोदहेतोः = कर्णानन्ददायिनः,

---

जब तक विद्वानों को हमारे खेल से सन्तोष न हो, तब तक अपनी प्रयोग-कुशलता को मैं ठीक नहीं समझता हूँ। क्योंकि—मनुष्य कितना भी शिक्षित और कुशल क्यों न हो, पर जब तक कार्य समुचित रूप से पूर्ण न हो जाए तब तक उसे अपनी कुशलता में सन्देह ही बना रहता है॥ २॥

**नटी**—आर्य ! आप बिलकुल ठीक कहते हैं। अच्छा, अब आगे क्या कर्त्तव्य है, आज्ञा करें।

**सूत्रधार**—प्रिये ! इस सभा के अनुरञ्जन के लिए श्रुतिमधुरगान से बढ़कर इस समय और क्या कार्य हो सकता है ?। अतः तुम मधुरगान करो।

---

१ क्वचिन्न। २ 'एवमिदं' पा०। ३ 'श्रुतिप्रसादनतः।

**नटी—** [1]अथ कदमं उण उदुं अधिकरिअ गाइस्सं ?।

[ अथ कतमं पुनर्ऋतुमधिकृत्य गास्यामि ? ]।

**सूत्रधारः—** आर्ये ! नन्विममेव[2] तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम् ।

सम्प्रति हि—

**सुभगसलिलावगाहाः पाटलसंसर्गि[3]-सुरभिवनवाताः ।**
**प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ ३ ॥**

---

गीतात् = गानात्, अन्यत् = अतिरिक्तं, न किमपि करणीयमस्तीति सम्बन्धः।

कतममिति । षण्णामृतूनां मध्ये कमृतुमधिकृत्य मया गानमाचरणीयमिति प्रश्नाशयः।

अचिरप्रवृत्तम् = इदानीमेव प्रादुर्भूतम् । अभिनवप्रवृत्तमिति यावत् । क्षमते इति क्षमः, उपभोगस्य क्षम उपभोगक्षमः—तं = सम्भोगसहं, ग्रीष्मस्य समयः, ग्रीष्मसमयः, तं—ग्रीष्मकालम्, अधिकृत्य = विषयीकृत्य ।

ग्रीष्मकालस्योपभोगसहत्वञ्च–जलक्रीडा–पुष्पावचय–धारागृहशयन–कुञ्जकेलिकमनीयतयाऽवधार्यताम् ।

"ऋतुं च कञ्चित्प्रायेण" त्युक्तेर्ऋतुवर्णनेन अचेतनप्रशंसां कुर्वन् ग्रीष्मदिवसानां सुभगतामाह—**सम्प्रति हीति** । ग्रीष्मकाले इत्यर्थः । सुभगः=प्रियतरः,मनोहरः सलिलेषु अवगाहो येषु ते—सुभगसलिलावगाहाः=जलक्रीडामनोहराः। पाटलस्य ( 'गुलाब' इत्याख्यातस्य ) पुष्पभेदस्य संसर्गोऽस्त्येषां ते–पाटलसंसर्गिणः, अत एव–सुरभयो वनवाता येषु ते–पाटलसंसर्गिसुरभिवनवाताः =

---

**नटी—**ठीक है, पर कहिए किस ऋतु का मैं गीत गाऊँ ?।

**सूत्रधार—**प्रिये ! थोड़े ही समय से प्रवृत्त हुए उपभोग क्षम इस ग्रीष्मऋतु के प्रसङ्ग में ही कुछ गीत गाओ । इस ग्रीष्म समय में–सायंकाल का समय बड़ाही सुहावना होता है, और इसमें सुन्दर २ जलाशयों में स्नान करने में बड़ा आनन्द

---

१ तमिममेव' । २ अयं पाठः क्वचिन्नास्ति । ३ 'संसर्ग' ।

नटी—तह [ तथा ]

( —इति गायति )।

ईसीसि चुम्बिआइं भमरेहिं [उअ³] सुउमारकेसरसिहाइं।
ओदंसयन्ति दअमाणा पमदाओ सिरीसकुसुमाइं॥ ४॥

[¹ईषदीषच्चुम्बितानि भ्रमरैः (पश्य²) ³सुकुमारकेसरशिखानि।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि॥ ४॥]

---

पाटलप्रसूनपरिमलसुरभिकाननमारुताः, प्रकृष्टा च्छाया येषु ते—प्रच्छायाः—तेषु सुलभा निद्रा येषु ते—प्रच्छायसुलभनिद्राः=निकुञ्जादिप्रदेशसुलभस्वापाः। परिणामे रमणीयाः—परिणामरमणीयाः = अवसानमनोहराः। दिवसाः = वासराः-सन्तीत्यर्थः। एतेन—ग्रीष्मसमयस्योपभोगक्षमत्वं सूचितम्। अत्र च परिकराऽलङ्कारः, स्वभावोक्तिश्च॥ ३॥

तथेति। यथाज्ञापयत्यार्यस्तथाऽनुतिष्ठामि, इति = इत्यभिधाय।

ईषदीषदिति। पश्य-सुकुमारकेसरशिखानि, ईषदीषत् भ्रमरैः चुम्बितानि, शिरीषकुसुमानि, दयमानाः = सप्रणयाः प्रमदा अवतंसयन्तीत्यन्वयः।

सुकुमाराः केसराणां शिखा येषान्तानि—सुकुमारकेसरशिखानि = मृदुकिञ्जल्ककलितानि, अत एव भ्रमरैः = रोलम्बैः, ईषदीषत् = मुहुर्मुहुः, अल्पमल्पं, चुम्बितानि = परामृष्टानि, [ आस्वादितानि, ]। भ्रमरैर्मुहुरनुगम्यमानानी'ति यावत्। शिरीषाणां कुसुमानि,—शिरीषकुसुमानि = शिरीषपुष्पाणि, दयमानाः = कुसुमकिञ्जल्कभङ्गो मा भूदिति दत्तावधानाः। अतएव कृपापराः, प्रमदाः =

---

आता है, उद्यान, उपवन, एवं वनों में गुलाब की सुगन्धि से सुरभित पवन बहता रहता है, और कुञ्जों की शीतल छाया में सोने में इन दिनों बड़ा ही आनन्द आता है॥३॥

नटी—ठीक है, जो आज्ञा। ( गाती है—)

देखो—भ्रमर जिनपर गुञ्जान करते हुए मंडरा रहे हैं, और धीरे २ जिनका रसपान कर रहे हैं, जिनके केसर ( पतली नखुडियाँ ) और अग्रभाग बड़े ही सुकुमार हैं,

---

१ 'ईषच्चुम्बितानि'। 'क्षणं चुम्बितानि'। २ क्वाचित्कः पाठः।

३ 'सुकुमारतर'।

**सूत्रधारः**—आर्ये ! साधु गीतम् ? अहो !! [1]रागापहृतचित्तवृत्तिरालिखित इव [2]विभाति सर्वतो रङ्गः !!!, तदिदानीं [3]कतमं प्रयोगमाश्रित्यैनमाराधयामः ? ।

---

यौवनावतारसुभगा मदविह्वला युवतयः, अवतंसयन्ति=कर्णाभरणतां नयन्तीत्यर्थः । 'शिरीषस्तु कपीतनः । भण्डिलोऽपी' त्यमरः ।

ग्रीष्मे शिरीषकुसुमोद्गमः प्रसिद्धः । तदुक्तं काव्यानुशासने—

'विकासकारी नवमल्लिकानां, दलच्छिरीषप्रसवाऽभिरामः ।
पुष्पप्रदः काञ्चनकेतकीनां, ग्रीष्मोऽयमुल्लासितधातकीकः ॥'

—इति [ १३३ पृष्ठे ]

अत्र—'प्रमदा' इत्यनेन सखीसहिता शकुन्तलाऽपि सूच्यते, तस्याः शिरीषकुसुमभूषणवत्त्वस्याग्रे—"कृतं न कर्णार्पितबन्धनं सखे ! शिरीषमागण्डविलम्बिकेसरम्" इति वक्ष्यमाणत्वात् । [ अ० ६ श्लो० ३० ] ।

अत्र च—सुकुमारकेसरशिखावत्त्वं 'दयमाना अवतंसयन्ती'त्यत्र हेतुरिति पदार्थहेतुकः काव्यलिङ्गालङ्कारः ।

साधु = सुन्दरं, लयतालादिललितं, गीतं = गानं कृतं । रागेणापहृता चित्तवृत्तिर्यस्यासौ—रागापहृतचित्तवृत्तिः =गीतस्वराकृष्टचित्तवृत्तिः, गानरसलीनः, अत एव—चित्रे लिखितः—चित्रलिखित इव = चित्रार्पित इव निश्चेष्टः, सर्वतः = सर्वः, प्रथमार्थे तसिल्, सर्वासु दिक्षिवति वा, रङ्गः = नाट्यभूमिस्थो लोकः,

---

ऐसे शिरीष ( सिरस के ) पुष्पों को दयालु सुन्दरी प्रमदाए शनैः २ ( कोमल अंगुलियों से पकड़ कर ) अलङ्कार रूप से अपने शरीर पर धारण करती हैं ॥ ४ ॥

**सूत्रधार**—आर्ये ! बड़ा सुन्दर गीत तुमने गाया । अहा ! तुम्हारे रागरागिणी युक्त इस मनोहर गीत से आकृष्ट चित्त होकर यह रङ्गस्थलवर्त्ती दर्शकसमाज चित्रलिखित सा निस्तब्ध मालूम हो रहा है । अच्छा, तो कहो—अब इस विद्वत्सभा के सामने कौन से नाटक का प्रयोग ( खेल ) दिखाकर इसे अनुरञ्जित करना चाहिए ? ।

---

१ 'रागबद्ध' । 'रागनिविष्ट' । २ क्वाचित्कः पाठः । ३ कतमत्प्रकरणं ।

**नटी**—णं [1]अज्जमिस्सेहि पढमं एव्व आणत्तं-अहिण्णाणसाउन्दलं णाम अउव्वं णाडअं अहिणीअदुत्ति[2]।

[नन्वार्यमिश्रैः प्रथममेवाज्ञप्तमभिज्ञानशाकुन्तलं नामाऽपूर्वं नाटकमभिनीयतामिति ]।

**सूत्रधारः**—आर्ये! सम्यगनुबोधितोऽस्मि, [ननु[3]] अस्मिन्क्षणे[4] विस्मृतं खलु मयैतत्[5]।

कुतः—

---

'तात्स्थ्यात्ताच्छब्द्यम्'। 'रङ्गो नाट्ये-रणक्षिता'विति मेदिनी। प्रयोगं=नाटकाभिनयं। 'कर्मणां च विधौ चापि प्रयोगः' इति केशवः। एतं=रङ्गस्थितं लोकम्। आराधयामः=प्रीणयामः। प्रसादयाम इति यावत्।

नन्विति। अनुनयेऽत्र'ननुः'। "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु"-इत्यमरः। आज्ञप्तम्=आदिष्टम्, अपूर्वम् = अभिनवं, सर्वातिशायि च।

अनुबोधितः=स्मारितः, अस्मिन् क्षणे=अस्मिन् प्रवर्त्तमाने महोत्सवे, "निर्व्यापारस्थितौ कालविशेषोत्सवयोः-क्षणः' इत्यमरः। एतत्= 'केन प्रयोगेणाऽनुरञ्जनीयो रङ्ग' इति।

---

**नटी**—अभी तो आपने आज्ञा की थी कि—'अभिज्ञानशाकुन्तल नाटक का अभिनय किया जाए'।

**सूत्रधार**—प्रिये! तुमने ठीक याद दिलाया। इस समय मैं उस बात को भूल ही गया था। क्योंकि—

तुम्हारे इस मनोहर गीत के राग से हठात् बेसुध हो मैं इस बात को इसी

---

१ 'णं पढमं जेव्व अज्जेण आणत्तं'। [ननु प्रथममेवार्येणाज्ञप्तं]।

२ 'अधिकरीयदुत्ति' [अधिक्रियतामिति]।

३ क्वाचित्कः पाठोऽयम्। ४ 'अस्मिन्क्षणे खलु'। ५ 'मया'।

तवाऽस्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणाऽतिरंहसा ॥ ५ ॥

( इति निष्क्रान्तौ ) ॥

प्रस्तावना ।

---

तवेति । गीतस्य रागः-गीतारागस्तेन गीतरागेण = गानरागेण । 'रागः' श्रीरागादिः प्रसिद्ध एव । हारिणा = मनोहरणशीलेन, प्रसभं = सहसा, हृतः = अपहृतचित्तवृत्तिः, रहोऽतिक्रान्तस्तेन–अतिरंहसा, = अतिवेगवता, 'रंहस्तरसी तु रयः स्यदः' इत्यमरः । 'चातके हरिणे पुंसि सारङ्गः' इति चामरः । हारिणा–मनोहरेण, हृतः = दूरतरमानीतः-इति योजनीयम् ।

इति = इत्युक्त्वा, निष्क्रान्तौ = रङ्गान्निर्गतौ । नटीसूत्रधारौ इति शेषः ।

प्रस्तावना = 'आमुख'नामकं भारतीवृत्तेरङ्गम् । 'समाप्त' मिति शेषः ।

प्रस्तावना च—

'नटी, विदूषको वाऽपि, पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताऽऽक्षेपिभिर्मिथः ।
'आमुखं' तत्तु विज्ञेयं नाम्ना, प्रस्तावनाऽपि सा ॥'

—इति [ साहित्यदर्पणे ६ परि ३२ कारि० ]

---

प्रकार भूल गया था, जैसे अति वेगवान् हरिण के पीछे रथ को दौड़ाता हुआ यह राजा दुष्यन्त सब कुछ भूल रहा है ॥ ५ ॥

भावार्थ—तुम्हारे मनोहर गीत के राग ने मेरा चित्त सहसा उसी प्रकार हर लिया जैसे वेगवान् हरिण ने इस राजा दुष्यन्त को हर लिया है—आकृष्ट कर लिया है । इस प्रकार सूत्रधार ने राजा दुष्यन्त का प्रवेश सूचित किया ॥ ५ ॥

( दोनों जाते हैं ) ।

प्रस्तावना—यह प्रस्तावना हुई । क्योंकि सूत्रधार के साथ नटी या विदू-

---

१ 'दुष्मन्तः' ।

( [1]ततः प्रविशति रथारूढः सशरचापहस्तो मृगमनुसरन् राजा, सूतश्च )।

---

तत्र—

"उद्घातकः कथोद्घातः, प्रयोगातिशयस्तथा।
प्रवर्त्तका-ऽवलगिते पञ्च प्रस्तावनाभिदाः॥"—

—इत्युक्तेरवलगिताख्या अत्र प्रस्तावना ज्ञेया।

तदुक्तं—

'यत्रैकत्र [2]समावेशात्कार्यमन्यत् प्रसाध्यते।
प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः॥'

रसार्णवसुधाकरेऽपि—

'द्विधाऽवलगितं प्रोक्तमर्थावलगनात्मकम्।
अन्यप्रसङ्गादन्यस्य संसिद्धिः प्रकृतस्य च॥' इति।

धनिकस्तु—

'एषोऽय'मित्युपक्षेपात्सूत्रधारप्रयोगतः।
पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः॥'

—यथा—'एष राजेव दुष्यन्तः' इति वदन् प्रयोगातिशयाख्यामिमां प्रस्तावनां मनुते।

निष्क्रान्ताविति। 'एषामन्यतमेनार्थं, पात्रं वाऽऽक्षिप्य सूत्रभृत्।
प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत्॥'

—इति दशरूपकोक्तो नटीसूत्रधारयोर्निर्गमोऽत्रोपनिबद्धः।

प्रस्तावनालक्षणं च रसार्णवसुधाकरे—

'विधेर्यथैव सङ्कल्पो मुखतां प्रतिपद्यते।

---

धक आदि इधर-उधर की बातें करते हुए, जहाँ प्रकृत विषय की सूचना दें, नाटक में वह 'प्रस्तावना' कहलाती है।

[ रथ पर चढ़े हुए, धनुषबाण चढ़ाए हुए, हरिण का पीछा करते हुए राजा दुष्यन्त और सूत ( सारथि ) का प्रवेश ]।

---

१ 'ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा, रथेन सूतश्च'।

२ समावेशः = सादृश्यानुसन्धानम्।

प्रधानस्य प्रबन्धस्य तदा प्रस्तावना मता ।।' इति ।
'अर्थस्य प्रतिपाद्यस्य तीर्थं प्रस्तावनोच्यते' । इति च ।

दशरूपकेऽपि—

'सूत्रधारो नटीं ब्रूते, मार्षं वापि, विदूषकम् ।
स्वकार्यं प्रस्तुताऽऽक्षेपि चित्रोक्त्या यत्तदामुखम् ।। प्रस्तावना' इति।

प्रकृते च—सूत्रधारेण नटीं प्रति प्रस्तुताक्षेपकं स्वकार्यं प्रोक्तमिति प्रस्तावना स्पष्टैव ।

'ततो वस्तु प्रपञ्चये'दित्युक्तेर्वस्तु=कथाभागं, प्रपञ्चयति-तत इति। वस्तुविन्यासप्रकारश्च दर्पण-दशरूपकयोः—

'अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ।
आरम्भ-यत्न-प्राप्त्याशा-नियताऽऽप्ति-फलागमाः ।।
बीज-बिन्दु-पताकाख्य-प्रकरी-कार्यलक्षणाः ।
अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः ।।
यथासङ्ख्येन जायन्ते मुखाद्याः पञ्च सन्धयः ।
मुखं, प्रतिमुखं, गर्भः, सविमर्शोऽथ संहृतिः ।।' इति ।

तत्र सन्धिसामान्यलक्षणं दशरूपके—

'अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ।' इति ।

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः—सन्धिरिति तदर्थः । प्रकृते च-'ततः प्रविशती'त्यारभ्य—"उभौ परिक्रम्योपविष्टौ" इत्येतद्द्वितीयाङ्कार्द्धभागपर्यन्तं मुखसन्धिः प्रथमः ।

"मुखं बीज-समुत्पत्तिर्नानार्थरससंश्रया ।
अङ्गानि द्वादशैतस्य 'बीजारम्भ'-समन्वयात् ।।
उपक्षेपः, परिकरः, परिन्यासो, विलोभनम् ।
युक्तिः, प्राप्तिः, समाधानं, विधानं, परिभावना ।।
उद्भेद-भेद-करणान्यन्वर्थानि"—॥ इति ॥

तत्रारम्भरूपकार्यावस्थाया लक्षणं—भरतनाट्यशास्त्रे—

"औत्सुक्यमात्रबन्धस्तु यो बीजस्य निबध्यते ।
महतः फलयोगस्य स खल्वारम्भ इष्यते ।।" इति ।

सूतः—( राजानं, मृगं चावलोक्य— ) आयुष्मन् !—

यथाऽत्र—राजा—"भवतु तां द्रक्ष्यामि" इति राज्ञ औत्सुक्यं दर्शितम्। } एवं "शकुन्तला—कधं इमं जणं पेक्खिअ"—इत्यादिना शकुन्तलाया औत्सुक्यमप्युपनिबद्धम्।

बीजलक्षणं तु नाट्यशास्त्रे—

"अल्पमात्रं समुद्दिष्टं बहुधा यत्प्रसर्पति।
फलावसानं यच्चैव 'बीजं' तदभिधीयते ॥" इति।

तच्चाऽत्र शकुन्तलादुष्यन्तयोरनुरागात्मकं बीजं बोध्यम्।

ततः = सूत्रधारनिर्गमनानन्तरं, रथमारूढो—रथारूढः=रथोपविष्टः, शरेण सहितः-सशरः—चापो हस्ते यस्यासौ सशर-चाप-हस्तः, = अधिज्यधन्वा। [ समारोपितबाणं धनुर्दधानः ]। मृगमनुसरन् = हरिणमनुगच्छन्, राजा = दुष्यन्तः, सूतः=सारथिश्च प्रविशतीति—कविवाक्यमेतत्

{दुष्यन्तो राजा धीरोदात्तो नायकोऽतोऽस्य, सूतस्य च संस्कृतमेव पाठ्यम्।}

तथा च भरतः—

"धीरोद्धतेऽथ ललिते धीरोदात्ते तथैव च।
धीरप्रशान्ते च तथा पाठ्यं योज्यञ्च संस्कृतम् ॥"—इति।

तथा मातृगुप्ताचार्याश्च—

"संमतानां देवतानां राजन्याऽमात्यसैनिके।
वणिङ्मागधसूतानां पाठ्यं योज्यं तु संस्कृतम् ॥"-इत्याहुः।

धीरोदात्तता चास्य दुष्यन्तस्य—

"अविकत्थनः, क्षमावानतिगम्भीरो, महासत्त्वः।
स्थेयान्निगूढमानो धीरदात्तो दृढव्रतः कथितः ॥"

—इति दर्पणोक्तलक्षणसङ्गतेर्ज्ञेया।

आयुष्मन्निति। 'आयुष्मन्निति वाच्यस्तु रथी सूतेन सर्वदे' ति भरतोक्तेरायुष्मन्निति राज्ञः संबोधनम्।

आयुष्मन् ! = जैवातृक ! 'जैवातृकः स्यादायुष्मा'नित्यमरः।

सूत—( राजा की ओर तथा मृग की ओर देखकर ) आयुष्मन् ! इस काले

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके ।
मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम् ॥६॥

कृष्णसार इति । कृष्णसारे=पुरो धावमाने हरिणविशेषे, ज्यामधिगतम्-अधिज्यम्, अधिज्यं कार्मुकं यस्य, तस्मिन्-अधिज्यकार्मुके=अध्यारोपितगुणशालिधनुर्दधाने,त्वयि च=दुष्यन्ते च, चक्षुः=लोचनं, ददत्=अहं निक्षिपन्, मृगमनुसरति—तच्छीलस्तं—मृगानुसारिणं = मृगरूपधरं-दक्षप्रजापतियज्ञमनुसरन्तं, साक्षात्पिनाकिनमिव=साक्षाद्धनुष्पाणिं भगवन्तं शिवमिव, भवन्तं पश्यामि=विभावयामि । तर्कयामि । 'पिनाकोऽजगवं धनु' रित्यमरः । दक्षयज्ञविध्वंसवेलायां पिनाकपाणिं हरं दृष्ट्वा यज्ञो मृगरूपमास्थाय पलायाञ्चक्रे, तञ्च शिवोऽनुससारेति—पुराणकथाविदः । इत्थञ्च राज्ञोऽपि मृगानुसारिणः शिवेनौपम्यं घटत एव ।

यद्वा—

"प्रजानाथं नाथ ! प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥"

—इति पुष्पदन्तोपन्यस्तो ब्रह्मरुद्रयोर्मृगव्याधवृत्तान्तोऽनुसन्धेय इति ।

मृग की ओर देखकर तथा चढ़े हुए धनुष को धारण किए हुए आपको देखकर मुझे-मृग का पीछा करते हुए पिनाक (धनुष) धारण किए हुए साक्षात् शिवजी का ही स्मरण होता है । अर्थात् शिवजी ने मृगरूपधारी ब्रह्माजी का किसी भारी अपराध में दण्ड देने को धनुषबाण हाथ में ले पीछा किया था, उसी प्रसङ्ग का मुझे आपको इस प्रकार हरिण का पीछा करते हुए देखकर ध्यान होता है । महिम्नस्तोत्र में कहा भी है—

'प्रजानाथं नाथ ! प्रसभमभिकं स्वां दुहितरं,
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं,
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥'

राजा—सूत ! दूरममुना सारङ्गेण वयमाकृष्टाः !।

[1]अयं पुनरिदानीमपि—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः,
पश्चार्द्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।

---

[ अत्र—'ष्ण' 'ङ्ग' 'स्त्व' 'ज्य' 'नु-सा' 'श्या' इति श्रुत्यनुप्रासः, 'द-द' 'सा-सा' इति वृत्त्यनुप्रासश्च, "एकस्य सकृदप्येष वृत्त्यनुप्रास इष्यते" इत्युक्तेः ।

एकस्य चक्षुषो युगपदनेकत्रैककालं वर्त्तमानताया वर्णनाद्विशेषश्चार्थालङ्कारः, चकारेणैककालमेकत्र चक्षुर्निक्षेपस्यैव प्रतीतेः । उत्प्रेक्षे तु इह न सम्भवत इति सङ्क्षेपः ] ।। ६ ।।

सूत ! = सारथे ! अमुना = पुरो धावमानेन, सारङ्गेण = हरिणेन, वयं दूर-माकृष्टाः = दूरतरमानीताः, स्कन्धावाराद्विप्रकृष्टतरं प्रदेशं प्रापिताः ।

अयं = मृगः, पुनः = तु, इदानीमपि = दूरतरमागतेष्वप्यस्मासु—

—'उदग्रप्लुतत्वाद्वियति बहुतरं [ प्रयाति, ] उर्व्यां तु स्तोकं प्रयाती' ति पश्येति'—श्लोकस्थवाक्येन सम्बन्धः ।

ग्रीवाभङ्गेति । ग्रीवाया [2]भङ्गेनाऽभिरामं यथा स्यात्तथा, मुहुः = वारं-वारम्, अनुपतति = पश्चाद्धावमाने [ सप्तम्यन्तमेतत् ], स्यन्दने = रथे, बद्धा दृष्टि-र्येनासौ —बद्धदृष्टिः = दत्तलोचनः । 'दृष्टिर्ज्ञानेऽक्ष्णि लोचने' इत्यमरः ।

शराणां पतनं, तस्माद्भयं, तस्मात्—शरपतनभयात् = बाणपातभयात्, भूयसा = अधिकेन, अपरमर्द्ध-पश्चार्द्धं तेन—पश्चार्द्धेन = कायपश्चिमभागेन, पूर्वं

---

भावार्थ—हे आयुष्मन् ! धनुष बाण हाथमें लेकर मृग का पीछा करते हुए आप मुझे साक्षात् शिवजी की तरह ही मालूम होते हैं ॥ ६ ॥

राजा—हे सारथे ! इस हरिण ने तो हम लोगों को बहुत दूर खींच लिया है । फिर भी देखो, यह—

हमारे रथ की ओर ग्रीवा ( गर्दन ) को घुमा २ कर मनोहरता पूर्वक देखता

---

१ 'सोऽयमिदानीमपि' पा० । २ भङ्गेन = प्रेक्षणार्थं पृष्ठतो वलनेन ।

**दर्भैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा,**
**पश्योदग्रप्लुतत्वाद्वियति बहुतरं, स्तोकमुर्व्यां प्रयाति ॥७॥**

कायस्य-पूर्वकायस्तं-पूर्वकायं = शरीरस्य पूर्वं भागं, प्रविष्ट इव। पुच्छादिपृष्ठान्तो भागः कायस्य पश्चार्द्धः। मुखादिः स्कन्धान्तो भागः-पूर्वार्द्धः। एवञ्च भयात्पुच्छप्रदेशं मुखादिभागे प्रवेशयतीवेति भीतानां मृगाणां स्वभावाख्यानमेतत्। वर्तुलितसकलशरीर इति यावत्।

श्रमेण विवृतं यन्मुखं तस्माद् भ्रश्यन्ति-तैः—श्रमविवृतमुखभ्रंशिभिः = धावनश्रमविकसितवदनात्-भ्रश्यद्भिः—अर्द्धमवलीढा अर्द्धावलीढास्तैः–अर्द्धावलीढैः= किञ्चिच्चर्वितैः, दर्भैः = कुशाङ्कुरैः, कीर्णं वर्त्म यस्यासौ = कीर्णवर्त्मा=व्याप्तमार्गः, अयं = मृगः, पुनरिदानीमपि = एवमस्माभिर्दूरतरमनुसृतोऽपि, उदग्रं प्लुतं यस्यासौ तस्य भावः,—तस्मात्-उदग्रप्लुतत्वात्=उच्चतरोत्प्लवनवत्त्वात्, वियति= गगने, बहुतरं = बहुलं, प्रयाति = गच्छति। कूर्दनवशाद्गगने एव बहुकालं गच्छन् दृश्यते। स्तोकम् = अत्यल्पं तु उर्व्यां = भूम्यां [ प्रयाति ]।

अयं मृगो बहुकालपर्यन्तमस्माभिरनुसृतोऽपि अत्यधिकोच्चोत्प्लवन[1]शाली पूर्ववदेवाऽश्रान्त इवेक्ष्यते। इत्थञ्च उत्प्लवनचपलोऽयं मृगः कथमस्माभिर्व्यापादनीयः। मनागपि नास्य वेगोऽल्पीभूत इति राजाशयः।

अत्र मृगयुभिरनुसृतानां मृगाणां स्वभाव आख्यात इति स्वभावोक्तिरलङ्कारः, किञ्चैवमन्येऽप्यलङ्कारा अत्र यथायथमनुसन्धेयाः ॥ ७ ॥

---

हुआ, बाण लगने के भय से अपने पीछे के भाग ( पीठ ) को शरीर के पूर्व भाग ( गर्दन ) की ओर समेटकर, आधे चबाये हुए कुशा के ग्रासों को परिश्रम से खुले हुए मुख से मार्ग में फेंकता हुआ, (यह हरिण) आकाश में छलांग मारता हुआ दौड़ ही रहा है। पृथ्वी पर तो इसके पैर कभी२ पड़ते हैं। यह तो आकाश में ही मानों उड़ रहा है। अर्थात् इतना दौड़ने पर भी यह उसी वेग से चौकड़ी भर रहा है, और हाथ नहीं आता है ॥ ७ ॥

---

१ उत्प्लवनं = कूर्दनं—'ऊँची कुदान' इति भाषा।

( सविस्मयं— )

[1]तदेष कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः संवृत्तो[ऽयं[1]] मृगः ?।

सूतः—[1]आयुष्मन् ! 'उद्घातिनी भूमि'रिति-मया रश्मिसंयमना-द्रथस्य मन्दीकृतो[2] वेगः, तेन मृग[3] एष विप्रकृष्टः संवृत्तः। संप्रति हि समदेशवर्त्ती न ते दुरासदो भविष्यति।

---

तत्=तस्मात्, इत्थमुदग्रप्लवनादेव, अनुपततः=पश्चाद्धावतोऽपि, मे=मम, प्रयत्नेन प्रेक्षणीयः—प्रयत्नप्रेक्षणीयः = दूरङ्गत इति हेतोर्मृगोऽयं कृच्छ्रेण विलोक-नीयः, संवृत्तः=जातः। अतितरां धावनाद्राज्ञो विस्मयोऽत्र बोध्यः।

उद्घातिनी=स्खलनप्रदा [ समविषमा। गर्तबहुलेति यावत् ]। "उद्घातः कथ्यते पादस्खलने समुपक्रमे" इति विश्वः।

इति=अतो हेतोः, रश्मीनां संयमनं, तस्मात्—रश्मिसंयमनात्=प्रग्रह-प्रकर्षणात्। "अभीशुः प्रग्रहे रश्मौ" इत्यमरः। अमन्दो मन्दः कृतो मन्दीकृतः= तनुतां नीतः। तेन=तेन हेतुना, विप्रकृष्टः=दूरः, संवृत्तः=जातः, सम्प्रति= इदानीन्तु, समे देशे वर्तते तच्छीलः=समादेशवर्त्ती=आश्रमाभोगभूमिमधिगतः, अतएव न ते=न खलु तव, दुरासदः=अप्राप्यो भविष्यतीत्यर्थः।

मयैव रथवेगो मन्दीकृत इति–मृगोऽयं दूरं यातः, इदानीं समा भूमिः, तेन मृगो द्रागेव ते हस्तं प्रयास्यत्ययमिति-सूताशयः।

---

( विस्मय=आश्चर्य के साथ–) देखो २, हमारे इतने वेग से दौड़ने पर भी यह हरिण देखते २ ही आँखों से ओझल ( दूर ) सा होता जा रहा है !। अब तो यह बड़ी कठिनता से दिखाई देता है। बहुत दूर चला गया है !।

सूत—आयुष्मन् ! (=महाराज ! ) ऊँची-नीची ( ऊबड़-खाबड़ ) भूमि होने के कारण मैंने ही घोड़ों की लगाम खींचकर रथ का वेग कुछ कम कर दिया था। इसीलिए यह मृग इतना दूर चला गया है। परन्तु अब तो समतल भूमि आ गई है, अतः अब इसे शीघ्र ही आप पा लेंगे।

---

१ क्वचिन्न। २ 'मन्दीभूतो' पा०। ३ 'तेनैष मृगो विप्रकृष्टः' पा०।

राजा—तेन हि मुच्यन्तामभीषवः ।

सूतः—[1]यदाज्ञापयत्यायुष्मान् ।

([2]रथवेगं निरूप्य[3]-) आयुष्मन् ! पश्य-पश्य !! । एते हि—

मुक्तेषु रश्मिषु निरायतपूर्वकाया
निष्कम्पचामरशिखाश्च्युतकर्णभङ्गाः[3] ।
आत्मोद्धतैरपि रजोभिरलङ्घनीया
धावन्त्यमी[4] मृगजवाऽक्षमयेव रथ्याः ॥८॥

मुच्यन्तां = शिथिलीक्रियन्ताम् । अभीषवः = प्रग्रहाः ।

यथेति । 'तथा करोमि' इति शेषः । भूयः = पुनः, रूपयित्वा = अभिनीय । [ तथा कृत्वा, विलोक्येति वार्थः, ] ।

'पश्य-पश्ये' ति सम्भ्रमे द्विरुक्तिः ।

एते हि = रथनियुक्ता एते वाजिनो हि । अस्य वक्ष्यमाणेन 'धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते' इति श्लोकचतुर्थचरणेन सम्बन्धः ।

मुक्तेष्विति । रश्मिषु = [5]प्रग्रहेषु मुक्तेषु सत्सु, नितरामायतः [ पूर्वकायस्य—] पूर्वकायो येषान्ते–निरायतपूर्वकायाः = विस्तारितस्कन्धमुखपादप्रदेशाः । [ वेगेन धावतां वाजिनां स्वभाव एषः ] । अत एव —स्वेषाम् = स्वखुरोत्थितानां, प्रसरतां=विसरणशीलानां, रजसामपि = धूलीनामपि, अगम्याः= दुष्प्रापाः । स्वखुरोद्धूतधूलिपटलैरपि दुष्प्रापाः, किमुतान्यैरिति रथवाजिनां वेगातिशयो निरूपितः ।

राजा—तो अब घोड़ों की लगाम छोड़ दो और रथ को तेज कर दो ।

सूत—जो आज्ञा महाराज की ।

( रथ के वेग को देखकर ) महाराज ! देखिए—

लगाम ढीली करते ही रथ के ये घोड़े—अपने शरीर के पूर्व ( अग्र ) भाग को लम्बा करके, अपनी ग्रीवा के बालों को ( केसरों को ) निष्कम्प भाव से खड़ा

१ 'यथा'। २ 'इति भूयो रथवेगं'। ३ 'निभृतोर्द्ध्वकर्णाः' । पा० । ४ "धावन्ति वर्त्मनि, तरन्ति नु वाजिनस्ते"-पा० । ५ प्रग्रह = 'घोड़ों की लगाम' ।

राजा—( सहर्षं— ) [1]नूनमतीत्य हरिणं हरयो वर्त्तन्ते । [2]यतः—

यदालोके सूक्ष्मं, व्रजति सहसा तद्विपुलतां,

[3]यदर्द्धे विच्छिन्नं, भवति कृतसन्धानमिव तत् ।

निष्कम्पाः-[ चामरमिव चामरं. तेषां-] चामराणां शिखा येषान्ते-निष्कम्पचामरशिखाः=अतिशयवेगशालितया निश्चलपुच्छाग्रभागाः। निश्चलस्कन्धप्रदेशस्थकेसराग्रभागा इति वाऽर्थः। च्युताः कर्णानां भङ्गा येषान्ते च्युतकर्णभङ्गाः= निश्चलकर्णाः ते=तव अमी वाजिनः=अश्वाः, वर्त्मनि =मार्गे, मृगजवाऽक्षमयेव = धावमानहरिणवेगाऽसहिष्णुतयेव अमर्षात्-धावन्ति । पाठान्तरेतु-धावन्ति=सत्वरं गच्छन्ति नु ?। अथवा—तरन्ति नु=गगने प्लवन्ते नु ? [ पश्य-पश्येति पूर्वेण सम्बन्धः ]। किमिमेऽश्वा भूमौ चलन्ति, किं वा जलाशयसदृशे आकाशे प्लवन्त इति वेगातिशयान्निर्णेतुं न शक्यत इत्याशयः। अत्र स्वभावोक्तिरलङ्कारः ॥ ८ ॥

नूनमिति। सम्भाव्यत इत्यर्थः । हरिणमतीत्य=वेगेन मृगमुल्लङ्घ्य। 'हरितो हरींश्चे'ति पाठे—हरितः=सूर्याश्वान्, हरीन्=इन्द्रवाजिनश्चेत्यर्थो बोध्यः। हरितो नीलवर्णानिति हरिविशेषणं वा। तेन हरितो हरीन्=नीलान् सूर्याश्वानित्यर्थः। 'हरिदश्वोष्णरश्मय' इति कोशात्सूर्यस्याश्वा नीलवर्णा इति हि प्रसिद्धम् । चकारोऽप्यर्थे बोध्यः ।

कुत एतज्ज्ञायते ?। अत आह-यत इति। अग्रिमश्लोकेनेदं सम्बध्यते ।

यदिति । यत्=किमपि वस्तु वृक्षादिरूपम्, आलोके=प्रथमदर्शने ।

करके, तथा अपने कानों को भी खड़ा करके, मानों हरिण के वेग को नहीं सह सकने के कारण इतने वेगसे भाग रहें हैं कि-इनके अपने पैर से उड़ी हुई धूलि भी इन ( घोड़ों ) को नहीं पा सक रही है !।

भावार्थ—घोड़े जब वेग से भागते हैं तब अपनी कनौती ( कानों ) को उठा लेते हैं, शरीर को आगे की ओर बढ़ा देते हैं, और उनके आयल ( केसर ) के बाल भी खड़े हो जाते हैं ॥ ८ ॥

राजा —( बड़ी प्रसन्नता से- ) निश्चय ही इन घोड़ों का वेग हरिण के वेग

१ 'नूनमतीत्य हरितो, हरींश्च वर्त्तन्ते वाजिनः'।　　२ 'तथा हि'।

३ 'यदर्द्धा' । अर्द्धा = इदानीमेव ।

प्रकृत्या यद्वक्रं, तदपि समरेखं नयनयो—
र्न मे दूरे किंचित्क्षणमपि न पार्श्वे, रथजवात् ॥९॥

"आलोकौ दर्शनोद्द्योतौ" इत्यमरः। सूक्ष्मं = तनुतरम्। दृश्यते इति शेषः। [ वस्तुत–आलोक इति लोकृधातोर्लटि रूपम्। यत्सूक्ष्ममालोके = सूक्ष्म वस्तु पश्यामीत्यर्थः ]। सहसा = द्रागेव, तस्मिन्नेव क्षणे, तत् = तद्वस्तु, नयनयोः = नेत्रयोः, विपुलतां = विस्तीर्णतां, व्रजति = धत्ते। अत्र रथजवादिति वक्ष्यमाणो हेतुरासञ्जनीयः।

यत् = यद्वस्तु, अर्द्धे विच्छिन्नं = त्रुटितं, वृक्षपङ्क्तिभूतलादिकं, तत् कृतसन्धान-मिव = मिलितमिव, नयनयोर्भवति = जायते। एतदपि रथजवादेव। तीव्रवेग-वाष्पयानादियायिनां विदितमेवैतत्। 'प्रकृत्या = स्वभावेन, यत् = वस्तु, वक्रं= कुटिलं तदपि —नयनयोः = चक्षुषोः, समा रेखा यस्य तत्-समरेखं = सरलं। रेखा = आभोगः। 'रेखा स्यादल्पके छद्मन्याभागोल्लेखयोरपी'ति हैमः। मे=मम रथजवात् क्षणमपि दूरे न किञ्चित्, पार्श्वेऽपि निकटेऽपि, न किञ्चित्। रथवेगाद् दूरतरमपि वस्तु निकटे, निकस्थमपि च वस्तु दूरे–भवतीत्यतितरां रथवेगोऽत्र वर्णितः।

अत्र यदा-यदेति, 'वति-वते'ति, 'नय नयो'रीत्या च्छेकानुप्रासादयोऽनु-सन्धेयाः॥ ९॥

से बढ़ा हुआ है। क्योंकि—वृक्ष आदि जो वस्तु पहिले छोटी दिखाई देती हैं, वे ही सहसा ( तुरन्त ) बड़ी हो जाती हैं, अर्थात् तुरन्त ही सामने आ जाती हैं। और जो वृक्षपङ्क्ति आदि वस्तु बीच में खण्डित भी हैं, वे भी रथ के वेग से मिली हुई सी दिखाई देती हैं। और जो स्वभावतः टेढ़ी-मेढ़ी वस्तु है, वह भी आखों को सीधी ही दिखाई पड़ती है। अधिक क्या कहूं—इस रथके वेग के कारण कोई भी वस्तु मेरे से दूर नहीं है, और न कोई वस्तु मेरे पास भी ठहरती है। अर्थात्–इस रथ का इतना वेग है, कि जो वस्तु दूर भी है, वही क्षण भर में मेरे पास दिखाई देती है, और जो वस्तु मेरे पास है, वह भी क्षणभर में बहुत दूर चली जाती है॥ ९॥

सूतः[1]—पश्यैनं व्यापाद्यम्[2]।

( [3]राजा—शरसन्धानं नाटयति )।

( नेपथ्ये— )

भो भो राजन् ! आश्रममृगोऽयं, न हन्तव्यो, न हन्तव्यः।

सूतः—( आकर्ण्यावलोक्य च- ) आयुष्मन् ! अस्य खलु ते बाणपातपथवर्तिनः कृष्णसारस्याऽन्तरायौ[4] ( द्वौ ) तपस्विनौ संवृत्तौ ! !।

---

व्यापाद्यम् = वध्यम्। नाटयति=अनुकरोति।

नेपथ्ये इति। कविवचनमेतत्। अप्रविष्टेनैव यजवनिकान्तरस्थेन कथ्यते तत्—'नेपथ्ये'-इत्युच्यते। अन्तरसन्धिरयं, प्राकृतार्थसूचनात्। तदुक्तं मातृगुप्ताचार्यैः—

'स्वप्नो, दूतश्च, लेखश्च, नेपथ्योक्तिस्तथैव च।
आकाशवचनं चेति ज्ञेया ह्यन्तरसन्धयः॥' इति।

राजन्निति। 'राजन्नित्यृषिभिर्वाच्य' इति भरतोक्तेर्दुष्यन्तसम्बोधनमेतत्। आश्रमस्य मृगः-आश्रममृगः=आश्रमवासिमुनिजनपालितोऽयं हरिणः। आकर्ण्य= श्रुत्वा, अवलोक्य=दृष्ट्वा च। बाणस्य यः पातस्तस्य यः पन्थास्तस्मिन् वर्त्तते तच्छीलः-बाणपातपथवर्त्ती,-तस्य-बाणपातपथवर्तिनः=अतिनिकटवर्त्तिनः, कृष्णसारस्य=कृष्णमृगस्याऽस्य. तपस्विनौ = तापसौ, अन्तरायौ = बाणपातविघ्नौ,

---

सूत—देखिए, यह आपकी शिकार ( मृग ) सामने है।

[ राजा—धनुष पर बाण चढ़ाकर निशाना साधता है ]।

[[5]नेपथ्य में—]

हे राजन् ! यह आश्रम का मृग है। अतः यह अवध्य है। यह मारने योग्य नहीं है। इसे मत मारिए।

सूत—( सुनकर और सामने देखकर- ) महाराज ! आपके बाण की मारके

---

१ 'सूत'। २ 'व्यापाद्यमानं'। ३ 'इति शरसन्धानं नाटयति'।
४ 'स्यान्तरे तपस्विन उपस्थिताः'। 'स्यान्तरा'।
५ पर्दे के पीछे से जो बात कही जाए उसे नेपथ्य में कही हुई कहते हैं।

**राजा**—( ससंभ्रमम् ) [१]तेन हि[१] प्रगृह्यन्तामभीषवः[२] ।

**सूतः**—[३]यथाऽऽज्ञापयत्यायुष्मान् । ( इति तथा करोति ) ।

( ततः प्रविशति सशिष्यो वैखानसः ) ।

**वैखानसः**—( हस्तमुद्यम्य— ) राजन् ! आश्रममृगोऽयं, न हन्तव्यो, न हन्तव्यः ।

न खलु न खलु बाणः सन्निपात्योऽयमस्मि-
न्मृदुनि मृगशरीरे तूलराशाविवाऽग्निः ।

---

संवृत्तौ = जातौ । "वैखानसस्तु ना वानप्रस्थेऽप्यृषिषु केषुचित् । क्लीबं सामप्रभेदे" इति केशवः ।

संभ्रमेण सहितं यथा स्यात्तथा-ससम्भ्रमं = सत्वरम् । उवाचेति शेषः । अभीषवः = रश्मयः । गृह्यन्ताम् = नियम्यन्ताम् । रथोऽवस्थापनीय इत्यर्थः ।

इति = इत्युक्त्वा । तथा करोति = रथमवस्थापयति ।

सशिष्यः = शिष्यसमन्वितः । छात्रानुगतः । वैखानसः = तापसः । हस्तमुद्यम्य = ऊर्ध्वबाहुः सन् ।

न खल्विति । अस्मिन् मृदुनि मृगशरीरे—तूलराशावग्निरिव-अयं बाणः-न खलु न खलु संनिपात्य इति सम्बन्धः । अयमर्थः—

मृदुनि = कोमले, मृगशरीरे = हरिणवपुषि, तूलस्य राशिः = तूलराशिस्त-

---

भीतर आए हुए इस हरिण के बीच में तो दो तपस्वी (मुनि) विघ्न रूप(रुकावट) हो कर खड़े हो गए हैं ।

**राजा**—तो शीघ्र लगाम कड़ी करो । जल्दी रथ को रोको ।

**सूत**—जैसी महाराज की आज्ञा । ( लगाम खींच के रथको रोकता है ) ।

[ शिष्य सहित तपस्वी ( ऋषि ) का प्रवेश ] ।

**वैखानस ( तापस )**—( हाथ उठाकर ) हे राजन् ! यह आश्रम का मृग है, अतः यह अवध्य है, इसे मत मारो ।

---

१ क्वचिन्न । २ 'वाजिनः' । ३ 'तथा [ इति रथं स्थापयति ]' ।

क्व बत हरिणकानां जीवितं चाऽतिलोलं,
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥१०॥
तदाशु कृतसन्धानं प्रतिसंहर सायकम् ।
आर्त्तत्राणाय वः शस्त्रं, न प्रहर्त्तुमनागसि ॥११॥

स्मिन्-तूलराशौ=कार्पासपुञ्जे, अग्निरिव=पावक इव, अयं=ते बाणो न खलु न खलु=नैव खलु, सन्निपात्यः=प्रहरणीयः। अनुनयार्थकोऽत्र 'खलुः'। "निषेध-वाक्यालङ्कारे जिज्ञासाऽनुनये खलु"—इत्यमरः।

बत! खेदे, अनुकम्प्या हरिणा-हरिणकाः, तेषां=बालमृगाणाम्-अति-लोलम्=अतिसुकुमारं, जीवितं=जीवनं, क्व ?=कुत्र ?।

निशितो निपातो येषान्ते-निशितनिपाताः=तीक्ष्णप्रहाराः, वज्र इव सारो येषान्ते वज्रसाराः=वज्रकठोराः, ते=तव, शराश्च=बाणाश्च। क्व !=क्वनु। महद्वैषम्यमनयोरित्याशयः। विषमोऽत्राऽलङ्कारः ॥१०॥

तदिति। तत्=तस्मात्, अनौचित्यात्, कृतं सन्धानं यस्य तं-कृतसन्धानं= धनुष्यारोपितं, सायकं=बाणम्, आशु=त्वरितं, प्रतिसंहर=अवरोपय, तूणीरे स्थापय। मा-प्रहरेति यावत्। यतो हि-वः=युष्माकं, क्षत्रियाणां शस्त्रं= बाणादिकम्, आर्त्तानां त्राणाय-आर्त्तत्राणाय=विपन्नप्रतिपालनायैव, अनागसि= अनपराधिनि, प्रहर्त्तुं =आहन्तुं, न=नैव खलु। अतो निरपराधं मृगं मुञ्चेत्या-शयः। अत्र छेक-श्रुत्यनुप्रासौ ॥ ११ ॥

इस मृग के कोमल शरीर पर-रुई की ढेरी पर अग्नि के समान-इस बाण को मत छोड़ो। क्योंकि—कहाँ तो इन बेचारे हरिणों के अति कोमल प्राण, और कहाँ वज्र के समान कठोर एवं तीक्ष्ण तुमारे ये बाण!। अर्थात्—तुमारे वज्र सम कठोर बाणों के लक्ष्य तो सिंह, व्याघ्र, दुष्ट दस्यु आदि ही होने चाहिएँ, न कि कोमल प्राण बेचारे ये हरिण। अतः इसे मत मारिए ॥ १० ॥

अत एव आप सन्धान किए हुए इस बाण को धनुष से तुरन्त उतार लें। क्योंकि—आपका यह शस्त्र तो आर्त्त=दुःखी-प्राणियों के रक्षा के लिए ही है, निरपराध जीवों को मारने के लिए नहीं ॥ ११ ॥



१. तत्साध्व

राजा—( [1]सप्रणामम्—) एष प्रतिसंहृत एव[1] ।

(—इति यथोक्तं करोति )

वैखानसः—( सहर्षं—) सदृशमेवैतत्[2] पुरुवंशप्रदीपस्य भवतः ।

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवंगुणोपेतं चक्रवर्त्तिनमाप्नुहि ॥ १२ ॥

---

सप्रणामम्=सादरं प्रणम्य । एषः=कृतसन्धानोऽयं शरः, प्रतिसंहृतः=तूणीरे स्थापित एव । वर्त्तमानसामीप्ये लट् । इति=इत्युक्त्वा, यथोक्तं=यथा-कथितं, करोति=शरं निषङ्गे स्थापयति ।

एतत्=तापसवचनादरणम्, पुरोर्वंशस्य प्रदीप इव—प्रदीपस्तस्य पुरुवंश-प्रदीपस्य=पुरुवंशभूषणस्य भवतः ।

जन्मेति । यस्य पुरोर्वंशे जन्म तस्य तव । इदं=मुनिवचनपालनम्, अति-शयेन युक्तं-युक्तरूपम्, [ अत्र प्रशंसायां रूपप् ] । एवं गुणैरुपेतस्तम्—एवं-गुणोपेतम्=स्वानुरूपं, सकलगुणगणोपेतम् । चक्रे वर्त्तते तच्छीलः—चक्रवर्ती, तं चक्रवर्त्तिनं=सार्वभौमम् । "चक्रवर्ती सार्वभौमः"—इत्यमरः । आप्नुहि=लभस्व । प्रथमपदार्थस्य द्वितीयपदार्थं प्रति हेतुत्वात्काव्यलिङ्गम् ॥ १२ ॥

---

राजा— (प्रणाम करता हुआ-) लीजिए बाण यह उतार लिया । (बाणको धनुष पर से उतारता है ) ।

वैखानस—( हर्षपूर्वक ) पुरुवंशके प्रदीप स्वरूप आपके लिए यह कार्य ( आश्रम की मर्यादा की रक्षा करना ) अनुरूप ही है ।

जिसका पुरुवंश में जन्म है, ऐसे आपके लिए इस आश्रम मृग को अभयदान देना, तथा तपस्वियों की आज्ञा को मानना उचित ही है । अतः हे राजन् ! आपको-आपके ही सदृश—चक्रवर्ती पुत्र प्राप्त हो ॥ १२ ॥

---

१ क्वचिन्न । २ 'मेतत्' ।

इतरोऽपि—( [2]हस्तमुद्यम्य- ) सर्वथा चक्रवर्त्तिनं पुत्रमाप्नुहि ।

राजा—( सप्रणामं— ) प्रतिगृहीतं ब्राह्मणवचः ।

वैखानसः—राजन् ! समिदाहरणाय प्रस्थिता वयम् । एष [3]चास्मद्गुरोः कण्वस्य कुलपतेः साधिदैवत[4] इव[5] शकुन्तलया-अनुमालिनीतीरमाश्रमो दृश्यते, न चेदन्यकार्य्यातिपातस्तदत्र प्रविश्य प्रतिगृह्यतामतिथिसत्कारः[6] । अपि च—

---

उद्यम्य = ऊर्ध्वं कृत्वा, सर्वथा = अवश्यम् ।

समिधामाहरणं समिदाहरणं, तस्मै—समिदाहरणाय = यज्ञोपकरणकाष्ठसंग्रहाय, प्रस्थिताः = चलिताः । कुलपतेः = दशसहस्रच्छात्राध्यापकस्याचार्यस्य ।

"मुनीनां दशसाहस्रं योऽन्नपानादिपोषणात् ।
अध्यापयति ब्रह्मर्षिरसौ 'कुलपतिः' स्मृतः ॥" इति पुराणम् ।

अधिदेवतया सहितः-साधिदैवतः=शकुन्तलाख्ययाऽधिष्ठात्र्या देव्या सनाथः। अनुमालिनीतीरम्, = मालिनीनदीतटदैर्घ्यसदृशदैर्घ्योपलक्षितः । "यस्य चायाम" इत्यव्ययीभावः । [ विभक्त्यर्थे, सामीप्ये वाऽव्ययीभावः । ] अन्यस्य कार्यस्यातिपातः—अन्यकार्यातिपातः = अन्यकार्यविलम्बः अत्र = कण्वाश्रमे, अतिथिसत्कारः = अतिथिपूजा ।

---

शिष्य—( हाथ उठा कर- ) आप चक्रवर्ती पुत्र को अवश्य प्राप्त करें ।

राजा—( प्रणाम करता हुआ ) आप लोगों का आशीर्वचन शिरोधार्य है ।

वैखानस—हे राजन् ! हम लोग समिधा ( हवन की लकड़ी ) लाने वन को जा रहे हैं । यह सामने ही हमारे गुरु कुलपति कण्व का मालिनी नदी के तीर पर आश्रम दीख रहा है, जिसमें कण्व की कन्या शकुन्तला अधिष्ठात्री देवी की तरह विद्यमान है । यदि किसी आवश्यक कार्य की हानि न हो तो, आप इस आश्रम में पधार कर, अतिथि सत्कार ग्रहण करें । और भी—

---

१ 'इतरौ' । २ 'हस्तावुद्यम्य' । ३ 'एष खलु कण्वस्य' । ४ 'कच्चिन्न' । ५ 'एव' । ६ 'आतिथेयः सत्कारः' ।

धर्म्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि 'कियद्भुजो मे रक्षतिमौर्वीकिणाङ्क' इति ? ॥ १३ ॥

राजा—अपि सन्निहितोऽत्र कुलपतिः ? ।

वैखानसः—इदानीमेव दुहितरं शकुन्तलामतिथिसत्कारायाऽऽदिश्य[2] दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ।

---

धर्म्या इति । धर्मादनपेता धर्म्याः = वेदविहिताः, तप एव धनं येषान्ते—तपोधनाः—तेषां = तापसानां, प्रतिहता विघ्ना याभ्यस्ताः—प्रतिहतविघ्नाः = निरस्तान्तरायाः, क्रियाः = यज्ञादिक्रियाः, समवलोक्य = साक्षाद् दृष्ट्वा, मौर्व्याः किणैरङ्को—भूषा यस्यासौ—मौर्वीकिणाङ्कः = ज्याघातरूढव्रणभूषितः, भुजः = बाहुः, दक्षिणः, कियद्रक्षति ? = कीदृग्रक्षति ? । इति = इत्येतत्, ज्ञास्यसि = अनुभविष्यसि । "अङ्को भूषणलक्ष्मसु" इति हैमः । [ श्रुतिवृत्त्यनुप्रासौ, काव्यलिङ्गं, 'किणाङ्के'ति-पुनरुक्तवदाभासश्च ] ॥ १३ ॥

अत्र = आश्रमे, कुलपतिः = महर्षिः कण्वः, संनिहितः = स्थितः, अपि ? = किं ? । प्रश्नेऽत्रापिः । "गर्हा-समुच्चय-प्रश्न-शङ्का-सम्भावनास्वपि"-इत्यमरः ।

अतिथिसत्काराय = अतिथिसत्कारकार्यसम्पादनाय, आदिश्य = नियुज्य, अस्याः = शकुन्तलायाः, प्रतिकूलम् = अशुभं, दैवम् = अदृष्टम्, शमयितुं = शान्त्यादिना प्रतिविधातुम् । सोमतीर्थे = चन्द्रकूपः । [ च्यवनाश्रमे सम्प्रति 'ढोसी' ति प्रसिद्धे पर्वते ( 'नारनौल' पटियाला ) ] भवेत् । एतेन द्रागेवास्या दुरदृष्टं शान्तं भविष्यतीति शापान्तः सूचित इति बीजसूचकवाक्यमेतत् ।

तपस्वी मुनियों की धार्मिक क्रियाओं को निर्विघ्न होते देख कर आप जान सकेगें कि—आपका धनुष की मौर्वी ( डोरी ) के आघात से कठिनीभूत यह हाथ-कैसी उत्तमता से प्रजा की तथा धार्मिक जनता की रक्षा कर रहा है ॥१३॥

राजा—क्या कुलपति कण्व मुनि इस समय आश्रम में विराजमान हैं ? ।

वैखानस—कुलपति कण्व तो, अभी थोड़ा समय हुआ, अपनी कन्या

---

१ 'रम्याः' । २ 'नियुज्य' ।

राजा—भवतु, तामेव द्रक्ष्यामि, सा खलु [1]विदितभक्तिमां महर्षये निवेदयिष्यति ।

वैखानसः—साधयामस्तावत् । ( इति सशिष्यो निष्क्रान्तः ) ।

राजा—सूत ! नोदयाश्वान्[2], पुण्याश्रमदर्शनेनात्मानं पुनीमहे ।

सूतः—यदाज्ञापयत्यायुष्मान् । ( इति भूयो रथवेगं ( नि ) रूपयति ) ।

राजा—( समन्तादवलोक्य— ) सूत ! अकथितोऽपि ज्ञायत एवायमाभोगस्तपोवनस्य ।

[ 'काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृत' इति नाट्यशास्त्रोक्तेरुपक्षेपनामकं प्रथमं मुखसन्धेरङ्गं च प्रयुक्तं वेदितव्यम् ] ।

भवतु = अस्त्वेवम्, तामेव = शकुन्तलामेव, विदितं भक्तिर्यया सा विदितभक्तिः=ज्ञातभक्तिः, महर्षये=कण्वाय, निवेदयिष्यति=कथयिष्यति । [ विदितमिति सामान्ये नपुंसकम् । अन्यथा प्रियादित्वात्पुंवद्भावो न स्यात् ] ।

साधयामः = गच्छामः । "प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते" इति साहित्यदर्पणम् । निष्क्रान्तः = रङ्गान्निःसृतः ।

नोदय = प्रेरय । पुण्यश्चासावाश्रमश्च, तस्य दर्शनं, तेन-पुण्याश्रमदर्शनेन= पुण्यप्रदपवित्रतमाश्रमप्रेक्षणेन, पुनीमहे = पवित्रमाचरामः ।

---

शकुन्तला को अतिथि सत्कार का भार देकर, अपनी इस कन्या शकुन्तला के प्रतिकूल अदृष्ट ( ग्रहों ) की शान्ति के लिए सोमतीर्थ गए हैं ।

राजा—अच्छा, मैं मुनि की कन्या शकुन्तला के ही दर्शन करने जाता हूं । वही मुनि के प्रति मेरी भक्ति और श्रद्धा की सूचना मुनि के आने पर उन्हें दे देगी ।

वैखानस—तो हम लोग जाते हैं । ( शिष्य के साथ जाता है ) ।

राजा—सूत ! घोड़ों को हाँको, आश्रम में जाकर मुनियों के पुण्यतम आश्रम के दर्शन से अपने को पवित्र करें ।

सूत—जो आज्ञा महाराज की । ( पुनः रथ को तेजी से हाँकता है ) ।

राजा—( चारों ओर देखकर ) सूत, विना कहे हुए भी यह स्पष्ट ही

---

१ 'विदितभक्तिं मां महर्षेः करिष्यति' । 'कथयिष्यति' । २ 'तूर्णं चोदयाश्वान्' ।

सूतः—कथमिव ?।

राजा—किं न पश्यति भवान् ?। इह[1] हि—

नीवाराः शुक-कोटरा[2]र्भक-मुख-भ्रष्टास्तरूणामधः,
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।

भूयः=पुनः, (नि) रूपयति = करोति, [ रङ्गे तथा दर्शयति ]। समन्तात् = सर्वतश्चतुर्दिक्षु । आभोगः=परिसरप्रदेशः, आभुज्यत इत्याभोग इति व्युत्पत्तेः । "आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपी"ति विश्व–मेदिनीभ्यां पूर्णतारूपोऽर्थोप्युपलभ्यते । 'कथमिव' इत्यस्य 'ज्ञायते' इति शेषः। 'इह ही' ति–अग्रिमेणान्वितम् ।

नीवारा इति । क्वचित्—शुकानां ये कोटरार्भकाः, नीडस्था अजातपक्षाः शावकाः—तेषां मुखेभ्यो भ्रष्टाः–शुककोटरार्भकमुखभ्रष्टाः =कीरकुलायशावक. वदनच्युताः, नीवाराः = मुनिधान्यकणाः । "तृणधान्यानि नीवाराः" इत्यमरः । तरूणां=पादपानाम्, अधः=तलेषु, 'दृश्यन्ते' इति योज्यम् । क्वचित्—इङ्गुदीनां फलानि भिन्दन्तीति-इङ्गुदीफलभिदः =तापसतरुफलभेदकाः, अतएव प्रस्निग्धाः = तैलाक्ताः, उपलाः=पाषाणाः, सूच्यन्त एव =दृश्यन्त एव । तापसा उपलेन भित्त्वा इङ्गुदीफलेभ्यस्तैलमाकर्षन्तीति प्रसिद्धम् । 'इङ्गुदी तापसतरुः' इत्यमरः ।

मालूम हो रहा है, कि यह आश्रम का समीपवर्ती प्रदेश है । अर्थात् हम लोग अब आश्रम की सीमा में हो आ गए हैं ।

सूत—आयुष्मन् ! आप यह कैसे जानते हैं, कि हमलोग आश्रम में प्रविष्ट हो गए हैं ?।

राजा—क्या तुम नहीं देखते हो ?। इस जगह—कहीं २ वृक्षों के नीचे–सुग्गों के घासलों में स्थित बच्चों के मुख से गिरे हुए नीवार धान्य ( तिन्नी के चावल ) बिखरे हुए हैं, कहीं कहीं इंगुदी फलों के पीसने से पत्थर चिकने

१ 'इहापि' । २ 'शुकगर्भकोटर' ।

विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥१४॥

न च शबरादिवसतिष्वपि सम्भवेदेवमत आह—**विश्वासेति**। क्वचित्-विश्वासस्योपगमस्तस्मात्-विश्वासोपगमात्=विश्वासलाभात्। जातविश्वासाः। अत एव-अभिन्ना गतिर्येषान्ते-अभिन्नगतयः = अत्यक्तसुखासिकाः, मृगाः = हरिणाः, शब्दं=रथशब्दं, सहन्ते = सधैर्यं शृण्वन्ति। ततो न पलायन्ते इत्याशयः। न हि व्याधपल्लीषु किलैवं सम्भाव्यते-इति भावः। न च गृह्यमृगेष्वप्येवं सम्भाव्यत एवेत्यत आह—**तोयेति**। तोयानामाधारास्तेषां पन्थानः-तोयधारपथाः = जलाशयमार्गाः, वल्कलानां शिखास्तासां निष्यन्दास्तेभ्यो या रेखास्ताभिरङ्किताः-वल्कलशिखानिष्यन्दरेखाङ्किताः = वल्कलाग्रपरिस्रुतजलधारारेखाविभूषिताः। अचिरस्नातमुनिजन-वृक्षत्वग्वस्त्रदशास्रुतवारिकणाङ्कितसैकतभूभागाः। अत्रापि 'क्वचित्—दृश्यन्ते' इति योजनीयम्। [ वृत्ति-श्रुत्यनुप्रासौ, क्रियासमुच्चयः, काव्यलिङ्गश्चालंकाराः ] ॥ १४ ॥

दिखाई दे रहे हैं। मृग भी अत्यन्त विश्वस्त भाव से निडर हो शब्द को सहन करते हैं। और जलाशयों के मार्ग भी मुनियों के पहिरने के वल्कल के वस्त्रों के छोर से झरते हुए जल की रेखाओं से अङ्कित हो रहे हैं।

**भावार्थ**—नीवारधान्य मुनियों का भोज्य पदार्थ है, जो यहाँ वृक्षों के नीचे, सुग्गों के घोसलों के नीचे इधर उधर बिखरा हुआ दिखाई दे रहा है। आश्रमस्थ मुनिलोग इंगुदी के फलों को पीसकर उससे तैल निकाल कर तैल का काम लेते हैं, और यहाँ पर जगह २ इंगुदी ( गूंदी ) के फल पीसने से चिकने हुए पत्थर दिखाई दे रहे हैं। आश्रम के मृग पक्षी मनुष्यों के शब्द से भी डर कर भागते नहीं हैं। स्नान कर आने वाले ऋषि मुनिगणों के बल्कल ( वृक्ष की छाल से बने ) वस्त्रों से टपकते हुए जलकी रेखा जलाशयों ( नदी, कूप, वापी आदि ) के मार्गों पर स्पष्ट दिखाई दे रही है। इससे स्पष्ट मालूम होता है, कि हम लोग आश्रम के आभोग ( हद, सीमा ) में पहुँच गए हैं ॥ १४ ॥

[1]अपि च—

कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूला,
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन ।
एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां
नष्टाऽऽशङ्का हरिणशिशवो मन्द-मन्दं चरन्ति ॥१५॥

अपि च=किञ्च । कुल्याम्भोभिरिति । पवनेन चपलानि-तैः—पवनचपलैः=वाताहतैः, कुल्यानामम्भांसि-तैः-कुल्याम्भोभिः=सारणीजलैः, आलवाल वारिभिरिति वा । 'कुल्याऽल्पा कृत्रिमा सरित्' इत्यमरः । [ 'नहर' 'क्यारी' इति भाषा ] । शाखिनः=वृक्षाः, धौतानि मूलानि येषान्ते-धौतमूलाः=क्षालितमूलप्रदेशाः । सन्तीति शेषः ।

आज्यस्य यो धूमस्तस्योद्गमस्तेन—आज्यधूमोद्गमेन=हविर्धूमपटलोद्गमेन, किसलयानां रुचस्तासां—किसलयरुचां=पल्लवद्युतीनां, भिन्नः=अस्वाभाविकः—रागः=वर्णः लौहित्यं । 'दृश्यते' इति शेषः ।

किञ्च-एते=पुरो दृश्यमानाः, नष्टा आशङ्का येषान्ते—नष्टाशङ्काः=निर्भयाः, हरिणानां शिशवः=मृगशावकाः, अर्वाक्=समीप एव, छिन्ना दर्भाणामङ्कुरा यस्यां, तस्यां-छिन्नदर्भाङ्कुरायां=लूनदर्भायाम्, उपवनस्य भूरुपवनभूस्तस्यामुपवनभुवि=आरामभूभागे । "आरामः स्यादुपवनं कृत्रिमं वनमेव यत्" इत्यमरः । मन्द-मन्दम=अतिमन्दम् । चरन्ति=खेलन्ति । अत आश्रमप्रदेश एवायमित्याशयः । [ अत्र क्रियासमुच्चयः, अनुमानश्चालङ्कारो, च्छेकश्रुतिवृत्त्यनुप्रासाश्च ] ॥ १५ ॥

और भी देखो—

यहाँ वृक्षों के मूल भाग छोटी २ नहरों के (पवन के थपेड़ों से हिलते हुए) जल से भरे हुए हैं । वृक्षों के कोमल पल्लवों का रंगभी-अग्नि होत्र के आज्य धूम से (घी के धूएं से) धूमिल हो गया है । और ये छोटे २ हरिणों के बच्चे निर्भय हो कुशाओं के उखाड़ लेने से निष्कण्टक हुए उपवन के भूमाग में धीरे २ घूम फिर रहे हैं । इससे स्पष्ट ही ज्ञात हो रहा है, कि—यह आश्रम का ही प्रदेश है ॥१५॥

१ अयं श्लोकः क्वचिन्न ।

सूतः—सर्वमुपपन्नम् ।

राजा—( स्तोकमन्तरं गत्वा — ) [1]आश्रमोपरोधो माभूत्, [2]तदिहैव रथं स्थापय, यावदवतरामि ।

सूतः—धृताः प्रग्रहाः, अवतरत्वायुष्मान् ।

राजा—(अवतीर्य, [3]आत्मानमवलोक्य च ) सूत ! विनीतवेषेण [4]प्रवेष्टव्यानि तपोवनानि, तदिमानि तावद् गृह्यन्तामाभरणानि, धनुश्च । ( —इति सूतस्यार्पयति । सूतो—गृह्णाति ) ।

---

सर्वं=भवदुक्तम्, उपपन्नं=युक्तियुक्तम् । आश्रमाभोग एवायमित्यर्थः ।

स्तोकम्=अल्पम्, अन्तरम्=अभ्यन्तरम्, आश्रमस्योपरोधः—आश्रमोपरोधः= आश्रममर्यादाभङ्गः, मा भूत्,= मा भवतु, तत्=तस्मात्, इहैव=अस्मिन्नेवाश्रम-बहिर्भागे, रथं स्थापय=व्यवस्थापय । यावत्=तावत्पर्यन्तं—यावदहम्, अवतरामि = रथादवरोहामि । प्रग्रहाः=रश्मयः, धृताः = आकृष्टाः । रथोऽवस्थित इति यावत् ।

आत्मानं=स्ववपुः, विनीतश्चासौ वेषश्च विनीतवेषः, तेन=अनुद्धतेन वेषेण । तपोवनानि=आश्रमाः । धनुः=कार्मुकम् । आभरणानि=भूषणानि । गृह्यन्ताम्= ग्राह्याणि, इति=इत्युक्त्वा, सूतस्य=सूताय, अर्पयति=ददाति । अत्र सम्बन्ध-सामान्यविवक्षायां षष्ठी । गृह्णाति=धनुराभरणानि चादत्ते सूतः ।

---

सूत—आपका तर्क सर्वथा युक्ति सङ्गत है । यह आश्रम का ही प्रदेश है ।

राजा—( कुछ दूर और चलकर ) सूत ! इस आश्रम की मर्यादा का भंग न हो, इसलिए तुम रथ को यहीं रोक लो, जिससे मैं रथ से यहीं उतर जाऊं ।

सूत—महाराज ! घोड़ों की लगाम खींचकर मैंने रथको खड़ा कर दिया है । श्रीमान् अब उतरें ।

राजा—( उतर कर अपनी वेश भूषा को देखकर ) सूत ! आश्रममें विनीत ( सादे ) वेष से ही जाना उचित होता है, अतः मेरे इन आभूषणों व धनुष को तुम यहीं रख लो ।

[ राजा—सूतको अपने आभूषण आदि देता है । सूत-उन्हें लेता है ] ।

---

१ 'तपोवननिवासिनामुप' । २ 'एतावत्येव रथं स्थापय' । ३ क्वचिन्न । ४ 'प्रवेश्यानि' ।

राजा—यावदाश्रमवासिनः प्रत्यवेक्ष्य [1]निवर्त्तिष्ये तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः ।

सूतः—यथाऽऽज्ञापयत्यायुष्मान्[2] । ( इति निष्क्रान्तः ) ।

राजा—( परिक्रम्याऽवलोक्य च- ) [3]इदमाश्रमपदं, तावत् प्रविशामि । ( प्रविश्य, प्रवेष्टकेन निमित्तं सूचयित्वा- ) [4]अये !

शान्तमिदमाश्रमपदं, स्फुरति च बाहुः, कुतः फलमिहास्य ? ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ १६ ॥

आश्रमवासिनः—तापसान्, प्रत्यवेक्ष्य = दृष्ट्वा, यावत्—निवर्त्तिष्ये = निवर्त्स्यामि, तावत् = तावत्कालपर्यन्तम्, आर्द्रं = शीतलं पृष्ठं येषान्ते आर्द्रपृष्ठाः = व्यपगतश्रमाः । कृतयथोचितोपचारा इति यावत् ।

इति = इत्युक्त्वा । निष्क्रान्तः = सूतो रङ्गप्रदेशान्निर्गतः ।

परिक्रम्य = किञ्चिच्चरणविन्यासं कृत्वा, अवलोक्य = इतस्ततो विलोक्य । इदम्, आश्रम एव पदमाश्रमपदं । वर्त्तत इति शेषः । प्रविशामि तावत् = प्रविशामीत्यर्थः । तावदिति वाक्यालङ्कारे । प्रवेष्टकेन = बाहुना । दक्षिणेनेत्यर्थादेव । पुरुषदक्षाङ्गस्फुरणस्यैव शुभसूचकत्वात् । तदुक्तं 'वामेतरभुजस्पन्दो वरस्त्रीलाभदायकः' इति शकुनशास्त्रे । निमित्तं = शकुनं । 'निमित्तं हेतुलक्ष्मणोः' इत्यमरः । सूचयित्वा = नाटयित्वा । 'भुजबाहू प्रवेष्टो दो'रित्यमरः । अये ! = अहो ! । शान्तमिति । इदमाश्रमपदं = पुरो विभाव्यमान-

राजा—जब तक मैं आश्रमवासियों का दर्शन करके आता हूँ, तब तक तुम घोड़ों को, रथ से खोलकर, घास पानी चारा-देकर ताजा कर लो ।

सूत—जो आज्ञा महाराज की । ( ऐसा कहकर सूत जाता है ) ।

राजा—( थोड़ा चलकर सामने देखकर ) यह आश्रम प्रदेश है, इसमें प्रवेश करूं ।

[आश्रम के द्वार में प्रवेश कर, दाहिनी भुजा का फड़कना सूचित करता हुआ-] । हैं ! यह आश्रम तो शान्ति का स्थान है, न कि शृङ्गार का, परन्तु मेरी दहिनी

१ 'प्रत्यवेक्ष्याऽहमुपावर्त्ते' । २ 'तथा' । ३ 'इदमाश्रमद्वारम् । यावत्प्रविशामि । ( प्रविश्य, निमित्तं सूचयन् )' । ४ कच्चिन्न ।

( नेपथ्ये— )

इदो इदो [1]पिअसहीओ।

[ इत इतः [2]प्रियसख्यौ ]।

राजा—( कर्णं दत्त्वा— ) अये! दक्षिणेन वृक्षवाटिकामालाप

माश्रमस्थानं शान्तम् = शृङ्गाररसाननुगुणम्। बाहुः = मम दक्षिणो भुजः। च = पुनः। स्फुरति = स्फुरन् कान्तालाभमादिशति। अस्य = भुजस्फुरणस्य, इह = अस्मिन्नाश्रमे, फलं कुतः ? = कथमस्य साफल्यं भवितुं युज्यते।

अथ वा = किं वा। अलं चिन्तया। भवितव्यानाम् = अवश्यम्भाविनां, द्वाराणि=अभ्युपायाः। "अभ्युपाये निर्गमने च द्वारमित्यभिधीयते' इति विश्वः। सर्वत्र = सर्वेषु प्रदेशेष्वपि। भवन्ति = जायन्ते। [ सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासः। अनयाऽऽर्यया 'परिकर'नामकं मुखसन्धेर्द्वितीयमङ्गं सूचितं। तल्लक्षणन्तु—'समुत्पन्नार्थबाहुल्यो ज्ञेयः परिकरः' इति दर्पणे। सङ्क्षेपेण सूचितस्यार्थस्य बाहुल्येन सूचनं परिकर इति च तदर्थः। औत्सुक्यं बीजमत्र वृद्धिं गतम् ]॥ १६॥

नेपथ्ये = यवनिकायाम्। इत इतः = अस्यामस्यां दिशि। प्रियसख्यौ = अनसूया-प्रियंवदे! 'आगच्छतं युवा'मिति शेषः। "नायिकानां, सखीनां च शौरसेनी प्रकीर्तिता' इति भरतोक्तेरासां प्राकृतभाषा प्रयुज्यते।

कर्णं दत्त्वा = श्रुत्वा। तादृगभिनीयेत्यर्थः। वृक्षाणां वाटिका, तां—

भुजा फड़क रही है, जो कि सुन्दर स्त्री के लाभ को सूचित कर रही है। भला, इस शकुन का फल इस शान्त तपोवन में कैसे हो सकता है! अथवा, भवितव्यता को तो कोई रोक नहीं सकता है, भावी के द्वार ( मार्ग ) तो सर्वत्र ही रहते हैं। अर्थात् होनहार सब जगह ही हो सकती है। अतः यहाँ भी सुन्दर स्त्री का लाभ सम्भव ही है॥ १६॥

[ नेपथ्य में—]

अरी प्रिय सखियों! इधर आओ, इधर।

राजा—( कान देकर ) इस वाटिका के दाहिनी ओर कुछ शब्द सा सुनाई

१ 'इदो इदो सहीओ'। २ सख्यौ।

इव श्रूयते, यावदत्र गच्छामि । ( परिक्रम्याऽवलोक्य च— ) अये ! एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्त्तन्ते । ([1]निपुणं निरूप्य-) अहो ! मधुरमासां दर्शनम् ।

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥१७॥

---

वृक्षवाटिकाम् = उपवनं । दक्षिणेन = उपवनस्य दक्षिणस्यां दिशीत्यर्थः । 'अमात्यगणिकागेहोपवने वृक्षवाटिके'त्यमरः । "एनपा द्वितीया" । आलाप इव = वार्त्तालाप इव ।

एताः = इमाः, तपस्विनाम [ अल्पाः कन्याः— ] कन्यकाः—तपस्वि-कन्यकाः = मुनिबालिकाः । स्वस्य यत्प्रमाणं तस्यानुरूपैः = स्वशक्तियोग्यैः । 'प्रमाणं मान-शास्त्रयो'रिति धरणिः । सेचनस्य घटाः—सेचनघटास्तैः—सेचनघटैः=सेचनोपयोगिकलशैः । बालाः पादपा—बालपादपास्तेभ्यः—बालपाद-पेभ्यः = बालतरुपोतेभ्यः, पयः=जलं, दातुम्=प्रदातुम्, इत एव=अस्यामेव दिशि, अभिवर्त्तन्ते = आगच्छन्ति ।

निपुणं = बाढं, निरूप्य = दृष्ट्वा । अहो ! = आश्चर्यम् ! । मधुरं = मनोहारि । "मधुरं रसवत्स्वादुप्रियेष्वि" ति विश्वः । दृश्यते यत्तत् दर्शनं = स्वरूप ।

शुद्धान्तेति । शुद्धान्तेषु दुर्लभं—शुद्धान्तदुर्लभम् । इदम् = ईदृशं । पुरो दृश्यमानं । वपुः = शरीरं । यदि आश्रमे वसति तच्छीलस्तस्य—आश्रमवासिनः = वनवासिनोऽपि, जनस्य = मुनिबालिकालोकस्य । अस्तीति शेषः । तर्हि खलु =

---

दे रहा है, अच्छा, पहिले यही चलूं। (कुछ चलकर सामने ओर देखकर) ये तपस्वियों की कन्याएँ अपने ही अनुरूप छोटे २ सेचन घट ( झारियाँ, कलशी ) लिए हुए, पौधों में जल देने के लिए, इधर ही आ रही हैं । ( अच्छी तरह देखकर–) अहो ! इनका सुन्दर रूप व आकृति भी बड़ी ही मनोहारिणी है ।

यदि–राजमहलों में भी कठिनता से मिल सकने वाला ऐसा सुन्दर स्वरूप ( शरीर ) इन आश्रमवासी स्त्रियों का हो सकता है, तो यह कहना पड़ेगा

---

[1] अयं पाठः क्वचिन्न ।

[1]यावदेताश्छायामिमामाश्रित्य प्रतिपालयामि ।

( —इति विलोकयन् स्थितः ) ।

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ) ।

[ शकुन्तला[2]—इदो इदो प्रिअसहीओ ] ।

[ [2]इत इतः प्रियसख्यौ ] ।

---

निश्चयेन, वनलताभिः=अरण्यवल्लीभिः, गुणैः=सौन्दर्य-कोमलत्वादिभिः, उद्याने लता-उद्यानलताः = आरामवीरुधः, दूरीकृताः =निराकृताः । धिक्कृता इत्यर्थः । [ अत्र निदर्शनाऽलङ्कारः, अप्रस्तुतप्रशंसा च, तयोः संसृष्टिः । प्रतिवस्तूपमां केचन मन्यन्ते, छेक-वृत्त्यनुप्रासौ च । ]

यावत्=किञ्चित्कालं, छायामिमां=संनिहिततरुच्छायामिमाम् । आश्रित्य= आस्थाय, एताः = इमा मुनिकन्यकाः, प्रतिपालयामि = प्रतीक्षे । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः ।

उक्तमनतिक्रम्य यथोक्तं—व्यापारो यस्याः सा-यथोक्तव्यापारा = वृक्षान-भिषिञ्चन्ती ।

---

कि-वनकी लताओं ने सौकुमार्य आदि अपने गुणों से उद्यान (बगीचे) की लताओं को भी मात कर दिया ।

अर्थात्-अन्तःपुर की सर्वविध उपभोग साधन सम्पन्न राजललनाओं के रूप को तिरस्कृत करनेवाला रूप-सौन्दर्य यदि, वनवासिनी आभूषणादि शून्य इन तापस कन्याओं का हो सकता है, तो यही कहना होगा कि—जङ्गली लताओं ने उद्यान ( बगीचे ) की लताओं को मात कर दिया । ( तापसकन्या—जंगली लता । राजाङ्गना-उद्यान लता ) ॥ १७ ॥

अच्छा, इस वृक्ष की छाया में खड़े होकर इनकी प्रतीक्षा करूँ ।

( छाया में खड़ा होकर उनको देखता है ) ।

[दो सखियोंके साथ घड़ोंसे पौधोंकी जड़में जल सींचती हुई शकुन्तला का प्रवेश] ।

शकुन्तला—अरी प्रिय सखियों ! इधर आओ, इधर ।

---

१ 'यावदिमां छायामाश्रित्य प्रतिपालयामि' । २ अयं पाठः क्वचिन्न ।

एका—हला सउन्तले ! [2]तुवत्तो वि तादकण्णस्स अस्समरुक्खआ [3]पिअदरा त्ति तक्केमि, जेण णोमालिआकुसुमपरिपेलवावि[4] तुमं एदाणं आलवालपरिऊरणे णिउत्ता !।

[ हला शकुन्तले ! त्वत्तोऽपि तातकण्वस्य आश्रमवृक्षाः प्रियतरा इति तर्कयामि; येन नवमालिकाकुसुमपरिपेलवाऽपि त्वमेतेषामालवाल-परिपूरणे नियुक्ता ! ]।

शकुन्तला—हला[5] अणसूए[5] ! ण केवलं तादस्य[6] णिओओ, मम वि एदेसुं सहोअरसिणेहो। ( —इति वृक्षसेचनं [7]नाटयति )।

[ हला[5] अनसूये[5] ! न केवलं तातस्य नियोगो, ममाऽप्येतेषु सहोदरस्नेहः ]।

---

सखीभ्याम् = अनसूयाप्रियंवदाभ्याम्। हला != अयि !। 'समानाभिस्तथा सख्यो 'हला' भाष्याः परस्परम्' इति नाट्यशास्त्रम्। नवमालिकायाः कुसुमानि, तद्वत्परिपेलवा–नवमालिकाकुसुमपरिपेलवा = प्रत्यग्रनवमालिकाकुसुमसुकुमारा। 'पेलवं कोमले तनौ' इति शाश्वतः। आलवालानां पूरणे—आलवालपूरणे = वृक्ष-मूलवर्त्तिजलावस्थितिस्थानपरिपूरणे। "स्यादालवालमावालमावापः" इत्यमरः। 'आलवालं विदुर्धाराधारणं द्रवतोऽम्भसः" इति च कोशान्तरम्।

तातस्य नियोगः—( तातनियोगः ) = पितुराज्ञा,—सा एव सेचने न कारणं, किन्तु—मम एतेषु = आश्रमतरुपोतेषु, सहोदरेष्विव स्नेहः-सहोदरस्नेहः = भ्रातृवत्स्नेहः। अस्तीति शेषः। नाटयति=रूपयति। तथाऽनुतिष्ठतीत्याशयः।

---

एकसखी—सखी शकुन्तले ! मैं समझती हूँ, कि-तात कण्व को आश्रम के ये वृक्ष तेरे से भी अधिक प्रिय हैं। इसीलिए तो नव मालिका ( नेवारी ) के फूलों से भी कोमल अङ्ग वाली तुझको इन वृक्षों के आलवालों ( थाल, क्यारी ) में जल देने के लिए उन्होंने लगा रखा है।

शकुन्तला—अरी प्रिय सखी अनुसूये ! पिताजी की आज्ञा है इसीलिए मैं इनमें जल देती हूँ, यह बात नहीं है, किन्तु मेरा भी इन वृक्षों में सहोदर भाई का सा ही स्नेह है। ( —वृक्षों में जल देती है )।

---

१ 'अनसूया'। २ 'तत्तो'। ३ 'पिअदरेत्ति'। ४ 'कुसुमपेलवा तुमं वि'। ५ क्वचिन्न। ६ तादणिओओ एव्व, अत्थिमे सोदरसिणेहो एदेसु'। ७ 'रूपयति'।

द्वितीया—सहि सउन्तले ! उदअ लम्भिदा एदे गिह्मआलकुसुम दाइणो अस्समरुक्खआ । दाणिं अदिक्कन्तकुसुमसमए वि रुक्खके सिञ्चह्म, तेण अणहिसन्धिगुरुओ धम्मो भवस्सदि ।

[ सखि ! शकुन्तले ! उदकं लम्भिता एते ग्रीष्मकालकुसुमदायिन आश्रमवृक्षाः, इदानीमतिक्रान्तकुसुमसमयानपि वृक्षान् सिञ्चामः, तेन अनभिसन्धि-गुरुको धर्म्मो भविष्यति ]।

शकुन्तला—हला पिअंवदे ! रमणिज्जं मन्तेसि । (—इति भूयो वृक्ष-सेचनं नाटयति ) ।

[ हला प्रियंवदे ! रमणीयं मन्त्रयसि ] ।

राजा—( निर्वर्ण्य, आत्मगतं- ) कथमियं सा कण्वदुहिता शकुन्तला[२] ! ( [२]सविस्मयम् ) [२]अहो ! असाधुदर्शी खलु [३]भगवान् [४]कण्वो य इमामाश्रमधर्मे नियुङ्क्ते ।

---

लम्भिताः—ग्राहिताः । ग्रीष्मकाले कुसुमं ददति तच्छीलाः—ग्रीष्मकाल-कुसुमदायिनः—ग्रीष्मर्त्तुपुष्पप्रदाः, अतिक्रान्तः कुसुमसमयो येषान्ते – अतिक्रान्त-कुसुमसमयाः, तान्—व्यतीतपुष्पसमयान् , नास्ति—अभिसन्धिः यस्मिन्नेवंविधो-ऽत एव [ गुरुरेव—] गुरुकः—अनभिसन्धिगुरुकः = फलानुसन्धानरहितत्वाद्गुरु-तरः । रमणीयं = सुन्दरं, मन्त्रयसि=वदसि ।

निर्वर्ण्य = नितरां विलोक्य । आत्मगतम् = स्वयमेव । विमृशतीत्यथः । तदुक्तम्—"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मत" मिति । [ सा० द० ] ।

सा=श्रुतपूर्वा, प्रसिद्धा च । कण्वदुहिता = कण्वतनया । शकुन्तला ।

---

दूसरी सखी—सखी शकुन्तले ! ग्रीष्मकाल में फूल देनेवाले इन आश्रम-वृक्षों में तो जल देही दिया गया । अब जिन वृक्षों का अभी फूलने का समय नहीं है, उनको भी चलो जल दें । इससे हमें निःस्वार्थ गुरुतर धर्म प्राप्त होगा ।

शकुन्तला—अरी प्रियंवदे ! तू बहुत ठीक बात कह रही है ।

राजा—(अच्छी तरह देखकर, मन हीं मन) क्या यही वह कण्व की पुत्री

---

१ 'प्रियंवदा' । २ [illegible] । ३ तत्र भवान् कण्वः । ४ 'काश्यपः' पा० ।

✓ इदं किलाऽव्याजमनोहरं वपु-
स्तपःक्षमं[1] साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां[2] छेत्तुमृषिर्व्यवस्यति ॥१८॥

न साधु पश्यतीत्यसाधुदर्शी=असाधुकारी, भगवान् = सकलज्ञाननिधिः, काश्यपः = कण्वः । 'कण्व' इत्येव वा क्वचित् पाठः । आश्रमस्य धर्मस्तस्मिन् आश्रमधर्मे = तपोवनकठिनकर्मसु-वृक्षसेचनादिषु, नियुङ्क्ते = विनियोजयति ।

इदमिति । नास्ति व्याजः=आभूषणादिधारणं यत्र-तदव्याजं, [ सत्—] मनोहरम् = अव्याजमनोहरं = स्वभावसुन्दरम्, इदं=शकुन्तलाया, वपुः=शरीरं, तपसः क्षमं तपःक्षमं—तपश्चरणयोग्यं, साधयितुं=कर्त्तुं, यः किल ऋषिः=कण्वः । इच्छति = समीहते, सः = ऋषिः, ध्रुवं=नूनं, नीलमुत्पलं-नीलोत्पलं, नीलोत्पलस्य पत्राणां धारया—नीलोत्पलपत्रधारया=नीलकमलपलाशाग्रभागेन, शम्येव लता—तां—शमीलतां = सक्तुफलावृक्षं [ कण्टकितकठोरत्वचं शमीवृक्षं ] छेत्तुं—व्यवस्यति=समीहते ।

[ शमीलतासादृश्योद्भावनादभिप्रायनामकञ्च नाटकलक्षणमुपन्यस्तम्,—'अभिप्रायस्तु सादृश्यादद्भुतार्थस्य कल्पना'—इति साहित्यदर्पणोक्तेः ] ॥१८॥

शकुन्तला है ! । (आश्चर्य के साथ) अहो ! भगवान् कण्व तो बड़ा ही अनुचित कर रहे हैं, जो इस कोमलाङ्गी बाला को इस आश्रमोचित धर्म ( तपस्या एवं वृक्षों को जल देना आदि कठिन काम ) में लगा रहे हैं ! ।

इस स्वभाव सुन्दर, मनोहर शरीर वाली बाला को जो ऋषि तपस्या के योग्य बनाना चाहते हैं, वे ऋषि तो मानों नील कमल की कोमल पत्ते की धारा से शमी वृक्ष ( जांटो, छोंकरा ) को काटना चाहते हैं ।

( शकुन्तला—नीलोत्पल की कोमल पत्ती के समान है । तपस्या—कण्टक युक्त कठोर-शमी वृक्ष के समान है ) ॥ १८ ॥

१ 'क्लमं । २ 'समिल्लतां सेक्तुं' ।

भवतु, पादपान्तरित एव [1]विश्वस्तां तावदेनां पश्यामि।
(—इति तथा करोति)।

शकुन्तला—[2]हला अणसूए! अदिपिणद्धेण वक्कलेण पिअंवदाए दढं [3]पीडिदा ह्मि, ता सिढिलेहि दाव णं।

[हला अनसूये! अतिपिनद्धेन वल्कलेन प्रियंवदया दृढं पीडि-[3]तास्मि, तत् शिथिलय तावदेनत्[4]]।

[अनसूया—शिथिलयति]।

प्रियंवदा—(सहासम्—) एत्थ दाव पओहरवित्थारहेदुअं अत्तणो जोव्वणारम्भं उवालह, मं किं उवालहसि?।

[अत्र तावत् पयोधरविस्तारहेतुकमात्मनो यौवनारम्भमुपालभस्व, मां किमुपालभसे?]।

---

पादैरन्तरितः—पादपान्तरितः=वृक्षपङ्क्तिव्यवहितः, विश्वस्तां=निःशङ्काम्। तावत्=कार्त्स्न्येन, एनां=शकुन्तलां, पश्यामि=निर्वर्णयामि।

इति=इत्युक्त्वा तथा करोति=निभृतं पश्यति।

अतितरां पिनद्धेन—अतिपिनद्धेन=दृढं बद्धेन, वल्कलेन=वृक्षत्वग्-वस्त्रेण, दृढं=भृशं, पीडिताऽस्मि=बाधिताऽस्मि। शिथिलय=शिथिलं कुरु। व्यपनय बन्धनम्।

हासेन सहितं—सहासं=सोपहासं। जगादेति शेषः। पयोधरयोर्विस्तारे [हेतु-रेव—] हेतुकस्तं—पयोधरविस्तारहेतुकं=स्तनाभोगवर्द्धनकारणम्, आत्मनः=

---

अच्छा, वृक्ष के पीछे छिपकर निर्भय होकर मैं विहार करती हुई इसको देखता हूं। (वृक्ष के पीछे छिपकर शकुन्तला को देखता है)।

शकुन्तला—अरी अनुसूये! देख प्रियंवदा ने मेरे इस वल्कल वस्त्र को (आंगी—चोली को) बहुत कस कर बान्ध दिया है, जिससे मुझे बड़ी पीड़ा हो रही है। अतः इसे थोड़ा ढीला तो कर दे।

[अनुसूया—कञ्चुकी को ढीली करती है]।

प्रियंवदा—(हंसती हुई—) इसमें तो तूं अपने यौवन के आरम्भ को—

---

१ 'विश्रब्धं'। २ 'सहि'। ३ 'णिअन्तिदह्मि' [नियन्त्रिताऽस्मि]। ४ 'देतत्'।

राजा—सम्यगियमाह—

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
स्तनयुगपरिणाहाऽऽच्छादिना वल्कलेन ।
वपुरभिनवमस्याः पुष्यति स्वां न शोभां
कुसुममिव पिनद्धं पाण्डुपत्त्रोदरेण ॥ १६ ॥

स्वस्य, यौवनस्यारम्भस्तं–यौवनारम्भ = यौवनोद्भेदम्, उपालभस्व = तस्मै कुप्य, माम् = प्रियंवदां, किमुपालभसे ? = किं निन्दसि ? । नात्र मम कश्चनाऽपराधः ।

सम्यक् = सत्यम्, इयं = प्रियंवदा ।

इदमिति । स्कन्धदेशे = अंसप्रदेशे, उपहितः = दत्तः । सूक्ष्मः = तनुतरो-ग्रन्थिः = बन्धनं यस्य तेन, स्तनयोः = वक्षोजयोः, परिणाहम् = आभोगम्, आच्छादयति = पिधत्ते तच्छीलेन, वल्कलेन = वल्कलकञ्चुकेन, अस्याः = शकुन्तलायाः, इदम् = चारुतरम्, अभिनवम् = अपूर्वम्, वपुः = शरीरम्,— पाण्डूनां = परिणामपाण्डुराणां, पत्त्राणां = तरुदलानाम्, उदरेण = अभ्यन्तरेण कोमलभागेन, पिनद्धं = संसक्तं, कुसुममिव = प्रसूनमिव,—स्वाम् = आत्मीयां स्वकीयां सहजां, शोभां=छविं, न पुष्यति = न बिभर्त्तितमाम् । अथवा काकुरियम् । पुष्यत्येवेत्यर्थः ।

[ कुसुमस्य जरठपत्राच्छादितस्येव शकुन्तलावपुषः शोभां वल्कलमिदं पिधत्ते । तदियं न वल्कलयोग्येत्याशयः । उपमाऽत्राऽलङ्कारः ] ॥ १६ ॥

जिससे तेरे ये पयोधर ( स्तन ) बढ़ते ही जा रहे हैं—उलहना ( दोष ) दे । मुझे क्यों उलाहना देती है ? । अर्थात् यौवन के उभाड़ के कारण ही तेरे यह कुच—कलस बढ रहे हैं । जिससे वल्कल वस्त्र ( कञ्चुकी ) भी कसते जा रहे हैं । भला, मैंने कहाँ कस के इसे बांधा है ? ।

राजा—यह सखी ठीक ही कह रही है ।

स्कन्ध प्रदेश पर जिसमें सूक्ष्म ग्रन्थि ( घुण्डी ) लगी हुई है, तथा विशाल स्तन युगल के परिणाह ( फैलाव ) को ढक लेने वाले, इस वल्कल वस्त्र से इस बाला की सहज मनोहर शोभा उसी प्रकार छिप रही है, जैसे कोमल कमल के फूल को—पुराने पत्ते से ढक देनेपर उसकी शोभा दब सी जाती है ॥१९॥

अथ वा काममननुरूपमस्या वपुषो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति । कुतः—

सरसिजमनुविद्धं शैवलेनापि रम्यं,
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी,
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ? ॥२०॥

अथ वा = किं वा, कामम् = अत्यन्तम्, अस्या वपुषः = शरीरस्य, अननुरूपम् = असदृशम्, अयोग्यमपि, वल्कलं = वृक्षत्वग्वस्त्रं, अलङ्कारस्य=भूषणस्य, श्रियं = शोभां, न पुष्यति = न लभते, इति पुनः न = नैव, किन्तु लभत एव, नञ्द्वयेन प्रकृतार्थदार्ढ्यबोधनात् । कुतः ? = कस्मादेतत् ? । 'उच्यते' इति शेषः । तत्स्वयमेवाह—

सरसिजमिति । शैवलेन[२]=शैवालेन, अनुविद्धं = संसक्तमपि, सरसिजं = कमलम्, रम्यं = मनोहारि । 'भवति' । मलिनमपि = मलीमसमपि, लक्ष्म = कलङ्कः, हिमांशोः = चन्द्रस्य, लक्ष्मीं = शोभाम्, तनोति = पुष्णाति [ एव- ] । वल्कलेनापि = वल्केनापि, इयं तन्वी = कृशतराङ्गयष्टिरियं शकुन्तला, अधिकं = कामं, नितरा, मनोज्ञा = मनोहारिणी । यतः-मधुराणां = रम्याणाम् ! आकृतीनां = रुचिरसंस्थानानां वस्तूनां, किमिव = किं तत् ? यत्, मण्डनं = भूषणं, न = न भवति ? । अपितु सर्वमपि रम्याणां श्रियमेव पुष्णाति,

अथवा—इसके अनुरूप नहीं होते हुए भी यह वल्कल इसके शरीर पर रहने से अलङ्कार ( आभूषण ) की तरह ही, इसके शरीर की शोभा को बढ़ा रहा है । क्योंकि—

कमल का पुष्प यदि शैवाल ( जल की काई ) से भी युक्त हो, तो भी सुन्दर ही मालूम होता है । चन्द्रमा का कलङ्क—मलिन होते हुए भी चन्द्रमा की शोभा को बढ़ाता ही है । इसी प्रकार यह कोमलाङ्गी बाला भी इस वल्कलवस्त्र से अधिक सुन्दर ही मालूम होती है । ठीक ही है, सुन्दर मनोहर आकृति वालों

१ क्वचिन्न । २ 'जलनीली तु शैवालं शैवलः' इत्यमरः । ३ · क्यते

अपि च—

**कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपं**
**न मनसि रुचिभङ्गं स्वल्पमप्यादधाति ।**
**विकचसरसिजायाः स्तोकनिर्मुक्तकण्ठं,**
**निजमिव कमलिन्याः कर्कशं वृन्तजालम् ॥ २१ ॥**

---

कण्ठे विषमिव नीलकण्ठस्य, अतः-कलङ्केन चन्द्रस्येव, शैवालेन कमलस्येव वाऽस्या वल्कलेन शोभैवेत्याशयः । अर्थान्तरन्यासः ॥ २० ॥

कठिनमपीति । मृगस्येवाक्षिणी यस्यास्तस्याः–मृगाक्ष्याः = चपलायतलोचनायाः, कठिनमपि=कठोरमपि, तद्वपुषोऽनर्हमपि, अतिशयेन कान्तं–कान्तरूपं= कमनीयं, कान्ताङ्गसंस्पर्शवत्कान्तम्, वल्कलं, विकचानि सरसिजानि यस्याः सा — तस्याः = उत्फुल्लकमलायाः, स्तोकम्—अल्पं, निर्मुक्तः—त्यक्तः, [२]कण्ठो येन तत् स्तोकनिर्मुक्तकण्ठं=कण्ठादधोऽधःप्रसृतं, कमलिन्याः=पद्मलतायाः, निजं= स्वकीयं, कर्कशं=कठोरं, वृन्तजालमिव=प्रसवबन्धनपटलमिव, मनसि=स्वान्ते, स्वल्पमपि = किञ्चिदपि, रुचेः = कान्तेः, भङ्गं = विच्छेदं, नादधाति=न कुरुते ।

[ आगलमाप्रपदं च बद्धस्य वल्कलस्य—कठिनेन कमलिनीवृन्तजालेन साम्यादुपमालङ्कारः । 'प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधन'मित्युक्तं प्रसिद्धिनाटकलक्षणं च सूचितं श्लोकद्वयेन ] ॥ २१ ॥

---

के लिए कौन वस्तु शोभाधायक नहीं होती है ?। अर्थात् सुन्दर आकृतिवाले के शरीर पर साधारण सी वस्तु भी अलङ्कार के तुल्य ही मालूम होती है ॥ २० ॥

और भी—

इस मृगाक्षी के शरीर पर कण्ठ से नीचे तक बँधा हुआ, यह वल्कल–कठोर होते हुए भी, उसी प्रकार मन में थोड़ी सी भी अरुचि पैदा नहीं करता है, जैसे विकसित कमल रूपी पुष्पों वाली कमलिनी (कमल की लता) का, फूलों से लेकर जड़ तक नीचे की ओर लगा हुआ, अपना कठोर नाल ( काँटों से भरी हुई कमल की डण्डी ) बुरा नहीं मालूम होता है ॥ २१ ॥

---

१ क्वचिन्न । २ 'कण्ठो गले सन्निधाने ध्वनौ मदनपादपे' इति मेदिनी ।

**शकुन्तला**—( अग्रतोऽवलोक्य- ) सहीओ ! एस वादेरिदपल्लवाङ्गुलीहिं किम्पि वाहरेदि विअ मं [1]चूअरुक्खओ । ता जाव णं सम्भावेमि ! (—इति [2]तथा करोति )।

[ सख्यौ ! एष वातेरितपल्लवाङ्गुलीभिः किमपि व्याहरतीव मां [2]चूतवृक्षः, तद्यावदेनं सम्भावयामि ]।

**प्रियंवदा**—हला सउन्तले ! इध ज्जेव मुहुत्तअं चिट्ठ ।

[ हला शकुन्तले ! इहैव मुहूर्त्तकं तिष्ठ ]।

**शकुन्तला**—किंणिमित्तम् ? ।

[ किंनिमित्तम् ? ]।

**प्रियंवदा**—तुए समीवट्ठिदाए लदासणाधो विअ अअं चूअरुक्खओ पडिहादि ।

[त्वया समीपस्थितया लतासनाथ इवाऽयं [3]चूतवृक्षः प्रतिभाति]।

---

वातेन=पवनेनेरिता अतएव चञ्चलाः पल्लवा एवाङ्गुल्यस्ताभिः, व्याहरतीव=कथयतीव । आह्वयतीवेत्यर्थः । चूतवृक्षकः=आम्रतरुपोतः । सम्भावयामि=पश्यामि । [ अनुभवामि, जलं सिञ्चामि वा, ]। तथा करोति=जलसेचनं नाटयति, विलोकयति वा ।

इहैव=आम्रबालपादपसन्निधाने । किंनिमित्तम्=किमर्थम् । त्वया=

---

शकुन्तला—( आगे की ओर देखकर ) हे प्रिय सखियों ! यह आम का वृक्ष हिलते हुए पत्तों रूपी अपनी कोमल अङ्गुलियों से मानों मुझसे कुछ कह रहा है । अतः इसके पास जाती हूं । [ पास जाकर इसका सिंचन करती हूं ]।

प्रियंवदा—सखि शकुन्तले ! कुछ देर तो इस आम के वृक्ष के पास ही तूं ठहर ।

शकुन्तला—क्यों, क्या बात है ? ।

प्रियंवदा—क्योंकि तुम्हारे पास में खड़े रहने से यह आम का वृक्ष सुन्दर कोमल लता से युक्त सा मालूम होता है ।

---

१ 'केसररुक्खओ' [केसरवृक्षः] । २ 'इति परिक्रामति' । ३ 'केसरवृक्षः' ।

**शकुन्तला**—[1]अदो ज्जेव तुमं पिअंवद त्ति भणीअसि ।
[ अत एव—त्वं प्रियंवदेति भण्यसे ]।
**राजा**—[2]अवितथमाह प्रियंवदा । तथा ह्यस्याः—

**अधरः किसलयरागः, कोमलविटपानुकारिणौ बाहू ।**
**कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥ २२ ॥**

---

शकुन्तलया, समीपे = निकटे, स्थितया = व्यवस्थितया, लतया सनाथः = वल्लीपरिवृतः—इव, चूतवृक्षकः = रसालबालपादपः, प्रतिभाति = ज्ञायते ।

अत एव = मधुरभाषितया, प्रियं वदतीति-प्रियंवदा, भण्यसे = गीयसे । अन्वर्थं नाम भवत्या इत्यर्थः । अवितथं = सत्यं, तथा = यथा प्रियंवदयोक्तं तथैव, अस्याः = शकुन्तलायाः—

अधर इति । अस्याः–अधरः=अधरोष्ठः, किसलयस्येव=पल्लवस्येव रागो = लौहित्यं यस्य तथाभूतः । कोमलं विटपमनुकुरुतस्तच्छीलौ—कोमलविटपानुकारिणौ = मृदुतरशाखानुकारिणौ, बाहू = भुजौ, कुसुममिव = पुष्पमिव–च, लोभनीयं = हृदयावर्जकं, यौवनं = तारुण्यम् , अङ्गेषु = अवयवेषु, सन्नद्धम् = सर्वतोभावेन प्रकटितम्, स्थितं वा । एवञ्चाऽस्या लतासादृश्यं प्रियंवदोक्तं युज्यत एवेत्याशयः । [ उपमाऽलङ्कारः, "सञ्चयोऽर्थानुरूपो यः स पदानां पदोच्चयः" इति दर्पणोक्त्या पदोच्चयो नाम नाटकलक्षणञ्च ज्ञेयम् ] ॥ २२ ॥

---

**शकुन्तला**—तू मीठा बोलना बहुत जानती है, इसीलिए तो तूं प्रियंवदा कहलाती है । अर्थात् तू तो मेरी सुन्दरता की इस प्रकार प्रशंसा कर रही है ।

**राजा**—प्रियंवदा तो बिलकुल सत्य कह रही है । क्योंकि—

इसका अधर कोमल पत्तों की तरह है, दोनों भुजाएं कोमल २ डालियों के समान मालूम होती हैं, अङ्ग में लुभावना यौवन भी खिले हुए फूलों की तरह मालूम होता है । अतः यह बाला लता की तरह स्पष्ट ही मालूम होती है ॥२२॥

---

१ 'अदोक्खु पिअंवदासि तुमं' । [ अतः खलु प्रियंवदाऽसि त्वम् ] ।
२ 'प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा' ।

अनसूया—हला सउन्तले ! इअं सअम्बरबहु सहआरस्स तुए किदणामहेआ वनदोसिणी त्ति णोमालिआ, णं विसुमरिदासि ?।

[ हला शकुन्तले ! इयं स्वयंवरवधूः सहकारस्य—त्वया कृतनामधेया 'वनतोषिणी'ति वनमालिका,—एनां विस्मृताऽसि ? ]।

शकुन्तला—तदो अत्ताणम्पि विसुमरिस्सं। (लतामुपेत्य, अवलोक्य च–) हला ! [1]रमणीओ क्खु कालो इमस्स पादवमिहुणस्स [2]रदिअरो संवुत्तो, जेण णवकुसुमजोव्वणा णोमालिआ, अअं पि बहुफलदाए उअभोअक्खमो सहआरो। ( इति पश्यन्ती तिष्ठति )।

[ तत आत्मानमपि विस्मरिष्यामि । हला ! रमणीयः[1] खलु कालोऽस्य पादपमिथुनस्य रतिकरः संवृत्तो, येन नवकुसुमयौवना नवमालिका, अयमपि बहुफलतया उपभोगक्षमः सहकारः ! ]।

---

हला = हे सखि । 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रती'त्यमरः ।

सहकारस्य = आम्रपादपस्य, स्वयं वृणीते इति स्वयंवरा, सा चासौ वधूश्च-स्वयंवरवधूः = स्वयमेव कृताश्लेषा । त्वया कृतं नामधेयं यस्याः सा = त्वयैव वनतोषिणीति कृतनामसंस्कारा, नवमालिका = लताप्रभेदः । "सप्तला नवमालिके"ति कोशः । [नवमालिका='सेवती गुलाब'] । विस्मृता=विस्मृतवती ।

तदा = यदीमां विस्मरामि तर्हि, आत्मानमपि = स्वशरीरमपि । मत्प्राणसमेयमित्याशयः । "अथ पतिंवरा स्वयंवरा च वर्या चे" त्यमरः ।

रमणीयः = मनोहरः, कालः = ग्रीष्मसमयः । पादपमिथुनस्य = वनमालिकासहकारयोः । रतिं करोति तच्छीलः रतिकरः=आनन्दप्रदः, संवृत्तः = जातः, येन=

---

अनुसूया—सखि शकुन्तले ! इस आम के पौधे की स्वयंवरवधू यह नवमालिका लता है, जिसका तुमने 'वनतोषिणी' नाम रखा हुआ है, क्या इसे तुम भूल गई ?। क्या इसको नहीं सींचोगी ?।

शकुन्तला—यदि इसे भी मैं भूल जाऊँगी, तो फिर मैं अपने को ही भूल जाऊंगी । अर्थात् इसे मैं कभी नहीं भूल सकती हूं । देख सखि ! यह रमणीय ग्रीष्म

---

१ 'रमणीये खलु काले' । २ 'रतिकर' ।

**प्रियंवदा**—( सस्मितम्— ) अणसूए ! जाणासि किंणिमित्तं सउन्तला [1]वणदोसिणीं अदिमेत्तं पेक्खदि त्ति ? ।

[ अनसूये ! जानासि किं निमित्तं शकुन्तला वनतोषिणीमतिमात्रं प्रेक्षते इति ? ] ।

**अनसूया**—ण क्खु विभावेमि, ता कधेहि मे ।

[ न खलु विभावयामि, तत्कथय मे ] ।

**प्रियंवदा**—जह [1]वणदोसिणी अणुरूवेण पादवेण सङ्गदा, तह अहम्पि अत्तणो अणुरूवं वरं लहेअं त्ति ।

---

यतः, नवानि—कुसुमान्येव-यौवनं यस्याः सा = नवकुसुमसम्पत्तितारुण्या, नवमालिका = पाटलाऽऽख्या लता ( सेवती गुलाब इति प्रसिद्धा )। बहूनि फलानि यस्य तस्य भावस्तया = फलभरनम्रतया, उपभोगस्य = संभोगस्य, क्षमः = योग्यः, सेवनाऽर्हः, सम्भोगसमर्थश्चेति । सहकारः = आम्रभेदः । 'सहकारोऽतिसौरभः' इत्यमरः, नायिकापक्षे–कुसुमम् = आर्त्तवम् । किंनिमित्तम् ? = कुतः । अतिमात्रं = बहुकालं, प्रेक्षते = निरीक्षते । विभावयामि = तर्कयामि वेद्मि ।

---

काल इस पादपमिथुन ( नवमालिका और आम ) के लिए तो रतिकारक ( आनन्ददायक और मैथुन योग्य ) ही हो गया है । क्योंकि—इधर तो नवीन फूलों के आजाने से नवमालिका ( नेवारी ) नवयौवनवती हो रही है, और उधर यह सहकार भी फल भार से लदे रहने से उपभोग के योग्य हो रहा है [कुसुम=पुष्प । और स्त्री का मासिक धर्म, ऋतु । पुष्प आजाने से लता पूरी जवानी पर आजाती है, उसी प्रकार ऋतुकाल आने से स्त्री भी रतियोग्य हो जाती है ] ।

प्रियंवदा—(मुसकराती हुई) अनुसूये ! क्या तू जानती है, कि शकुन्तला क्यों इस नवमालिका को इस प्रकार चाव से बार २ देख रही है ? ।

अनुसूया—नहीं मैं तो नहीं जानती हूं, तू ही बता ।

प्रियंवदा—जैसे यह वनतोषिणी ( नवमालिका ) अपने अनुरूप वृक्ष

---

१ 'वनजोसिणी' [वनज्योत्स्ना] ।

[ 'यथा [1]वनतोषिणी-अनुरूपेण पादपेन सङ्गता तथा-अहमपि आत्मनोऽनुरूपं वरं लभेय'इति ]।

**शकुन्तला**—एस दे अत्तणो चित्तगतो मणोरहो।

[ एष[2] ते आत्मनश्चित्तगतो मनोरथः ]।

(—इति कलसमावर्जयति )।

**अनसूया**—हला सउन्तले ! इअं तादकण्णेण तुमं विअ सहत्थेण संवड्ढिदा माहवीलदा, ता कधं इमं विसुमरिदासि ?।

[ हला शकुन्तले ! इयं तातकण्वेन त्वमिव स्वहस्तेन संवर्द्धिता माधवीलता, तत्कथमिमां विस्मृताऽसि ? ]।

**शकुन्तला**—तदो अत्ताणम्पि विसुमरिस्सं। ( लतामुपेत्याऽवलोक्य च सहर्षम्—) अच्चरीअं अच्चरीअं, प्रियंवदे ! पिअं दे णिवेदेसि।

---

वनतोषिणी, वनज्योत्स्नेति वा वनमालिकानामधेयम्। रूपमनुगतोऽनुरूपः, [ यद्वा-रूपस्य योग्यमनुरूपं, ] तेन=स्वयोग्येन, पादपेन=सहकारतरुणा, सङ्गता=मिलिता, अहमपि=शकुन्तलाऽपि, अनुरूपं=रूपस्य योग्यम्—अनुरूप=स्वसदृशं, वरं=भर्त्तारं, लभेय=प्राप्नुयाम्।

चित्ते=स्वान्ते, गतः=स्थितः, मनोरथः=अभिलाषः। त्वमेवेत्थमभिलष्यसि, नाऽहमित्याशयः। आवर्जयति=जलसेकायाऽधोमुखं नमयति। माधवी=वासन्ती। 'वासन्ती माधवीलते'त्यमरः। लतां=वासन्तीम्। उपेत्य=गत्वा,

---

( पति ) से संगत (विवाहित) हो गई है, इसी तरह मैं भी अपने अनुरूप पति को प्राप्त करूँ—यही इसकी इच्छा है।

**शकुन्तला**—यह बात तो तेरे ही मन में होगी।

( कलस से वनतोषिणी में जल देती है )।

**अनुसूया**—सखि शकुन्तले ! पिता कण्व के हाथ से तेरी ही तरह पाली हुई यह माधवी लता है, इसको भला तूं कैसे भूल गई ?।

**शकुन्तला**—इसको यदि मैं भूल जाऊँगी तो फिर अपने को ही मैं भूल

---

१ 'वनजोसिणीं' ( 'वनज्योत्स्ना' ) २ 'एष नूनं ते आत्मगतो मनोरथः'।

[ तत आत्मानमपि विस्मरिष्यामि। आश्चर्यम्! आश्चर्यम्!, प्रियंवदे! प्रियं ते निवेदयामि ]।

**प्रियंवदा**—सहि! किं मे पिअं?।

[ सखि! किं मे प्रियम्? ]।

**शकुन्तला**—असमए क्खु एसा आमूलादो मुउलिदा माहवीलदा।

[ असमये खल्वेषा आ मूलान्मुकुलिता माधवीलता! ]।

**उभे**—( सत्वरमुपगम्य- ) सहि! सच्चं सच्चं?।

[ सखि! सत्यं सत्यम्? ]।

**शकुन्तला**—सच्चं, किं ण पेक्खध?।

[ सत्यं, किं न प्रेक्षेथे? ]।

---

असमये = पुष्पोद्गमाऽयोग्येऽपि ग्रीष्मकाले, मुकुलाः संजाता अस्याः सा—मुकुलिता = जातमुकुलोद्भेदा। वसन्ते हि वासन्ती पुष्यति, न ग्रीष्मे। "मूलं बुध्नोऽङ्घ्रिनामकः" इत्यमरः। "कुड्मलो मुकुलोऽस्त्रिया"मित्यमरः। प्रतिगतं

---

जाऊँगी। ( माधवी लता के पास जाकर, उसे देखकर, सहर्ष- ) आश्चर्य! आश्चर्य!! सखि प्रियंवदे! तेरे को मैं प्रिय बात ( खुशखबरी ) सुनाती हूँ।

**प्रियंवदा**—सखि! मेरे को क्या प्रिय बात सुना रही हो?। मेरे को प्रसन्न करने वाली क्या बात है?।

**शकुन्तला**—देख, यह माधवी लता असमय में ही नीचे से ऊपर तक फूलों की कलियों से लहलहा रही है। ( माधवी लता वसन्त में फूलती है, गर्मी में नहीं, अतः ग्रीष्मऋतु में इसका फूलना आश्चर्यजनक है )।

**दोनों सखियाँ**—सखि! क्या यह बात सत्य है?

**शकुन्तला**—हाँ, बिलकुल सत्य है, तुम भी क्या नहीं देख रही हो!। क्या तुम दोनों को यह बात नहीं दिखाई दे रही है?।

**प्रियंवदा**—( सहर्षं निरूप्य- ) सहि ! तेण हि पडिप्पिअं दे णिवेदेमि ]।

[ सखि ! तेन हि प्रतिप्रियं ते निवेदयामि ]।

**शकुन्तला**—किं मे पडिप्पिअं ? ।

[ किं मे प्रतिप्रियम् ? ]।

**प्रियंवदा**—आसण्णपाणिग्गहणासि तुमं।

[ आसन्नपाणिग्रहणाऽसि त्वम् ]।

**शकुन्तला**—( साऽसूयमिव- ) एस दे अत्तणो चित्तगतो मणोरहो, ता ण दे वअणं सुणिस्सं।

[ एष ते आत्मनश्चित्तगतो मनोरथस्तन्न ते वचनं श्रोष्यामि ]।

**प्रियंवदा**—सहि ! ण क्खु परिहासेण भणामि, सुदं मए तादकण्णस्स मुहादो 'तुह कल्लाणसूअअं एदं णिमित्तं' त्ति।

[ सखि ! न खलु ते परिहासेन भणामि। श्रुतं मया तातकण्वस्य

---

प्रियं=प्रतिप्रियम्। प्रियंवदायाः प्रियं निर्दिशन्त्याः शकुन्तलाया अपि ते प्रिय = शुभमित्यर्थः।

आसन्नं=समुपस्थितं, पाणिग्रहणं=विवाहो यस्याः सा-आसन्नपाणिग्रहणा,= उपस्थितविवाहमङ्गला। विवाहस्तेऽचिरेणैव भवेदिति। असूयया सहितं यथा स्यात्तथा—सासूयं=प्रियंवदायाः शकुनज्ञतामधिक्षिपन्तीव, कुप्यन्तीव वा। श्रोष्यामि=श्रद्दधे। 'असूया दोषारोपो गुणेष्वपी'त्यमरः। परिहासेन=उपहासेन,

---

प्रियंवदा—तो हे सखि ! ले मैं भी तुमको प्रतिप्रिय ( बदले में दूसरी प्रिय ) बात सुनाती हूं।

शकुन्तला—कहो, मेरे को क्या प्रिय बात सुना रही हो ?।

प्रियंवदा—तेरा पाणिग्रहण ( विवाह ) अब शीघ्र ही होगा।

शकुन्तला—( ताने के साथ ) यह मनोरथ तो तेरे ही मन में हो रहा है ! अतः जा, मैं तेरी बात ही अब नहीं सुनूंगी।

प्रियंवदा—सखि ! मैं तेरे से हँसी नहीं कर रही हूं। मैंने तो तात कण्व

मुखात्—'तव कल्याणसूचकमेतन्निमित्त'मिति ]।

**अनसूया**—हला पिअंवदे! अदो ज्जेव ससिणेहा सउन्तला माहवीलदां सिञ्चदि !।

[ हला प्रियंवदे ! अत एव सस्नेहा शकुन्तला माधवीलतां सिञ्चति ! ]।

**शकुन्तला**—जदो बहिणी मे भोदि, तदो किं त्ति ण सिञ्चेमि ?।

( —इति कलसमावर्जयति )।

[ यतो भगिनी मे भवति ततः किमिति न सिञ्चामि ? ]।

**राजा**—अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा भवेत् ?।

---

तातकण्वस्य = पितुः कण्वस्य। 'तातोऽनुकम्प्ये पितरी'ति हैमः। पालकत्वात्पितृसादृश्यात् 'तात'ेत्युक्तम्। इदं निमित्तं = शकुनमिदं, माधव्या अकालकुसुमोद्गमरूपं, कल्याणस्य = शुभस्य त्वत्पाणिग्रहणात्मकस्य, सूचकं = परिचायकम्।

अत एव=स्वविवाहसूचकत्वादेव, स्नेहेन=प्रेम्णा सहिता-सस्नेहा। भगिनी= भगिनीसमा, ततः = तस्मात्, किमिति न = कुतो न। अवश्यमेवेति यावत्।

[ 'राजा-कथमियं सा कण्वदुहिते' त्यारभ्य 'कलसमावर्जयती' त्यन्तं विलोभनं नाम नाटकलक्षणमुपक्षिप्तम्। तल्लक्षणं—'गुणानां वर्णनं तज्ज्ञैर्विलोभनमितीरितम्' इति ]।

अपि नाम = किं नु ?। कुलपतेः = कण्वस्य। असवर्णे = स्वजात्यतिरिक्ते,

---

के मुख से ही यह सुना है, कि—जब यह माधवी लता असमय में ही फूलेगी, तो यह शकुन्तला के लिये मङ्गल ( विवाह ) सूचक शकुन होगा।

अनुसूया—अरी प्रियंवदे ! इसीलिए यह शकुन्तला इस माधवीलता को बड़े स्नेह से सींचा करती है !।

शकुन्तला—यह लता तो मेरी बहिन के तुल्य है ( क्योंकि—पिता कण्व के हाथ से लगाई हुई है ) अतः इसको मैं कैसे नहीं सींचूं ?।

( कलश से माधवी लता में जल देती है )।

राजा—मैं समझता हूं, कि—कदाचित् यह शकुन्तला महर्षि कण्व की असवर्ण क्षेत्र ( ब्राह्मणेतर स्त्री ) से उत्पन्न कन्या होगी ?।

अथवा कृतं सन्देहेन—

**असंशयं क्षत्त्रपरिग्रहक्षमा, यदार्यमस्यामभिलाषि मे मनः ।**
**सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ २३ ॥**

क्षेत्रे = कलत्रे, सम्भवः = उत्पत्तिर्यस्याः सा । सदेहेन = संशयेन, कृतम् = अलम् । 'कृतं-युगेऽलमर्थे स्या' दिति मेदिनी । अग्रिमश्लोकेन सह वाक्यमेतत्सम्बध्यते ।

असंशयमिति । किन्तु इयम्-असशयं = निस्संशयं, क्षत्त्रेण=क्षत्रियेण मया, परिग्रहः = [1]स्वीकारः, तस्य क्षमा = योग्या,-यत् = यस्मात्, मे = मम महाकुलीनस्य, आर्यं = पवित्रं, मनः = स्वान्तम्, अभिलषति तच्छीलम् अभिलाषि = एनामिच्छति ।

तदेव सङ्गमयति—सतामिति । हि=यतः, सतां=सत्कुलप्रसूतानामार्याणाम् । 'आर्यः साधौ सौविदल्ले' इति विश्वः । सन्देहस्य = संशयस्य, पदेषु = स्थानेषु । वस्तुषु = विषयेषु, अन्तःकरणस्य = चित्तस्य, प्रवृत्तयः = वृत्तय एव, प्रमाणम् = निश्चयहेतुः । अन्तःकरणपरिणामविशेषो हि वृत्तिः । [ अत्राऽर्थान्तरन्यासः । शकुन्तलाऽनुरागरूपकाव्यार्थस्य निश्चयेनोपपत्तेः परिन्यासनामकमङ्गं निर्दिष्टम् । तदुक्तं विश्वनाथेन—'तन्निष्पत्तिः परिन्यासः' इति ] ॥२३॥

अथवा इसमें सन्देह करना ही व्यर्थ है । क्योंकि–निश्चय ही यह कन्या क्षत्रिय के ( मेरे ) विवाह करने योग्य है, क्योंकि मेरा आर्य (धर्ममर्यादानुगामी) मन इसमें अनुरक्त हो रहा है । यदि क्षत्रिय के योग्य यह कन्या न होती, यदि यह ब्राह्मण कन्या होती तो, तो मेरा मन इसमें कभी आसक्त होता ही नहीं । अतः यह कन्या अवश्य ही असवर्ण क्षेत्र समुद्भूत है । क्योंकि सन्देह स्थल में सज्जनों की अन्तःकरण की वृत्तियाँ ही प्रमाण ( निर्णायक ) होती हैं । अतएव यह कन्या अवश्य ही क्षत्रियादिक्षेत्र प्रसूता है । ब्राह्मणक्षेत्रजाता नहीं है । इस बात को मेरा मन ही कह रहा है ॥ २३ ॥

१ 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयो'रिति विश्वः ।
२ 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः ।

—तथापि तत्त्वत [1]एवैनामुपलप्स्ये ।

**शकुन्तला**—( ससम्भ्रमम् ) अम्मो ! सलिअसेअसम्भमुग्गदो णोमालिणं उज्झिअ वअणं मे महुअरो अहिवट्टदि ।

( इति भ्रमरबाधां [2]नाटयति ) ।

[ अम्मो ! सलिलसेकसंभ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्त्तते ] ।

[3]**राजा**—(—सस्पृहं विलोक्य ) साधु ! बाधनमपि रमणीयमस्याः ।

---

तथापि = युक्तिभिरन्तःकरणप्रवर्त्तनैश्च मत्परिग्रहक्षमेयमिति निर्धारणे कृतेऽपि । तत्त्वत एव = याथार्थ्येनैव, एनां = शकुन्तलाम् , उपलप्स्ये = ज्ञास्यामि, यदियं मत्परिग्रहयोग्या न वेति ।

ससम्भ्रमम् = ससाध्वसम् । 'संभ्रमः साध्वसेऽपि स्यात्संवेगादरयो'रिति मेदिनी । अम्मो !=अत्याहितम् । 'विस्मये दुःसहे अम्मो नित्यं स्त्रीभिः प्रयुज्यते' इति भरतः । सलिलस्य=जलस्य, यः सेकः = अभिषेकः, तेन–सम्भ्रमेण = सहसा, उद्गतः = उत्पतन् , उज्झित्वा = परित्यज्य, मे = मम, वदनं = मुखम् , अभि = प्रति, मधुकरः = भ्रमरः, वर्त्तते = समागच्छति । [ अनुवर्त्तत इति वा—प्रतिवर्त्तते इत्यस्यार्थः ] । इति = इत्युक्त्वा, भ्रमरस्य बाधां = भ्रमराक्रमणपीडां, नाटयति = अभिनयति । [ नाट्यशालास्थितान् सभ्यान् तथा दर्शयति ] ।

स्पृहया सहितं यथा स्यात्तथा—सस्पृहं = साभिलाषम् , अस्या बाधनमपि = पीडाऽपि, साधु = कामं, रमणीयं = मनोहारि ।

---

तो भी मैं—इस बात का ठीक २ निर्णय अवश्य करूंगा, कि—यह किस वर्ण की कन्या है ? ।

शकुन्तला—( संभ्रम = घबड़ाहट के साथ ) अरी मैया री मैया ! जल के छींटे लगने से सहसा नवमालिका से उड़कर यह भौंरा मेरे मुख पर ही मंडरा रहा है । ( भ्रमर-बाधा प्रदर्शित करती हुई इधर-उधर दौड़ती है ) ।

राजा—( बड़े चाव व प्रेम से देखकर ) वाह ! इस ( शकुन्तला ) की यह घबड़ाहट भी क्या ही रमणीय मालूम होती है ।

---

१ 'तत्त्वत एनां' । २ 'निरूपयति' । ३ 'राजा ( सस्पृहं- ) ।

यतो यतः षट्चरणोऽभिवर्त्तते
ततस्ततः प्रेरितवामलोचना।
विवर्त्तितभ्रूरियमद्य शिक्षते
भयादकामाऽपि हि दृष्टिविभ्रमम् ॥२४॥

अपि [1]च—( सासूयमिव- )।

✓चलापाङ्गां[2] दृष्टिं स्पृशसि बहुशो वेपथुमतीं,
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।

---

रमणीयतामेवोपन्यस्यति—यत इति। हि = यतः, यतो-यतः = यस्यां यस्यां दिशि। सप्तम्यर्थे सार्वविभक्तिकः तसिल्। परे तु यतो-यतः = यं यं प्रदेशं, द्वितीयार्थे तसिल्। अभियोगे द्वितीया। षट् चरणा यस्यासौ षट्चरणः = भ्रमरः, अभिवर्त्तते = अनुधावते। ततस्ततः = तत्र तत्र, प्रेरिते=प्रक्षिप्ते, वामे = सुन्दरे, लोचने = नेत्रे—यया सा, विवर्त्तिता = तिर्यगुन्नमिता, भ्रूः = भ्रुकुटिर्यया सा, इयं = शकुन्तला, अद्य = इदानीम्, नास्ति कामः = अभिलाषो यस्याः सा-अपि, अनिच्छयाऽपि, दृष्टेर्विभ्रमं=विवर्त्तनं, कटाक्ष-निक्षेपकलाम् ]। शिक्षते= अभ्यस्यति।

[ सकामत्वरूपकारणाऽभावेऽपि कार्यस्य शिक्षणस्य सत्त्वाद्विभावनाऽलङ्कारः, उत्प्रेक्षा च। तदनयोः संसृष्टिः ] ॥२४॥

**सासूयमिव** = सोपालम्भमिव। **चलापाङ्गामिति**। चलोऽपाङ्गो यस्याः सा तां = चञ्चललोचनान्ताम्। 'अपाङ्गौ नेत्रयोरन्तौ' इत्यमरः। वेपथुरस्त्यस्याः

---

जिधर २ भौंरा जाता है, उधर ही यह अपने सुन्दर नेत्रों से भौंह तान कर देखती है, मानों भ्रमर के भय से बिना इच्छा के भी यह नेत्रों का सविलास विक्षेप ( सकटाक्ष निरीक्षण ) करना ही सीख रही है॥ २४॥

और भी—( ईर्ष्यायुक्त असहन भाव से- )

हे भ्रमर ! तू इस मनोहारिणी बाला के कटाक्षों से देखा जाकर, बार २ इसके काँपते हुए अङ्गों का स्पर्श करता है। (कृतार्थ कामी भी कान्ता कटाक्षों से देखा

---

१ क्वचिन्न। २ 'चलापाङ्गं दृष्टः'।

करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं,
वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥२५॥

सा तां,—वेपथुमतीं = भयतरलितां, दृष्टिं = नयनं, बहुशः = अतिवेलं, स्पृशसि= चुम्बसि। किञ्च कर्णस्यान्तिके चरति तच्छीलः—कर्णाऽन्तिकचरः = कर्णाभ्यर्णे भ्रमन्, रहस्यमाख्यातुं शीलमस्य स इव, मृदु = मधुरं, स्वनसि = ध्वनसि। अन्योऽपि कामी कामिन्याः कर्णयोर्मृदु किमपि ध्वनत्येव।

किञ्च–करौ = हस्तपल्लवौ, व्याधुन्वत्याः = कम्पयन्त्याः, रतेः सर्वस्वं–रतिसर्वस्वं = संप्रयोगमूर्धाभिषिक्तम्, अधरम् = ओष्ठम्, पिबसि = रसयसि। अन्योऽपि कामुकः कान्ताधरबिम्बमनुभवतीति कामिसाम्यम्। अतः–हे मधुकर ! = भ्रमर ! त्वं=त्वमेव खलु = निश्चयेन, कृती = भाग्यशाली। ईदृशमुग्धारतेः सर्वाभिलषणीयाया अनायासेन लाभात्। वयं = वयन्तु–सकलकलासौभाग्यशालिनः कमनीयाकृतयोऽपि,—तत्त्वान्वेषात् = वास्तववृत्तान्तजिज्ञासया [ किमियं क्षत्रिययोग्या न वेत्यादि तत्त्वं गवेषयन्तः ], हताः = वञ्चिता एव। त्वं कृतार्थो, नाहमित्युपमानाधिक्यकथनाद्व्यतिरेकालङ्कारः।

नीलोत्पलादिभ्रान्त्या भ्रमरस्यानुवर्त्तनाद्भ्रान्तिमानलङ्कारोऽपि। 'स्वभावोक्तिः'। 'त्वं कृती'त्यत्र चरणत्रयं हेतुरिति 'काव्यलिङ्गं', समासोक्तिः, श्रुत्यनुप्रास इत्येवमत्रालङ्कारा गवेषणीयाः। साधारणच्छात्रायासकारकत्वान्न ते तन्यन्तेऽस्माभिः॥२५॥

जाता हुआ मुग्धप्रिया के काँपते हुए शरीर का आलिङ्गन करता है )। और इसके कानों के पास जाकर मानों कोई रहस्य की बात कहने के लिए तूं बार २ मधुर गुंजान करता है। ( कामी भी अपनी प्रिया के कानों के पास मुँह ले जाकर मीठे शब्दों में रहस्यमय प्रेम की बातें करता है)। और अपने हाथों को झटकारती हुई इसके रति सर्वस्व स्वरूप अधर का भी तू पान करता है। (कामी भी—अपनी प्रिया के अधर रस का—पीडा के कारण प्रिया के हाथ झटकारते रहने पर भी—बलात्कार से पान करता है )। अतः हे भ्रमर ! हमसे तो तूं ही भाग्यशाली है। हम तो विचार ही करते करते इस सुख से वंचित रह गए। और तूं ने ही सच्चा आनन्द प्राप्त किया है। ( तत्वान्वेष=यह मेरे योग्य है या नहीं। कहीं यह ब्राह्मण कन्या न हो इत्यादि विचार ) ॥ २५ ॥

[1]अपि च—

लोलां दृष्टिमितस्ततो वितनुते सभ्रूलताविभ्रमा-
माभुग्नेन विवर्त्तिना वलिमता मध्येन कम्रस्तनी।
हस्ताग्रं विधुनोति पल्लवनिभं शीत्कारभिन्नाऽधरा,
जातेयं भ्रमराभिलङ्घनभिया वाद्यैर्विना नर्त्तकी ॥ २६ ॥

लोलामिति। इयं = शकुन्तला, भ्रुवौ लते इव,-भ्रूलते, तयोर्विभ्रमेण = विक्षेपणविशेषेण सह वर्त्तमानां, लोलां = तरलां, दृष्टिं = चक्षुः, इतस्ततः = वितनुते = क्षिपति। आभुग्नेन = भयादीषत्कुटिलेन, वलिमता = त्रिवलिशालिना, विवर्त्तिना = भ्राम्यता, मध्येन = मध्यभागेन, उपलक्षिता, अत एव कम्रौ = मनोहरौ स्तनौ यस्याः सा कम्रस्तनी। 'विवर्त्तिता' इति पाठे भ्रमणाकलितेत्यर्थः।

पल्लवस्य निभं—पल्लवनिभं = किसलयाकारं, हस्ताग्रं = कराग्रभागं, विधुनोति = कम्पयति, शीत्कारेण भिन्नो—युतोऽधरो यस्याः सा शीत्कारभिन्नाधरा= शीत्कारकारिणी सती, भ्रमरेण यदभिलङ्घनं = समाक्रमणं, तस्माद्भीस्तया, वाद्यैः = मृदङ्गादिभिर्विनैव, नर्तकी = नर्तनशीला, जाता = निष्पन्ना।

और भी—

यह बाला भ्रूलता (भौंह) के विभ्रम ( विलासपूर्ण विक्षेप ) से युक्त अपनी चञ्चल दृष्टि को इधर उधर फेंक रही है। [नर्त्तकी भी–नाचते समय अपनी चञ्चल दृष्टि को इधर सभ्रूभङ्ग फेंकती है ]। तथा भ्रमर के भय से अपनी त्रिवली युक्त टेढ़ी कमर को इधर उधर घुमाने से इस बाला के कुचकलस बड़े ही कमनीय मालूम होते हैं। [ नर्त्तकी भी—नाचते समय अपनी कमर को इधर उधर टेढ़ी करती है, घुमाती है। और कमर के इधर उधर घुमाने से व टेढ़े करने से उसके स्तन भी अधिक उभड़ आते हैं, जिससे वह और भी मनोहर मालूम होती है]। पल्लव के समान आरक्त और कोमल अपने हस्ताग्र को इधर उधर झटकारती है, और सीत्कारयुक्त अधर से शोभित है। [ नर्त्तकी भी—नाचते समय अपने हाथों

१ इत आरभ्य "अतिथिसमाचारमेवाऽवलम्बिष्ये" इत्येतावान् ग्रन्थ इह क्वचिन्न दृश्यते, अग्रे च दृश्यतेऽयं पाठः। २ 'विवर्जिता' पा०।

**शकुन्तला**— हला ! परित्ताअध परित्तअध मं इमिणा दुट्ठमहुअरेण अहिहूअमाणम् ।

[ हला ! परित्रायेथां परित्रायेथां मामनेन दुष्टमधुकरेणाऽभिभूयमानाम् ]।

**उभे**—( सस्मितं—) का अह्मो परित्ताणे ? । एत्थ दाव दुस्सन्दं अक्कन्द, जदो राअरक्खिदाइं तवोवणाइं ।

[ के आवां परित्राणे ? । अत्र तावद् दुष्यन्तमाक्रन्द, यतो राजरक्षितानि तपोवनानि ]।

**राजा**—अवसरः खल्वयमस्माकमात्मानं दर्शयितुम् । न भेतव्यं !

---

नर्त्तक्यपि—लोलां दृष्टिम्, इतस्ततो विवर्त्तमानं मध्यं, हस्तचालनञ्च धत्ते इति युक्तमुक्तम् । चतुर्थचरणार्थे पादत्रयार्थस्य हेतुत्वात्काव्यलिङ्गम् । भ्रूलता,—पल्लवनिभपदयोरुपमा। अत्राऽन्येऽप्यलङ्काराः सन्ति, ते तद्रसिकैराकलनीयाः ॥२६॥

अनेन = मामनुसरता, दुष्टेन = पापिना, मधुकरेण = भ्रमरेण, अभिभूयमानां = पीड्यमानां, परित्रायेथां = युवां रक्षतम् ।

सस्मितमिति । मनाक् पीडितां प्रेक्ष्य स्मितमत्र । आक्रन्द = आह्वय । 'आक्रन्दः क्रन्दनाह्वाने' इति मेदिनी । स्वगतमिति । 'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मत'मिति विश्वनाथः । आत्मानं दर्शयितुम् =

---

को इधर उधर फेंकती है । साथ ही सीत्कार भी करती हैं ] । अतः भ्रमर के भय से यह बाला (शकुन्तला) नर्त्तकी की तरह नाच रही है। केवल वाद्य (बाजे) की ही वहाँ कमी है । अर्थात् नर्त्तकी के साथ तो नाचते समय बाजे भी रहते हैं, पर इसके पास बाजे नहीं हैं, बस, नर्त्तकी में और इसमें इतना ही अन्तर है ॥२६॥

**शकुन्तला**— अरी सखियों ! कष्ट देनेवाले इस दुष्ट भ्रमर से मुझे बचाओ ।

**दोनों सखियों**—( हंसती हुई—) हम बचाने वाली कौन होती हैं ? । दुष्यन्त राजा को बुला, वही तुझे बचायेगा । क्योंकि तपोवन की रक्षा का भार तो राजा पर ही होता है ।

**राजा**—यही मेरे प्रकट होने का अवसर है। "मत डरो, मत डरो, मत डरो"।

न भेतव्यम् ! (-इत्यर्द्धोक्ते, स्वगतम्-) एवं हि 'राजाऽहमस्मी'ति परिज्ञातं भविष्यति । भवतु । अतिथिसमाचारमेवाऽवलम्बिष्ये ।

शकुन्तला—ण एसो दुव्विणीदो विरमदि, [1]ता अण्णदो गमिस्सं। ([2]पदान्तरे, स्थित्वा, सदृष्टिक्षेपम्—) [3]हद्धी ! हद्धी ! कथं इदो वि मं अणुसरदि, ता परित्ताअध मं ।

[ नैष दुर्विनीतो विरमति । तदन्यतो गमिष्यामि । हा धिक् ! हा धिक् ! कथमितोऽपि मामनुसरति । तत् परित्रायेथां माम् ] ।

राजा—( सत्वरमुपगम्य—) आः !—

---

आत्मनः प्रकटनस्य । अवसरः = कालः । प्रकाशम् = सर्वश्राव्यम् उच्चैः । उक्तस्य-अर्द्धम् अर्द्धोक्तं, तस्मिन्—अर्द्धोक्ते = किञ्चिदुक्त्वा मध्ये एव ।

एवं = 'दुष्यन्तमाक्रन्दे'त्युक्तिं श्रुत्वा, मया यदि प्रतिवचो दीयेत तदा राजाऽहं=दुष्यन्तोऽहमिति, परिज्ञातं=ज्ञातम् । अतिथेः समाचारः=व्यवहारस्तम् । अवलम्बिष्ये = आश्रयिष्ये । चोरादिभये समुपस्थिते समासन्नोऽतिथिर्यथा परित्रातुं धावति, तथैवाहं करोमि—इत्याशयः ।

दुर्विनीतः = धृष्टः, एषः – भ्रमरः । अन्यतः = अन्यत्र । पदान्तरे = किञ्चिद्गत्वा, सदृष्टिक्षेपं = तिर्यक् लोचनं क्षिपन्ती, इतः = अत्रापि ।

त्वरया सहितं-सत्वरम्=आशु, उपगम्य = समीपं गत्वा । आः ! इति कोपेऽव्ययम् । 'आ'स्तु स्यात्कोपपीडयो' रित्यमरः ।

---

( इतना कहकर बीच में ही रुककर, मनही मन ) इस प्रकार कहने से तो 'मैं राजा हूं' यह प्रकट हो जायगा । अच्छा, अतिथि भाव के अनुरूप ही मैं बातें करूंगा ।

शकुन्तला—यह अविनीत ( दुष्ट ) भौंरा मानता ही नहीं है । इसलिए यहाँ से अन्यत्र चली जाती हूँ । ( कुछ दूर जाकर, इधर उधर देखकर ) हाय ! हाय !! यहाँ भी यह भौंरा मेरे पीछे ही आ रहा है । मुझे बचाओ, मुझे बचाओ ।

राजा—( जल्दी से पास में जाकर–) आह ! दुष्टों को दण्ड देनेवाले सुप्र-

---

१ क्वचिन्न । २ 'पदान्तरे गत्वा' । ३ 'इदो वि आअच्छदि, हला परित्ताअह मं इमिणा दुट्ठमहुअरेण अहिहूअमाणाम्' । पा० ।

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥ २७ ॥

( सर्वा राजानं दृष्ट्वा किञ्चिदिव सम्भ्रान्ताः ) ।

**सख्यौ**—अज्ज ! ण ( [2]क्खु ) किम्पि अच्चाहिदं, [2]किण्णु इअं क्खु पिअसहि [3]दुट्ठमहुअरेण [4]आउलीकिअमाणा कादरीभूदा । (—इति शकुन्तलां [5]दर्शयतः ) ।

[ आर्य्य ! न ( [2]खलु ) किमप्यत्याहितं । [2]किन्तु इयं खलु नः प्रियसखी दुष्टमधुकरेण आकुलीक्रियमाणा कातरीभूता ] ।

---

क इति । दुर्विनीतानां=धृष्टानां-दुष्टानां, शासितरि=शासके, [ शिक्षयितरि ], पुरोरपत्यं—पौरवः, अथवा पुरूणां राजा पौरवः, तस्मिन् पौरवे = पुरुवंश्ये दुष्यन्ते, वसुमतीं = भूमिं, शासति = पालयति सति, मुग्धासु = सरलासु, तपस्विनां = मुनीनां, कन्यासु = कुमारीषु, कोऽयं = कोऽसौ ? योऽत्र, अविनयं = धाष्टर्यम्, आचरति = समाचरति । [ 'अप्रस्तुतप्रशंसा' । छेक-वृत्त्यनुप्रासौ । अनेन 'दण्डस्त्वविनयादीनां दृष्ट्या श्रुत्या च तर्जन' मिति रसार्णवोक्तं दण्ड-नामकं मुखसन्ध्यङ्गं च दर्शितम् ] ॥ २७ ॥

किञ्चिदिव = स्तोकं, सम्भ्रान्ताः = चकिताः । अत्याहितं = महद्भयम् । 'अत्याहितं महाभीति' रित्यमरः । आकुलीक्रियमाणा = बाध्यमाना, कातरीभूता=

---

सिद्ध पुरुवंश में प्रसूत राजा दुष्यन्त के राज्य में यह कौन है—जो भोली-भाली तपस्विकन्याओं से धृष्टता का व्यवहार करता है ! । [ उनसे छेड़खानी करता है ? ] ॥ २७ ॥

[ राजा को देखकर सभी चकित हो, घबड़ा सी जाती हैं ] ।

**दोनों सखियां**—आर्य ! और तो कुछ विशेष बात नहीं है । हाँ, केवल हमारी यह सखी शकुन्तला इस दुष्ट भ्रमर से डर कर कुछ व्याकुल सी हो गई है । [ शकुन्तला की ओर संकेत करती हैं ] ।

---

१. 'अनसूया' । २. 'कच्चिन्न' । ३. 'इअं णो पिअसही' । ४. 'अहिहूअमाणा' [ अभिभूयमाना ] । ५. 'दर्शयति' ।

राजा— ( [1]शकुन्तलामुपेत्य—) [2]अयि ! तपो वर्द्धते ?।

( शकुन्तला—ससाध्वसाऽवनतमुखी[3] तिष्ठति )।

अनसूया—दाणिं अदिधिविसेसलाहेण।

[ इदानीमतिथिविशेषलाभेन ] !

प्रियंवदा—साअदं अज्जस्स। हला सउन्तले ! गच्छ, [4]उटआदो फलमिस्सं अग्घभाअणं उवहर, इदम्पि पाओदअं भविस्सदि। (—इति घटं दर्शयति )।

[ स्वागतमार्यस्य। हला शकुन्तले ! गच्छ, [4]उटजात् फलमिश्रमर्घ्य-भाजनमुपहर, इदमपि पादोदकं भविष्यति ]।

---

त्रस्ता। तपो वर्द्धते ?=धर्मानुष्ठानं, वृक्षसेचनादिकं च निर्विघ्नं भवति ?। ससाध्वसा=सभया। अत एव अवनतं मुखं यस्याः सा—अवनतमुखी=अधोमुखी। इदानीं=लाभेन=भवादृशातिथिलाभेन। 'तपो नूनं वर्द्धते' इति शेषः। [ एतेनानुवृत्ति-नामा नाटकालङ्कारो दर्शितः। तल्लक्षणं रसार्णवे—'प्रश्रयादनुवर्त्तनम्—अनुवृत्ति'-रिति ]। उटजात् = पर्णशालायाः। 'मुनीनान्तु पर्णशालोटजोऽस्त्रिया'मित्यमरः। फलैर्मिश्रं=सफलम्, अर्घ्यस्य भाजनम्=अर्घ्यपात्रम्, उपहर=उपनय। आनय, प्रय-च्छेति वा। इदमपि = घटस्थमपि, पादयोरुदकं—पादोदकं, = पादप्रक्षालनजलं।

---

राजा—( शकुन्तला के पास जाकर ) अयि सुन्दरी ! तुम्हारी तपस्या (व्रत नियम आदि) तो ठीक से बढ़ (चल) रही है न ?। सब कुशल तो है ?।

[ शकुन्तला—कुछ डरती ( घबड़ाती ) हुई, नीचा मुख किए हुए, खड़ी रहती है ]।

अनसूया—इस समय आप सदृश अतिथि के प्राप्त होने से ( हमारी तपस्या अवश्य ही वृद्धि को प्राप्त हो रही है )।

प्रियंवदा—आर्य ! आपका स्वागत है। अरी शकुन्तला ! जा कुटी से फल मिश्रित अर्घ्य पात्र ले आ। पादोदक [ पाद्य ] के लिए तो इस घड़े में जल है ही। ( घड़े की ओर इशारा करती है )।

---

१. 'शकुन्तलाभिमुखो भूत्वा'। २. कच्चिन्न। ३. 'साध्वसादवचना तिष्ठति'। ४ 'उडअं [ उटजं' ]।

**राजा**—भवतीनां सूनृतयैव [1]वाचा कृतमातिथ्यम् ।

**अनसूया**—तेण हि इमस्सिं [2]दाव पच्छाअसीदलाए सत्तवण्णवेदिआए उवविसिअ अज्जो परिस्समं [3]अवणेदु ।

[ तेन हि अस्यां तावत् प्रच्छायशीतलायां सप्तपर्णवेदिकायामुपविश्य आर्यः परिश्रममपनयतु ]।

**राजा**--नूनं यूयमप्यनेन [4]धर्म्मकर्म्मणा परिश्रान्तास्तन्मुहूर्त्तमुपविशत ।

**प्रियंवदा**--(जनान्तिकं—) हला सउन्तले ! उइदं णो अदिधिपज्जुआसणं, ता एहि, उवविसह्म । ( इति [5]सर्वा उपविशन्ति ) ।

सूनृतया = मधुर-प्रियया । 'सूनृतं प्रिये'इत्यमरः । अतिथये इदम्-आतिथ्यम्= अतिथिसत्कारः ।

प्रकृष्टा छाया यस्यां सा,—प्रच्छाया च सा शीतला च, तस्यां-प्रच्छायशीतलायां = प्रकृष्टच्छायाशालिन्यामत एव शीतलायां, सप्तपर्णस्य = विषमच्छदस्य, वेदिकायां=प्रस्तरखण्डनिबद्धकुट्टिमभुवि । "सप्तपर्णो विशालत्वक् शारदो विषमच्छदः" इत्यमरः । 'स्याद्वितर्दिस्तु वेदिका' इत्यमरः । परिश्रमम्=अध्वक्लान्तिम् ।

अनेन = जलसेचनरूपेण, धर्मोत्पादकं कर्म—धर्मकर्म । ( मध्यमपदलोपी समासः ) । तेन=धर्मवर्द्धकेन वृक्षसेचनव्यापारेण । तत् = तस्मात् . मुहूर्त्तं =

**राजा**—आपलोग क्यों कष्ट करती हैं ? । आपलोगों की इस प्रकार प्रिय और मधुरवाणी से ही अतिथि सत्कार ( मेरा सत्कार ) तो हो गया ।

**अनसूया**—तो अच्छा, इस छायादार और शीतल सप्तपर्ण ( छतौना ) की वेदि ( चबूतरे ) पर बैठकर आप अपना मार्गश्रम ( थकावट ) तो दूर करें ।

**राजा**—मुझे ऐसा मालूम होता है कि, आप सब भी वृक्षों के सेचन रूपी इस धर्म कार्य से थक गई हैं, अतः आपलोग भी थोड़ी देर ( दो घड़ी ) यहाँ बैठकर विश्राम कर लें तो अच्छा हो ।

**प्रियंवदा**—( हाथ की आड़ करके केवल शकुन्तला से ही-) सखि

१ 'गिरा' । २ क्वचिन्न । ३ 'परिस्समविणोदं करेदु अज्जो' । [ परिश्रमविनोदं करोत्वार्यः ] । ४ 'धर्मे'ति क्वचिन्न । ५ 'सर्वे' ।

[ हला शकुन्तले ! उचितं नोऽतिथिपर्य्युपासनम्[1] । [2]तदेहि उपविशामः ] ।

**शकुन्तला**—( आत्मगतम्— ) कधं [3]इमं जणं पेक्खिअ [4]तवो-(वण) विरोहिणो विआरस्य गमणीआ ह्मि संवुत्ता ! ।

[ कथमिमं जनं प्रेक्ष्य [4]तपोविरोधिनो विकारस्य गमनीयाऽस्मि संवृत्ता ! ] ।

**राजा**—( सर्वा [5]अवलोक्य [2]स्वगतम्— ) अहो ! [6]समानवयोरूप-रमणीयं सौहार्दमत्र भवतीनाम् ।

---

क्षणमात्रम् । जनान्तिकम् = अन्यानपवार्य । 'केवलं शकुन्तलाया एव कर्णे जगादे'ति शेषः । तदुक्तं धनिकेन—"त्रिपताककरेणान्यानपवार्याऽन्तरा कथाम्[7] । अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ॥' इति । "स एव त्रिपताकः स्याद्वक्रितानाऽमिकाऽङ्गुलिः" इति रत्नाकरे । अतिथि-पर्युपासनम्=अतिथिनिकटेऽवस्थितिः । अतिथिसत्कारः । तद्वचनरक्षणमिति यावत् । एहि = आगच्छ । आत्मगतमिति । प्रियंवदादीनश्रावयन्ती स्वयमेवाहेत्यर्थः ।

तपोवनस्य विरोधी, तस्य = शान्ततपोवनाऽननुरूपस्य । विकारस्य=चित्ताव-स्थाविशेषस्य । कामोद्रेकस्येति यावत् 'तपोविरोधिन' इति तु युक्तः पाठः । गमनीया = विषया, संवृत्ता=जाता । [अनेन भावो नामाङ्गजो विकारो दर्शितः । 'निर्विकारात्मके चित्ते भावः प्रथमविक्रिये'ति विश्वनाथः] । सर्वाः = शकुन्तलाद्या-

---

शकुन्तले ! हमलोगों को अतिथि के पास बैठकर उसका सत्कार व आदर करना उचित एवं आवश्यक है, अतः आओ थोड़ी देर इनके पास बैठ जाएं ।

शकुन्तला—( मन ही मन— ) आश्चर्य है, कि—इस व्यक्ति को देखकर मैं तो तपोवन के विरुद्ध मानसिक विकार ( काम विकार ) की शिकार हो रही हूँ । अर्थात्–मेरा इसके प्रति आकर्षण बढ़ रहा है ।

राजा—( सब की ओर देखकर मन ही मन ) अहा ! परस्पर समान

---

१ 'पज्जुपासणं अहदीणं' [पर्युपासनमतिथीनाम् ] । २ क्वचिन्न । ३ 'किण्णु क्खु इमं पेक्खिअ' । 'देक्खिअ' । [किं नु खलु इमं दृष्ट्वा] ४ 'तपोवनविरोधिन' इति पाठान्तरम् । ५ 'विलोक्य' । ६ 'समवयो' । ७ कथामध्ये इत्यर्थः ।

**प्रियंवदा**--( जनान्तिकं— ) [1]हला अणसूए ! को णु क्खु एसो [2]दुरवगाहगम्भीराकिदी महुरं आवलन्तो पहुत्तदाक्खिण्णं वित्थारेदि ?।

[ [1]हला अनसूये ! को नु खलु एष [2]दुरवगाहगम्भीराकृतिर्मधुरमालपन् प्रभुत्व-दाक्षिण्यं विस्तारयति ? ]।

**अनसूया**---[3]हला ! मम वि अत्थि कोदूहलं, [1]ता पुच्छिस्सं दाव णं । ( प्रकाशम्— ) अज्जस्स महुरालावजणिदो वीसम्भो मं [4]आलावेदि । [5]कदरो राएसिवंशो अलङ्करीअदि अज्जेण ? । कदमो

स्तिन्नोऽपि, समानेन = सदृशेण, रूपेण वयसा च रमणीयं=मनोज्ञम् । अत्र भवतीनां=पूज्यानां भवतीनाम् । "पूज्ये तत्रभवानत्रभवा"निति हैमः= । सुहृदो भावः सौहार्दं=सख्यम् ।

जनान्तिकम् = त्रिपताककरेणाऽन्यानपवार्य । दुष्यन्तमश्रावयन्ती—आहेति यावत् । दुरवगाहा=दुर्बोधा, अत एव गम्भीरा=गभीरा, आकृतिः = मुखमुद्रा यस्यासौ, मधुरं = सरसम्, आलपन् = वार्तालापं कुर्वन्, प्रभुत्वञ्च=प्रभावञ्च, दाक्षिण्यञ्च=चातुर्यञ्च । प्रभुत्व-दाक्षिण्यं, विस्तारयति = प्रकटयति । स्वाधिकारं चातुर्येण प्रकटयतीत्यर्थः । कौतूहलं=कौतुकम् ।

प्रकाशम् = प्रकटम् । 'सर्वश्राव्यं प्रकाशं स्यात्'—इति विश्वनाथः ।

अवस्था एवं समान रूपवाली इन सबका प्रेम और अनुराग भी आपस में कैसा रमणीय है ।

प्रियंवदा—( हाथ की आड़कर केवल अनसूया से-- ) यह कौन व्यक्ति है, जो देखने में गम्भीर व सुन्दर आकृतिवाला मालूम होता है, एवं जिसके मधुर भाषण में भी प्रभुत्व टपक रहा है, और जो बड़ी ही चतुराई और कुशलता (अनुकूलता) से हमलोगों से घुल--मिलकर इस प्रकार मीठी २ बातें कर रहा है ?।

अनसूया—( अलग से ) हे सखि ! मुझे भी इस बात का बड़ा ही कुतू-

१ क्वचिन्न । २ 'चउरगम्भीराकिदी चउरं पियं' [ चतुरगम्भीराकृतिश्चतुरं प्रियं ] । ३ 'सहि' [ सखि ] । ४ 'मंतावेदि' [ मन्त्रयति ] । ५ 'कदमो' [ कतमो ] ।

वा देसो विरहपज्जुस्सुओ करीअदि ? । किं णिमित्तं वा अज्जेण सुउमारेण तवोवणगमणपरिस्समे अप्पा उवणीदोत्ति ? !

[ हला ! ममाप्यस्ति कौतूहलम् । तत् प्रक्ष्यामि तावदेनम्। आर्यस्य मधुरालापजनितो विश्रम्भो मामालापयति। कतरो राजर्षि-वंशोऽलंक्रियते आर्येण ? । कतमो वा देशो विरहपर्युत्सुकः क्रियते ?। किंनिमित्तं वा आर्येण सुकुमारेण तपोवनगमनपरिश्रमे आत्मा उपनीतः ? इति ]।

शकुन्तला—( आत्मगतम्- ) हिअअ ! मा उत्तम्म, जं तुए चिन्तिदं तं अणसूआ मन्तेदि ।

[ हृदय ! मा उत्ताम्य, यत्त्वया चिन्तितं, तदनसूया मन्त्रयति ]।

---

आर्यस्य=भवतः, मधुरेण=प्रियेण। रमणीयेन, आलापेन=भाषणेन, जनितः= विश्रम्भः=विश्वासः, आलापयति-सम्भाषणं कारयति। कतरः=सोमसूर्यवंशयोर्मध्ये कतरः। विरहेण पर्युत्सुकः = उत्कण्ठाकुलः, सुकुमारेण = कोमलगात्रेण, तपोवने यद्गमनं, तत्र यः परिश्रमस्तत्र=ईदृशे आयासे, आत्मा उपनीतः=शरीरं योजितम्। केन हेतुना च भवानत्रायात इति हि प्रश्नाशयः।

मा उत्ताम्य = मा व्याकुलीभूः ! मन्त्रयति = पृच्छति। परिहारं=निगूहनं,

---

हल हो रहा है ! अतः मैं इनसे ही पूछती हूं। ( प्रकट में–) आर्य ! आपके इस मधुर भाषण से जो विश्वास हमलोगों में उत्पन्न हो गया है, उसी से मैं आपसे यह पूछने की धृष्टता कर रही हूं, कि–आपने किस राजर्षि वंश को अपने जन्म से अलंकृत किया है ?। और आपने कौन से देश को अपने विरह से उत्सुक किया है ?। और किस लिए आपने अपने इस सुकुमार शरीर को तपोवन में आने के कष्ट में लगाया है ?। ( अर्थात्–आप किस राजवंश के हैं ?, और कहाँ के रहनेवाले हैं ?, और इस तपोवन में आपके आने का क्या कारण है ?, कृपया कहिए )।

शकुन्तला—( मन ही मन ) अरे हृदय ! मत घबड़ा। तूं क्यों उतावला हो रहा है ?। जो बात तूं जानना चाहता है, उसी बात को तो अनसूया स्वयं ही पूछ रही है।

राजा—( स्वगतं- ) कथमिदानीमात्मानं निवेदयामि, कथं वाऽऽत्मनः[१] परिहारं करोमि ?। भवतु। एवं [२]तावत्। ( प्रकाशम्- ) भवति ! वेदविदस्मि[३] राज्ञः पौरवस्य नगरधर्माधिकारे नियुक्तः, पुण्याश्रमदर्शनप्रसङ्गेन धर्मारण्यमिदमायातः।

---

भवतु=अस्तु। एवं तावत्=इत्थं कथयामि। श्लेषेण ब्राह्मणमात्मानं निर्दिशामि। प्रकाशं=प्रकटं। वेदवित्=विद्वान्। स च क्षत्रियो, ब्राह्मणश्च भवतीति स्वजातिर्गूहिता। पौरवस्य=( पूरूणां देशविशेषाणां राज्ञः—पौरवस्य ) मत्पितुः, दुष्यन्तस्य वा, नगरधर्माधिकारे=नगरधर्माधिकरणे [ प्रधानन्यायालयाध्यक्षपदे वा, राज्ये वा ]। नियुक्तः=अधिकृतः। ब्राह्मणोऽपि धर्माधिकारी भवति, राजापि। धर्मसंरक्षणे स्वपित्रा प्रजापतिनैव वा नियुक्तः। अनेन वाक्येन विप्रोऽयं नगरधर्माधिकारी, राजा वाऽयमिति न स्फुटम्। इत्थं श्लेषेणाऽऽत्मप्रकटनं, गोपनञ्च कृतम्।

धर्मवर्द्धकमरण्यं=धर्मारण्यं, तस्य दर्शनं, तस्य प्रसङ्गेन=पुण्याश्रमदर्शनार्थम्।

इदञ्च पताकास्थानम्। तदुक्तं विश्वनाथेन—

'द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
प्रधानार्थान्तराक्षेपी पताकास्थानकं परम्॥' इति।

---

राजा—( मन ही मन-) मैं अब अपने को कैसे प्रकट करूँ ?। और कैसे छिपाऊँ ?। अच्छा !। इस प्रकार कहता हूँ। (प्रकट में) श्रीमतीजी ! मैं तो पौरव राजा ( अपने पिता ) का आज्ञाकारी एवं वेदवित् हूँ और उनके ( अपने पिताके ) नगर की रक्षा करने के अधिकार पर नियुक्त एक अधिकारी हूं। और पुण्य आश्रमों के देखने की इच्छा से ही इस धर्मारण्य ( तपोवन ) में आया हूं।

---

१ 'आत्मापहारम्'। २ 'एवं तावदेनां वक्ष्ये'।

३ 'यः पौरवेण राज्ञा मत्पित्रा धर्माधिकारे नियुक्तः सोऽहमाश्रमिणामविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः'। पा०।

अनसूया—[1]अज्ज सणाधा धम्मआरिणो।

[ अद्य सनाथा धर्मचारिणः ]।

( शकुन्तला—शृङ्गारलज्जां नाटयति )।

सख्यौ—( उभयोराकारं विदित्वा, [2]जनान्तिकं- ) हला सउन्तले! जइ अज्ज तादो इध सण्णिहिदो भवे—।

[ हला शकुन्तले! यद्यद्य तात इह सन्निहितो भवेत्— ]।

शकुन्तला—तदो किं भवे ?।

[ ततः किं भवेत् ? ]।

---

राज्ञो ह्यर्थैकवचनेन 'अयं राजप्रतिनिधि'रिति ज्ञात्वाऽनसूया वक्ति **सनाथा** इति। सनाथाः=अनुगृहीताः। शृङ्गारलज्जाम्=भ्रूभङ्गादिना साकूतं कामचेष्टां, सव्रीडं नाटयति=सलज्जमभिनयति। तदनेन हावो नाम नायिकाऽङ्गजोऽलङ्कारो दर्शितः। तदुक्तं—

'भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः।
भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते ॥' इति।

उभयोः=शकुन्तलादुष्यन्तयोः, आकारं=मुखाकृतिं, विदित्वा=आकारेणोभयोरनुरागं ज्ञात्वा। इह=आश्रमे, संनिहितः=उपस्थितः, जीवितस्य=

---

अनसूया—आपके आने से आज हम सब धर्माचरणशील आश्रमवासी सनाथ हो गए।

[ शकुन्तला—हाव भाव कटाक्ष आदि काम विकार प्रदर्शन पूर्वक श्रृङ्गार लज्जा का अभिनय करती है ]।

दोनों सखियाँ—( राजा और शकुन्तला की ऐसी चेष्टा व दशा एवं उनका आकार प्रकार देखकर, शकुन्तला से-) सखि शकुन्तले! आज यदि यहाँ तात कण्व भी उपस्थित होते तो·······।

शकुन्तला—तो क्या होता ?।

---

१ 'सणाहा दाणीं धम्मआरिणो'। [ सनाथा इदानीं धर्मचारिणः ]।
२ क्वचिन्न।

**सख्यौ**—[1]तदो [2]जीविदसव्वस्सेण वि इमं अदिहिविसेसं कदत्थं [3]करेदि।

[ ततो जीवितसर्वस्वेनापि इममतिथिविशेषं कृतार्थं करोति ]।

**शकुन्तला**—( सकृतक-कोपम्- ) अवेध[4] ! तुह्मे किम्पि हिअए कदुअ मन्तेध, ण वो वअणं सुणिस्सं।

[ अपेतं युवां, किमपि हृदये कृत्वा [5]मन्त्रयथः, न वां वचनं श्रोष्यामि ]।

**राजा**—वयमपि [ [1]तावत् ] भवत्योः सखीगतं किञ्चित् पृच्छामः।

---

प्राणानामपि, सर्वस्वेन = शकुन्तलाख्येन, अतिथिविशेषं = विशिष्टमतिथिं। वरमित्यर्थः। कृतोऽर्थो यस्य तं = सफलाभिलापम्।

जीवितसर्वस्वपदेन शकुन्तलाऽभिहितेति—

'सहसैवाऽर्थसम्पत्तिर्नायकस्योपकारिका।
पताकास्थानकं सन्धौ प्रथमं तत्प्रकीर्तितम्॥'—

—इति भरतोक्तं पताकास्थानकमेतत्।

कृतकेन = कृत्रिमेण, कोपेन = क्रोधेन—सह यथा स्यात्तथा, जगादेत्यर्थः। अपेतं=गच्छतं। किमपि = मद्विषयम् ( विवाहादिकम् )।

---

**दोनों सखियाँ**—तो अपने जीवन के सर्वस्व ( शकुन्तला ) को देकर भी इस विशिष्ट अतिथि का सत्कार करते।

**शकुन्तला**—( बनावटी कोप से ) जाओ हटो, तुम दोनों तो न मालूम क्या मन में रखके ऐसी २ बातें कर रही हो। मैं तुमारी ऐसी बातें नहीं सुनूंगी।

**राजा**—मैं भी आप लोगों की इस सखी ( शकुन्तला ) के विषय में आप लोगों से कुछ पूछना चाहता हूं।

---

१ कञ्चिन्न। २ 'इमं जीविदसव्वस्सेण वि'। ३ 'करिस्सदि'। [करिष्यति]। ४ 'तुम्हे अवेध'। ५ 'मन्त्रयेथे'।

सख्यौ—अज्ज [1]अणुग्गहे वि अब्भत्थणा ?।

[ आर्य्य ! अनुग्रहेऽपि अभ्यर्थना ? ]।

राजा—तत्र भगवान् कण्वः शाश्वते ब्रह्मणि [2]वर्त्तते, इयञ्च वः सखी [3]तस्याऽऽत्मजा, कथमेतत् ?।

अनसूया—सुणादु अज्जो, अत्थि को वि कोसिओ त्ति गोत्तणामहेओ महाप्पहावो राएसी।

[ शृणोत्वार्य्यः, अस्ति कोऽपि 'कौशिक' इति गोत्रनामधेयो महाप्रभावो राजर्षिः ]।

राजा—स खलु [4]भगवान् कौशिकः ! [ अस्ति। श्रूयते ]।

---

सखीगतं = शकुन्तलाविषयकम्। अनुग्रहे = कृपाप्रदर्शनेऽपि। अभ्यर्थना= प्रार्थना। एवञ्च प्रश्नोऽयमनुग्रहतुल्य इति कामं पृच्छतु भवानिति सूचितम्। तत्रभवान् = पूज्यपादः। शाश्वते ब्रह्मणि = अखण्डिते ब्रह्मचर्ये। गोत्रनाम = वंशनाम। यथा—गार्ग्यः, वात्स्य इति। कुशिकस्यापत्यं—कौशिकः। महान् प्रभावो यस्यासौ=महातपाः। राजा तु ऋषिः, राजर्षिः=क्षत्रियश्रेष्ठो विश्वामित्रः।

भगवान् कौशिकः—खलु = जगति—प्रसिद्धः। अस्माभिर्ज्ञायते एवेत्यर्थः।

---

दोनों सखियाँ—पूछिए, पूछिए। भला, अनुग्रह में भी क्या प्रार्थना की आवश्यकता होती है ? अर्थात् आप यदि कुछ पूछेंगे तो वह तो हमारे ऊपर अनुग्रह ही होगा। अतः इसमें प्रार्थना की क्या आवश्यकता है। अवश्य पूछिए।

राजा—पूज्यपाद कण्व ऋषि तो सदा से ही नैष्ठिक ब्रह्मचारी प्रसिद्ध हैं, और यह आपकी सखी उनकी पुत्री है—ऐसा आप लोग कह भी रही हैं। तो यह कैसी बात है ?। अर्थात् नैष्ठिक ब्रह्मचारी कण्व ऋषि के यह पुत्री कैसे हुई ?।

अनसूया—हे आर्य ! सुनिए। 'कौशिक' नाम के कोई महाप्रभाव राजर्षि हैं।

राजा—हाँ ! हाँ ! वे ही तो सुप्रसिद्ध भगवान् कौशिकजी ( विश्वामित्रजी ) हैं। उनका नाम तो मैंने भी सुना है।

---

१ 'अणुग्गहो विअ इअं अब्भत्थणा' [ अनुग्रह इवेयमभ्यर्थना ]।

२ 'स्थित इति प्रकाशः'। ३ 'तदात्मजेति'। ४ 'अस्ति। श्रूयते'।

**अनसूया**—तं [1]सहीए पहवं अवगच्छ ! उज्झिदाए सरीर-सम्वड्ढणादिहिं [2]उण तादकण्णो [2]वि एदाए पिदा ।

[ तं सख्याः प्रभवमवगच्छ, उज्झितायाः शरीरसंवर्द्धनादिभिः पुनस्तातकण्वोऽपि एतस्याः पिता ]।

**राजा**—उज्झितशब्देन जनितं [3]नः कुतूहलम् । [4]तदामूला-च्छ्रोतुमिच्छामः[5] ।

**अनसूया**—सुणादु अज्जो, [6]पुरा किल तस्य राएसिणो उग्गे तवसि वत्तमाणस्स कधम्पि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा णिअमविग्घआरिणी पेसिदा ।

[ शृणोतु आर्यः—पुरा किल तस्य राजर्षेरुग्रे तपसि वर्त्तमानस्य कथमपि जातशङ्कैर्देवैर्मेनका नाम अप्सरा नियमविघ्नकारिणी प्रेषिता ]।

---

प्रभवं=जन्महेतुं । "प्रभवो जलमूले स्याज्जन्महेतौ" इति मेदिनी । उज्झितायाः=परित्यक्तायाः, एतस्याः = शकुन्तलायाः, संवर्द्धनं = पालनम् ।

उज्झितशब्देन = परित्यक्तेति कथनेन । आमूलात् = प्रथमतः, जाता शङ्का येषान्तैः=शङ्काकुलैः । [अस्मद्राज्यं ग्रहीष्यतीत्याशङ्का हि देवानाम् ]। नियमस्य=तपसः, विघ्नं करोति तच्छीला-विघ्नकारिणी ।

---

अनसूया—हमारी सखी के वे ही विश्वामित्र जी जन्मदाता पिता हैं । परन्तु इस शकुन्तला को इसकी माताने यों ही छोड़ दिया था, अतः इसका पालनपोषण महर्षि कण्वने किया है । अतश्च—इसके पालन पोषण करने से वे भी इसके पिता के समान ही हैं ।

राजा—'यह यों ही छोड़ दी गई थी' इस बात को सुनकर कुछ मुझे कौतूहल हो रहा है । इसलिए इस प्रसङ्ग को मैं प्रारम्भ से ही पूरा २ सुनना चाहता हूं ।

अनसूया—आर्य ! सुनिए । वे कौशिक ( विश्वामित्र ) नामक राजर्षि जब (गोदावरी के तट पर) उग्र तपस्या कर रहे थे, और समाधिस्थ थे, तो उनकी

---

१ 'तं णो पिअ सहीए' [ तमावयोः प्रियसंख्याः ]। २ कच्चिन्न ।
३ 'मे कुतूहलम् । ४ आमूला' । ५ 'मिच्छामि' ।
६ 'गोदमीतीरे पुरा' [ गौतमीतीरे पुरा ]।

राजा—[1]अस्त्येवाऽन्यसमाधिभीरुत्वं देवानाम् । [2]ततस्ततः ? ।

अनसूया—तदो [3]वसन्तावदाररमणीए समए उम्मादहेदुअं ताए रूवं पेक्खिअ........। (—इत्यर्द्धोक्ते [4]लज्जां नाटयति ) ।

[ ततो [3]वसन्तावताररमणीये समये उन्मादहेतुकं तस्या रूपं प्रेक्ष्य.........] ।

राजा—पुरस्तादवगम्यत एव, । सर्वथा अप्सरःसम्भवैषा ।

अनसूया—अध इं ! ।

[ अथ किम् ] ।

---

अन्येषां—समाधेः = तपसः । ततस्ततः = अग्रे । वसन्तस्य = वसन्तर्तोः । अवतारेण = आविर्भावेण, रमणीये = सुन्दरे, समये = काले, उन्मादस्य = चित्तविकृतेः, हेतुकं = हेतुभूतम्, तस्याः = मेनकायाः, रूपं = सौन्दर्यम् । इति = इत्येतावन्मात्रेण, अर्धोक्ते = मध्य एव विच्छिन्ने वाक्ये, लज्जां नाटयति = लज्जिताऽभूत्, अग्रेऽस्यार्थस्याऽश्लीलप्रायत्वात् ।

पुरस्तात् = अग्रे, अवगम्यते=ज्ञायते एव । अप्सरःसम्भवा = अप्सरोजाता ।

---

तपस्या से शङ्कित हो देवताओं ने उनकी तपस्या में विघ्न करने के लिए मेनका नामक अप्सरा को उनके पास भेजा ।

राजा—ठीक है, देवता लोग तो दूसरों की समाधि एवं तपस्या से सदा डरते ही रहे हैं । हाँ, फिर आगे क्या हुआ ? ।

अनसूया—तो वसन्त ऋतु के आगमन से जब चारों ओर बहार हो रही थी, ऐसे रमणीय मनोहर व सुहावने समय में मेनका के उन्माद ( उमङ्ग ) पैदा करने वाले रूपको देखकर ऋषि का मन चञ्चल हो उठा, और........................ ( इतनी बात कहकर बीच में ही लज्जित हो चुप हो जाती है ) ।

राजा—हाँ ठीक है, आगे का वृत्तान्त तो स्पष्ट ही है, ( कि—वे ऋषि उस मेनका पर आसक्त हो गए । और इस प्रकार विश्वामित्रजी के द्वारा मेनका के गर्भ से यह शकुन्तला उत्पन्न हुई ) । तो इस प्रकार तो यह अप्सरा की पुत्री है ? ।

अनसूया—जी हाँ, और क्या ।

---

१ 'अस्त्येतदन्य' । २ क्वचिन्न । ३ 'वसन्तोदारसमये' । ४ 'लज्जया विरमति' ।

राजा—उपपद्यते ।

✓मानुषीभ्यः कथं नु स्यादस्य रूपस्य सम्भवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ।॥ २८ ॥

( शकुन्तला—सव्रीडाऽधोमुखी तिष्ठति ) ।

राजा—( आत्मगतम्— ) हन्त ! लब्धाऽवकाशो मे मनोरथः ।

---

'अथ किम्'—इति स्वीकृतिसूचनाय नाटके प्रयुज्यते । एवमेतदित्यर्थः । उपपद्यते = युक्त्याऽप्यवगम्यते ।

मानुषीभ्य इति । अस्य रूपस्य = शकुन्तलासौन्दर्यस्य, मानुषीभ्यः कथं नु सम्भवः ? = नोद्भवोऽस्य सम्भवति । यतः—प्रभया = मयूखमण्डलेन, तरलम् = उज्ज्वलं । 'तरलश्चञ्चले षिङ्गे हारमध्यमणावपि । भासुरेऽपी' ति विश्वः । ज्योतिः = चन्द्रादि, वसुधातलात् = भूमण्डलात् , नोदेति=नाविर्भवति । [ श्रुति-वृत्त्यनुप्रासौ, प्रतिवस्तूपमा च । 'निदर्शनं' च नाटकभूषणं,—

"यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।
परपक्षव्युदासार्थं तन्निदर्शनमुच्यते" इति तल्लक्षणं दर्पणे । विलोभनं नाम मुखसन्ध्यङ्गञ्च, 'गुणाख्यानं विलोभन' मिति दर्पणात् ] ॥ २८ ॥

सव्रीडा = सलज्जा, स्वप्रशंसया स्ववृत्तान्तेन च सलज्जता । लब्धः = प्राप्तः, अवकाशः = अवसरो येनासौ तथा । मनोरथः=हृदयाभिलाषः । फलिष्यतीत्यर्थः ।

---

राजा—यह ठीक ही है । क्योंकि—

ऐसे रूपका मानुषी ( मनुष्यस्त्रियों ) में कहाँ सम्भव हो सकता है ? । कहीं प्रभापुञ्ज से चमकती हुई ज्योति (बिजली) भी भला पृथिवी से पैदा हुआ करती है ? । अर्थात्—बिजली की सी ज्योति वाली ऐसी कन्या तो स्वर्ग में ही सम्भव हो सकती है, पृथिवी पर नहीं ॥ २८ ॥

[ शकुन्तला—अपनी प्रशंसा से लज्जित हो, नीचा मुख कर, बैठी रहती है ] ।

राजा—अहा ! हा ! तब तो मेरी ( शकुन्तला के पाने की ) इच्छा के पूर्ण होने का अवसर मालूम होता है । अर्थात् यह अप्सरा की पुत्री है, ब्राह्मण

प्रियंवदा—( सस्मितं शकुन्तलां विलोक्य [1]नायकाभिमुखी भूत्वा— ) [1]पुणो वि वत्तुकामो विअ अज्जो लक्खीअदि ।

[ पुनरपि वक्तुकाम इव आर्यो लक्ष्यते ] ।

( शकुन्तला—सखीमङ्गुल्या तर्जयति ) ।

राजा—सम्यगुपलक्षितं भवत्या । अस्ति नः सच्चरितश्रवण-लोभादन्यदपि प्रष्टव्यम् ।

प्रियंवदा—तेण हि अलं विआरिदेण, अणिजन्तणाणुजोओ

[ युक्तिर्नाम सन्ध्यङ्गमेतत् । 'सम्प्रधारणमर्थानां युक्ति'रिति-साहित्यदर्पणम् । तत्र—सम्प्रधारणं = निश्चयः ] ।

सस्मितं शकुन्तलां विलोक्य=जातस्ते मनोरथ इति साकूतं विलोक्य, नायकः = दुष्यन्तः । लक्ष्यत इति । स्वविवक्षितं निरशङ्कमाख्याहीत्याशयः । तर्जयति=ताडयति । माऽनल्पं जल्पेति सङ्केतं करोति-इति वा । सम्यक्=सत्यम्, उपलक्षितं = ज्ञातं । सत् च तच्चरितञ्च तस्मिन् लोभः, तस्मात् = पुण्यप्रदोपाख्या-नश्रवणलोभात् । अन्यदपि = अवशिष्टं किञ्चित् । अलं विचारितेन = विचारेणा-

की कन्या नहीं है, अतः मैं इसे अब प्राप्त कर सकूंगा । परन्तु इसकी सखीने परिहास में इस ( शकुन्तला ) से जो यह कहा था, कि—'तेरा अब विवाह शीघ्र ही होगा', इससे तो मैं शङ्कित और व्याकुल सा हो रहा हूँ । कहीं इसका विवाह सम्बन्ध अन्यत्र तो ठीक नहीं हो गया है ! ।

प्रियंवदा—( मुसकुराती हुई शकुन्तला की ओर देखकर नायक की ओर मुख करके- ) मालूम होता है-आप और भी कुछ पूछना चाहते हैं ।

[ शकुन्तला—सखीको अङ्गुली से मना करती है, या अंगुली से कोंचती ( खोदती ) है ] ।

राजा—आपनें ठीक ही समझा । मुझे इस अच्छे प्रसङ्ग को सुनने का लोभ-सा हो रहा है । अतः मैं इस प्रसङ्ग में और भी कुछ पूछना चाहता हूँ ।

प्रियंवदा—तो ठीक बात है । आप कुछ विचार न करें । हम तपस्वी-लोगों

१ क्वचिन्न ।

क्खु तवस्सिजणो।

[तेन हि अलं विचारितेन, अनियन्त्रणाऽनुयोगः खलु तपस्विजनः]।

राजा—एतत् पृच्छामि—

वैखानसं किमनया व्रतमा प्रदाना-
द्व्यापाररोधि मदनस्य निषेवितव्यम् ?।
अत्यन्तमेव सदृशेक्षणवल्लभाभि-
राहो ! निवत्स्यति समं हरिणाङ्गनाभिः ? ॥ २६ ॥

---

लम्। न प्रयोजनमित्याशयः। अनियन्त्रणो अनुयोगो यस्मिन्नसौ—अनियन्त्रणा-नुयोगः=निःशङ्कं प्रश्नयोग्यः।

वैखानसमिति। अनया = शकुन्तलया, मदनस्य = स्मरस्य, व्यापारं रुणद्धि तच्छीलं—व्यापाररोधि = प्रसरावरोधकं, वैखानसानामिदं–वैखानस-नसं, व्रतं=तापसव्रतं–ब्रह्मचर्यम्, आप्रदानात्=विवाहावधि, किं निषेवितव्यं ?= किम्–आचरणीयम् ?। आहो ?=अथवा। "आहो उताहो किमुत विकल्पे" इत्यमरः। सदृशैरीक्षणैर्वल्लभाभिः–सदृशेक्षणवल्लभाभिः=एतल्लोचनसादृश्यात्–हृदयवल्लभाभिः, हरिणाङ्गनाभिः=हरिणीभिः, समं = साकम्, अत्यन्तमेव = आजीवनमेव, निवत्स्यति = वासं करिष्यति ?। विवाहावधि ब्रह्मचर्यमस्याः ? उत जीवनावधिकं नैष्ठिकं ब्रह्मचर्यमस्या भविष्यतीत्याशयः। [वृत्त्यनुप्रासः] ॥२६॥

---

से तो निर्भय हो जो चाहे सो पूछा जा सकता है। इसमें किसी बात की रोक-टोक नहीं है।

राजा—मैं यह पूछता हूँ—क्या यह आपकी सखी (शकुन्तला) कामोपभोग को रोकने वाले तपस्वियों के इन कठिन व्रतों व नियमों का पालन विवाह तक ही करेगी, या सदा के लिए अपने ही समान बड़े २ नेत्रों वाली हरिणियों के साथ में ही विहार करती रहेगी ?। अर्थात्–इसका विवाह होगा, या यह सदा ब्रह्मचारिणी ही बनी रहेगी ? ॥ २६ ॥

प्रियंवदा—अज्ज ! धम्माअरणे वि परवसो एस जणो। गुरुणो उण से अणुरूअवरप्पदाणे संकप्पो।

[ आर्य्य ! धर्माचरणेऽपि परवश एष जनः । गुरोः पुनरस्या अनुरूपवरप्रदाने सङ्कल्पः ]।

राजा—( सहर्षमात्मगतम् )—

भव हृदय ! साभिलाषं, सम्प्रति सन्देहनिर्णयो जातः।
आशङ्कसे यदग्निं, तदिदं स्पर्शक्षमं रत्नम् ! ॥ ३० ॥

धर्माचरणे = धर्मानुष्ठाने । किंकरणीयमित्यादिनिर्णये, परवशः=पितुरधीनः । स एवोचितं विधास्यति । पुनः = परन्तु । अस्याः-गुरोः = कण्वस्य, अनुरूपाय = सदृशाय, वराय = पत्ये, प्रदाने = समर्पणे, सङ्कल्पः = अभिलाषः । [ अनेनोत्तरेण दुष्यन्तस्य मद्योग्येयमिति निर्णयादुत्तरालङ्कारः । तथा च विश्वनाथः-'उत्तरं,-प्रश्नस्योत्तरादुन्नेयो यदि' इति । ] एवञ्चाप्रदानाद्ब्रह्मचर्यमस्या इत्युत्तराशयः । [ "राजा—वयमपि सखीगतं किञ्चित्पृच्छामः"—इत्यत आरभ्यात्मगतमित्यन्तं युक्तिर्नामाङ्गं, 'सम्प्रधारणमर्थानां युक्ति'रिति तल्लक्षणम् ]।

भवेति । हृदय !=हे मनः ! शकुन्तलायां-साभिलाषं = प्राप्त्याशासमन्वितं भव । सन्देहस्य=किमियं मद्योग्या, ? न वेति संशयस्य, सम्प्रति=इदानीं निर्णयः= निश्चयो-जातः । यत् = यद्वस्तु, अग्निम् = पावकम्, आशङ्कसे = चिन्तितवानसि, तदिदं = शकुन्तलाख्यं वस्तु, स्पर्शस्य क्षमं-स्पर्शक्षमं = ग्रहणार्हं, रत्नम् । नेयं

प्रियंवदा—हे आर्य ! हम लोग ( अथवा यह शकुन्तला ) तो धर्माचरण में भी परवश (पिताजी की आज्ञा के अधीन) ही हैं । परन्तु इसके गुरु (पिता) कण्वजी की इच्छा इसे किसी योग्य वर को प्रदान करने की ही है । अर्थात् बिवाहपर्यन्त ही इसका यह तापसोचित धर्माचरण है ।

राजा—( हर्षपूर्वक मन ही मन-)

हे हृदय ! तूं अब इसकी इच्छा कर सकता है । क्योंकि-अब तो सब सन्देह दूर होकर निर्णय हो गया, कि-यह तेरे ग्रहण करने योग्य ही स्त्रीरत्न है । जिसको तूं अग्नि ( ब्राह्मण की कन्या होनेके कारण अग्नि की तरह ही

**शकुन्तला**—( सरोषमिव— ) अणसूए ! अहं गमिस्सं ।

[ अनसूये ! अहं गमिष्यामि ] ।

**अनसूया**—किणिमित्तं ? ।

[ किंनिमित्तम् ? ] ।

**शकुन्तला**—इमं असम्बद्धप्पलाविणिं प्रियंवदं अज्जाए गोदमीए [1]गदुअ णिवेदइस्सं । ( —इत्युत्तिष्ठति ) ।

[ इमामसम्बद्धप्रलापिनीं प्रियंवदामार्य्यायै गौतम्यै [1]गत्वा निवेदयिष्यामि ] ।

**अनसूया**—सहि ! ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणं ।

---

ब्राह्मणबालिका, किन्तु—अप्सरःसम्भवा मदुपसङ्ग्रहणार्हेति भावः । [अत्र उत्तरार्द्धे पूर्वार्द्धवाक्यार्थो हेतुरिति काव्यलिङ्गं, वृत्त्यनुप्रासश्च । समाधानञ्च मुखसन्ध्यङ्गम्—"बीजस्यागमनं यच्च तत्समाधानमुच्यते" इति दर्पणात् ] ॥ ३० ॥

सरोषमिव=सकृतककोधम् । असंबद्धं प्रलपितुं शीलं यस्यास्ताम्=असङ्गतार्थभाषणप्रवणाम् । आर्यायै = पूज्यायै । निवेदयिष्यामि = कथयिष्यामि । न

---

स्पर्शकरने के अयोग्य ) समझता था, वह तो स्पर्श के योग्य शीतल रत्न ही निकला । अर्थात्—यह ब्राह्मण कन्या होने के कारण दूर से ही देखने की चीज नहीं है, किन्तु अप्सरा की कन्या होनेके कारण तेरे विवाह के योग्य ही है ! ॥३०॥

**शकुन्तला**—( कुछ कुपित सी होकर ) सखि अनसूये ! मैं जाऊँगी ।

**अनसूया**—किसलिए ? ।

**शकुन्तला**—इस असम्बद्ध प्रलापिनी ( व्यर्थ की बकवाद करनेवाली ) प्रियंवदा की शिकायत मैं आर्या गौतमी से जाकर करूंगी ।

[ जाने के लिए उठती है ] ।

**अनसूया**—हे सखि ! आश्रमवासी जनको ( तुमको ) यह कदापि उचित

---

१ क्वचिन्न ।

[ सखि ! न युक्तमाश्रमवासिनो जनस्य अकृतसत्कारमतिथि-विशेषमुज्झित्वा स्वच्छन्दतो गमनम् ]।

[शकुन्तला—उत्तरमदत्त्वैव प्रस्थिता ]।

राजा—( [1]स्वगतं—) कथमियं गच्छति ?। ( जिघृक्षुरिव । पुनरिच्छां निगृह्य—) अहो ! चेष्टानुरूपिणी कामिजनचित्तवृत्तिः। अहं हि—

**अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः।**
**स्वस्थानादचलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥३१॥**

---

कृतः सत्कारो यस्य तम् = अकृतपूजनम् । अतिथिविशेषम् = ईदृशं महाप्रभावमतिथिम् । उज्झित्वा = अपहाय । परित्यज्य । स्वच्छन्दतः = स्वेच्छया । [ उपदेशो नाम नाट्यालङ्कारः । 'शिक्षा स्यादुपदेशन' मिति दर्पणोक्तेः ]। जिघृक्षुः = ग्रहीतुमिच्छुः । इच्छां = ग्रहणेच्छां, निगृह्य=निरुद्धय ।

कामिनां, मनसः = चित्तस्य, वृत्तिः = वर्त्तनं, चेष्टाम्-अनुरूपयति तच्छीला= चेष्टासदृशी । [ कायव्यापारसदृशी, गमनाऽऽगमनादिकशरीरव्यापारानुरूपैव मनोवृत्तिरित्याशयः ]।

**अनुयास्यन्निति** । अहं हि-मुनितनयां=शकुन्तलाम्, अनुयास्यन् = तां ग्रहीतुं जिगमिषन्, सहसा = झटिति, विनयेन = नयेन । धैर्येण । वारितः प्रसरो यस्यासौ = अवरुद्धवेगः । 'प्रसरः प्रजये वेगे' इति विश्वः । स्वस्थानात् = स्व-

---

नहीं है, कि-ऐसे विशिष्ट अतिथिका, उचित आदर-सत्कार किए विना ही, उसे छोड़कर, अपने मनसे ही उठकर यों चला जाए।

[ शकुन्तला—विना उत्तर दिए ही जाती है ]।

राजा—( अपने मनमें ) हैं ! यह क्यों जाती है ?। ( उसे पकड़ना चाहता हुआ भी फिर अपनी इच्छा को रोककर—) अहो ! कामी जनों की मनोवृत्ति भी चेष्टा के अनुरूप ही होती है। देखो—

यद्यपि मैं इस मुनि कन्या के पीछे २ ही जाना चाहता था, पर विनय (शिष्टता)

---

१ क्वचिन्न ।

**प्रियंवदा**—(शकुन्तलामुपेत्य-) हला चण्डि ! णारिहसि गन्तुम्।

[ हला चण्डि ! नार्हसि गन्तुम् ]।

**शकुन्तला**—( परिवृत्य, सभ्रूभङ्गं—) किं त्ति ?।

[ किमिति ? ]।

**प्रियंवदा**—दुवे मे रुक्खसेअणके धारेसि, तेहिं दाव अत्ताणं मोआवेहि, तदो गमिस्ससि। (—इति बलान्निवर्त्तयति )।

[ द्वे मे वृक्षसेचनके धारयसि, ताभ्यां तावदात्मानं मोचय, ततो गमिष्यसि ]।

---

प्रदेशात, अचलन्नपि = अगच्छन्नपि, गत्वा पुनः प्रतिनिवृत्त इव = गत्वा पुनरागत इव–जातोऽस्मि। एवञ्च गमनरूपा, प्रतिनिवृत्तिरूपा च चेष्टा कायस्य, तथापि मनसा कृतं गतागतमपि शरीरकृतमिवानुभवामि शरीरसादादिना, अतो युक्तमुक्तं-चेष्टाऽनुरूपा कामिजनचित्तवृत्तिरिति। शरीरेण गतमागतञ्चाचरञ्जनः फलाफलाभ्यां हर्षविषादौ यथाऽनुभवति, तथैव मनसा तथाऽऽचरन्नहं निष्फलाया-सात्खेदमनुभवामीत्याशयः। [ अत्र विरोधाभासः, काव्यलिङ्गं, वृत्तिश्रुत्यनुप्रासौ। परिभावना नाम मुख्यसन्ध्यङ्गं–'कुतूहलोत्तरा वाचो विज्ञेया परिभावना' इति विश्वनाथः। ] ॥ ३१ ॥

हला चण्डि != अयि कोपने !, परिवृत्त्य=अभिमुखीभूय। भ्रुवोः भङ्गेन सहितं–सभ्रूभङ्गं = भ्रुकुटिं बद्ध्वा। किमिति = कुत एतत् ?। वृक्षाः सिच्यन्ते

---

से ही रोका गया हूँ। अतः अपने स्थान से यद्यपि मैं उठा भी नहीं हूँ, परन्तु मालूम होता है, जैसे मैं जाकर ही लौट आया हूँ। अर्थात्–मनके गमन और आगमन से, शरीर का भी गमन–आगमन मुझे अनुभूत हो रहा है। यह कामकृत दशा का ही द्योतक है ॥३१॥

प्रियंवदा—( शकुन्तला के पास जा उसे पकड़ कर ) अरी चण्डी ! ( नटखट ! ) यहाँ से तूं जा ही नहीं सकती है !।

शकुन्तला —( दूर झटक कर, त्यौरी बदलकर) क्यों नहीं जा सकती हूं ?।

प्रियंवदा—तेरे में मेरे दो वृक्ष सेचनक ( दो वृक्ष सींचने का मेरा ऋण

राजा——भद्रे! वृक्षसेचनादेवाऽत्र [1]भवतीं परिश्रान्तां तर्कयामि।

तथा ह्यस्याः—

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
द्द्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।
[2]बद्धं कर्णशिरीषरोधि वदने घर्म्माम्भसां जालकं,
बन्धे स्रंसिनि चैकहस्तयमिताः पर्य्याकुला मूर्द्धजाः॥३२॥

---

आभ्यां-ते वृक्षसेचनके=वृक्षसेचनकघटौ। वारद्वयं वृक्षसेचनमिति यावत्। वृक्ष-द्वयसेचनमिदानीमप्यवशिष्यते तवेति चाऽऽशयः।

निवर्त्तयति = प्रत्यानयति। भद्रे! = सुशीले! अत्रभवतीं = माननीयां शकुन्तलां। तर्कयामि = अवगच्छामि।

स्रस्तांसाविति। घटस्योत्क्षेपणात्=उत्थापनात्, स्रस्तौ=शिथिलौ, अंसौ= स्कन्धौ ययोस्तौ। अतिमात्रं लोहितं तलं ययोस्तौ = अतितरां लोहितकरतलौ, बाहू = भुजौ, अद्याऽपि = इदानीमपि वर्त्तेते। घटोत्क्षेपणादेव। प्रमाणेनाधिकः— प्रमाणाधिकः = भृशमायतः, श्वासः = उच्छ्वासः, अद्यापि-स्तनयोर्वेपथुं = कम्पं, जनयति = करोति। घटोत्क्षेपणादेव च—अद्यापि-वदने = मुखे, कर्णभूषणं शिरीषं-कर्णशिरीषं, तद्रोद्धुं शीलमस्य-कर्णशिरीषरोधि = कर्णाभरणशिरीषकुसुम-रोधकं, घर्मस्याम्भसां = स्वेदवारिकणानां, जालमेव जालकं = बिन्दुकदम्बकं,

---

तेरे ऊपर) बाकी हैं, पहिले उनसे अपने को छुड़ा, तब जा सकोगी। [ वृक्ष सेच-नक = वृक्ष सींचने का करार। अर्थात् दो वृक्ष तेरे पारी के सीचने और बाकी हैं। या घटों के समान उन्नत दो स्तन तूं छिपाए लिए जा रही है—यह भी अर्थ उपहास के लिये हो सकता है ]। ( जबरदस्ती शकुन्तला को पकड़कर खींचती है )।

राजा——हे भद्रे! वृक्षों के सींचने से आपकी सखी थक गई सी मालूम हो रही है। क्योंकि—दोनों हाथ इसके घड़े उठाने से कन्धे पर से लटक आये हैं। दोनों हथेली भी लाल हो गई हैं। परिश्रम से श्वास भी लम्बा २ चल रहा है,

---

१ 'वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये'। २ 'स्रस्तं'।

—तदहमेनामनृणां करोमि। (—इत्यङ्गुलीयकं [1]ददाति )।
[ [2]सख्यौ—प्रतिगृह्य, नामाक्षराणि वाचयित्वा च परस्परमवलोकयतः ]।

बद्धं = संसक्तं। दृश्यते। स्वेदजलेन कर्णशिरीषं गण्डस्थले आसक्तं सत्तथा न तरलितं भवतीति-स्वेदोदकस्य कुसुमरोधकता स्फुटा। घटोत्क्षेपणादेव च—बन्धे स्रंसिनि = प्रशिथिले केशबन्धे सति, एकेन हस्तेन = पाणिना, यमिताः = नियमिताः। धृताः। अत एव अद्यापि पर्याकुलाः=विसंस्थुलाः। विपर्यस्ता इति यावत्। अस्या मूर्धजाः = चिकुराः। सन्तीति शेषः।

[ श्रान्तजनवर्णनात्स्वभावोक्तिः, स्तनकम्पात्प्रमाणाधिकश्वासानुमानादनुमानश्चालङ्कारः, बन्धस्रंसनात्पर्याकुला इति-काव्यलिङ्गञ्च, अनुप्रासश्च। "देशकालस्वरूपेण वर्णना दृष्टमुच्यते" इति दर्पणोक्तेर्दृष्टं भूषणमत्र ज्ञेयं, "चण्डि !" इत्यारभ्य "ददाति" त्यन्तेन करणं नाम मुखसन्ध्यङ्ग, "करणं पुनः प्रकृतार्थसमारम्भ" इति दर्पणोक्तेः ]

तत् = परिश्रान्ततया, एनां = शकुन्तलाम्, अनृणां = प्रतिवस्तुदानेन ऋणमुक्तां, करोमि = कारयामि। अङ्गुलीयकं=मुद्रिकां, ददाति = प्रियंवदायै ददाति। नामस्वरूपाणि मुद्राक्षराणि-नाममुद्राक्षराणि="दुष्यन्तः" इति मुद्रोल्लिखितानि

जिससे इसके दोनों स्तन भी कम्पित हो रहे हैं। और शिरीष के फूलों के बने हुए कान के भूषण ( कर्णफूलों ) को रोकनेवाला यह पसीने के बिन्दुओं का जाल सा मुखमण्डल पर छा रहा है। और शिर का जूड़ा भी ढीला हो खुलकर–हाथ से पकड़े रहने पर भी—इधर-उधर बिखर रहा है, और इस प्रकार इसका केशपाश अस्त-व्यस्त हो रहा है ॥ ३२ ॥

इसलिये-अब ये वृक्ष सेचन में असमर्थ मालूम होती हैं। अतएव इनका ऋणमोचन मैं ही कर देता हूं। ( अपनी अंगूठी निकालकर देता है )।

[ दोनों सखियाँ—उस अगूठी को लेकर उसमें खुदे हुए 'दुष्यन्त' नाम के अक्षरों को बाँचकर, दुष्यन्त राजा को पहिचान कर, आपुस में देखने लगती हैं ]।

१. 'दातुमिच्छति'। २. उभे-नामाक्षराण्यनुवाच्य परस्परमवलोकयतः।

राजा—[1]अलमन्यथा सम्भावनया, राज्ञः प्रतिग्रहोऽयम्।

प्रियंवदा—तेण हि णारिहदि एदं अङ्गुलीअअं अंगुलीविओअं। अज्जस्स वअणादो ज्जेव[2] अणिरिणा एसा भोदु।

[ तेन हि नार्हति इदमङ्गुलीयकमङ्गुलीवियोगम्। आर्यस्य वचनादेवाऽनृणैषा भवतु ]।

अनसूया—हला सउन्तले! मोआविदासि अणुकम्पिणा अज्जेण, अहवा [3]राएसिणा। ता [4]कहिं दाणिं गमिस्ससि ?।

[ हला शकुन्तले! मोचितासि अनुकम्पिना आर्येण, अथ वा [3]राजर्षिणा। [4]तत्कुत्रेदानीं गमिष्यसि ? ]।

नामाक्षराणि। अन्यथा=राजा दुष्यन्तोऽयमिति। सम्भावनया=शङ्कया, अलं=न प्रयोजनं। ब्राह्मण एवाहमित्याशयः। राज्ञः=दुष्यन्तस्य, प्रतिग्रहः=मह्यं दानमेतत्। राज्ञः सकाशाद्दानेनैतन्मया लब्धमित्याशयः। परिग्रह इति पाठे—परिग्रहः= प्रसादः। अङ्गुलीयकमेतद्राज्ञा मह्यं प्रसादेन दत्तम् अधिकारचिह्नस्वरूपमतो न शङ्काऽत्रकार्या भवतीभिरित्याशयः।

अत्र "राज्ञः=मम दुष्यन्तस्य, परिग्रहः=भवत्यै उपहारः" इत्यप्यर्थोऽतो न राज्ञो मिथ्याभाषणदोषः।

तेन=अधिकारचिह्नतया, अङ्गुल्या वियोगं=पार्थक्यम्। वचनादिति।

राजा—आप लोग कुछ दूसरी बात न समझें। राजा दुष्यन्त से यह अंगूठी प्रसादस्वरूप ( या दान में ) मुझे मिली हुई है। अतः आपलोग इसमें किसी प्रकार की शङ्का न करें।

प्रियंवदा—यदि ऐसी बात है ( यह राजा की दी हुई है ) तो फिर इस अंगूठी को आप अपनी अंगुली में ही रहने दें। इसे अंगुली से अलग करना ठीक नहीं है। और आपके वचनमात्र से ही यह शकुन्तला अपने ऋण से छूट गई।

अनसूया—सखि शकुन्तले! इन सज्जन ने तुमको ऋण से मुक्त करा

१. 'अलमस्मानन्यथा संभाव्य। राज्ञः परिगृहोऽयमिति राजपुरुषं मामवगच्छथ'। २. 'वअणेण अणिरिणा दाणीं एसा। ( किञ्चिद्विहस्य ) हला सउन्दले! मोइदासि'। [वचनेनानृणा इदानीमेषा। हला शकुन्तले ! मोचितासि] पा०। ३. महाराएण' [महाराजेन]। ४. 'गच्छ दाणिं'। [गच्छेदानीम् ]।

**शकुन्तला**—( आत्मगतम्— ) [1]ण एदं जणं परिहरिस्सं, जइ अत्तणो पहविस्सं।

[ नैतं [1]जनं पर्यहरिष्यं यद्यात्मनः प्राभविष्यम् ]।

**प्रियंवदा**—किं दाणिं ण गच्छीअदि ?।

[ किमिदानीं न गम्यते ? ]।

**शकुन्तला**—[2]दाणिं किं तुह आअत्तह्मि ?। जदो मे रोअदि, तदो गमिस्सं।

[ इदानीं किं तव आयत्ताऽस्मि ?। [3]यदा मे रोचेत तदा गमिष्यामि]।

---

श्रान्तेयमित्युक्त्या परित्याज्येति ध्वननात्। अनुकम्पाऽस्त्यस्यासौ, तेन = कृपापरेण। "कृपा दयाऽनुकम्पा स्यात्" दित्यमरः।

**राजर्षिणेति** । अङ्गुलीयकादिप्रत्यभिज्ञानाद् दुष्यन्तोऽयं राजर्षिरिति अस्माभिर्निश्चितमित्याशयः। **कुत्रेदानीं गमिष्यसि** = यत्र ते गमनस्येच्छा, तत्र यथेष्टं गम्यतामित्याशयः। अथ वा–इत्थं कृतोपकारं परित्यज्य क गच्छसीत्युपालम्भोऽपि बोध्यः। अथवा प्रश्नमात्रमेतत्। जनं=दुष्यन्तम्, पर्यहरिष्यम्=अत्यक्ष्यम्। लृङो रूपम्। प्राभविष्यम् = परतन्त्रा नाऽभविष्यम् । [ 'उद्भेदो' नाम मुखसन्धेरङ्गम्—"बीजार्थस्य प्ररोहः स्यादुद्भेदः" इति विश्वनाथोक्तेः। "बीजस्य गमनं यत्तु तत्समाधानम्" इत्युक्तेः समाधानं नाम मुखसन्ध्यङ्गमिति परे ]।

---

दिया है। अथवा-(इस) राजर्षि ने तुमको ऋण से छुड़ा दिया है। अब तुम जा सकती हो। अच्छा-बता तू अब कहाँ जाएगी ?।

शकुन्तला—( मन में– ) यदि मैं अपने वशमें होती, या मेरा वश चलता तो, मैं इस ( प्रिय ) जनके पास से कहीं जाती ही नहीं।

प्रियंवदा—अब क्यों नहीं जाती है ?। अब क्यों खड़ी है ?।

शकुन्तला—अब भी मैं क्या तेरे आधीन हूँ ?। जब जहाँ मेरी इच्छा होगी, तब तहाँ जाऊँगी। तू कौन पूछने वाली है ?।

---

१ 'जइ अत्तणो पहविस्सं स। (प्रकाशं—) का तुमं विसज्जिदव्वस्स रुन्धिदव्वस्स वा'। [यद्यात्मनः प्रभविष्यामि। का त्वं विसर्जितव्यस्य रोधितव्यस्य वा]।

२. क्वचिन्न। ३. 'यतो मे रोचते ततो'।

राजा—( शकुन्तलां विलोकयन्नात्मगतं—) किं खलु यथा वयमस्या-मियमप्यस्मान् प्रति तथा स्यात् ? । अथ वा लब्धाऽवकाशा मे [1]मनोवृत्तिः ।

कुतः—

वाचं न मिश्रयति यद्यपि मद्वचोभिः,
कर्णं ददात्य[2]वहिता मयि भाषमाणे ।
कामं न तिष्ठति मदाननसंमु[3]खीयं,
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ ३३ ॥

---

तवायत्ता=त्वदधीना । यदा रोचेत=यदा मे समीहा स्यात् । यथा=अनुरक्तः । तथा=प्रणयिनी । लब्धोऽवकाशो यया सा—लब्धावकाशा=लब्धावसरा। जाताश्वासेति यावत् । अस्मास्वनुरक्तेयमिति ज्ञातमस्माभिरित्यर्थः ।

कुतः=कुत एतदवगतमत आह—वाचमिति । यद्यपि—मद्वचोभिः=मद्वाक्यैः सह, वाचं=स्ववाणीं, न मिश्रयति—नानुसन्धत्ते, ( मत्प्रश्नादेरुत्तरं न प्रतिपद्यते )। मया सह नालपतीति यावत् । तथापि—मयि भाषमाणे=किमपि कथयति सति, अवहिता=सावधाना सती, कर्णं ददाति=निभृतं शृणोति । किञ्च-कामं=सत्यमेतत् यद्यपि—मदाननसंमुखी=मन्मुखसंमुखीना, न तिष्ठति, तु=तथापि, अस्या दृष्टिः=नयनं तु, भूयिष्ठं=प्रायः, अन्यो विषयो यस्याः सा अन्यविषया=मन्मुखातिरिक्तपदार्थविषयिणी । न=नैवास्तीत्यर्थः ॥

---

राजा—(शकुन्तलाको निहारता हुआ, मनही मन ) क्या मेरा जैसा इसके प्रति अनुराग हो गया है, इसका भी मेरे प्रति वैसा ही अनुराग होगा ?।

अथवा-मेरी मनोवृत्ति को अवकाश प्राप्त हो गया है। अर्थात् इसका भी मेरे प्रति वैसा ही अनुराग है-यह मानने का कारण है।

क्योंकि—यद्यपि मेरी बातों का उत्तर देकर यह मेरे साथ वार्त्तालाप तो नहीं करती है, परन्तु मैं जब कुछ बोलता हूं तो सावधानता पूर्वक कान देकर यह मेरी

---

१, 'प्रार्थना' । २. ददात्यभिमुख' । ३ 'संमुखीना' ।

[नेपथ्ये—]

भो भोस्तपस्विनः ! [१]तपोवनसन्निहितसत्त्वरक्षणाय सज्जीभवन्तु भवन्तः। प्रत्यासन्नः किल मृगयाविहारी [२]राजा दुष्यन्तः।

---

[ अनेन नायिकालङ्कारो विलासो नाम प्रकटितः। तदुक्तं विश्वनाथेन—"यान-स्थानासनादीनां मुखनेत्रादिकर्मणाम्। विशेषस्तु विलासः स्यात्"—इति। अनुरागेङ्गितं मदनोदये—"विकारो नेत्रवक्त्रस्य तद्वाक्यश्रवणादरः। अन्यव्याजेन तद्वीक्षा अनुरागेङ्गितं मत" मिति। अनुप्रासः। प्राप्तिर्नाम मुखसन्ध्यङ्गं, "प्राप्तिः सुखागमः"—इति दर्पणात् ॥ ३३ ॥

प्रकृतप्रसङ्गभङ्गाय भेदं मुखसन्ध्यङ्गमवतारयति—नेपथ्य इति। तपोवने सन्निहितानां=स्थितानां। पालितानां। सत्त्वानां=मृगादिजन्तूनां, रक्षणाय=पालनाय, सज्जीभवन्तु = उद्यता भवन्तु। किल = प्रसिद्धं, मृगयया विहर्तुं शीलमस्य-मृगयाविहारी = आखेटरसिकः, प्रत्यासन्नः = निकटवर्ती। येन वन्यसामान्यमृगादिभ्रमेणाश्रममृगा न हताः स्युरिति आश्रमतापसानां घोषणैषा। [३]चूलिकेयं,—"अन्तर्यवनिकासंस्थैः सूचनाऽर्थस्य चूलिके"ति दर्पणे लक्षणात्।

---

बातें प्रेम से सुनती है। और यद्यपि यह ठीक है, कि—यह मेरी ओर मुख करके नहीं बैठती है, परन्तु इसकी दृष्टि ज्यादा देर दूसरे विषय में न लग कर घूम फिर कर बार २ मेरे ही ऊपर आकर टिकती है। और ये लक्षण अनुराग के ही हैं ॥३३॥

[ नेपथ्य में = पर्दे के पीछे से—]

हे आश्रमवासी तपस्वियों ! तपोवन के जीवों की रक्षा के लिए आप लोग सन्नद्ध हो जाइए। क्योंकि महाराज दुष्यन्त घूमते-घामते शिकार खेलने को इधर ही आए हुए हैं।

---

१. 'संनिहितास्तपोवनसत्त्वरक्षायै भवत'।

२ 'पार्थिवो'। ३ "अङ्केष्वदर्शनीया या वक्तव्यैव च संमता। या च स्याद्वर्षपर्यन्तं कथा दिनद्वयादिजा ॥ अन्या च विस्तरात्सूच्या सार्थोपक्षेपकैर्बुधैः ॥ अर्थोपक्षेपकाः पञ्च विष्कम्भक-प्रवेशकौ। चूलिकाऽङ्कावतारोऽथ स्यादङ्कमुखमित्यपि ॥" इति विश्वनाथः।

✓ तुरग-खुर-हतस्तथा हि रेणु-
विटप-विषक्त-जलार्द्र-वल्कलेषु ।
पतति परिणताऽरुणप्रकाशः
शलभसमूह इवाऽऽश्रमद्रुमेषु ॥३४॥

राजा—( स्वगतम् ) अहो धिक्! ममऽन्वेषिणः सैनिकास्तपोवनमभिरुन्धन्ति ।

( पुनः[1]—नेपथ्ये )

---

राजसान्निध्यमेव दर्शयति—**तुरगेति** । तुरगाणां=वाजिनां, खुरैः=शफैः, हतः=क्षुण्णः । उत्थापितः, परिणतस्य = अस्ताचलोन्मुखस्य, अरुणस्य=सूर्यस्येव प्रकाशो यस्य [ अरुणेन = सूर्येण प्रकाशो यस्येत्यर्थो वा । सूर्यकिरणसम्भेदाद्रेणुपटलस्याऽऽरक्तवर्णता हि सन्ध्यावेलायां भासत एव ] । रेणुः = धूलिः, विटपेषु विषक्तानि जलार्द्राणि वल्कलानि येषु तेषु = शाखासक्तजलार्द्रवल्कलेषु, आश्रमस्य = तपोवनस्य, द्रुमेषु = वृक्षेषु, शलभानां समूह इव = पतङ्गपङ्क्तिरिव, पतति । [ भेदलक्षणन्तु—"भेदं संहतभेदनम्" इति । **पुष्पिताग्रा वृत्तम्** । उपमा, वृत्त्यनुप्रासः । 'दुष्यन्तः प्रत्यासन्न' इत्यनुक्त्वा कार्यस्य रेणुपतनस्याभिधानादप्रस्तुतप्रशंसा च ] ॥ ३४ ॥

अहो ! धिक् ! = आः कष्टम् । अन्वेषयन्ति तच्छीला अन्वेषिणः=अन्वेष्टारः,

---

देखिए—घोड़ों की टापों ( खुरों ) से उठी हुई, डूबते हुए सूर्य की प्रभा से आरक्त यह धूलि—वृक्षों की शाखाओं पर सूखते हुए गीले वल्कलों पर इस प्रकार गिर रही है, जिस प्रकार आश्रम के वृक्षों पर टिड्डी दल आकर गिरता है ॥ ३४ ॥

राजा—(मन ही मन) आह ! बड़े अनर्थ की बात है कि—मेरे को खोजते हुए सैनिक गण तपोवन में गड़बड़ मचा रहे हैं । [ या तपोवन को घेर रहे हैं ] ।

[ फिर नेपथ्य में—]

---

१ अयं पाठ इह क्वचिन्न ।

भो [1]भोस्तपस्विनः ! पर्य्याकुलयन् वृद्ध स्त्री-कुमारानेष गजः प्राप्तः।

तीव्राघाताद[2]भिमुखतरुस्कन्धभग्नैकदन्तः,
प्रौढा[3]कृष्टव्रततिवलयासङ्ग[4]नाज्जातपाशः ।
मूर्त्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो,
धर्मारण्यं विरुजति गजः स्यन्दनाऽऽलोकभीतः ॥३५॥

अभिरुन्धन्ति = पीडयन्ति । पर्याकुलयन् = त्रासयन्, वृद्धान्, स्त्रियः, कुमारांश्च-वृद्धस्त्रीकुमारान् । प्राप्तः=आगच्छति । गजः = वनगजः । राजसेनागजो वा ।

तीव्रेति । तीव्रात् = दृढात्, आघातात=प्रहारात्—मुखमभिगतः—अभिमुखः = संमुखो यस्तरुः = वृक्षः, तस्य स्कन्धेन भग्न एकदन्तो यस्यासौ । किञ्च-प्रौढा = दृढा स्थूला चासावाकृष्टा च या व्रततिः = लता, तस्या वलयं, [ प्रौढं-दृढमाकृष्टं यद्व्रततिवलयमित्येवं रीत्या प्रौढमिति क्रियाविशेषणं वा ] तस्य समासञ्जनं = संसर्गस्तस्मात्,—जातः–पाशो = बन्धनं यस्यासौ तथा ।

किञ्च–नः = अस्माकं, तपसः = धर्माचरणस्य, मूर्त्तो विघ्न इव = मूर्तिमान् विघ्न इव । किञ्च—भिन्नं = भग्नं, सारङ्गाणां—मृगाणां, यूथं = समूहो येनासौ तथा । स्यन्दनस्य = दुष्यन्तरथस्य, आलोकात् = दर्शनात्, भीतः = त्रस्तः सन्, गजः = हस्ती, धर्मारण्यं=तापसाश्रमं, विरुजति = व्याकुलयति । [ 'मूर्त्तो विघ्न इवे' त्युत्प्रेक्षा, अप्रस्तुतप्रशंसा चालङ्कारौ पद्येऽस्मिन् ] ॥३५॥

हे तपस्वियों ! सावधान ! सावधान !! बालक वृद्ध एवं स्त्रियों को व्याकुल करता हुआ यह मस्त हाथी सिकड़ तुड़ाकर इधर ही चला आ रहा है ! ।

यह हाथी—जिसका एक दाँत सामने आए हुए वृक्ष में जोर से आघात करने से टूट गया है, और लताओं के जाल को बलात् खींचने से जिसके पैर में लताओं का पाश सा लग गया है, हमारी तपश्चर्या में साक्षात् विघ्न स्वरूप होकर, आश्रम के हरिणों के झुण्ड को छिन्न भिन्न व भय विद्रुत करता हुआ, रथ को देखकर भड़क कर, हमारे इस धर्मारण्य को नष्ट-भ्रष्ट कर रहा है ॥ ३५ ॥

१ अयं पाठः क्वचिन्न । २ 'तीव्राघातप्रतिहततरुः स्कन्धलग्नैकदन्तः' । ३ 'पादाकृष्ट' । ४ वलयासङ्गसंजातपाशः' । ५ 'प्रतिहता' ।

[ सर्वाः—श्रुत्वा[1] ससम्भ्रममुत्तिष्ठन्ति ]।

राजा—( [2]स्वगतम् ) अहो धिक् ! [3]कथमपराद्धस्तपस्विनामस्मि। भवतु। प्रतिगच्छामि तावत्।

सख्यौ—महाभाअ ! इमिणा हत्थिसम्भमेण पज्जाउला म्ह। ता अणुजाणीहि णो उडअगमणे[4]।

[ महाभाग ! अनेन हस्तिसम्भ्रमेण पर्य्याकुलाः स्मः, तदनुजानीहि न उटजगमने[5] ]।

अनसूया—( शकुन्तलां प्रति- ) हला सउन्तले ! पज्जाउला अज्जा गोदमी भविस्सदि, ता एहि सीग्घं एकत्था होह्म।

[ हला शकुन्तले ! पर्य्याकुला आर्य्या गौतमी भविष्यति, तदेहि शीघ्रमेकस्था भवामः ]।

---

अपराद्धः = कृतापराधः। हस्तिनः सम्भ्रमस्तेन = गजत्रासेन। पर्याकुलाः = व्याकुलीभूताः, अनुजानीहि = अनुमतिं देहि। उटजे=पर्णशालायां। गमने = अभिगमने। नः = अस्मान्। पर्याकुला = चिन्तातुरा, गौतमी = आश्रमवृद्धा

---

[ सब—घबड़ा कर उठ खड़ी होती हैं ]।

राजा—[ मन ही मन ] अहो धिक्कार है ! मैंने तपस्वियों का यह बड़ा अपराध किया है। मेरे ही कारण सैनिकों के ये सब उपद्रव खड़े हो रहे हैं। अच्छा मैं जाता हूं।

दोनों सखियां—महाभाग ! हाथी के इस उत्पात से हम लोग भी घबड़ा गई हैं। अतः हम लोगों को अपनी कुटी में जाने की अनुमति दीजिए।

अनसूया—( शकुन्तला के प्रति ) सखि ! शकुन्तले ! आर्या गौतमी हम लोगों के लिए व्याकुल व चिन्तित होंगी। अतः आओ, हम सब एक ही जगह एकत्रित हो जाएं। अर्थात्—आश्रम में ही चलकर पहुंच जाए।

---

१ 'कर्णं दत्वा किञ्चिदिव सम्भ्रान्ताः'। २ 'आत्मगतं'। ३ 'सैनिका अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति। भवतु। प्रतिगमिष्यामस्तावत्। ४ 'गमनस्स' [ गमनाय ]। ५ क्वचिन्न।

**शकुन्तला**—( गतिरोधं रूपयित्वा— ) हद्धी हद्धी ! ऊरुत्थम्भ-विब्भलम्हि संवुत्ता।

[ हा धिक् हा धिक् ! ऊरुस्तम्भविह्वलाऽस्मि संवृत्ता ]

**राजा**—स्वैरं स्वैरं [1]गच्छन्तु भवत्यः। आश्रमबाधा यथा न भवति तथाहमपि [2]यतिष्ये।

**[3]सख्यौ**—महाभाअ ! विदिअभूइट्ठोसि। सम्पदं उवआर-मज्जत्थदाए अवरद्ध ह्म तं मरिसेहि। असम्भाविदसक्कारं भूओवि पच्च-वेक्खणणिमित्तं अज्जं विण्णवे ह्म।

[महाभाग ! विदितभूयिष्ठोऽसि। साम्प्रतमुपचारमध्यस्थतया

काचन तापसी। एकस्थाः = तदन्तिकगताः। गतेः रोधस्तं = गमनावरोधं, रूपयित्वा = नाटयित्वा। हा धिक् = आः ! धिङ्माम्, ऊर्वोः स्तम्भेन विह्वला-ऊरुस्तम्भविह्वला = पादप्रसुप्तिपीडिता, संवृत्ता = जाताऽस्मि। स्वैरं-स्वैरं = शनैः-शनैः। "मन्दस्वच्छन्दयोः स्वैर" मित्यमरः। विदित भूयिष्ठं = बहुलं

**शकुन्तला**—[ अपनी गति के रोध ( पैर न उठने ) का अभिनय करती हुई ] हाय ! हाय ! मैं तो ऊरु के स्तम्भ से ( जांघ भर आने से, या पैर सो जाने से ) विह्वल हो गई हूं। अतः मेरे से चला ही नहीं जाता है। मेरे तो पैर उठते ही नहीं हैं।

**राजा**—घबड़ाइए मत, धीरे २ जाइए। कोई घबड़ाने की बात नहीं है। मैं भी-आश्रम में कुछ गड़बड़ न हो—इसका प्रबन्ध जाकर करता हूं।

**दोनों सखियाँ**—हे महाभाग ! हम लोग आपको प्रायः पहिचान ही गई हैं ( कि आप राजा दुष्यन्त ही हैं )। परन्तु हमलोगों ने आपका उचित अतिथि

१ '( ससम्भ्रमं ) गच्छन्तु भवत्यः। वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे'। २ 'प्रयतिष्यामहे॥ (सर्वे उत्तिष्ठन्ति)। ३ सख्यौ—अज्ज ! असम्भाविदअहिथिसक्कारं भूओ वि पेक्खणणिमित्तं लज्जेमो अज्जं विण्णविदुम्। [ आर्य ! असम्भाविताऽतिथिसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जावहे आर्यं विज्ञापयितुम् ]

अपराद्धाः स्मः, तन्मर्षय । असम्भावितसत्कारं भूयोऽपि प्रत्यवेक्षणनिमित्तमार्यं विज्ञापयामः ]।

राजा—मा मैवं, दर्शनेनैव भवतीनां [1]सम्भूतसत्कारोऽस्मि ।

शकुन्तला—हला अणसूए ! अहिणव-कुस-सूइ-परिक्खदं मे चलणं, कुरुवअसाहापरिलग्गं अ वक्कलं, दाव परिबालेध मं-जाव णं मोआवेमि । [ इति राजानमवलोकयन्ती सव्याजं विलम्ब्य, सह सखीभ्यां निष्क्रान्ता ]।

[ हला अनसूये ! अभिनव-कुशसूचि-परिक्षतं मे चरणम् , कुरबक-

---

येनासौ–विदितभूयिष्ठः = ज्ञातशकुन्तलावृत्तान्तः । [ अथ च—विदितं भूयिष्ठं यस्यासौ तथा, = भवद्वृत्तं प्रायोऽस्माभिरवगतम्, भवान् दुष्यन्त एवेत्यस्माभिर्ज्ञातमिदानीमिति भावः] । उपचारे = अतिथिसत्कारे । मध्यस्थतया = औदासीन्येन, अपराद्धाः = कृतापराधाः स्मः । मर्षय = क्षमस्व । अनेनानुवृत्तिर्नाट्यालङ्कारः, "प्रश्रयादनुवर्त्तनम्-अनुवृत्ति"रिति विश्वनाथोक्तेः । न सम्भावितः = लब्धः सत्कारो येन तम्—अकृतसत्कारमपि, आर्यं = भवन्तं, भूयः = पुनरपि प्रत्यवेक्षणस्य निमित्तं–प्रत्यवेक्षणनिमित्तं–प्रत्यागमनार्थं, विज्ञापयामः = प्रार्थयामहे ।

मा मा = नहि नहि, एवम् = इत्थं मा वादिष्ट, सम्भूतः = जातः, सत्कारो यस्यासौ = जातातिथ्योऽस्मि ।

अभिनवया कुशस्य सूच्या = कुशाङ्कुराग्रसूचिकया, परिक्षतं = विक्षतं, कुरु-

---

सत्कार नहीं करके बड़ा अपराध किया है । अतः आप हमारे इस अपराध को क्षमा करें । और यद्यपि हमलोगों से आपका कुछ भी सत्कार नहीं बन पड़ा है, तो भी पुनः दर्शन देने की आप से हम प्रार्थना ( निवेदन ) करती हैं ।

राजा—ऐसा न कहिए, ऐसा न कहिए । मैं तो आपलोगों को देखकर ही पूरा सत्कृत हो गया हूं ।

शकुन्तला—सखि अनसूये ! देख तो–मेरा पैर कुशा की सूची ( जड़ के

---

१ 'पुरस्कृतोऽस्मि' । २ क्वचिन्न ।

शाखा-परिलग्नञ्च वल्कलम्। तावत् प्रतिपालयतं माम्, यावदेनन्मोचयामि ]

**राजा**—( निःश्वस्य[१]- ) गताः[१] सर्वाः ! भवतु[१], अहमपि गच्छामि। [२]शकुन्तलादर्शनादेव मन्दौत्सुक्योऽस्मि नगरगमनं प्रति। [३]यावदनुयात्रिकाननतिदूरे तपोवनस्य निवेशयामि। न खलु [४]शक्तोऽस्मि [५]शकुन्तलादर्शनव्यापारादात्मानं निवर्त्तयितुम्।

---

बकस्य शाखायां परिलग्नं = कुरुबकशाखापरिलग्नं = कुरुबकतरुविटपासक्तम्। इति = इत्यभिधाय। सव्याजम् = एवं मिषेण, विलम्ब्य = रुद्धगमना।

मन्दमौत्सुक्यं यस्यासौ तथा = मन्दोत्कण्ठः, अनुयात्रा प्रयोजनं, शीलं वा येषान्तान् = अङ्गरक्षकान् सैनिकान्, निवेशयामि = स्थापयामि। शकुन्तलाया दर्शनमेव व्यापारस्तस्मात् = शकुन्तलामुखावलोकनव्यसनात्, निवर्त्तयितुम् = अवरोद्धुम्।

---

तीखे अग्रभाग ) से विक्षत हो गया है। और देख, देख, यह कुरबक की शाखा में मेरा वल्कल ( कपड़ा ) भी फँस गया है। थोड़ी देर तुम दोनों ठहरो तो मैं इसे छुडा लूं। तब मैं भी तुमारे साथ ही चलू। [ ऐसा कहकर वल्कल छुड़ाने के बहाने से कुछ देर वहाँ रुककर, राजा की ओर कटाक्षपात करती हुई, सखियों के साथ शकुन्तला जाती है ]।

राजा—[ ऊँची सांस लेकर ] ये सब तो गई। अच्छा मैं भी जाऊँ। शकुन्तला को देखकर तो मेरी अब नगर ( राजधानी ) जाने की उत्सुकता ( इच्छा ) ही नहीं हो रही है। अच्छा, पहिले तो मेरे साथ के सिपाहियों को तपोवन से दूर कहीं ठहराऊँ। क्या करूँ, मैं तो अपने मन को शकुन्तला को देखने के व्यापार से हटा ही नहीं सक रहा हूं। अर्थात् मेरा मन तो बार २ शकुन्तला को ही देखने को व्याकुल हो रहा है। इसलिए राजधानी भी जाने की मेरी इच्छा नहीं हो रही है। क्या करूँ ?।

---

१ क्वचिन्न। २ एतत्पर्यन्तं पाठः क्वचिन्न। ३ 'यावदनुयात्रिकान् समेत्य नातिदूरे तपोवनस्य निवेशयेयम्'। ४ 'शक्नोमि'। ५ 'दर्शने'ति क्वचिन्न।

मम हि—

गच्छति पुरः शरीरं, धावति पश्चादसंस्तुतं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥३६॥

( इति निष्क्रान्ताः—सर्वे )।

इति प्रथमोऽङ्कः।

---

गच्छतीति। शरीरं = वपुः, पुरः = अग्रे, गच्छति = शनैः शनैः कथञ्चिद्याति, चेतः=चित्तन्तु, वातस्याभिमुखं-प्रतिवातं = वायुसंमुखं। 'लक्षणेनाभिप्रती' इत्यव्ययीभावः। नीयमानस्य = चाल्यमानस्य, केतोः = ध्वजस्य, चीनांशुकमिव = पट्टवस्त्रमिव, असंस्तुतमिव = शरीरेणाऽपरिचितमिव, पश्चात्=शकुन्तलाभिमुखं, धावति = सत्वरमुपयाति। एतेन स्वचेतसश्चाञ्चल्यं, वपुषो हृदयशून्यत्वात्काष्ठतुल्यत्वं च ध्वनितम्।

[शरीरमनसोः सम्बन्धेऽपि असम्बन्धकथनादतिशयोक्तिः। अपरिचितमिवेत्युत्प्रेक्षा, चीनांशुकमिवेत्युपमा, वृत्त्यनुप्रासश्च ]॥ ३६ ॥

निष्क्रान्ताः सर्व इति। 'पात्रैस्त्रिचतुरैरङ्कं, तेषामन्तेऽस्य निर्गमः'– इति दशरूपके, "अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः"–इति दर्पणे च प्रतिपादनादङ्कान्ते सर्वपात्रनिर्गमः। तपोवनावरोधस्य साक्षाददर्शनीयतयाऽङ्कान्ते निबन्ध इत्यत्राऽङ्कसमाप्तिः। तदुक्तं धनिकेन—

दूराध्वानं, वधं, युद्धं, राज्यदेशादिविप्लवम्।
संरोधं, भोजनं, स्नानं सुरतं चानुलेपनम्॥
शस्त्रस्य ग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत्।'—इति।

---

मेरा तो—

यद्यपि शरीर आगे की ओर चल रहा है, परन्तु (मेरा) बेवश हुआ मन तो पीछे की ही ओर उसी प्रकार दौड़ रहा है, जिस प्रकार हवा से विपरीत दिशा में ले जाई जानेवाली ध्वजा का पतला कपड़ा पीछे की ही ओर दौड़ता है। ध्वजा को पूर्व की ओर ले जावें, और पूर्व से ही हवा भी चल रही हो तो ध्वजा पूर्व

---

१ 'असंस्थितं'।

अङ्कलक्षणञ्चोक्तं धनिकेन—

"प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः॥" इति।

दशरूपक-दर्पणयोरपि—

"यदा तु सरसं वस्तु मूलादेव प्रवर्त्तते।
आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः॥" इति।

यथा प्रकृते—राज-सूतप्रवेशादेवाङ्कारम्भः।

---

इति श्रीगुरुप्रसादशास्त्रिकृतायामभिनवराजलक्ष्मीटीकायां
प्रथमोऽङ्कः।

---

को जाएगी, पर उसका कपड़ा पीछे की (पश्चिम की) ओर ही उड़ता रहेगा॥ ३६॥

[ इस प्रकार सब अपने २ स्थान को जाते हैं ]।

आचार्य-श्रीसीतारामशास्त्रिकृतायां भाषाटीकायां
प्रथमोऽङ्कः समाप्तः॥

# अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति निर्विण्णो[1] विदूषकः ) ।

**विदूषकः**—( निःश्वस्य- ) भो ! हदोह्मि एदस्स मिअआसीलस्स रण्णो वअस्सभावेण णिव्विण्णो । अअं मिओ, अअं वराहो, अअं

---

## ※ अभिनवराजलक्ष्मीः ※

विदूषक इति । केलिकलहप्रियो, राज्ञः सहचरो, हास्यकारी 'विदूषक'—इत्युच्यते । विदूषकलक्षणं च रसार्णवे—

"विकृताङ्गवचोवेशैर्हास्यकारी विदूषकः" इति ।

तस्य च प्राकृतमेव प्रयोज्यम् । तदुक्तं—

"विदूषक-विटादीनां पाठ्यं तु प्राकृतं भवेत्" । इति ।

विश्वनाथोऽपि—

"शृङ्गारस्य सहाया विट-चेट-विदूषकाद्याः स्युः ।
भक्ता, नर्मसु निपुणाः, कुपितवधूमानभञ्जनाः शुद्धाः" ।। इति ।

"कुसुमवसन्ताद्यभिधः, कर्मवपुर्वेषभाषाद्यैः ।
हास्यकरः, कलहरतिः, विदूषकः स्यात्स्वकर्मज्ञः ।।" इति च ।

अत्र नाटके इयं विदूषककथा 'पताका' । तल्लक्षणं दर्पणकृदाह—

"व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ।" इति ।

भोः ! = हा ! । 'भो'स्तु सम्बोधनविषादयो'रिति मेदिनी । मृगया शीलं यस्य—तस्य मृगयाशीलस्य = आखेटव्यसनिनः । वयस्यभावेन = मित्रभावेन,

---

## अथ द्वितीय अङ्क

[ उदास मन विदूषक का प्रवेश ] ।

**विदूषक**—( ऊँची साँस लेकर )-हाय ! इस शिकार के व्यसनी राजा दुष्यन्त की मित्रता से तो मैं खिन्न और दुःखी हो गया हूं । 'यहाँ देखो—यह

---

[1] 'विषण्णो' ।

सद्दूलो त्ति मज्झन्दिणे वि गिह्मे विरलपादवच्छाआसुं बणराइसुं आहिण्डिअ पत्तसङ्करकसाअविरसाइँ उण्णकडुआइँ पिज्जन्ति गिरिणईसलिलाइं। अणिअदवेलञ्च उण्णोण्णमंसभूइट्ठं भुञ्जीअदि।

तुरअगआणाञ्च सद्देण रत्ति पि मे णत्थि पकामसुइदव्वं। महन्ते ज्जेव पच्चूसे दासीएपुत्तेहिं साउणिअलुद्धेहि कण्णोपघादिणा वणगमणकोलाहलेण पडिबोधिदह्मि।

---

सख्येन। निर्विण्णः=खिन्नः। विषण्णः। अत एव —हतोऽस्मि=नितरां क्लिष्टोऽस्मि। शार्दूलः=व्याघ्रः। 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमरः। गच्छतीति, तिष्ठतीति वा—शेषः। दिनस्य मध्यं—मध्यन्दिनं, तत्र=मध्याह्नेऽपि। विरला=अत्यन्तमल्पीभूता, पादपानां=वृक्षाणां, छाया यासु—तासु, वनानां—राजिषु=पङ्क्तिषु, आहिण्ड्य=इतस्ततो गत्वा, पत्राणां=पर्णानां, सङ्करेण=संमिश्रणेन, कषायाणि, अत एव विरसानि=विगतरसानि, उष्णानि—घर्मतापात्, कटुकानि च-महिषादिवन्यजन्तुविगाहनविमर्दवशात्, गिरिणदीसलिलानि=शैलस्रवन्तीतोयानि, पीयन्ते=मयाऽऽस्वाद्यन्ते।

अनियता वेला यस्मिंस्तद्यथा स्यात्तथा अनियतवेलम्=अनिश्चितकालम्। उष्णमुष्णं मांसं भूयिष्ठं यस्मिन् तत्—उष्णोष्णमांसभूयिष्ठम्=उष्णमांसबहुलं, भोजनं क्रियते। तुरगाणां=वाजिनां, गजानां—करिणाञ्च, प्रकामं=यथेष्टं। शयितव्यं=शयनम्। महत्येव प्रत्यूषे=अचिरप्रवृत्तेऽपि अहर्मुखे। [ किञ्चिदवशिष्टायामपि रजन्याम् ]। दास्याःपुत्रैरिति। रण्डापुत्रैरित्यर्थः। आक्रोशे षष्ठ्या अलुक्। भुजिष्यायास्तनयैः।

---

हरिण आया।' 'यह सूअर जा रहा है' 'यह देखो, इधर व्याघ्र-( चीता ) जा रहा है' इस प्रकार गर्मी की ऋतु में-जेठ की दोपहरियों में-वृक्ष और पेड़ों की छाया से भी शून्य बीहड़ जङ्गलों में, मारे २ फिरते हुए, वृक्षों के पत्तों के गिरने से सड़े हुए,-बेस्वाद वन के झरनों के, पहाड़ी नदियों के-गर्म व कडुवे जल को मुझे पीना पड़ता है। और अनियत समय में कभी ठण्डा, कभी बासी, कभी रूखा-सूखा जङ्गली मांस आदि खाने को मिलता है। हाथी और घोड़ों के शब्द से (चिंघाड़ने व हिनहिनाने से) मुझे रात को ठीक से निद्रा नहीं होती है। आज तो

एत्तिकेण वि मे पीडा ण संवुत्ता, जदो अअं गण्डस्स उवरि विप्फोडओ संवुत्तो। तेण हि किल अह्मेसुं अवहीणेसुं तत्थभअदा मिआणुसारिणा अस्समपदं पविट्ठेण मम अधण्णदाए सउन्तला णाम कावि तवस्सिकण्णआ दिट्ठा, तं पेक्खिअ सम्पदं णअरगमणस्स कथम्पि ण करेदि। एवं ज्जेव चिन्तअस्स मे पहादा अच्छिसुं रअणी। का गदी ?। जाव णं किदआआरपरिग्गहं पिअवअस्सं पेक्खामि।

( परिक्रम्याऽवलोक्य च— )

एसो वाणासणहत्थो हिअअ-णिहिदपिअअणो वणपुप्फमालाहारी इदो ज्जेव आअच्छदि पिअवअस्सो। भोदु। अङ्गभङ्गविअलो भविअ चिट्ठिस्सं। एव्वम्पि णाम विस्सामं लहेअं।

( —इति दण्डकाष्ठमवलम्ब्य स्थितः )।

[ भोः ! हतोऽस्मि एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णः। 'अयं मृगः', 'अयं वराहः', 'अयं शार्दूल' इति मध्यन्दिनेऽपि ग्रीष्मे विरलपादपच्छायासु वनराजिषु आहिण्ड्य, पत्रसङ्करकषाय-विरसानि उष्णकटुकानि पीयन्ते गिरिणदीसलिलानि। अनियतवेलञ्च उष्णोष्णमांसभूयिष्ठं भुज्यते। तुरग-गजानाञ्च शब्देन रात्रावपि मे नास्ति प्रकामशयितव्यम्। महत्येव प्रत्यूषे दास्याःपुत्रैः शाकुनिक-लुब्धैः कर्णोपघातिना वनगमनकोलाहलेन प्रतिबोधितोऽस्मि।

---

शकुनान् = पक्षिणो हन्ति शाकुनिकः—तैः = पक्षिहिंसकैः। "जीवान्तकः शाकुनिकः" इत्यमरः। लुब्धैः = व्याधैः। "व्याधो मृगवधाजीवो मृगयुर्लुब्ध-कोऽपि सः" इत्यमरः। शाकुनिकाश्च ते लुब्धाश्चेति कर्मधारयः। कर्णौ— उपहन्ति तच्छीलेन कर्णोपघातिना = कर्णदुःखदायिना, वने यद्गमनं, तत्र—

---

बहुत तड़के से ही इन रण्डा-पुत्र बहेलियों ( चिड़ियों को मारनेवाले ), और शिकारियों ( बाघ, चीता, हरिण आदि को हांककर फँसानेवाले ) के वन गमन के हल्ले से मैं जाग उठा हूं। इतना ही होता तो भी कोई बात नहीं थी। पर यहाँ तो 'फोड़े पर फोड़ा' ( 'घाव पर घाव' 'जले पर निमक' ) एक और हो गया है। वह यह है कि–हमारी अनुपस्थिति में, मृग के पीछे २ आश्रम में जाकर इस राजा

एतावताऽपि मे पीडा न संवृत्ता, यतोऽयं गण्डस्योपरि[1] विस्फोटकः संवृत्तः,—

—तेन हि किलाऽस्मास्ववहीनेषु तत्रभवता मृगानुसारिणाऽऽश्रमपदं प्रविष्टेन ममाऽधन्यतया शकुन्तला नाम कापि तपस्विकन्यका दृष्टा। तां प्रेक्ष्य साम्प्रतं नगरगमनस्य कथामपि न करोति । [2]एवमेव चिन्तयतो मे प्रभाता अक्ष्णो रजनी । का गतिः ? । यावदेनं कृताचार-

[तदर्थं वा—] यः कोलाहलः = कलकलः, तेन । प्रतिबोधितः = निद्रादरिद्रीकृतोऽस्मि ।

एतावताऽपि = इत्थं-कष्टप्रदाऽऽयासप्रतिहतस्यापि, पीडा संवृत्ता=नैतावताप्यनर्थपरम्परा शाम्यति । अयं = वक्ष्यमाणः, शकुन्तलासक्तिरूपः । गण्डस्य = विस्फोटकस्य, उपरि । विस्फोटकः = पिटकः, व्रणोपरि व्रणो जातः । दुःखेऽपि दुःखमुत्पन्नमित्याशयः। "गण्डः=कपोल" इति व्याख्यानं तु न प्रकृताननुगुणमिति-मर्मज्ञाः । "गण्डोपरि विस्फोटक" इत्याभाणकं हि ( कहावत ) लोकविदितमेव ।

किन्तदित्याह—**तेनेति** । तेन = राज्ञा, अवहीनेषु = आखेटके पश्चादेव विश्लिष्टेषु, मृगानुसारिणा=मृगमनुधावमानेन, आश्रमपदं=तपोवनभूमिं, ममाऽधन्यतया=मद्दौर्भाग्यविजृम्भणेन, साम्प्रतम्=इदानीं, कथां=वार्त्तामपि, अक्ष्णोः= नेत्रयोरेव । [ असुप्तस्यैव ] । रजनी = रात्रिः । प्रभाता=व्युष्टा । गतेति यावत् ।

दुष्यन्त ने, हमारे दुर्भाग्य से, शकुन्तला नाम की किसी तापस कन्या को देख लिया है। अब उसको देखकर यह राजा तो अपनी राजधानी को वापिस जाने की बात भी नहीं करता है ।

इसी प्रकार की चिन्ता करते २ मुझे रात को नींद भी नहीं आई । जागते ही जागते सबेरा हो गया । [ पाठान्तर[2] में—उसी शकुन्तला की चिन्ता में इस राजा को रात में भी निद्रा नहीं आई, आज जागते ही जागते इसकी रात बीती है ]।

१ 'गण्डः स्यात्पुंसि खड्गिनि । ग्रहयोगप्रभेदे च वीध्यङ्गे पिटकेऽपि । चिह्न-वीरकपोलेषु हयभूषणबुद्बुदे'—इति मेदिनी । पिटकः = विस्फोटकः । 'फोडा' इति भाषा । २ "अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत्" पा० ।

परिग्रहं प्रियवयस्यं प्रेक्षे । एष[1] बाणासनहस्तो हृदयनिहितप्रियजनो, वनपुष्पमालाधारी इत एव आगच्छति प्रियवयस्यः ।

भवतु । अङ्गभङ्गविकलो भूत्वा स्थास्यामि । एवमपि नाम विश्रामं लभेय]।

( ततः प्रविशति यथानिर्दिष्टो राजा )।

राजा—( आत्मगतम्— )

---

गतिः = उपायः । यावत् = अस्तु तावत् । कृतः-आचारस्य = नित्यकर्मणः, परिग्रहः—स्वीकारो येन तं=कृताह्निकम्, प्रियवयस्यं = राजानं, प्रेक्षे = पश्यामि ।

एषः = कृतप्रभातकृत्यो राजा, बाणासनं = धनुः—हस्ते यस्यासौ—बाणासनहस्तः = धृतकार्मुकः । हृदये निहितः = स्थापितः, प्रियजनः = शकुन्तलारूपो येनासौ, वनपुष्पाणां मालां धारयति तच्छीलः = वन्यकुसुममालाधारी । इतः = अत्रैव । अङ्गस्य-पादादेः, भङ्गेन-विकलः = पीडितः, भूत्वा = तद्वदाचरन्, एवं = पीडाव्याजेन । इति = इत्थं विचिन्त्य । दण्डकाष्ठं=लगुडम् । अवष्टभ्य= आश्रित्य । [ अत्र "सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम्" इत्युक्तेर्विधानं नाम मुखसन्ध्यङ्गम् ] । यथानिर्दिष्टः = बाणासनहस्तो राजा ।

---

क्या उपाय है ? । अच्छा ! नित्य कृत्य आदि से छुट्टी पाकर निश्चिन्त हुए प्रिय वयस्य ( राजा दुष्यन्त ) को चलकर देखूँ । ( कुछ चलकर, सामने देखकर ) यह सामने से-धनुषबाण हाथ में लिये हुए, हृदय में अपने प्रिय जन का ( शकुन्तला का ) ध्यान लगाये हुए, वन के पुष्पों की माला धारण किए हुए, मेरा मित्र ( राजा दुष्यन्त ) इधर ही आ रहा है । अच्छा, मैं तो अङ्ग-भङ्ग से विकल ( कुबड़े ) की तरह होकर यहीं बैठ जाता हूं । इसी तरह यदि किसी तरह कुछ विश्राम प्राप्त कर सकूं तो भी ठीक है । (लाठी का सहारा लेकर बैठ जाता है)।

[ वनमाला पहिने, धनुषबाण लिये, चिन्ता की मुद्रा में, राजा का प्रवेश ]।

राजा—(मनहीं मन) यद्यपि मेरी प्रिया शकुन्तला सुलभता से मुझे अभी

---

१ '(परिक्रम्यावलोक्य च-) एष बाणासनहस्ताभिर्नवपुष्पमालाधारिणीभिर्युवतीभिः परिवृत इत एवेगति पाठान्तरम् ।

कामं प्रिया न सुलभा, मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे, रतिमुभयप्रार्थना कुरुते ॥१॥

( स्मितं कृत्वा— )

एवमात्माऽभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता विप्रलभ्यते। कुतः—

---

काममिति । कामं = यद्यपि, प्रिया = शकुन्तला । तु = किन्तु, मनः = मच्चित्तं, तस्याः = प्रियायाः, भावस्य = मय्यनुरागसूचकस्य विलम्ब्य गमनादेः दर्शनेन=निरीक्षणेन, आश्वसिति तच्छीलं-तद्भावदर्शनाश्वासि=तदनुरागनिश्चयात्कृताश्वासं । वर्त्तते इति शेषः । यतः मनसिजे = मन्मथे, [ बाह्याभ्यन्तरसंप्रयोगाऽलाभात्, ] अकृतार्थेऽपि=अचरितार्थेऽपि, उभयोः प्रार्थना-उभयप्रार्थना= परस्परमिङ्गितव्यतिकरेण स्वानुरागसूचनं, रतिं = सुखं, कुरुते = विधत्ते एव। प्राणसमा-समागमसुखाऽलाभेऽपि तच्चेष्टाभिरेव मनो मे मोदते इत्याशयः । [ अत्र विरोधाभासः, श्रुत्यनुप्रासः, रतिमुभयप्रार्थनेत्यादिनाऽर्थान्तरन्यासश्च ] ॥ १ ॥

स्मितमिति । आत्मनोऽपि कन्दर्पकदर्थनात्स्मयः । आत्मनोऽभिप्रायेण = मनोरथेन, सम्भाविता = कल्पिता, इष्टजनस्य=प्रियजनस्य, चित्तवृत्तिर्येनासौ तया, प्रार्थयिता=कामिजनः, विप्रलभ्यते=विडम्ब्यते । वञ्च्यत इति यावत् ।

---

तक प्राप्त नहीं हुई है, तो भी मेरे प्रति उसके भी भाव (अनुराग सूचक विलम्ब करके जाना, कटाक्ष पूर्वक निरीक्षण आदि) को देखकर, मेरे मन को कुछ धीरज बन्धी हुई है । क्योंकि मनसिज ( काम ) वासना यद्यपि कृतार्थ न हो, तो भी दोनों की परस्पर-इच्छा व चाह ही सुखप्रद होती है। अर्थात्-शकुन्तला के हस्तगत न होने से सुरत सुख की प्राप्ति के अभाव में मेरी कामवासना तो पूरी नहीं हुई है, पर 'उसका भी मेरे प्रति वैसा ही प्रेम व अनुराग है, जैसा कि मेरा उसके प्रति है' यह जानकर ही मुझे आनन्द एवं सुख हो रहा है। [ उभय प्रार्थना—दोनों की परस्पर चाह ] ॥ १ ॥

( कुछ हंसकर )

अपने अभिप्राय ( इच्छा ) के अनुसार ही अपने प्रियजन की भी चित्तवृत्ति की संभावना करके प्रार्थयिता (कामी-आशिक) आपना मन बहलाया ही करता है।

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेरयन्त्या तया,
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।
मा गा इत्युपरुद्धया यदपि तत्साऽसूयमुक्ता सखी,
सर्वं तत्किल मत्परायणमहो! कामी स्वतां पश्यति ॥२॥

कामिन्याः सहजामपि लीलामात्मानुरागकृतां कामी मन्यमानो वञ्चित एवेत्याशयः। कुतः = कस्मात। तदेव द्रढयति—

स्निग्धमिति। यत्—अन्यतोऽपि = अन्यत्र वस्तुनि, नयने = लोचनयुगलं, प्रेरयन्त्याऽपि = व्यापारयन्त्याऽपि। स्निग्धं वीक्षितं=मसृणमधुरया दृष्ट्या यदवलोकितं। स्निग्धदृष्टिलक्षणं च—

"विकाशि स्निग्ध-मधुरा, चतुरे बिभ्रती भ्रुवौ।
कटाक्षिणी, साभिलाषा दृष्टिः-'स्निग्धा'ऽभिधीयते॥"—इति।

यच्च—नितम्बयोः=स्वकटिपश्चाद्भागयोः, गुरुतया = गौरवेण, विलासादिव= विलासाख्यहावविशेषेणेव, तया यातं=गमनं कृतम्। विलासलक्षणं च दर्पणे—

"यानस्थानासनादीनां मुखनेत्रादिकर्मणाम्।
विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना॥—इति।
"विलासो हावभेदे स्या"दिति च मेदिनी।

किञ्च मा गा इति=इत्युक्त्वा,उपरुद्धया=वारितगमनया शकुन्तलया, असूयया सहितं-सासूयं यथा स्यात्तथा = सेर्ष्यं, सखी = प्रियवंदा, उक्ता = अभिहिता। "असूया तु—दोषारोपो गुणेष्वपि" इत्यमरः। तत्सर्वं = स्निग्धवीक्षणादिकं,

---

अर्थात अपनी प्रिया की स्वाभाविक चेष्टाओं को भी अपने प्रेम व अनुराग की ही सूचक समझता हुआ, कामी झूठी २ आशाएँ लगाया करता है। क्योंकि—

उस (शकुन्तला) ने दूसरी ओर नजर घुमाते हुए भी स्नेहपूर्वक जो मेरे ऊपर दृष्टिपात किया था, अपने नितम्ब की गुरुता से लीलापूर्वक जो मन्द २ गमन किया था, अपनी सखियों के प्रति अथवा प्रियंवदा के प्रति असूया पूर्वक जो 'भाग

---

१ 'कामः' इति पाठान्तरम्।

**विदूषकः**—( तथास्थित एव— ) भो [1]वअस्स ! ण मे हत्थो पसरदि, ता वाआमेत्तेण [2]जआवीअसि । जअदु ( [3]जअदु ) भवं ।

[ भो [1]वयस्य ! न मे हस्तः प्रसरति, तद्वाङ्मात्रेण [2]जापयिष्यामि । जयतु ( [3]जयतु ) भवान् ] ।

**राजा**—( विलोक्य, सस्मितं— ) कुतोऽयं गात्रोपघातः ? ।

**विदूषकः**—कधं कुदो त्ति, सअं ज्जेव अच्छिं भञ्जिअ अस्सुकारणं पुच्छसि ? ।

---

मत्परायणं = मदनुरागकृतमेव, इति—कामी = कामपरवशो मादृशो लोकः, स्वताम् = आत्मविषयतां, पश्यति = अनुसन्धत्ते । सम्भावयतीत्यर्थः । [ अर्थान्तरन्यासः । विलासादिवेति हेतूत्प्रेक्षा । छेक-वृत्त्यनुप्रासस्वभावोक्तयश्च ] ॥२॥

तथा = दण्डमवलम्ब्य स्थित एव । **वयस्येति** । "विदूषकेण वक्तव्यो वयस्येति च भूपतिः"रित्युक्तेर्दुष्यन्तसम्बोधनं तत् । प्रसरति = उत्तिष्ठति । तत् = तस्मात् । वाङ्मात्रेण = वाचैव । जापयिष्यामि = विजयं ते अभिधास्यामि । ण्यन्तस्य जिधातो रूपम् । "क्रीङ्जीनां णौ" वित्यात्वम् । पुक् ।

---

मत' 'थोड़ा ठहर' 'मैं नहीं जाऊँगी', 'मैं क्या तेरे पराधीन हूं' इत्यादि वचन कहे थे, ये सब बातें मेरे को लक्ष्य करके, एवं मेरे प्रति अनुराग सूचन के लिए ही की गई हैं—कामासक्त मैं इस प्रकार अपने ऊपर ही सब समझकर, मनही मन प्रसन्न हो रहा हूं । अहो ! कामीजन प्रिया की सब चेष्टाएँ अपने ही ऊपर समझा करते हैं ॥ २ ॥

विदूषक—( लाठी के सहारे ही बैठा या खड़ा हुआ ) हे सखे ! मेरा हाथ तो उठता नहीं है, अतः वाणी से ही आपको आशीर्वाद दे रहा हूं । आपकी जय जयकार हो ।

राजा—( देखकर, कुछ हँसता हुआ ) यह तुम्हारा अङ्ग वैकल्य कैसे हो गया है ? ।

विदूषक—'कैसे हो गया' यह आप क्या पूछते हैं ? । आप तो मानों अपने

---

१ 'महाराअ' [ महाराज ] । २ '[illegible]' । ३ कच्चिन्न ।

[कथं 'कुत इति',—स्वयमेव अक्षि भङ्क्त्वा अश्रुकारणं पृच्छसि ?]।

राजा—न खल्ववगच्छामि, भिन्नार्थमभिधीयताम्।

विदूषकः—जं वेदसो खुज्जस्स लीलं विडम्बेदि, तं किं अत्तणो पहावेण ?, अधवा णईवेअस्स ?।

[ यद्वेतसः कुब्जस्य लीलां विडम्बयति, तत्किमात्मनः प्रभावेण ?, अथवा नदीवेगस्य ? ]।

राजा—नदीवेगस्तत्र कारणम्।

विदूषकः—मम वि भवं।

[ ममापि भवान् ]।

राजा—कथमिव ?।

---

गात्रस्य–वपुषः। उपघातः=वैकल्यम्। अवगच्छामि=जानामि। भिन्नार्थं= स्फुटं। वेतसः=वञ्जुलः। कुब्जस्य लीलां—कुब्जलीलां=गड्डुलविभ्रमं। वक्रतामिति यावत्। विडम्बयति=अनुकरोति, धत्ते। आत्मनः=स्वस्य। प्रभावेण= दोषेण। तत्र=वक्रतायां। कथमिव=कथन्तावत् ?।

---

ही हाथ से ( मेरी ) आँख फोड़कर ( आँख में चोट पहुंचाकर ) 'ये आँसू कैसे आ गये ?' यह पूछ रहे हैं !।

राजा—भाई, मैं तो तुमारी इस पहेली को नहीं समझा। साफ २ समझा कर कहो-क्या बात है ?।

विदूपक—अच्छा बताइए—बेंत जो टेढ़ा होकर कुबड़े की तरह हो जाता है, वह अपने से ही वैसा होता है, कि नदी के वेग के कारण वैसा होता है ?।

राजा—नदी का वेग ही उसके टेढ़ेपन का कारण है। नदी के तटपर उगे हुए बेत नदी में लटकने से नदी के प्रवाह के कारण बहते रहते हैं, अतः टेढ़े हो जाते हैं, और नदी में पड़े रहते हैं।

विदूपक—इसी प्रकार मेरे अङ्ग भङ्ग होने में भी आप ही कारण हैं।

राजा—यह कैसे ?।

**विदूषकः**—जुत्तं णाम एव्वं, जं तुए रज्जकज्जाइं उज्झिअ तादिसं अक्खलिदपदं पदेसं च बणचलवित्तिणा होदव्वंत्ति। किं इत्थ मन्तीअदु, अहं उण ब्रह्मणो पच्चहं सापदाणुसरणेहिं संक्खोहिदसन्धिबन्धणाणं अत्तणोअङ्गाणं अणीसोह्मि। ता पसीद मे, एक्काहम्मि दाव विसमीअदु।

[ युक्तं नामैवं,-यतस्त्वया राजकार्याणि उज्झित्वा तादृशमस्खलितपदं प्रदेशञ्च, वनचरवृत्तिना भवितव्यमिति !। किमत्र मन्त्र्यताम्।

अहं पुनर्ब्राह्मणः प्रत्यहं श्वापदानुसरणैः संक्षोभितसन्धिबन्धनानामङ्गानामनीशोऽस्मि। तत् प्रसीद मे, एकाहमपि तावद्विश्रम्यताम् ]।

---

एवम्=इदं मृगयाचरणं। युक्तं नाम=कथंचित् युक्तिसङ्गतं तव भवेदपि। उज्झित्वा=विहाय। अस्खलितं पदं यत्र तत्=समतलं। समतलतया पादस्खलनाऽभावात्। प्रदेशं=भूभागं। नगरमित्यर्थः। राज्यं वा—उज्झित्वेति योजनीयम्। राज्यमपि-अस्खलितपदं=बद्धमूलं, वंशानुयातञ्च। वनचरवृत्तिना भवितव्यं= तव वनचरवदितस्ततोऽरण्ये धावनं सम्भवति। किमत्र मन्त्र्यताम् = किमत्र विचारणया, परिभ्राम्यतु भवान् वनमनिशं, किमत्राऽस्माकं कथनेनेत्यर्थः। किन्तु अहं पुनः = अहं पुनर्ब्राह्मणो नाम भूत्वा [ न हि खलु मम मृगया भवति सहजस्नेहभाजनम् ]।

श्वापदानां=हिंस्रजन्तूनां सिंहादीनाम्। अनुसरणैः=अनुगमनैः। संक्षोभितानि सन्धिबन्धनानि येषां, तेषां=विश्लथतराणाम्, अङ्गानां=करचरणा-

---

विदूषक—राजा होने के कारण आपका तो यह काम कदाचित् ठीक हो भी सकता है, कि-राजकार्य को छोड़कर, तथा अपने वंश परम्परा से प्राप्त निष्कण्टक, सर्वसुख युक्त राज्य को, तथा नगर को भी छोड़कर, शिकार के लिए यों जङ्गली कोल भीलों की तरह जङ्गलों में मारे फिर रहे हो। इसमें नाहीं करने से भी आप मानेंगे थोड़े ही। अतः शिकार के लिए तो आपको नाहीं करना ही व्यर्थ है। परन्तु मैं तो ब्राह्मण हूं, मेरे तो प्रतिदिन जङ्गली जानवरों के पीछे २ इसप्रकार दौड़ने से, हाथ पैर ही ढीले हो गए हैं। जोड़ २ में दर्द हो रहा है। चलना-फिरना, हाथ उठाना भी कठिन हो गया है। हाथ पैर भी मैं हिला-डुला

राजा—( आत्मगतम् ) अयमेवमाह, ममापि कण्वसुतामनुस्मृत्य मृगयां प्रति निरुत्सुकं चेतः । तथा हि—

न नमयितुमधिज्यमुत्सहिष्ये
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव लोचनकान्तिसंविभागः ॥३॥

दीनाम् । 'चालने' इति शेषः । अनीशोऽस्मि=अशक्तोऽस्मि । प्रसीद = कृपां कुरु । एवमाह = 'एकाहं विश्रम्यताम्'--इत्याह । अनुस्मृत्य=स्मृत्वा ।

न नमयितुमिति । ज्यामधिगतम्--अधिज्यम् = अध्यारूढमौर्वीकम् । आहितः सायको यत्र तत्-आहितसायकम्=धृतशरम् । इदं धनुः=कोदण्डमेतत्, मृगेषु = हरिणेषु,-यैः-प्रियायाः=शकुन्तलायाः, सहवसतिं = सहवासम्, उपेत्य= समधिगत्य, लोचनयोः = नयनयोः, कान्तेः=प्रभायाः, संविभागः = समादानं, कृतः=कृतम् । [ मत्प्रियालोचनतुल्यनयनानां हरिणानामुपरि ]--नमयितुं=व्यापारयितुं, नोत्सहिष्ये = बाणपातं कर्त्तुं न समर्थोऽस्मि । प्रियालोचनसदृशलोचनेषु हि हरिणेषु कथं प्रहरिष्ये ? । [ अत्र पूर्वार्द्धवाक्यार्थं प्रति उत्तरार्द्धवाक्यार्थो हेतुरिति काव्यलिङ्गमलङ्कारः, उत्प्रेक्षा, श्रुत्यनुप्रासश्च । ] ॥ ३ ॥

नहीं सक रहा हूं । अतः मेरे ऊपर तो दया करिए। एक दिन तो विश्राम कर-लीजिए । इस प्रकार हमें भी एक दिन तो कम से कम विश्राम ले लेने दें ।

राजा—(मन ही मन) यह भी ऐसा कह रहा है, और मेरा भी मन कण्व-पुत्री शकुन्तला को याद करते रहने के कारण मृगया के प्रति उदासीन ही हो रहा है । जैसे—

अपने इस चढ़े हुए ( बाण सन्धान किए हुए ) धनुष को भी उन मृगों के ऊपर नीचा करना (उन पर बाण छोड़ना) मैं नहीं चाहता हूं, जिन मृगों ने मेरी प्रिया के साथ ही साथ वन में रह कर उसकी सी नेत्रकान्ति पाई है । अर्थात्—मेरी प्रिया की ही तरह इन मृगों के भी नेत्र हैं, अतः उन पर मैं बाण छोड़ना नहीं चाहता हूं ॥ ३ ॥

विदूषकः—(राज्ञो मुखमवलोक्य-) अत्त भवं किम्पि हिअए कदुअ मन्तेदि, अरण्ये क्खु मए रुदिदं !।

[ अत्र भवान् किमपि हृदये कृत्वा मन्त्रयति ! अरण्ये खलु मया रुदितम् ? ]।

राजा—(सस्मितम्-) 'अनतिक्रमणीयं सुहृद्वाक्य'मिति स्थितोऽस्मि।

विदूषकः—(सपरितोषम्-) तेण हि तुमं चिरं जीव।

(—इत्युत्थातुमिच्छति )।

[ तेन हि त्वं चिरञ्जीव ]।

राजा—तिष्ठ। शृणु मे सावशेषं वचः।

विदूषकः—आणवेदु भवं।

[ आज्ञापयतु भवान् ]।

---

किमपि हृदये कृत्वा=किमपि वस्तु मनसिकृत्य, मन्त्रयसि=विचारयसि, अरण्ये रुदितम्=निष्फलं स्वदुःखं प्रकटितम्, भवान्न किमपि शृणोति मद्वाक्य-मित्याशयः। अनतिक्रमणीयम्=अनुल्लङ्घनीयम्। स्थितोऽस्मि=मृगयाविमुखी-भूतोऽस्मि। सपरितोषं=सानन्दं। तेन=अनेन निर्णयेन, अवशेषमपरित्यज्य-

---

विदूषक—( राजा की मुख की ओर देखकर ) आप तो मन ही मन कुछ विचार रहे हैं। मानों किसी बात को हृदय में रखकर कुछ कह रहे हैं। क्या मैंने जङ्गल में ही रोदन किया है?। अर्थात् मेरी प्रार्थना क्या आपने अनसुनी कर दी?।

राजा—( मुस्कुराता हुआ ) नहीं २, मित्र का ( आपका ) वचन तो अनुल्लङ्घनीय ही है, इसीलिए मैं चुप हो गया हूं। अर्थात् तुम्हारा प्रस्ताव मुझे भी स्वीकार है।

विदूषक—( सन्तुष्ट होकर ) भगवान् करें आप चिरंजीव हों। ( उठना-चाहता है )।

राजा—ठहरो-ठहरो। मेरी बात पूरी तो सुन लो।

विदूषक—अच्छा, आप आज्ञा कहिए।

राजा—विश्रान्तेन भवता ममाऽन्यस्मिन्ननायासे कर्मणि सहायेन भवितव्यम् ।

विदूषकः—किं मोदअखज्जिआए ? ।

[ किं मोदकखादिकायाम् ? ] ।

राजा—यद्वक्ष्यामि ।

विदूषकः—गहीदो क्खणो ।

[ गृहीतः [1]क्षणः ] ।

राजा—कः कोऽत्र भोः ! ।

दौवारिकः—(प्रविश्य-) आणवेदु भट्टा ।

[ आज्ञापयतु भर्त्ता ] ।

---

सावशेषं=सम्पूर्णं । साकल्येऽव्ययीभावः । अनायासे=परिश्रमशून्ये । अन्यस्मिन्=मृगयाभिन्ने कार्यान्तरे ।

मोदकानां खादनं—मोदकखादिका, तस्यां=लड्डुकभक्षणमहोत्सवे । यद्वक्ष्यामि=यत्कार्यं कथयामि, तत्र, न तु मोदकभक्षणे । गृहीतः [1]क्षणः=दत्तोऽवसरः । सावधानोऽहं कथयेति यावत् ।

अत्र = द्वारदेशे, रेवत्यां जातो रैवतः, स एव रैवतक इति द्वारपाल-

---

राजा—अच्छा, आप इस प्रकार विश्रान्ति प्राप्तकर बिना परिश्रम के ही होसकनेवाले मेरे दूसरे कार्य में सहायक होइए ।

विदूषक—क्या लड्डू खाने में ? । तो मैं तैयार हूँ ।

राजा—नहीं २, जो मैं कहता हूं उसमें ।

विदूषक—तो मैं सुन रहा हूँ, कहिए ।

राजा—बाहर पहरे पर कौन है ? ।

दौवारिक—( सिपाही )—क्या आज्ञा है महाराज ! ।

---

१ क्षणः=अवसरः ।

**राजा**—रैवतक ! सेनापतिस्तावदाहूयताम् ।

**दौवारिकः**—तह । (–इति निष्क्रम्य सेनापतिना सह प्रविश्य–) एदु एदु अज्जो, एस आलावदिण्णकण्णो भट्टा इधज्जेव चिट्ठदि उवसप्पदु णं अज्जो ।

[ तथा । एतु एतु आर्यः, एष[1] आलापदत्तकर्णो भर्त्ता इहैव तिष्ठति, उपसर्पत्वेनमार्यः ] ।

**सेनापतिः**—(राजानमवलोक्य, स्वगतं–) दृष्टदोषाऽपि मृगया स्वामिनि केवलं गुणायैव संवृत्ता । तथा हि [2]देवः—

**अनवरतधनुर्ज्याऽऽस्फालनक्रूरवर्ष्मा[3],**
**रविकिरणसहिष्णुः स्वेदलेशैरभिन्नः ।**

---

नामेदम् । आलापे दत्तौ कर्णौ येनासौ = विदूषकेन सहालपन् । दृष्टाः = शास्त्रेषु निर्दिष्टाः, दोषाः=हिंसाजन्यपापादयो यस्यां सा–अनेकदोषनिन्दिताऽपि । [ यद्वा—दृष्टाः = संभाविता, दोषा यया सा-दृष्टदोषा = भूरिदोषजननीत्यर्थः ]। संवृत्ता = जाता । तदेव दर्शयति—**तथा हीति** ।

देवः = महाराजः । पदमेतत्–श्लोकस्थेन 'बिभर्त्ती'त्यनेन सम्बध्यते ।

---

**राजा**—रैवतक ! सेनापति को बुलाओ ।

**दौवारिक**—( द्वारपाल )—जो आज्ञा महाराज ! । अभी बुलाता हूँ। ( बाहर जाकर, सेनापति को साथ ले भीतर आकर सेनापति से ) आर्य ! आप भीतर आइए, महाराज आपकी प्रतीक्षा में हमारी बातें कान लगाकर सुनते हुए, यहाँ ही विराज रहे हैं । आप इनके पास पधारिए ।

**सेनापति**—( राजा को देखकर, मनही मन– ) यद्यपि शिकार खेलने में भी बहुत दोष हैं, शिकार खेलना भी एक व्यसन (दुर्गुण) ही है, पर हमारे इन प्रभु

---

१ 'एष आज्ञावचनोत्कण्ठः, इत एव दत्तदृष्टिः' पा० ।
२ "देवेति नृपतिर्वाच्यो भृत्यैः प्रकृतिभिस्तथे"ति भरतः ।
३ "शरीरं वर्ष्म विग्रहः" इत्यमरः ।

अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्त्ति ॥ ४ ॥

अनवरतेति। गिरिषु चरतीति-गिरिचरः=शैलविहारी, नागः=कुञ्जर इव, देवः=राजा। भवान्। अनवरतं=निरन्तरं, धनुषः=शरासनस्य, ज्यायाः=मौर्व्याः, आस्फालनेन=समाकर्षणेन, क्रूरं, [1]वर्ष्म=शरीरं यस्यासौ=निरन्तरधनुश्चालनव्यायामकठोरकायः। रवेः किरणान् सहते तच्छीलो-रविकिरणसहिष्णुः=प्रखरदिवाकरकिरणसहनशीलः। स्वेदस्य लेशैः-स्वेदलेशैः=घर्मजन्यप्रस्वेदकणैरपि, अभिन्नः=असंस्पृष्टः, अपचितमपि=कृशमपि, [ उपचितमिति पाठे-मांसलमपीत्यर्थः ], व्यायतत्वात्=दृढाङ्गत्वात्, [ उपचितमिति पाठे—व्यायतत्वात्=व्यायामशीलत्वात्-इत्यर्थः ], अलक्ष्यम्=ज्ञातुमशक्यम्। प्राणः सारो यस्मिन्, तत् प्राणसारं=बलपूर्णं। 'प्राणोऽनिले बले' इति हैमः। 'सारो बले दृढांशे चे'त्यमरः। दृढप्राणं वा, गात्रं=वपुः। "गात्रं वपुः सहननम्" इत्यमरः।

गजपक्षेऽपि—धनुषः=प्रियालतरोः [ "धनुस्सञ्ज्ञा प्रियालद्रौ राशिभेदे शरासने" इति विश्वः ]। ज्यायाः=भूमेः। "ज्या-मौर्वी च वसुन्धरे"ति धरणिः। आस्फालनेन=वर्षणेन, घर्षणेन च, क्रूरं वपुः शरीरं यस्यासौ, रविकिरणसहिष्णुः=आतपसहः। स्वेदलेशैरभिन्नः=प्रस्वेदशून्यः, अपचितचितमपि=नातिस्थूलमपि·व्यायतत्वात्=दृढत्वात्, सन्नाहवत्त्वात्, अलक्ष्यम्=

के लिए तो यह भी गुणदायक ही हो रहा है। क्योंकि हमारे महाराज का तो,—

मृगया के कारण बराबर धनुष को चढ़ाते व चलाते रहने से व्यायाम हो जाने से शरीर सुदृढ़ व कठोर हो गया है और सूर्य की प्रखर किरणों के सहन करने की क्षमता इनमें आ गई है। इनको परिश्रम से तथा घाम से भी पसीने नहीं आते हैं। शरीर भी इनका यद्यपि कृश है, पर गठा हुआ होनेके कारण कृशता प्रतीत नहीं होती है। अतः जैसे वनचर हाथी का शरीर कृश होते हुए भी वह बड़ा बली

१ "व्यायतं व्यापृते दीर्घे दृढे चातिशयेऽन्यव"दिति मेदिनी।

( उपगम्य- )

जयति जयति स्वामी। स्वामिन्! गृहीतमृगप्रचारं सूचितश्वापदमरण्यम्। तत् किमन्यदनुष्ठीयताम ?।

**राजा**—भद्रसेन! भग्नोत्साहः कृतोऽस्मि मृगयापवादिना माधव्येन।

**सेनापतिः**—( जनान्तिकम्- ) सखे! माधव्य! स्थिरप्रतिज्ञो

---

अज्ञातकार्श्यं, गात्रं=वपुः-बिभर्त्तीति-योजनीयम्। एतेन-राज्ञो विरहकार्श्यं सूचितम्। [ श्रुतिवृत्तिच्छेकानुप्रासाः। श्लेषः। परिकरालङ्कारश्च ]॥ ४॥

"राजा—स्वामीति देवेति भृत्यैर्वाच्य" इति दर्पणोक्तेः स्वामीति राजसम्बोधनम्। गृहीतो ज्ञातोऽवरुद्धो वा मृगाणां प्रचारो यस्मिन् तत्–गृहीतमृगप्रचारम्=निरुद्धमृगयाताऽऽयातम्। सूचिताः श्वापदा यस्मिन् तत्–सूचितश्वापदं = ज्ञातसिंहादिनिवासम्, अरण्यम् = वनं। तत् = तस्मात्, किमन्यदनुष्ठीयताम् = इतोऽधिकं किमाचरणीयम्?। आज्ञापयेत्याशयः।

मृगयामपवदति तच्छीलेन—मृगयापवादिना = आखेटनिन्दापरेण, माधव्येन = तन्नाम्नाऽनेन विदूषकेण, भग्न उत्सहो यस्यासौ=मन्दीकृतोत्साहः। जनान्तिकम्="त्रिपताककरेणान्यानपवार्यान्तरा कथाम्। अन्योन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम्॥"—इत्युक्तरीत्या द्वयोर्गुप्तं भाषणं-जनान्तिकम्।

---

और शक्ति सम्पन्न व प्राणसार होता है, वैसे ही हमारे महाराज का भी शरीर कृश होते हुए भी ये प्राणसार ( सुदृढ, परिश्रम सहिष्णु क्षमता सम्पन्न है ॥ ४ ॥

[ पास में जाकर- ]

महाराज की जय जयकार हो। प्रभो! शिकार के लिए आवश्यक—'हरिण किधर से आते जाते हैं' 'सिंह व्याघ्र आदि कहाँ २ पर हैं'–ये सब खबरें शिकारियों द्वारा हमें पूरी २ प्राप्त हो गई हैं। अब आगे क्या आज्ञा है ?।

**राजा**—भद्रसेन! शिकार खेलने का विरोध करके इस माधव्य ( विदूषक ) ने मेरा शिकार खेलने का उत्साह ही भङ्ग कर दिया है। अतः अब मैं यहाँ शिकार नहीं खेलूँगा।

**सेनापति**—( हाथ की आड़ से विदूषक के प्रति ) मित्र! माधव्य!

भव। अहं तावत् स्वामिनश्चित्तवृत्तिमनुवर्त्तिष्ये। ( प्रकाशम्—) देव! प्रलपत्येष वैधेयः। ननु प्रभुरेव निदर्शनम्। पश्यतु देवः—

मेदश्छेदकृशोदरं लघु भवत्युत्साहयोग्यं वपुः,
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भय-क्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले,
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः॥ ५ ॥

त्रिपताककरलक्षणन्तु भरते—

"प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि।
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः॥
पताके तु यदा वक्राऽनामिका त्वङ्गुलिर्भवेत्।
त्रिपताकः स विज्ञेयः"-इति।

स्थिरा प्रतिज्ञा यस्यासौ = दृढनिश्चयः। मृगयाविरोधी। मृगया-निषेधमेव त्वं तावत् कुर्वित्याशयः। अहं तावत् = अहन्तु। चित्तमनुवर्त्तिष्ये= तदिच्छामेव प्रस्तौमि। दूषितामपि मृगयां शोभनामेव निर्दिशामि, राजप्रीति-हेतुत्वादित्याशयः। प्रकाशम् = सर्वश्राव्यम्। "सर्वश्राव्यं प्रकाशं स्यात्" इति दर्पणम्। वैधेयः = मूर्खः। "मूर्खवैधेयबालिशाः" इत्यमरः। प्रलपति = निरर्थकं वक्ति। ननु ! = निश्चितं। निदर्शनम् = उदाहरणम्। पश्यतु = विभावयतु।

मेद इति। मेदसः छेदेन कृशमुदरं यत्र तत् = मेदोविनाशतनुतरोदरम्, अतएव लघु = भारशून्यम्। उत्साहस्य योग्यम् = उत्साहयोग्यम् = उत्साहशालि, वपुः = शरीरं। भवति=जायते। भये च क्रोधे च भय-क्रोधयोः=भीतिरोषयोः।

आप अपनी बात पर दृढ़ रहिएगा। मैं तो महाराज को प्रसन्न करने के लिए ही उनके मन की सी बात बनाता हूं। ( प्रकट में- ) देव ! यह तो मूर्ख है, ऐसे ही बकता है। शिकार के गुणों को यह क्या जाने। इसके गुणों के तो आप ही प्रत्यक्ष उदाहरण हैं। आप ही देखिए—

शिकार खेलने से पेट की चर्बी कम होकर शरीर फुर्तीला व उत्साह योग्य हो जाता है। और भय में और क्रोध में जीवों का ( हरिण और सिंह आदि का )

**विदूषकः**—( सरोषम्— ) अवेहि रे उच्छाअहेदुअ ! [1]अवेहि। अत्तभवं पइदिं आवण्णो। तुमं दाव दासीए पुत्तो अडइदो अडइं आहिण्डन्तो जाव सिआलमिअलोलुअस्स कस्स वि जिण्णरिच्छस्स मुहे णिवडिदो होहि।

[ अपेहि रे उत्साहहेतुक ! [1]अपेहि, अत्रभव। न् प्रकृतिमापन्नः। त्वं ताव- द्दास्याः पुत्रोऽटवीतोऽटवीमाहिण्डमानो यावत् [2]शृगालमृगलोलुपस्य

विकृतिर्विद्यते यस्मिंस्तत्-विकृतिमत् = विकारि। सत्त्वानां = जन्तूनां, हरिणा- दीनां, चित्तं = मनः, लक्ष्यते = ज्ञायते च। किञ्च-चले = चञ्चले, लक्ष्ये=शरव्ये, यत् = यस्मात्, इषवः=बाणाः, सिध्यन्ति=अस्खलिता भवन्ति, स च-धन्विनां= धानुष्काणाम्, उत्कर्षः=वैशिष्ट्यं, तच्च भवतीत्यनुषञ्जनीयम्। अतो-मिथ्यैव=मुधैव, मृगयाम् = आखेटं, व्यसनं = दोषाधायकं, वदन्ति = लोकाः कथयन्ति। नीतिविद इति वा शेषः। हि = यतः, ईदृक् = ईदृशः, विनोदः = गुणाधायकं राज्ञां क्रीडनकं। कुतः ?=अन्यत्र क्व दृश्यते। नैव क्वचन दृश्यत इत्याशयः। [ अत्र क्रियासमुच्चयाऽलङ्कारः, काव्यलिङ्गं, वृत्त्यनुप्रासश्च। "चित्तानुवर्त्तनं यत्र तद्दाक्षि- ण्यमितीरितम्" इत्युक्तेश्च चित्तानुवर्त्तनाद्दाक्षिण्यं भूषणमुपक्षिप्तम्। किञ्च पूर्वोक्तश्लोकद्वयेन मृदवं नाम वीथ्यङ्गं दर्शितम्। "दोषा गुणा, गुणा दोषा यत्र स्युर्मृदवं हि तत्" इति दर्पणोक्तेः ] ॥ ५ ॥

उत्साहे ( हेतुरेव- ) हेतुकः, तत्सम्बुद्धौ हे-उत्साहहेतुक ! = वृथा उत्साह- वर्द्धक चाटुकार ! । अपेहि=इतोऽपगच्छ। अत्रभवान्=महाराजो दुष्यन्तः। प्रकृतिं=

चित्त विकार (मनोभाव) कैसा होता है ?—यह ज्ञान भी होता है। बाण चलाने वालों का विशेषगुण—चल लक्ष्य पर ( दौड़ते हुए जीवों पर ) बाण मारने का अभ्यास भी—सिद्ध होता है। अतः लोग मृगया को व्यर्थ ही व्यसन में गिनते हैं। ऐसा मनोविनोद अन्यत्र किस ( खेल ) में है ?। कहीं नहीं है ॥ ५ ॥

**विदूषक**—( कुछ रोष के साथ, कुछ उत्तेजित-सा होकर ) अरे झूठा उत्साह दिलानेवाले ! जा दूर हट। महाराज तो अब प्रकृतिस्थ हो गए हैं। तुमारे फेरमें

१ क्वचिन्न। २ 'नरनासिकालोलुपस्य' पाठः।

कस्यापि जीर्णऋक्षस्य मुखे निपतितो भव'।

राजा—सेनापते ! 'आश्रमसन्निकर्षे स्थितोऽस्मी'ति वचनं ते नाभिनन्दामि ! । अद्य तावत्—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं,
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।

शान्तिम्, आपन्नः=प्राप्तः । ता लम्भितो वाऽस्माभिः। आहिण्डमानः=परिभ्राम्यन्, अटवीतोऽटवीं=वनाद्वनम् । नरनासिकाया लोलुपस्य-नरनासिकालोलुपस्य= नरनासिकाच्छेदनदुर्ललितस्य, जीर्णस्य=वृद्धस्य, ऋक्षस्य=भल्लूकस्य । आश्रमस्य सन्निकर्षः=सान्निध्यं, तत्र स्थितोऽस्मीति न अभिनन्दामि=न स्वीकरोमि । अहमपि सम्प्रति मृगयां नेच्छामीत्याशयः । अद्य तावत्=इदानीन्तु । [ इदमग्रिमश्लोकान्वयि ] ।

गाहन्तामिति । महिषाः=वनलुलायाः । 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः। शृङ्गैः=विषाणैः। मुहुः=वारंवारं। ताडितं=समास्फालितं । निपानस्य=आहावस्य । "आहावस्तु निपानं स्यादुपकूपजलाशये" इत्यमरः । सलिलं=जलं, गाहन्ताम्=आलोलयन्तु । निर्भयत्वाद्यथेच्छं क्रीडन्तु । शृङ्गैर्जलस्य ताडनं हि महिषजातिस्वभावः । किञ्च छायायां बद्धं कदम्बकं येन तत्-छायाबद्धकदम्बकम्=अनातपप्रदेशबद्धयूथं, मृगाणां कुलं=मृगनिकुरम्बकं, रोमन्थं=

अब नहीं पड़ सकते हैं । अतः अरे रण्डा के पुत्र ! तू ही इस जङ्गल से उस जङ्गल में फिरता हुआ, धक्के खाता हुआ किसी बुड्ढे रीछ के, जो मनुष्य की नाक खाने का अभ्यस्त=आदि हो-मुख में जाकर गिर ।

राजा—हे सेनापते ! हम आश्रम के पास में हैं—इसलिए तुमारे इस मृगया के लिए उत्साह देनेवाले वचन का हम भी अभिनन्दन ( समर्थन ) नहीं कर सकते हैं ।

आज तो—जंगली भैंसे अपने सींगों से बारबार जलका ताडन कर कुएं के पास के जलाशयों में ( खेल–कोठों में ) अवगाहन ( स्नान ) करें । मृगगण भी

१ पशुपक्ष्यादीनां जलपानाय कूपादुद्धृत्य यत्रेष्टकादिचिते जलाधारे जलं स्थाप्यते तन्निपानम् । 'खेल' 'कोठा' इति भाषा ।

विश्रब्धं[1] क्रियतां वराहपतिभिर्मुस्ताक्षतिः[2] पल्वले,
विश्रामं लभतामिदञ्च शिथिलज्यावन्धमस्मद्धनुः ॥६॥

चर्वितचर्वणम् । [ 'उगाली' 'जुगाली' इति च भाषा] । अभ्यस्यतु=यथेच्छं विधत्ताम् । मृगाणां—छायाबद्धयूथता, चर्वितचर्वणञ्च-स्वभावः । किञ्च-वराहाणां पतयस्तैः—वराहपतिभिः=सूकरयूथनाथैः । पल्वले=अल्पसरसि । जलगर्त्तेषु इति यावत् । "वेशन्तः पल्वलं चाल्पसरः"—इत्यमरः । मुस्तानां क्षतिः= मुस्ताख्यजलतृणोत्खननम् । "कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम्" मित्यमरः । विस्रब्धं=निर्भयं यथा स्यात्तथा । शिथिलो ज्याया बन्धो यत्र तत्— शिथिलज्याबन्धम् = अवरोपितशिञ्जिनीकम् , अस्माकमिदं धनुश्च, विश्रामं= विश्रान्तिं, लभताम् = अधिगच्छतु । 'शिथिलज्याबन्ध' मिति क्रियाविशेषणं वा। [ केचित्तु—महिषाश्च, महिष्यश्च, मृगाश्च मृग्यश्चेत्येवं महिषादिमिथुनपरतया, मुस्ता-विश्रान्ति-ज्यानां च स्त्रीलिङ्गनिर्दिष्टानां नायिकात्वारोपेण, क्षतौ च दन्तक्षतत्वारोपेण, बन्धपदेन सुरतकरणाक्षेपेण, बन्धशब्दस्य स्नेहवाचकतया सुरतान्तमौर्वीरूपनायिकाप्रणयवत्त्वेन च, नायक-नायिकामिथुनव्यापारसूचकतयाऽमुं व्याख्यान्ति, परन्तु च्छात्रानुपयोगितयाऽत्रास्माभिर्जोषमेवास्यते । स्वभावोक्तिः, कार्यकारणयोः समकालं कथनादतिशयोक्तिश्च अलङ्कारौ ] ॥ ६ ॥

वृक्षों की छाया में झुण्ड बान्धकर निर्भय हो रोमन्थ (जुगाली) का अभ्यास करें। [ पशु घासको खासकर फिर शान्ति से उसे उगाल-उगाल कर धीरे २ चबाकर खाते हैं, उसे रोमन्थ करना, या जुगाली करना कहते हैं ]।

बड़े २ जंगली सूअर भी छोटे छोटे तालाबों के किनारे निर्भय होकर मुस्ता ( मोथा ) को खोद २ कर खाएं। ( यह सूअरों का स्वभाव है कि वे छोटे २ तालाबों के किनारे नागरमोथा खोद २ कर खाया करते हैं )। और जिसकी प्रत्यञ्चा = डोरी ढीली करदी गई है—ऐसा मेरा यह धनुष भी आज तो विश्राम ही करे। अर्थात्-आज शिकार नहीं खेला जायगा। अतः महिष, मृग, सूकर आदि वन्य पशुओं को आज तो निर्भय हो विचरने दो ॥ ६ ॥

१ 'विस्रब्धै'रिति पा० । २ '"मुस्ता=नागरमोथा" इति भाषा ।

सेनापतिः— यथा प्रभविष्णवे रोचते ।

राजा—तेन हि निवर्त्तय पुरोगतान् धनुर्ग्राहिणः। यथा च मे सैनिकास्तपोवनं नाभिरुन्धति, दूरात् परिहरन्ति च तथा निषेद्धव्याः। पश्य—

शमप्रधानेषु तपोवनेषु गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला अपि सूर्यकान्तास्ते ह्यन्यतेजोऽभिभवाद्दहन्ति ॥७॥

---

प्रभवति तत्साधुकारी-प्रभविष्णुः, तस्मै—प्रभविष्णवे = स्वामिने । यथा रोचते । 'तथा (मया) करणीय' मिति शेषः । पुरोगतान्=अग्रेगतान् । मृगयाव्यवस्थार्थं पुरो यातान्। धनुर्ग्राहिणः = धानुष्कान्। यथा दूरात् परिहरन्ति=दूरत एव त्यजन्ति, तथा निषेद्धव्याः = नियन्तव्याः ।

शमेति । हि = यतः—शम एव प्रधानं येषु तेषु शमप्रधानेषु=शान्तिकलितेष्वपि, तपोवनेषु = आश्रमपदेषु, गूढ = प्रच्छन्नं, दाह एवात्मा यस्य तत्—दाहात्मकं = दाहस्वभावकं, तेजः = धाम । "तेजो धाम्नि पराक्रमे" इति विश्वः । अतो दूरत एव परिहरणीया आश्रमा इत्युपदिष्टं भवति । हि = यतः, स्पर्शस्यानुकूलाः—स्पर्शानुकूला—अपि = स्पर्शसहा अपि, सूर्यकान्ताः = सूर्यकान्तमणयः, ये भवन्तीति शेषः । तेऽपि,–अन्यस्य तेजसा—अभि=सर्वतः, भवनं = प्राप्तिः, तस्मात्—अन्यतेजोऽभिभवात् = अन्यतेजसा समाक्रमणात् , दहन्ति=दाहसमर्था भवन्ति । [ एवञ्च बहिः सुखस्पर्शा अपि यथा सूर्यकान्तमणयोऽभिभवाद्

---

सेनापति—जैसी प्रभु की ( महाराज की ) इच्छा ।

राजा—तो फिर शिकार की खोज में आगे गए हुए धनुर्धरों को तुम वापिस बुलालो । और हमारे सैनिक इस तपोवन में कुछ भी गड़बड़ी व उत्पात न करें, और तपोवन से दूर ही रहें—ऐसा हुक्म सबको देदो । देखो—

शान्तिप्रधान तपोवन में भी दाहात्मक गुप्त तेज ( अग्नि ) रहता ही है। क्योंकि सूर्यकान्तमणि छूने योग्य व ठण्डा होता हुआ भी दूसरे के तेज से ( सूर्य की किरणों के सम्पर्क से ) अभिभूत होते ही जलाने लगता है। अतः ये तपोवन

सेनापतिः—यथाऽऽज्ञापयति स्वामी ।

विदूषकः—भो उच्छाअहेतुअ ! णिक्कम-णिक्कम ।

[ भोः ! उत्साहहेतुक ! निष्काम-निष्काम ] ।

( सेनापतिः—निष्क्रान्तः ) ।

राजा—( परिजनानवलोक्य— ) मृगयावेशमपनयन्तु भवन्तः । रैवतक ! त्वमपि स्वनियोगमशून्यं कुरु ।

रैवतकः—जं महराओ आणवेदि । ( —इति निष्क्रान्तः ) ।

[ यन्महाराज आज्ञापयति ] ।

विदूषकः—किदं भअदा णिम्मक्खिअं । ता इमस्सिं पादवच्छाआ-विरइदविदाण-सणाहे सिलाअले उवविसदु भवं; जाव अहम्पि सुहासीनो होमि ।

---

दहन्ति, तथैव तपोवनान्यपि पराभवाद्दहन्त्येवेति दृष्टान्तालङ्कारः । काव्यलिङ्गं केचिदाहुः ] ॥ ७ ॥

निष्काम = अपगच्छ । परिजनान् = भृत्यान् । मृगयानुकूलो वेशो-मृगया-वेशः = सन्नाहः, तम् । अपनयन्तु = त्यजन्तु । स्वस्य नियोगं-स्वनियोगं = स्वाधिकारं, द्वारपालनम् । अशून्यम् = अरिक्तं । स्वकार्यमाचर तावत् । इतो बहि-

---

( आश्रम वासी मुनिगण ) भी राजा या अन्य किसी के द्वारा अभिभूत होने से उसे जलाकर राख ही कर देते हैं ॥ ७ ॥

सेनापति—जैसी महाराज की आज्ञा ।

विदूषक—अरे झूठा उत्साह दिलाने वाले! निकल, यहाँ से जल्दी निकल।

[ सेनापति—जाता है ] ।

राजा—( अपने मुसाहबों की ओर देखकर ) आप लोग भी जाकर अपना २ मृगया वेष दूर करिए ( जाकर कमर खोलिए ) । रैवतक ! तुम भी अपने कामपर जाओ । ( अर्थात्–दर्वाजे पर जाकर बैठो । आवश्यकता होने पर बुलालेंगे ) ।

रैवतक—जैसी महाराज की आज्ञा । ( जाता है ) ।

विदूषक—आपने अब निर्मक्षिक (इन सबको हटाकर मानों मक्खियों से शून्य,

[ कृतं भवता निर्म्मक्षिकं, तदस्मिन् पादपच्छाया-विरचितवितान-सनाथे शिलातले उपविशतु भवान्, यावदहमपि सुखासीनो भवामि ]।

राजा—गच्छाऽग्रतः।

विदूषकः—एदु एदु भवं।

[ एतु-एतु भवान् ]।

---

गच्छेति यावत्। साम्प्रतम् = इदानीं, मक्षिकाणामभावो निर्मक्षिकं = मक्षिका-रहितम्। जनशून्यमिति यावत्। पादपानां छायासु विरचितेन वितानेन सनाथे—पादपच्छायाविरचितवितानसनाथे = वृक्षच्छायाकृतोल्लोचमनोहारिणि। "अस्त्री वितानमुल्लोचः" इत्यमरः। "चन्दवा" इति भाषा। शिलातले = शिलापट्टे, सुखमासीनः—सुखासीनः = सुखोपविष्टः। अग्रतो गच्छ = मार्गं प्रदर्शय कुञ्जशिलातलस्य। एतु = मत्पृष्ठत आयातु। परिक्रम्य=किञ्चिद्गत्वा, उपविष्टौ = स्थितौ। 'वल्लीमण्डपसनाथे शिलाखण्डे' इति शेषः।

राजेति। इत आरभ्य द्वितीयः प्रतिमुखसन्धिः प्रारभ्यते, स च तृतीयाङ्क-समाप्तिपर्यन्तं भविष्यति। तल्लक्षणं च रसार्णवे—

"बीजप्रकाशनं यत्र दृश्याऽदृश्यतया भवेत्।
तत्स्यात्प्रतिमुखम्" इति। धनिकोऽपि—
बिन्दु-प्रयत्नानुगमादङ्गान्यस्य त्रयोदश।
विलासः, परिसर्पश्च, विधुतं, नर्म-शर्मणी॥
नर्मद्युतिः, प्रगमनं, निरोधः, पर्युपासनम्।
वज्रं, पुष्पमुपन्यासो, वर्णसंहार इत्यपि॥—इति।

तत्र बिन्दुलक्षणं—

"प्रयोजनानां विच्छेदे यदविच्छेदकारणम्।
यावत्समाप्तिं बन्धस्य स बिन्दुरिति सञ्ज्ञितः॥"—इति भरते।

---

अर्थात् एकान्त) कर दिया। अब आप वृक्षों की छाया से वितान (चन्दवे) की तरह आ-च्छादित इस शिला (पत्थर) के ऊपर बैठ जाइए। मैं भी यहाँ ही सुखपूर्वक बैठता हूँ।

राजा—अच्छा तो तुम आगे २ चलो।

विदूषक—आप आइए, मेरे पीछे २ चले आइए।

( उभौ--परिक्रम्योपविष्टौ ) ।

**राजा**—सखे ! माधव्य !

अनाप्तचक्षुःफलोऽसि येन त्वया द्रष्टव्यानां परं न दृष्टम् ।

**विदूषकः**—णं भवं ज्जेव मे अग्गदो वट्टदि ।

[ ननु भवानेव मे अग्रतो वर्त्तते ] ।

**राजा**—सर्वः खलु कान्तमात्मानं पश्यति, अहन्तु तामेवाऽऽश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

---

प्रकृते च मृगयागुणदोषवर्णनप्रसङ्गेन विच्छिन्नस्य प्रयोजनस्य—"अनवाप्तफलोऽसि"—इत्यादिना पुनः प्रवर्त्तनाद्बिन्दुरयम् । प्रयत्नलक्षणमपि भरते—

"अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति ।
परं चौत्सुक्यगमनं 'प्रयत्नः' स प्रकीर्त्तितः ॥ इति ।

यथा "—राजा-तपस्विभिः परिज्ञातोऽस्मि" 'केनापदेशेनाश्रमे व्रजामः' इत्यादिः प्रयत्नः । केचित्तु—द्वितीयाङ्कप्रारम्भादेव प्रतिमुखं कथयन्ति ।

अनाप्तेति । अनाप्तं-चक्षुषोः फलं येनासौ = अनधिगतनयनसाफल्यः । द्रष्टव्यानां = दर्शनीयवस्तूनामपि, परम् = उत्कृष्टं, शकुन्तलारूपं । भवानेवेति । त्वत्तोऽधिकं सुन्दरस्याऽसम्भवात्कथमुच्यते 'त्वया द्रष्टव्यानां परं न दृष्ट' मिति, भवत एव तथात्वेन मया दर्शनादिति भावः । सर्वः=सकलोऽपि लोकः । कान्तं= सुन्दरं । पश्यति=मनुते । ललामभूतां=प्रधानभूतां । भूषणीभूताम् । "ललामं—

---

( दोनों कुछ चलकर, बैठते हैं ) ।

**राजा**—सखे माधव्य ! तुमने द्रष्टव्य पदार्थों में भी सबसे श्रेष्ठ वस्तु ( शकुन्तला ) को नहीं देखा है, अतः तुम्हारे नेत्र ही निष्फल हैं । नेत्रों का फल तो उस शकुन्तला के मुखका दर्शन ही हो सकता है ।

**विदूषक**—द्रष्टव्य पदार्थों में सबसे श्रेष्ठ तो आप ही मेरे सामने बैठे हैं ! अब इससे अधिक क्या देखना बाकी रह गया है ? ।

**राजा**—मित्र ! अपने को तो सभी लोग सुन्दर समझते हैं । पर मैं तो अपनी बात नहीं कह रहा हूं । किन्तु इस आश्रम की प्रधान अलङ्कारस्वरूप उस सुन्दरी

**विदूषकः**—( स्वगतम्—) भोदु, ण से पस्सअं वड्ढइस्सं। [ प्रकाशं—] भो ! जइ सा तवस्सिकण्णआ अणब्भत्थणीआ, ता किं ताए दिट्ठआए ?।

[ भवतु, नाऽस्य प्रश्रयं वर्द्धयिष्यामि । [ प्रकाशं—] भोः ! यदि सा तपस्विकन्यका अनभ्यर्थनीया, तत्किं तया दृष्टया ? ]।

**राजा**—धिङ् मूर्ख !—

निवारितनिमेषाभिर्नेत्रपङ्क्तिभिरुन्मुखः ।
नवामिन्दुकलां लोकः केन भावेन पश्यति ? ॥ ८ ॥

---

पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुष्वि''त्यमरः । शकुन्तलामधिकृत्य=तां विषयीकृत्यैव, मया 'द्रष्टव्यानां परं न दृष्ट'मित्युक्तं, न त्वात्मन तथा मत्वेत्याशयः ।

अस्य = दुष्यन्तस्य । प्रश्रयम्=अनुरागातिशयम् । "प्रश्रय-प्रणयौ समौ" इत्यमरः । अनभ्यर्थनीया = न प्रार्थनीया ।

निवारितेति । निवारितो निमेषो यासु ताभिः—निवारितनिमेषाभिः = निमेषशून्याभिः, नेत्राणां पङ्क्तिभिः, नेत्रपङ्क्तिभिः = लोचनराजिभिः, उत् =

---

शकुन्तला के विषय में ही यह कह रहा हूं। उसको तुमने नहीं देखा है, यह तुम्हारे नेत्रों की निष्फलता ही है ।

विदूषक—( मन ही मन ) रहने दूँ। मैं इसकी इस प्रेमवासना को अधिक उत्तेजन नहीं दूँ तो ही अच्छा है। ( प्रकट में ) हे मित्र ! जब उस तापस-कन्या से हमें और तुम्हें कोई प्रयोजन ही नहीं है, तब उसे देखने की भी क्या आवश्यकता है ?। अर्थात् वह तो ब्राह्मण कन्या होने से तुम्हारे विवाह के योग्य ही नहीं है, अतः उसकी चर्चा ही व्यर्थ है ।

राजा—धिक् मूर्ख !

लोग ऊपर की ओर मुख करके, निर्निमेष लोचनों से, नई चन्द्रकला को ( दूजके चन्द्रमा को ) किस भाव से, किस अभिप्राय से देखा करते हैं ?। वहाँ

---

१ 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु" इत्यमरः ।

न च परिहार्य्ये वस्तुनि दुष्यन्तस्य मनः प्रवर्त्तते ।

विदूषकः—ता कधेहि । [ तत्कथय ] ।

राजा—

२. ललिताऽप्सरोभवं किल मुनेरपत्यं तदुज्झिताऽधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥ ९ ॥

ऊर्ध्वं मुखं यस्यासौ—उन्मुखः=उद्ग्रीवः सन्, नवाम्=अभिनवोदिताम्, इन्दोः कलाम्—इन्दुकलां=चन्द्रलेखां, केन भावेन=केन मनोरथेन, पश्यति=दृष्ट्वा मोदते ? । न केनापीत्यर्थः । यथा—चन्द्ररेखां दृष्ट्वा फलानुसन्धानविकला सहजा प्रीतिर्लोकस्य जायते, तथाऽस्माकमपि अभिसन्धिशून्यैव तस्यां स्नेहप्रवृत्तिरित्युत्तराशयः । [ अप्रस्तुतप्रशंसा, दृष्टान्त इति केचित्, अनुप्रासश्च ]॥८॥

परिहार्ये=क्षत्रपरिग्रहाऽयोग्ये ।

ललितेति । शिथिलं=श्लथम्, अत एव—अर्कस्य=मन्दाराख्यपादपस्य, उपरि, च्युतं=पतितं, नवमालिकायाः=सप्तलायाः, कुसुममिव=पुष्पमिव, किल=प्रसिद्धमेतत्,—ललितायाः=निकामरमणीयायाः, अप्सरसः=मेनकायाः । सकाशादिति यावत् । भवः=उत्पत्तिर्यस्य तत्—ललिताप्सरोभवं, तया=अप्सरसा च, उज्झितं=परित्यक्तं, सत्—अधिगतम्—तदुज्झिताऽधिगतम्=मेनकात्यक्तं सत्प्राप्तम्, अत एव—मुनेरपत्यम्=मुनिपुत्री । कण्वदुहिता । "सुतः पुत्रः स्त्रियान्त्वमी । आहुर्दुहितरं

देखनेवालों को क्या मिलता है ? । कुछ नहीं । पर वे चन्द्रमा की नवीन कला की शोभा से आकृष्ट होकर ही उसे निर्निमेष लोचनों से देखते हैं । वैसे ही इसके अलौकिक सौन्दर्य के कारण ही मैं उसकी चर्चा ( प्रशंसा ) कर रहा हूँ ॥८॥

और-अयोग्य वस्तु पर तो कभी दुष्यन्त का (मेरा) मन चलता ही नहीं है।

विदूषक—तो यह क्या बात है, स्पष्ट कहिए । अर्थात्—तापस—कन्या ( ब्राह्मण कन्या ) आपके योग्य कैसे हो सकती है ? । साफ २ कहिए ।

राजा—यह बाला ( शकुन्तला ) किसी सुन्दरी अप्सरा से ही उत्पन्न हुई है, अतः यह ब्राह्मण कन्या नहीं है । कण्व मुनि को तो यह रास्ते में पड़ी हुई

१ "अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे" इति मेदिनी ।

२. उत्प्रेक्षालंकार

**विदूषकः**--( विहस्य— ) भो ! जधा पिण्डीखज्जूरेहिं उव्वेजिदस्स तिन्तिडीए सद्धा भोदि, तधा अन्तेउर-इत्थिआरअणपरिभोइणो भअदो इअं पत्थणा ।

[ भोः ! यथा पिण्डीखर्जूरैरुद्वेजितस्य तिन्तिड्यां श्रद्धा भवति, तथा अन्तःपुरस्त्रीरत्नपरिभोगिनो भवत इयं प्रार्थना ]।

**राजा**—सखे ! तावदेनां न जानाति, येन त्वमेवमवादीः ।

---

सर्वेऽपत्यं तोकं तयोः समे''–इत्यमरः । एवञ्च पालकत्वादेव कण्वस्य शकुन्तलापितृत्वं, न तु तदात्मजेयमिति स्वयोग्यत्वमस्यां प्रकटितम् । [ कुसुममिवेत्युपमा, अनुप्रासश्च ] ॥ ९ ॥

विहस्येति । वनेऽस्मिन् क्व विशिष्टस्त्रीरत्नसम्भव इति, अन्तःपुरगतरमणीयरमणीरत्नसम्भोगवतोऽप्यन्यत्र भवतो बद्धाभिलाषितोपहासायैवेति भावः ।

पिण्डीखर्जूरैः=मधुरतरैः खर्जूरप्रभेदैः, उद्वेजितस्य, तिन्तिड्याम्=अम्लिकायाममधुरायामपि, श्रद्धा=अभिलाषः । अन्तःपुरे यानि स्त्रीरत्नानि, तानि—परिभुङ्क्ते तच्छीलः, तस्य=त्रैलोक्यसौन्दर्यशालिप्रमदारत्नभोगशीलस्य, इयं=शकुन्तलाविषयिणी, प्रार्थना=अभिलाषः । तस्यामनुराग इति यावत् । मधुरेणोद्विग्नो यथाऽहृद्यमम्लं चिञ्चिकाफलं बहु मन्यते, तथैव त्वयापि वनवासिनी तापसकन्या शकुन्तला प्रशस्यत इति भावः ।

---

मिली है, इसीलिए यह कण्व मुनिकी कन्या कहलाती है । अतः कण्व मुनिके पास तो यह उसी प्रकार आ गई है, जैसे आक ( मदार ) के पौधे के ऊपर नवमालिका ( नेवारी–वासन्ती ) का फूल आकर टपक पड़े ॥ ९ ॥

विदूषक—हे मित्र ! मीठे २ पिण्ड खजूरों को खाते २ जब मनुष्य का मन उचट (भर) जाता है, तब उसकी खट्टी इमली खानेकी इच्छा होती है । मालूम होता है, अन्तःपुर की सुन्दर २ स्त्रीरत्नों के उपभोग करनेवाले आपकी भी वैसे ही इस वन ( जंगली ) कन्या के ऊपर इच्छा हुई है ।

राजा—मित्र ! तुमने उसे देखा नहीं है, इसीलिए तुम ऐसा कह रहे हो ।

विदूषकः—तं क्खु रमणीअं णाम, जं भअदो बि बिह्मअं उत्पादेति ।

[ तत् खलु रमणीयं नाम यद्भवतोऽपि विस्मयमुत्पादयति ]।

राजा—वयस्य ! किं बहुना—

चित्ते निवेश्य परिकल्पितसर्वयोगान्
रूपोच्चयेन विधिना विहिता कृशाङ्गी ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे,
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥१०॥

तत् = तद्वस्तु, रमणीयं नाम = अवश्यमेव रमणीयं भवेत्, विस्मयं = कौतुकम्, उत्पादयति = जनयति । त्वत्कौतुकात्सौन्दर्यातिशयशालिनी सेत्यनुमिनोमीति भावः । बहुना = अनल्पजल्पनेन ।

चित्त इति । धातुः = विधेः, विभुत्वं = निर्माणकौशलं, तस्याः = शकुन्तलायाः, वपुश्च = अतुलसौन्दर्यसारसमुज्ज्वलं शरीरञ्च, अनुचिन्त्य = विभाव्य, विमृशतो, मे = मम,–विधिना = ब्रह्मणा, परिकल्पिताश्च ते सर्वे योगाश्च, तान्-परिकल्पितसर्वयोगान् = अद्य यावद्ब्रह्मणा ये ये निर्माणयोगा अनुभूतास्तान् सर्वानेव निर्माणसमर्थसिद्धयोगान्, चित्ते = स्वान्ते, निवेश्य = विभाव्य, बुद्ध्युपारूढान् कृत्वा, रूपाणामुच्चयः, तेन—रूपोच्चयेन = सौन्दर्यलावण्यादिराशिना ( विधिना=ब्रह्मणा ) विहिता = समुत्पादिता, कृशाङ्गी = तनुतरगात्रयष्टिः, अपरा=अत्युत्कृष्टा=अद्य यावदनिर्मिता,स्त्री-रत्नमिव,–स्त्रीरत्नं, तस्य सृष्टिः–स्त्रीरत्नसृष्टिः=प्रमदारत्नसृष्टिः, सा = सेयं शकुन्तला—इति, मे प्रतिभाति = प्रतिभासते।

विदूषक—तो अवश्य ही वह अतिसुन्दरी होगी, जो इस प्रकार आपके मन में भी विस्मय उत्पन्न कर रही है ।

राजा—मित्र ! ज्यादा क्या कहूँ—ब्रह्मा की सब कृतियों को, तथा उस सुन्दरी ( शकुन्तला ) के सुन्दर शरीर को देखने से यही मालूम होता है,

१ "चित्रे निवेश्य परिकल्पितसत्त्वयोगा [illegible] विधिना मनसा कृता नु"। पा०

विदूषकः—सव्वधा पच्चादेशो क्खु सा रूववदीणं।
[ सर्वथा प्रत्यादेशः खलु सा रूपवतीनाम् ! ]।
राजा—इदञ्च मे मनसि वर्त्तते—

अन्योऽपि कुशलः शिल्पी,—आत्मनः सर्वतोऽनुभूतैः सिद्धप्रयोगैर्महता संरम्भेण विशिष्टसामग्रीसम्भारात्सारतरमाकृष्य पूर्वकल्पितस्वशिल्पजालादुत्कृष्टं वस्तु सम्पादयति, तथैव भगवान् प्रजापतिरपि सकललोकसर्जनलब्धानुभूतिविशेषान्महता बुद्धियोगेन स्मारं स्मारं चित्रान्योगानिमां शकुन्तलां निर्ममे, कथमन्यथा जगदतिशायिरूपसम्पदस्तस्याः सृष्टिर्ब्रह्मणा कर्त्तुं शक्येत, अद्य यावदीदृशसृष्टेस्तेनाऽकल्पनादिति शकुन्तलायाः सर्वतो वैशिष्ट्यं ध्वनितम्।

'चित्रे निवेश्ये'त्यादि पाठे तु–चित्रे–प्रतिरूपके। निवेश्य = आलिख्य। परिकल्पितसत्त्वयोगा=आहितप्राणा। मनसैव ब्रह्मणा कृता, न तु हस्तादिना। हस्तादिस्पर्शो हि नेदृशमनिन्द्यं कोमलत्वसीमातिगं रूपं सम्भवेदित्यर्थो बोध्यः। 'रूपं स्वभावे सौन्दर्ये'इति मेदिनी। 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः। [ अपरा–सकलस्त्रीसृष्टिविलक्षणेत्यभेदे भेदारोपात्—अभेदे भेदरूपाशयोक्तिः। श्रुति—वृत्त्यनुप्रासौ। पूर्वार्द्धवाक्यार्थे उत्तरार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गञ्च। अनेन गुणकीर्त्तनं नाम नाट्यलक्षणमुक्तम्। ] ॥ १० ॥

यद्येवं तर्हि—सर्वथा = रूपेण। लावण्येन। गुणैश्च सर्वतो भावेन। रूपवतीनां=सुन्दरीणां वरवर्णिनीनां। प्रत्यादेशः=प्रत्याख्यानम्। रूपगर्वस्येत्यर्थाद् बोध्यम्। 'प्रत्यादेशो निराकृतिः'–इत्यमरः।

कि-ब्रह्माजीने आज तक जितने भी सृष्टि उत्पादन के उत्तम योग सीखे हैं, उन सब योगों को चित्त में रखकर, और अपनी सम्पूर्ण कारीगरी खर्च कर, रूप और सौन्दर्य की राशि ( के व्यय ) से इस कृशाङ्गी को बनाया है। अतः यह ब्रह्माजी की वर्त्तमान सभी स्त्री-सृष्टियों से अलग ही कोई अपूर्व स्त्री-सृष्टि है ॥ १० ॥

विदूषक—तो फिर यह शकुन्तला तो सभी (देवाङ्गना, मनुष्य स्त्री आदि) रूपवती स्त्रियों का प्रत्याख्यान है--यही समझना चाहिए। अर्थात् तब तो यह संसार की स्त्रीजाति मात्र से बढ़ी-चढ़ी है !

राजा—मित्र ! मेरे मन में तो यही बात उठ रही है कि—

अनाघ्रातं पुष्पं, किसलयमलूनं कररुहै-
रनाविद्धं रत्नं, मधु नवमनास्वादितरसम् ।
अखण्ड पुण्यानां फलमिव च तद्रूपमनघ,
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ! ॥११॥

इदम् = इत्थं, वर्त्तते = तिष्ठति । ममैवं विचारो जायते । विचारमेवाह—अनाघ्रातमिति । न आघ्रातम्—अनाघ्रातम्=अकलितघ्राणसम्पर्कम् । अकृतोपभोगं । पुष्पमिव । [ एतेन परोपमर्दाऽभावादखण्डितसौन्दर्यामोदशालित्वं तस्या ध्वन्यते] । कररुहैः=नखैः । अलूनम् = अच्छिन्नं । किसलयमिव = पल्लवमिव । एतेनाऽक्लान्तत्वमुपभोगवैरूप्यशून्यत्वञ्च ध्वनितम् । अनाविद्धम् = अखण्डितं, दोषलेशानाकलितं वा । रत्नमिव । न आस्वादितो रसो यस्य तत्—अनास्वादितरसम् = अगृहीतास्वादं । नवं = सद्यःसमानीतं । तेन रजोदोषलेशसम्पर्कराहित्यं, हृद्यत्वञ्च ध्वन्यते । मधु इव = क्षौद्रमिव । किञ्च-पुण्यानां = सुकृतानाम् । अखण्डं = सम्पूर्णं । फलमिव=परिपाक इव । तेनाऽत्यन्ताभिलषणीयता तस्या व्यज्यते । अनघं= निष्कलङ्कं । कलङ्कलेशशून्यं । निर्दोषं । मनोज्ञम् । 'अनघो निर्मलाऽपापमनोज्ञेषु च भेदव'दिति विश्वः । ( च=किञ्च— ) । तस्याः शकुन्तलाया रूपं = सौन्दर्यम् । लावण्यञ्च । इह = जगति । कं भोक्तारं = कं भाग्यवन्तं भोगशील पुरुषम् । विधिः = दैवम् । उपस्थास्यति = उपनयिष्यति । अन्तर्भावितण्यर्थः । कस्य वा भोगाय कल्पयिष्यति । इति । न जाने = न वेद्मि ? [ मालोपमा । श्रुतिवृत्त्यनुप्रासौ । परिकरालङ्कारश्च । श्लोकाभ्यामाभ्यां गुणकीर्तनं नाम नाट्यलक्षणञ्च दर्शितम् , 'गुणानां कीर्त्तनं यत्तु तदेव गुणकीर्त्तनं'मिति विश्वनाथोक्तेः ] ॥११॥

यह—अछूता—बेसूंघा हुआ—पुष्प, नखों से नहीं काटा गया कोमल—पल्लव, विना बीन्धा हुआ—रत्न, किसीसे भी अनास्वादित नवीन—मधु (सहित), पुण्यों का अखण्डित—फल, इसका निर्दोष रूप-लावण्य, किस भाग्यशाली के उपभोग में विधाता लाएगा ? । अर्थात् इसका कौन स्वामी होता है ? । किस भाग्यशाली की यह अर्द्धाङ्गिनी बनेगी—यही मैं सोच रहा हूँ ॥ ११ ॥

विदूषकः—तेण हि लहुं लहुं गच्छदु भवं, मा जाव सा कस्सवि तवस्सिणो इङ्गुदीतेल्लचिक्कणसीसस्य हत्थे णिवडिस्सदि।

[ तेन हि लघु-लघु गच्छतु भवान् , मा यावत्सा कस्यापि तपस्विन इङ्गुदीतैलचिक्कणशीर्षस्य हस्ते निपतिष्यति ]।

राजा—परवती खलु तत्रभवती, न च सन्निहितगुरुजना।

विदूषकः—अध तुह उवरि कोदिसो से चित्तराओ ?।

[ अथ तवोपरि कीदृशोऽस्याश्चित्तरागः ? ]।

राजा—वयस्य ! स्वभावादेवाऽप्रगल्भास्तपस्विकन्यकाः।

---

तेन हि=यदीदृशं सकलातिगं सौन्दर्यं तदा तु। लघु-लघु=द्रुततरं। 'लघु क्षिप्रमरं द्रुत'मित्यमरः। यावत्=शवदेव। [1]इङ्गुदीनां तैलेन चिक्कणं शीर्षं यस्य, तस्य—इङ्गुदीतैलचिक्कणशीर्षस्य=तापसपादपफल-तैललिप्तोत्तमाङ्गस्य। हस्ते निपतनं = विवाहः। येषामिङ्गुदीतैलेन केशप्रसाधनं, तेषां का कथाऽन्यभूषण-सम्पत्तेरिति तत्राऽनादरः सूच्यते।

परवती = परतन्त्रा। तत्रभवती=तपस्विनी। मान्या। न सन्निहितो गुरुजनो यस्याः सा तथा। एवञ्च न सहसा तस्या विवाहमङ्गलसम्भव इत्याशयः। चित्तरागः = अनुरागः।

अप्रगल्भाः = अनुरागप्रकाशनकौशलशून्याः, तथापि=एवं वस्तुस्थितावपि।

---

विदूषक—तो मित्र ! तुम जल्दी से जल्दी वहाँ पहुँचो। कहीं यह इङ्गुदी के तेलसे चिकणे शिरवाले किसी तपस्वी ब्राह्मण कुमार के हाथ में न पड़ जाए। अतः तुम पहिले ही पहुँच जाओ।

राजा—नहीं मित्र ! वह तो पराधीन है, और उसके गुरुजन (पिता कण्व) भी यहाँ नहीं हैं, अतः अभी तो उसके विवाह की कोई शङ्का नहीं है।

विदूषक—अच्छा, उसका आपके ऊपर अनुराग कैसा है ?।

राजा—हे वयस्य ! तपस्वियों की कन्याएँ तो स्वभाव से ही भोली-भाली और अप्रगल्भा होती हैं। अतः उनके मनके भावको ठीक २ समझना तो कठिन ही है।

---

१ इङ्गुदी = 'हिंगोट' इति भाषा। २. दृष्टिरागो

तथापि तु—

अभिमुखे मयि संहृतमीक्षितं,
हसितमन्यनिमित्तकथोदयम्[1] ।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो, न च संवृतः ॥१२॥

**विदूषकः**—( विहस्य— ) किं दिट्ठिमेत्तेण ज्जेव भअदो अङ्कं आरोहदु ।

तथापि तु=किन्तु पुनः। तया हृद्गतो भावः किञ्चित्सूचितः, किञ्चिच्च संवृत इत्यग्रिमश्लोकेन सह सम्बध्यते । **अभिमुख इति** । मयि अभिमुखे=संमुखं संस्थिते सति। तया-ईक्षितम्=विलोकनं च। संहृतम्=गोपितम् पराङ्मुखं कृतम् । एतेन शृङ्गारलज्जा प्रकटिता। किञ्च—अन्येन-निमित्तेन=हेतुना कथाया वाग्व्यवहारस्य उदयो यत्र तत्—अन्यनिमित्तकथोदयं यथा स्यात्तथा=कथान्तरव्याजेन । तया हसितं=हसनं कृतम। एतेन मयि अनुरागः सूचितः। अतः—विनयेन वारिता वृत्तिः=प्रसरो यस्यासौ—विनयवारितवृत्तिः=लज्जावरुद्धप्रसरः । मदनः=कामः । न विवृतः=न प्रकटीकृतः । न च संवृतः=न निगूहितः । अन्यनिमित्तकथादिभिर्हसितादिभिश्च स्वानुरागप्रकटनात्, मुग्धात्वेन निगूहितोऽपि भावो हसितादिभिः स्फुटीकृतः। प्रकटनाऽप्रकटनोक्तेर्विरोधो, मुग्धात्वेन परिहारश्चेति—विरोधाभासोऽलङ्कारः]॥१२॥

तो भी—

उसने मेरे संमुख होते ही अपने नेत्र हटा लेती थी। और दूसरी २ बातों के प्रसङ्ग के बहाने से वह हँसती थी। इस प्रकार विनय से अवरुद्ध प्रसर अपनी कामवासना को न तो उसने स्पष्ट प्रकट ही किया है, न छिपाया ही है। नेत्र हटा लेना-कामवासना का छिपाना है। हँसना-कामवासना का प्रकट करना है। अतः दोनों ही बातें हैं। वह मेरे में अनुरक्त भी मालूम होती है, और सङ्कोच भी करती है ॥ १२ ॥

**विदूषक**—( हँसकर ) तो क्या मित्र ! आप चाहते हैं, कि आपको देखते ही वह आपकी गोद में ही आकर बैठ जाए ?



1. कृतोदयं

[ किं दृष्टमात्रेणैव भवतोऽङ्कमारोहतु ? ]।

राजा—[ [1]वयस्य ] सखीभ्यां मिथः प्रस्थाने पुनः सलीलया तत्रभवत्या मयि भूयिष्टमाविष्कृतो भावः। तथा हि—

'दर्भाङ्कुरेण चरणः क्षत' इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥१३॥

---

दृष्टमात्रेणैव = अवलोकनादेव। अङ्कमारोहतु = त्वामभिसरतु। शनैः शनैः सर्वं भविष्यतीति भावः। सखीभ्यां=सखीभ्यां सह। प्रस्थाने=गमने। सलीलया= लीलाऽञ्चितलोललोचनया। मिथः = रहसि। 'मिथोऽन्योऽन्यं रहस्यपी'त्यमरः। भूयिष्ठं = बहुलम्। आविष्कृतः = प्रकटितः। भावः = चित्तानुरागः। सख्योरग्रे एव गमनाद्रहस्यलाभः।

दर्भेति। तन्वी=कृशतनुः। शकुन्तला। कतिचिदेव पदानि=किञ्चिद्दूरं। गत्वा = चलित्वा। दर्भस्याङ्कुरेण—दर्भाङ्कुरेण = कुशाग्रसूचिकया। चरणः = पादः। क्षतः = विद्धः। इति = इत्युक्त्वा। अकाण्डे = अनवसरे एव। 'काण्डं चावसरे बाणे' इति धरणिः। कुशाग्रेण चरणक्षताऽभावेऽपि। स्थिता=विलम्बितगमनाऽभूत्। च = किञ्च। द्रुमाणां = तरूणां। शाखासु=विटपेषु। असक्तमपि= असंलग्नमपि। वल्कलं = वल्कवसनं। विवृत्तं वदनं यस्याः, सा—विवृत्तवदना= पराचीनमुखी। मत्संमुखीनेति यावत्। विमोचयन्ती=विश्लेषयन्तीव। आसीत्= स्थिता। कुशसूचीव्यधनाऽभावेऽपि तद्व्याजेन, वल्कलस्य शाखास्वनासक्तस्यापि विमोचनच्छलेन च रुद्धगमना स्वाशयं प्राकाशयदिति भावः। 'विलम्बश्च पथि

---

राजा—सखे! सखियों के साथ जाते समय तो उसने (शकुन्तला ने) बड़े ही हाव भाव कटाक्ष पूर्वक मेरे प्रति अपना प्रेमभाव प्रकट किया था। जैसे—

'मेरा तो पैर दर्भ के अंकुर ( तीखे जड़ के अग्रभाग ) से घायल हो गया है' इस बहाने से वह कृशाङ्गी मेरे ही वास्ते ठहर गई। शाखाओं में नहीं अटके

---

१ अयं पाठः क्वचिन्न।

**विदूषकः**—गहीदपाधेयो किदो सि तए, अदो अणुरत्तं तपोवणं[1] त्ति तक्केमि।

[ गृहीतपाथेयः कृतोऽसि तया, अतोऽनुरक्तं तपोवनमिति [1]तर्कयामि ]।

**राजा**—सखे ! तपस्विभिः कैश्चित् परिज्ञातोऽस्मि, चिन्तय तावत्केनाऽपदेशेन पुनराश्रमपदं गच्छामः।

---

व्याजात्परावृत्त्यापि दर्शन'मित्यादिना कामशास्त्रेषु-विलम्ब्य गमनादेरनुराग-लक्षणतयाऽभिधानात्। [ अनुप्रासः, हेतुश्चालङ्कारौ ] ॥ १३ ॥

गृहीतः पाथेयो येनासौ— गृहीतपाथेयः=स्वीकृतशम्बलः। तया=शकुन्तलया। प्रस्थिताय पथिकाय बान्धवा उत्साहवर्द्धनार्थं पाथेयं प्रयच्छन्तीति—लोकस्थितिः। अनुरागसूचनेन च सा रतिमार्गे भवन्तमुत्साहयतीत्याशयः। पाठान्तरे त्वया तपोवनम्=आश्रमपदम्। उपवनं=क्रीडाकाननं। कृतं=निष्पादितं। परस्परानुरागाङ्कुरोत्पत्तेरनुरूपमुपवनमेव न तपोवनमिति तादृशानुरागचर्चाविष्करणादिभिरिदमाश्रमपदमुपवनतां त्वया नीतमिति, शमप्रधानस्य तपोवनस्यानुरागप्रधानतेदानीं जातेत्याशयः।

परिज्ञातः='महाराजोऽयं दुष्यन्त' इति तैर्ज्ञातोऽस्मि। अत एव 'नेपथ्ये—

---

हुए भी अपने वल्कल को झूठे ही छुड़ाने के बहाने से, मुख घुमा २ कर, सानुराग भाव से मेरी ओर वह बार २ देख रही थी ॥ १३ ॥

**विदूषक**—इस प्रकार उसने आपको प्रेममार्ग के लिए पाथेय का ही प्रदान किया है। वाह ! इस प्रकार प्रेमलीला से तो आपने तपोवन को अपने अन्तःपुर ( महल ) का उपवन ( बगीचा ) ही बना लिया है ! । [ पाथेय—परदेश जाते हुए बान्धव को बन्धुजन मार्ग में भोजन के लिए कुछ भोजन की मीठी वस्तु लड्डू आदि देते हैं, उसे 'पाथेय' कहते हैं ]।

**राजा**—मित्र ! मुझे इस आश्रम के कुछ तपस्वियों ने पहिचान लिया है। अतः कोई ऐसा बहाना ढूँढ़ निकालो जिससे मैं पुनः इस आश्रम में अपनी प्राणप्रिया शकुन्तला से मिलने जा सकूं।

---

१ किदं तुए उववणं तपोवणं त्ति पेक्खामि।

[ 'कृतं त्वयोपवनं तपोवनमिति पश्यामि' ] । पा०

विदूषकः—को अवरो अवदेसो, णं भवं राआ।

[ कोऽपरोऽपदेशो ननु भवान् राजा ]।

राजा—ततः किम् ?।

विदूषकः—'णीवारच्छट्ठभाअं तावसा मे उवहरन्तु' त्ति।

[ 'नीवारषष्ठभागं तापसा मे उपहरन्तु'—इति ]

राजा—मूर्ख ! अन्यमेव भागधेयमेते तपस्विनो मे निर्वपन्ति, यो रत्नराशीनपि विहायाऽभिनन्द्यते। पश्य—

**यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद्धनम्।**
**तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १४ ॥**

---

संनिहितो मृगयाविहारी राजा दुष्यन्तः' इत्यादि तपस्विभिर्भाषितम्। अतो विना प्रयोजनं तत्र गमनमिदानीं मम न सम्भाव्यते, राज्ञस्तथाऽनौचित्यात्। अपदेशेन=व्याजेन। 'व्याजोऽपदेशो लक्ष्यञ्च' त्यमरः। तावता किं निष्पन्नम् ? इत्यत आह—नीवारणां=तृणधान्यानां। षष्ठं भागं=राजदेयं करस्वरूपं षष्ठमंशं। तदुक्तं मनुना—'धान्यानामष्टमो भागः, षष्ठो, द्वादश एव वे'ति।

अन्यं=धान्यषष्ठभागातिरिक्तं तपोरूपं। भागधेयं=करं। 'भागधेयः करो बलिः'—इत्यमरः। निर्वपन्ति=समर्पयन्ति। रत्नानां राशीनपि विहाय=महार्हरत्नजातमप्यविगणय्य। अभिनन्द्यते=राजभिःप्रशस्यते। नीवारषष्ठांशापेक्षयाऽभिनन्दनीयं पुण्यभागं मे स्वयमेव वितरन्ति, अतो रत्नप्रदात्काचयाचनमिव तवेदं नीवारभागयाचनमिति भावः। पश्य=विचारय। यदुत्तिष्ठतीति। वर्णेभ्यः=क्षत्रिय-

---

विदूषक—दूसरे बहाने के ढूंढ़ने की भला क्या आवश्यकता है, यही क्या कम है, कि—आप यहाँ के राजा हैं।

राजा—तो फिर राजा होने से ही क्या हुआ ?।

विदूषक—यही कि–'अपने भोज्य नीवार ( तिन्नी के चावल ) में से ही राजग्राह्य कर छठा हिस्सा तपस्वी लोग मुझे दें'।

राजा—अरे मूर्ख, ये तपस्वी तो मुझे वह सर्वश्रेष्ठ पुण्यका भाग कर रूप में देते हैं, जिसे राजा लोग रत्नों की राशि से भी अधिक पसन्द करते हैं। देखो—

( नेपथ्ये— )

हन्त ! सिद्धार्थौ स्वः ।

**राजा**—(कर्णं दत्त्वा—) अये ! प्रशान्तस्वरैस्तपस्विभिर्भवितव्यम्।

( प्रविश्य— )

**दौवारिकः**—जअदु जअदु भट्टा। एदे दुवे इसिकुमारआ पडिहारभूमिं उवत्थिदा।

[जयतु जयतु भर्त्ता। एतौ द्वौ ऋषिकुमारौ प्रतिहारभूमिमुपस्थितौ]।

---

वैश्यादिभ्यः । नृपाणां = राज्ञां । यत् = करस्वरूपं । धनं = स्वर्णधान्यादिरूपम्। उत्तिष्ठति=उत्पद्यते । लभ्यते। तत्=धनं । क्षयि=विनाशशीलम् । नः=अस्मभ्यम्। आरण्यकाः=अरण्ये भवास्तापसाः । क्षेतुं शक्यं—क्षय्यं । न क्षय्यम् अक्षय्यम्= अविनाशि । तपसः षष्ठो भागस्तं—तपःषड्भागं । ददति = वितरन्ति । [ अत्र साधारणधनापेक्षया सुकृतांशस्याधिक्येन वर्णनाद्व्यतिरेकालङ्कारः । 'विलासः सङ्गमार्थस्तु व्यापारः परिकीर्त्तित'इत्युक्तेः 'चिन्तये'त्यारभ्यैतदन्तं विलासो नाम मुखसन्ध्यङ्गमुपदर्शितम् ]।। १४ ।।

सिद्धोऽर्थो ययोस्तौ—सिद्धार्थौ = कृतार्थौ । स्वः = भवावः । हन्तेति हर्षेऽव्ययम् । 'हन्त ! हर्षेऽनुकम्पायां वाक्यारम्भविषादयो'रित्यमरः । प्रशान्तः स्वरो येषान्तैः—प्रशान्तस्वरैः = शान्तमधुरस्वरैः । प्रतीहारभूमिम् = द्वारदेशम् ।

---

जो धन अन्य वर्णों से ( क्षत्रिय वैश्य आदि प्रजा से ) कर रूप में प्राप्त होता है, वह तो क्षयी = विनाशी है, नष्ट होनेवाला है, पर ये अरण्यवासी तपस्वी तो मुझे अपनी तपश्चर्या का ही छठा भाग देते हैं—जो कभी क्षय नहीं होता है, और बहुमूल्य भी है ॥ १४ ॥

[ नेपथ्य में = पर्दे के पीछे से– ]

हम लोग कृतार्थ हो गए ! ।

राजा—( कान लगाकर ) यह प्रशान्त गम्भीर स्वर तो तपस्वियों का सा मालूम होता है ! ।

[ दौवारिक का प्रवेश ] ।

दौवारिक( दर्बान )—महाराज की जय जयकार हो । महाराज ! ये दो ऋषिकुमार दर्वाजे पर उपस्थित हैं । उनके लिए क्या आज्ञा है ? ।

**राजा**—अविलम्बं प्रवेशय तौ ।

**दौवारिकः**—जं भट्टा आणवेदि ( इति निष्क्रम्य, ऋषिकुमाराभ्यां सह पुनः प्रविश्य ) इदो इदो भवन्ता ।

[ यद्भर्त्ता आज्ञापयति । इतो इत भवन्तौ ] ।

( **उभौ**—(राजानां विलोकयतः ) ।

**एकः**—अहो ! दीप्तिमतोऽपि विश्वसनीयताऽस्य वपुषः ।

अथवा उपपन्नमेतदस्मिन्नृषिकल्पे राजनि । कुतः—

**अध्याक्रान्ता वसतिरमुनाऽप्याश्रमे सर्वभोग्ये,**

**रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति ।**

---

'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । अविलम्बं = सत्वरं । क्रियाविशेषणमेतत् । विलोकयतः = पश्यतः ।

दीप्तिमतोऽपि = तेजस्विनोऽपि । अस्य = दुष्यन्तस्य । वपुषः = शरीरस्य । विश्वसनीयता = विस्रम्भभाजनता । उपपन्नं = सङ्गतम् । एतत् = तेजोविश्वासयोरेकत्रावस्थानम् । ईषदसमाप्त ऋषिः–ऋषिकल्पः । तस्मिन् ऋषिकल्पे = महात्मनि । मुनिसदृशे । मुनिसादृश्यमेव दर्शयति—अध्याक्रान्तेति । अनेनाऽपि= दुष्यन्तेनाऽपि । सर्वैश्चतुर्भिरप्याश्रमिभिर्ब्रह्मचार्यादिभिः । भोग्ये = समाश्रयणीये ।

---

राजा—बिना बिलम्ब—(तुरन्त) उन्हें भीतर लाओ ।

द्वारपाल—( पहरेदार )—जो हुक्म सर्कार का ।

( बाहर जाकर ऋषिकुमारों के साथ पुनः भीतर आकर )

( ऋषिकुमारों से–) इस मार्ग से आप लोग पधारिए ।

[ दोनों ऋषिकुमार—राजा को देखते हैं ] ।

पहिला ऋषिकुमार—अहा ! इस तेजस्वी राजा की आकृति से भी विश्वसनीयता ( दयालुता, परोपकारिता एवं सज्जनता ) झलक रही है । अथवा–ऋषितुल्य धार्मिक इस राजा में यह साधुशीलता तो उचित ही है, क्योंकि—

यह भी ऋषि-मुनियों की ही तरह सबके उपकार करने वाले आश्रम में

**अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः**
**पुण्यः शब्दो 'मुनि'रिति मुहुः केवलं राजपूर्वः ॥१५॥**

**द्वितीयः**—सखे ! अयं स बलभित्सखो दुष्यन्तः ? ।

**प्रथमः**—अथ किम् ।

---

आश्रमे = गृहस्थाश्रमे । वसतिरध्याक्रान्ता = वासो विधीयते । मुनिभिरपि सर्व-स्छात्रातिथ्यादिभिराश्रयणीये तपोवने आश्रमपदे निवासो विधीयते । रक्षायाः = सर्वभूतपरिरक्षणस्य । प्रजापालनस्य —योगात् = समनुष्ठानायासात् । अयमपि = राजाऽपि । न केवलं मुनय एव किन्त्वयमपि । प्रत्यहं = प्रतिदिनं । तपः = पुण्यं । सञ्चिनोति = अर्जयति । मुनयो हि—रक्षाऽर्थम् = इन्द्रियान्तःकरणादि-नियन्त्रणार्थं । योगात् = समाध्यादितः तपोऽर्जयन्ति । वशिनः = इन्द्रियविजयिनः । अस्याऽपि = दुष्यन्तस्यापि । न केवलं मुनीनामेव । मुहुः = भृशं । चारणानां द्वन्द्वैर्गीतः—चारणमिथुनगीयमानः । पुण्यः = पवित्रः । केवलं राजपूर्वः = केवलं राजशब्दविशिष्टः । मुनिरिति शब्दः = राजर्षिरिति शब्दः । द्यां = स्वर्गं । गगनञ्च । स्पृशति = व्याप्नोति । [ व्यतिरेकालङ्कारः, उपमानादुपमेयस्येषन्न्यू-नताया वर्णनात् । श्लेषश्च ] ॥ २५ ॥

बलभिदः सखा—बलभित्सखः = वासवमित्रम् । 'बलभिद्वज्री वासवो वृत्रहा वृषे'त्यमरः । अयं सः ? = इन्द्रमित्रतया प्रसिद्धो दुष्यन्तः । किमयमेवेति प्रश्नाशयः । अथकिमित्युत्तरम् । अयमेवेत्युत्तरवाक्यार्थः ।

---

( गृहस्थाश्रम में ) निवास करता है । प्रजा की उचित रक्षा करके यह भी प्रति-दिन तपका सञ्चय करता है अपना तप बढ़ाता है । और इन्द्रिय विजयी धार्मिक इस राजा का पुण्यकीर्तिवाला, चारण मिथुनों द्वारा गाया जाता हुआ, 'राज' पूर्वक 'मुनि' यह नाम स्वर्ग तक छा रहा है । अर्थात् इसे स्वर्ग में भी देवता गण 'राजऋषि' नाम से स्मरण करते हैं । अतः यह भी तपस्वी मुनियों की ही तरह परोपकार परायण होने से 'राजर्षि' नाम से जगत में प्रसिद्ध हो रहा है ॥१५॥

**दूसरा ऋषिकुमार**—सखे ! क्या बल नामक असुर के मारने वाले भगवान् इन्द्र का मित्र राजा दुष्यन्त यही है ? ।

**पहिला**—और क्या । अथवा—हाँ, यही तो है ।

द्वितीयः—तेन हि—

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं, पौरुहूते च वज्रे ॥ १६ ॥

नैतदिति । यत्—नगरस्य परिघ इव प्रांशू बाहू यस्यासौ—नगरपरिघ-प्रांशुबाहुः = पुरद्वारार्गलदीर्घपीवरभुजदण्डः । अयम्=दुष्यन्तः । एकः = एकाकी खल्वयं दुष्यन्तः। उदधिरेव श्यामा। उदधिना श्यामेति वा। [यद्वा-श्यामश्चासावु-दधिश्चोदधिश्यामः । राजदन्तादेराकृतिगणत्वाच्छ्यामशब्दस्य परप्रयोगः ]-सीमा यस्याः सा—ताम्=उदधिश्यामायमानसीमां। समुद्रमेखलाम् । [1]कृष्णसागरपर्यन्ता-मिति वाऽर्थः। समग्रां = निखिलां । धरित्रीं = भुवं । भुनक्ति = पालयति,—एतन्न चित्रम् = न—आश्चर्यकारकम् । हि = यतः । दैत्यैः = दानवैः । सक्त-वैराः = बद्धवैराः । देवाः = सुरा अपि । समितिषु = युद्धेषु । अस्य = दुष्य-न्तस्य । अधिज्ये = समौर्वीके । धनुषि=कोदण्डे। पुरुहूतस्येदं-पौरुहूतं—तस्मिन्= इन्द्रसम्बन्धिनि । वज्रे = कुलिशे च । विजयं = स्वकीयं जयम् । आशंसन्ते = सम्भावयन्ति । अभिलषन्ति ।

न केवलं निखिलभूवलयपालकोऽयं, किन्तु— महेन्द्रसमपराक्रमो देवाना-

---

दूसरा—तो फिर—

इसमें कुछ भी आश्चर्य की बात नहीं है, कि-यह राजा जिसके लम्बे २ भुजदण्ड नगर के द्वार के अर्गल ( आगल के दण्ड ) के समान हैं—समुद्र पर्यन्त-सम्पूर्ण पृथिवी की इकला ही रक्षा करता है, एवं उसका उपभोग करता है । क्योंकि—दैत्यों से वैर रखने वाले देवता भी युद्ध में क्या तो महेन्द्र के वज्र से, या इस राजा के चढ़े हुए धनुष से ही अपनी विजय की आशा करते रहते हैं । अर्थात—यह राजा संपूर्ण पृथिवी का राज्य करता है—इसमें तो

---

१ कृष्णसागर = 'काला सागर' । रूसदेशे 'ब्लेक सी' इति प्रसिद्धः ।

**उभौ**—( उपगम्य— ) विजयस्व राजन् ! ।

**राजा**—( आसनादुत्थाय— ) अभिवादये भवन्तौ ।

**उभौ**—स्वस्ति भवते ( इति फलान्युपहरतः ) ।

**राजा**—(सप्रणामं परिगृह्य—) आगमनप्रयोजनं श्रोतुमिच्छामि[1]।

**उभौ**—विदितो भवानिहस्थस्तपस्विनाम् । ते च भवन्तमभ्यर्थयन्ते ।

---

मपि युद्धेषु साहाय्यमाचरतीति—माहात्म्यातिशयोऽस्योक्तः । [ 'अनेन भुजबलात् सर्वे शत्रवो जिता' इति कारणे वक्तव्ये, कार्यमात्रं भूवलयविजय एवोक्त इति—पर्यायोक्तम् । 'नैतच्चित्र'मित्यर्थं प्रति उत्तरवाक्यार्थस्य हेतुत्वात्काव्यलिङ्गञ्च । समुच्चयः, उपमा च ] ॥ १६ ॥

उपगम्य = समीपमुपसृत्य । अभिवादये = प्रणतोऽस्मि । उपनयतः = अर्पयतः ।

इहस्थः = आश्रमपरिसरे स्थितः । तपस्वि नाम् = आश्रमवासिमुनीनां ।

---

आश्चर्य ही क्या है, इसकी सहायता की अपेक्षा तो दैत्यों के साथ होनेवाले युद्ध में देवतागण व इन्द्र भी करते हैं। क्योंकि स्वर्ग में जाकर यह इन्द्र की भी युद्ध में सहायता करता है ॥ १६ ॥

**दोनों ऋषिकुमार**—( राजा के पास जाकर— ) हे राजन् ! आपकी विजय हो ।

**राजा**—( आसन से उठकर ) मैं आप लोगों को अभिवादन ( वन्दन करता हूं और आप लोगों से शुभ आशीर्वाद की याचना ) करता हूं ।

**दोनों ऋषिकुमार**—राजन् ! तुमारा कल्याण हो ।

( दोनों ऋषिकुमार राजा को फल भेंट करते हैं ) ।

**राजा**—( प्रणाम पूर्वक फल लेकर ) मैं आप लोगों के आने का उद्देश्य सुनना चाहता हूं ।

**दोनों ऋषिकुमार**—आपका आना यहाँ के तपस्वियों को ज्ञात हो गया है, अतः वे आपसे अभ्यर्थना ( मांग ) करते हैं कि—

[1] आज्ञापयितुमिच्छामि

राजा—किमाज्ञापयन्ति ?।

उभौ—तत्रभवतः कण्वस्य कुलपतेरसांनिध्याद्रक्षांसि न इष्टि-विघ्नमुत्पादयन्ति, तत्कतिपयदिवसमात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

राजा—अनुगृहीतोऽस्मि ।

विदूषकः—( अपवार्य ) एस दाणिं भअदो अणुऊलो गलहत्थो । [ एष इदानीं भवतोऽनुकूलो गलहस्तः ]।

---

अभ्यर्थयन्ते = प्रार्थयन्ते । असान्निध्यात् = अनुपस्थित्या । इष्टिविघ्नम् = यज्ञविघ्नम् । तत् = तस्मात् । कतिपये दिवसा एव—कतिपयदिवसमात्रं= कियन्त्यपि दिनानि । सारथिरेव द्वितीयः—सहायो यस्यासौ तेन = सारथिसहायेन । सनाथीक्रियताम्=परिपाल्यताम् । राजपरिजनसम्बन्धे तपोवनोपरोधसम्भवात्सारथिद्वितीयेनेत्युक्तम् ।

अपवार्य = परावृत्य । तल्लक्षणमुक्तं विश्वनाथेन,—'भवेत्तदपवारितं—रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते'—इति । अनुकूलः = अभीष्टः । गलहस्तः = अर्धचन्द्र इव । आयाससाध्यस्याप्यस्याश्रमनिवासस्य भवतोऽभि-

---

राजा—पूज्य तपस्वियों की मुझे क्या आज्ञा है ? ।

दोनों ऋषिकुमार—यहाँ के कुलपति ( आश्रम के अधिष्ठाता ) पूज्यपाद भगवान् कण्व के किसी कारणवश बाहर चले जाने के कारण, राक्षस लोग हमारे यज्ञ में विघ्न कर रहे हैं । अतः यज्ञ की रक्षार्थ थोड़े दिनों के लिए आप सारथि के साथ एकाकी ही यहाँ निवास करें । इस प्रकार आप इस आश्रम की रक्षा करें और इस आश्रम को सनाथ करें । अर्थात् इस आश्रम की शोभा को बढ़ावें ।

राजा—मैं इस प्रकार सेवा की आज्ञा से कृतार्थ हो गया । अर्थात् मेरा अहोभाग्य है-जो ऋषियों ने मुझे इस कार्य के करने की आज्ञा प्रदान की है ।

विदूषक—( अलग से ) यह तो आपकी इच्छा के अनुकूल ही गलहस्त ( गर्दनियाँ, धक्का देना, अर्थात् बलात् पकड़कर काम में लगाना ) है ।

१. अभ्यर्थना

**राजा**—( स्मितं कृत्वा— ) रैवतक ! मद्वचनादुच्यतां सारथिः; सबाणकार्मुकं रथमुपस्थापयेति ।

**दौवारिकः**—जं देवो आणवेदि ।

[ यद्देव आज्ञापयति ] ।

**उभौ**—( सहर्षम्— )

**अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।**
**आपन्नाऽभयसत्रेषु दीक्षिताः खलु पौरवाः ॥ १७ ॥**

---

मतसाधकतयाऽनुकूलगलहस्तता । ग्रीवायां हस्तं दत्त्वाऽभिमतकार्ये योजनं-( बलान्नियोगः- ) प्रकृते [२]गलहस्तः । उपहासप्रियत्वाद्विदूषकस्येत्थमुक्तिः ।

मद्वचनादुच्यतां=महाराजदुष्यन्त इत्थमाज्ञापयतीत्युच्यताम् । बाणैः कार्मुकेण च सहितं-सबाणकार्मुकम्, धनुर्बाणसनाथम् । उपस्थापय=आनय । उभौ=तापसौ । 'सहर्षम्' इत्यस्य 'ऊचतु'रिति शेषः । **अनुकारिणीति** । पूर्वेषां=ययाति-पुरुप्रभृतिपूर्वनृपाणाम् । अनुकारिणि=सदृशे । त्वयि=श्रीमति । इदं=मुनिवचः-पालनम् । युक्तरूपम्=अनुरूपम् । अतिशयेन युज्यते एव । खलु=निश्चयेन । आप-न्नानां=विपन्नानाम् । अभयमेव=अभयदानमेव । सत्राणि=यज्ञाः । तेषु विपन्नरक्ष-णयज्ञेषु । 'सत्रमाच्छादने यज्ञे' इत्यमरः । पुरोरपत्यानि पौरवाः=पुरुवंश्या नृपाः । दीक्षिताः=धृतनियमा एव । [ काव्यलिङ्गं । रूपकमर्थान्तरन्यासश्च । ] ॥ १७ ॥

---

राजा—( मुसकुरा कर ) रैवतक ! जाओ, मेरी आज्ञा से सारथि को कहो, कि-मेरे धनुष बाण के साथ ही रथ को यहाँ लावे ।

दौवारिक—जो हुक्म महाराज का ।

दोनों ऋषिकुमार—( हर्ष के साथ ) हे राजन् ! अपने पूर्व पुरुषों के समान ही उपकार परायण आपके लिए तो यह-यज्ञ की रक्षार्थ सन्नद्ध रहना-उचित ही है । पौरव राजवंश ( दुष्यन्त का राजघराना ) तो विपत्ति ग्रस्तों को अभयदान देने के यज्ञ में (सदावर्त) सदा से ही दीक्षित (गृहीतव्रत) है ॥ १७ ॥

---

१ सत्रं='छेत्र' इति भाषा । २ गलहस्तः—'गर्दनियाँ देना' इति भाषायाम् ।

राजा—( सप्रणामं- ) गच्छतां भवन्तौ, अहमनुपदमागत एव।

उभौ—विजयस्व। ( इति निष्क्रान्तौ )।

राजा—माधव्य! अप्यस्ति कुतूहलं शकुन्तलादर्शनं प्रति ?।

विदूषकः—पढमं अपरिबाधं आसी, सम्पदं रक्खसवुत्तन्तेण सपरिबाधं।

[ [1]प्रथममपरिबाधमासीत्, साम्प्रतं राक्षसवृत्तान्तेन सपरिबाधम् ]।

राजा—मा भैषीः, ननु मत्समीप एव वर्त्तिष्यसे।

---

पदमनु लक्ष्यीकृत्य–अनुपदं = पादन्यासचिह्नमनुसरन्। आगत एव = आगन्तुं प्रवृत्त एव। आदिकर्मणि क्तः। अप्यस्तीति। अपिरत्र प्रश्ने। प्रथमम् = इतो राक्षसवृत्तश्रवणात्पूर्वं। सपरीवाहं = विपुलं। [ वेगेन विपुलं वहन् प्रणाल इव कौतुकप्रवाह आसीदित्याशयः ]। इदानीं = संप्रति। तापसमुखाद्राक्षसवृत्तान्तश्रवणात्। बिन्दुरपि = अल्पमात्रमपि। नेदानीं तापसाश्रमे गतुमभिलषामीत्याशयः। पाठान्तरे—अपरिबाधम् = निरर्गलम्। सपरिबाधम् = अवरुद्धमित्यर्थो बोध्यः। मत्समीप इति। एवञ्च मदभिरक्षितस्य कुतस्ते

---

राजा—( प्रणाम पूर्वक ) आप लोग पधारिए, मैं भी आप लोगों के पीछे-पीछे आ ही रहा हूं।

दोनों ऋषिकुमार—आपकी विजय हो। ( दोनों जाते हैं )।

राजा—सखे माधव्य! क्या तुमारी भी शकुन्तला को देखने की उत्कण्ठा है ?।

विदूषक—पहिले तो बड़ी ही इच्छा थी, परन्तु अब ( ऋषिकुमारों से ) राक्षसों का वृत्तान्त सुनकर तो अब उस इच्छा में कुछ कमी हो गई है।

राजा—डरो मत! मेरे ही पास रहोगे। अतः भय की कोई बात नहीं है।

---

१ 'प्रथमं सपरीवाहमासीत्। इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशिष्टः' पा०।

**विदूषकः**—एस तुह रथ-चक्करक्खीभूदोह्मि, जइ ण को वि आअच्छिअ विग्घं करेदि।

[ एष तव रथचक्ररक्षीभूतोऽस्मि, यदि न कोऽपि आगत्य विघ्नं करोति ]।

**दौवारिकः**—( प्रविश्य- ) जअदु जअदु भट्टा। सज्जो रधो भत्तुणो विजअप्पअणं अवेक्खदि। एस उण णअरादो देवीनं आणत्तिहरो करभओ आअदो।

[ जयतु जयतु भर्त्ता, सज्जो रथो भर्तुर्विजयप्रयाणमपेक्षते। एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः ]।

**राजा**—( सादरं- ) किमम्बाभिः प्रेपितः ?।

**दौवारिकः**—अध इं।

---

राक्षसाद्भयमित्याशयः। रथचक्रस्य—रक्षीभूतः=रक्षको जातः। 'तव पृष्ठतस्तिष्ठामी'ति भयातिशयो दर्शितः। शूरत्वञ्च साटोपमात्मन उच्यत इति परिहासानुगुण्यमस्य वचसो बोध्यम्। विघ्नं करोतीति। यावन्न कोऽपि तर्जयति मां तावदहं रक्षक इति—[ अहो! शौर्यं विदूषकभट्टस्येति ]—परिहासपेशलं वचो बोध्यमेतत्।
सज्जः = सन्नद्धः। भर्त्तुः = महाराजस्य। विजयप्रयाणम्=विजयार्थं गमनम्। अपेक्षते = प्रतीक्षते। देवीनां = राजमातॄणाम्। आज्ञप्तिं हरति तच्छीलः-

---

विदूषक—तो मैं आपके रथ के चक्र ( पहिया ) की रक्षार्थं रक्षक बनकर बैठता हूं, यदि किसी ने आकर विघ्न न किया तो। अर्थात्—यदि लड़ने भिड़ने का कहीं काम पड़ेगा तो मैं भाग जाऊँगा। ( वाह रे रक्षक! )।

[ द्वारपाल का प्रवेश ]।

दौवारिक (द्वारपाल)—महाराज का जय जयकार हो। आपका विजय रथ तैयार है, और आपके विजयार्थ प्रयाणकी प्रतीक्षा कर रहा है। और यह करभक नामक हरकारा राजमाताओं की कोई सूचना लेकर राजधानी से आया है।

राजा—क्या हमारी माताओं ने उसे भेजा है ?।

द्वारपाल—जी हाँ।

[ अथ किम् ]।

राजा—तेन हि प्रवेश्यताम्।

दौवारिकः—तह। ( इति निष्क्रम्य पुनः करभकेण सह प्रविश्य- ) करभअ ! एसो भट्टा, उवसप्पदु भवं।

[ तथा। करभक ! एष भर्त्ता। उपसर्पतु भवान् ]।

करभकः—( उपसृत्य, प्रणम्य च- ) जअदु जअदु भट्टा। देवीओ आणवेन्ति।

[ जयतु जयतु भर्त्ता। देव्य आज्ञापयन्ति ]।

राजा—किमाज्ञापयन्ति ?।

करभकः—आगामिणी चउट्ठदिअसे [१]पवुत्थपालणो णाम उववासो भविस्सदि; तहिं दीहाउणा अवस्सं अह्ले सम्भावइदव्व त्ति।

[ 'आगामिनी चतुर्थ (र्थी) दिवसे प्रवृत्तापारणो नाम उपवासो भविष्यति, तस्मिन् दीर्घायुषाऽवश्यं वयं सम्भावयितव्या' इति ]।

आज्ञप्तिहरः = समाचारवाहकः। अम्बाभिः = मातृभिः। अथ किम् = एवमेतत्। प्रवृत्ता पारणा यस्यासौ—प्रवृत्तपारणः = क्रियमाणोपवाससमाप्तिः। प्रारब्धस्योपवासस्य समाप्तिश्चतुर्थे दिवसे, चतुर्थ्यां वा भविष्यतीति भावः। सम्भावयितव्याः = तत्रोपस्थित्या वयं परितोषणीयाः। उपवासः प्रारब्ध एव केवलं

राजा—तो उसे शीघ्र यहाँ लाओ।

दौवारिक ( द्वारपाल )—जैसी आज्ञा। ( बाहर जाकर करभक के साथ पुनः प्रवेश कर- ) करभक ! ये महाराज बैठे हैं। आप जाइए।

करभक—( पास जाकर प्रणाम कर के ) महाराज का जय जयकार हो। महाराज ! राजमाताओं की आज्ञा है, कि—

राजा—माताओं की क्या आज्ञा है ?।

करभक—माताओं ने आज्ञा की है, कि–आगामी चतुर्थी के दिन ( या आज से चौथे दिन ) 'पुत्रपिण्डपारण' या 'प्रवृत्तपारण' नामक हमारा उपवास

१ 'पुत्रपिण्डपारणो'। 'पुत्रपिण्डपालनो'। पा०।

राजा—इतस्तपस्विनां कार्य्यम्, इतो गुरुजनाज्ञा, उभयमप्यनतिक्रमणीयम्, तत्किमत्र प्रतिविधेयम् ?।

विदूषकः—भो ! तिसङ्कु बिअ अन्तरा चिट्ठ।

[ भोः ! त्रिशङ्कुरिवान्तरा तिष्ठ ]।

तस्य समाप्तिश्चतुर्थेऽह्नि भविष्यतीति उपवासाऽकरणप्रार्थना नैवायुष्मता कार्येति व्यज्यते। पाठान्तरे-पुत्रदत्तपिण्डेन = कवलेन, पारणा = व्रतसमाप्तिर्यत्रेत्यर्थो बोध्यः। अनतिक्रमणीयम् = अनुल्लङ्घनीयम्। प्रतिविधेयम् = कर्त्तव्यम्।

अन्तरा = मध्ये। न नगरं गच्छ, न च तपोवनं गच्छेत्याशयः।

---

होगा। उस दिन आयुष्मान् ( आप ) अवश्य उपस्थित होकर हमारा मान एवं हर्ष बढ़ावें।

राजा—इधर तो मुझे तपस्वियों का कार्य करना है। उधर गुरुजनों (माताओं) की आज्ञा का भी पालन करना है, ये दोनों ही आवश्यक कार्य हैं। अब क्या करना चाहिए ?।

विदूषक—हे मित्र ! त्रिशंकु की तरह बीच में ही लटकते रहो। [त्रिशंकु राजा-सदेह स्वर्ग जाने की इच्छा से यज्ञ करने को प्रवृत्त हुआ और अपने कुल गुरु वसिष्ठजी से यज्ञ कराने की प्रार्थना की। गुरुजी ने किसी कारणवश तत्काल ऐसा यज्ञ कराने की अपनी असमर्थता प्रकट की। तब त्रिशंकु ने वसिष्ठजी के विरोधी विश्वामित्रजी के द्वारा ऐसा यज्ञ कराया। मन्त्रों के प्रभाव से त्रिशंकु इसी देह से स्वर्ग को चला। पर गुरु वसिष्ठजी का अपमान करके उनकी अनुमति के बिना ही यज्ञ करने से देवता असन्तुष्ट हो गये। और उन्होंने उसे स्वर्ग से गिरा (ढकेल) दिया। नीचे से विश्वामित्र जी मन्त्रों से उसे स्वर्ग भेजने के लिये जोर लगा रहे थे। फल यह हुआ कि त्रिशंकु आकाश में अधर में ही लटकने लगा। स्वर्ग में देवताओं ने नहीं घुसने दिया। भूमि पर विश्वामित्र जी ने उसे नहीं गिरने दिया। अतः वह न इधर (भूमि पर वापिस) ही आ सका, न ऊपर ही जा सका। बेचारा बीच में (आकाश में) ही उलटा होकर लटकता रह गया। अतः यह आकाश में उल्टा होकर आज तक लटक रहा है। इसके मुख से जो लार गिरती है उससे 'कर्मनाशा' नदी निकली है—ऐसी पौराणिक कथा है ]।

राजा—सत्यमाकुलीभूतोऽस्मि ।

कृत्ययोर्भिन्नदेशत्वाद् द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैलैः स्रोतः स्रोतोवहां यथा ॥१८॥

( विचिन्त्य- ) सखे ! माधव्य ! त्वमप्यम्बाभिः पुत्र इव गृहीतः, स भवानितः प्रतिनिवृत्त्य तपस्विकार्य्यव्यग्रतामस्माकमावेद्य तत्रभवतीनां पुत्रकार्य्यमनुष्ठातुमर्हति ।

---

सत्यमिति—अर्द्धाङ्गीकारे । आकुलीभूतः = व्याकुलः ।

कृत्ययोरिति । कृत्ययोः = कार्ययोः । भिन्नो देशो ययोस्तयोर्भावस्तत्त्वं, तस्मात्–भिन्नदेशत्वात् = नानादेशस्थत्वात् । मातृकार्यं राजधान्यां, मुनिकार्यं च तपोवने इत्येकदा द्वयोरनुष्ठानाऽसम्भवादित्याशयः । मे मनः—पुरः = अग्रे । शैलैः = पर्वतैः । प्रतिहतम् = अवरुद्धं । स्रोतोवहां = नदीनां । स्रोतः = प्रवाहः । यथा = इव । द्वैधीभवति = द्विधा भवति । संशयाकुलं भवति । नदी-प्रवाहोऽपि–पर्वतैरवरुद्धो द्विधा भवति । [ उपमा । अतिशयोक्तिश्च ] ॥ १८ ॥

इतः = आश्रमपरिसरात् । तपस्विनां कार्येषु व्यग्रस्तस्य भावस्तां–तपस्वि-

---

राजा—मित्र ! वस्तुतः मैं तो बड़ा ही व्याकुल हो गया हूं । दोनों कार्य अवश्य कर्त्तव्य हैं । अब किसे करूँ, किसे छोड़ूँ ? ।

जैसे सामने पर्वत के आ जाने से उससे अवरुद्ध हो नदी का प्रवाह दो भाग में बट जाता है, पर्वत के दोनों ओर बहने लगता है, ऐसे ही इन दोनों कार्यों के भिन्न २ दिशाओं में होने के कारण प्रतिहत हो मेरा भी मन द्विविधा में पड़ गया है । मैं 'इसे करूँ' या 'उसे करूँ' इस संशय में पड़ गया हूं ॥१८॥

( कुछ सोचकर ) सखे माधव्य ! हमारी माताओं ने तुमको भी पुत्र की ही तरह मान रखा है । अतः तुम यहाँ से राजधानी जाकर, माताओं को मेरी तपस्वियों के कार्य में लगे रहने की सूचना देकर, मेरी आने में असमर्थता बताकर, उनका पुत्रोचित कार्य का सम्पादन तुम्हीं कर देना । [ इस व्रत का पारण पुत्र के हाथ से दिए हुए भोजन से होता है ] ।

विदूषकः—भो ! मा रक्खसभीरुअं मं अवगच्छ।

[ भोः ! मा राक्षसभीरुकं मामवगच्छ ]।

राजा—( स्मितं कृत्वा— ) भो महाब्राह्मण ! कथमिदं त्वयि सम्भाव्यते ?!

विदूषकः—तेण हि राआणुअ बिअ गच्छिदुं इच्छामि।

[ तेन हि राजानुज इव गन्तुमिच्छामि ]।

राजा—'ननु तपोवनोपरोधः परिहरणीय' इति सर्वानेवाऽनुयात्रिकांस्त्वयैव सह प्रेषयिष्यामि।

---

कार्यव्यग्रतां = मुनिजनकार्यसंसक्तताम्। भीरुरेव भीरुकः, राक्षसैर्भीरुकस्तं = राक्षसभीतम्।

यद्यहं राजधानीमभिगच्छामि तदा भवान्मां राक्षसभीतं मन्येत, अतो यदि तथा न मनुते भवांस्तदा गच्छामीत्याशयः। महाब्राह्मण ! = ब्राह्मणश्रेष्ठ ! अत्र महाब्राह्मणेति सम्बोधनमुपहासादेव। महाब्राह्मणपदस्य पुण्यजनादिशब्दवद्विपरीतलक्षणया, रूढ्या वा निन्दितब्राह्मणपरत्वात्। तदुक्तं—'शङ्खे, तैले, तथा मांसे, वैद्ये, ज्यौतिषिके, द्विजे। यात्रायामथ निद्रायां महच्छब्दो न दीयते'॥ इति। राजानुज इव = राजकनिष्ठभ्रातेव। नन्विति। स्वीकृतावत्र ननुः। तपोवनस्योपरोधः = तपोवनबाधा। इति=इति हेतोः। अनुयात्रिकान्=सैनिकान्। प्रेषयिष्या-

---

विदूषक—हे मित्र ! तुम मुझे कहीं राक्षसों से डरकर भागा हुआ तो नहीं समझ लोगे ?।

राजा—( हँसकर- ) हे महाब्राह्मण ! ( ब्राह्मणों में श्रेष्ठ वा मुर्दा-फरोश ), तुमको भला हम डरकर भागा हुआ कैसे समझ सकते हैं ?। तुम तो बड़े वीर हो। (ब्राह्मण को महाब्राह्मण कहना एक तरह की गाली ही है। क्योंकि मृतक के ११ दिन के भीतर का दान लेनेवाला ब्राह्मण ही महाब्राह्मण कहलाता है )।

विदूषक—तो मैं राजा के छोटे माई की ही तरह शान से, खूब ठाट-बाट से ही राजधानी में जाना चाहता हूं। क्योंकि अब तो मैं राजा का छोटा भाई ही हो गया हूं।

राजा—ठीक है, मैं भी अपने साथ के सभी सैनिक व दर्बारी मुसाहब

विदूषकः—( सगर्वं— ) जुअराजोह्मि दाणिं संवुत्तो ।

[ युवराजोऽस्मीदानीं संवृत्तः ]।

राजा—( आत्मगतं— ) चपलोऽयं ब्राह्मणबटुः, कदाचिदि-मामस्मत्प्रार्थनामान्तःपुरिकाभ्यो निवेदयेत्। भवतु एवन्तावद्वक्ष्यामि। (विदूषकस्य हस्तं गृहीत्वा, प्रकाशं—) सखे ! माधव्य ! ऋषिगौरवादाश्रम-पदं प्रविशामि, न खलु सत्यमेव तापसकन्यायामभिलाषो मे । पश्य—

क्व वयं, क्व परोक्षमन्मथो

१ मृगशावैः सह वर्द्धितो जनः ।

मीति । एवञ्च तव राजभ्रातृवद्गमनाभिलाषस्य साफल्यं सम्भवत्येवेत्याशयः । युवराजः=राजप्रतिनिधिः । ब्राह्मणबटुः=ब्राह्मणबालको माधव्यः । अस्मत्प्रार्थनाम्= मम शकुन्तलाऽनुरागम् । आन्तःपुरिकाभ्यः=अन्तःपुरसुन्दरीभ्यो, महादेव्यै च ।

एवन्तावदिति । मनसि किञ्चिद्विभाव्येत्यर्थः । ऋषीणां गौरवात्=मुनि-वचनादरात् । आश्रमपदं=तपोवनं । प्रविशामि=गच्छामि । सत्यमेव=वास्तविकम् ।

क्वेति । क्व वयं=वयं नागरिका महाकुलीनाः । सम्राट्पदे स्थिताः, क्व । परोक्ष

आदि को-तपोवन में विघ्न न हो-इसलिये तुमारे साथ ही नगर ( राजधानी ) को भेज देना चाहता हूं । अतः इनके साथ तुम खूब ठाठ से राजा के ( मेरे ) भाई की ही तरह जा सकते हो ।

विदूषक—तब तो मैं युवराज (राज्य का उत्तराधिकारी) ही हो गया हूं ।

राजा—( मन ही मन ) यह ब्राह्मण बालक तो बड़ा चञ्चलस्वभाव का है । कहीं शकुन्तला वाली-हमारी इस बात को महल की रानियों से जाकर न कह दे । अच्छा, इसको ऐसे कहता हूँ । ( विदूषक का हाथ पकड़कर, प्रकट में-) मित्र माधव्य ! मैं तो ऋषियों के कार्य की गुरुता को देखकर ही आश्रम में जा रहा हूँ । सचमुच में मेरा किसी तापस कन्या में मन नहीं लगा है । देखो--

कहाँ तो हम लोग शहर के रहने वाले, और कहाँ मृगों के बच्चों के साथ

१ 'सममेधितो जनः' पा० ।

परिहासविजल्पितं सखे !
परमार्थेन न गृह्यतां वचः ॥ १६ ॥

**विदूषकः**—एवण्णेदं ! ।

[ एवमेतत् ! ] ।

**राजा**—माधव्य ! त्वमपि स्वनियोगमनुतिष्ठ, अहमपि तपोवन-

---

मन्मथो यस्यासौ=अज्ञातकामकथः। मृगाणां शावैः सह=हरिणशिशुभिः सह। परिवर्द्धितः=पालितः। जनः=शकुन्तलारूपः। क्व ?। महदन्तरमेतत्। अतो नास्माकमीदृशकर्मणि कथमपि प्रवृत्तिः सम्भाव्यते—इत्याशयः। 'मृगशावैः सह परिवर्द्धित' इत्यनेन मौग्ध्यातिशयः, कामकलाशून्यता च सूचिता। अतः-सखे !=हे मित्र ! परिहासेन=उपहासेन। विजल्पितम्=मया पूर्वमुक्तं। वचः=वाक्यं। परमार्थेन=तत्त्वतः। सत्यमेतदिति। न गृह्यताम्=नैव त्वया विभाव्यताम्।

एतेन-शकुन्तलानुरागादिवर्णनं सर्वं मत्कृतं काल्पनिकमासीदित्याशयः। [ एवञ्च 'संवृतिः स्वयमुक्तस्य स्वयं प्रच्छादनं भवे'दिति दर्पणोक्तं संवृतिर्नाम मुखसन्ध्यङ्गं प्रदर्शितं वेदितव्यम्। विषमोऽलङ्कारः ] ॥ १६ ॥

एवमेतत्=सत्यमाह भवान्। यद्वा एवमेतदिति काकुः। ( अच्छा ! क्या ऐसी बात है ! )। स्वस्य नियोगः=कार्यम्। राजधानीगमनलक्षणम्।

---

पली हुई। भोली-भाली तपस्वियों की बालिकाएं, भला हमारा इनका क्या जोड़ा। अतः हे सखे ! हमने हँसी में तुमसे शकुन्तला के बारे में जो गढ़कर बातें कही थीं, उन्हें सच्ची मत समझ लेना। यह तो केवल एक विनोदमात्र ही था। इसमेंसचाई कुछ नहीं है।

**विदूषक**—अच्छा ! ऐसी बात है !। आपने हमसे यह सब हँसी में ही कहा था, अच्छा तो ठीक है।

**राजा**—सखे माधव्य तुम भी हमारे कहे अनुसार नगर में जाकर माताओं

रक्षार्थं तत्रैव गच्छामि ।

( इति निष्क्रान्ताः—सर्वे )।

❀ इति द्वितीयोऽङ्कः ❀

तत्रैव = आश्रमपदे एव ।

इति श्रीगुरुप्रसादशास्त्रिकृतायामभिज्ञानशाकुन्तलाऽ-

भिनवराजलक्ष्मीटीकायां—द्वितीयोऽङ्कः ।

का कार्य करो और मैं भी तपोवन की रक्षा के लिये वहाँ जाता हूं ।

[ सब–जाते हैं ]।

आचार्य–श्रीसीतारामशास्त्रिकृतायां भाषाटीकायां

द्वितीयोऽङ्कः समाप्तः

# ❀ अथ तृतीयोऽङ्कः। ❀

( ततः प्रविशति कुशानादाय यजमानशिष्यः )।

**शिष्यः**—( विचिन्त्य, सविस्मयम्— ) अहो ! महाप्रभावो राजा दुष्यन्तो येन प्रविष्टमात्र एवाऽऽश्रमं तत्रभवति सारथिद्वितीये राजनि[1] निरुपप्लवानि नः कर्माणि संवृत्तानि।

का कथा वाणसन्धाने, ज्याशब्देनैव दूरतः।
हुङ्कारेणेव धनुषः स हि विघ्नान् व्यपोहति ! ॥१॥

---

## ❀ अभिनवराजलक्ष्मीः ❀

अथ कथान्तरमारभमाणो महाकविर्वस्तुसङ्घटनाय विष्कम्भकनामकमर्थोपक्षेपकमारचयति—तत इति। कुशानादाय=वनात्कुशानादाय। यजमानस्य=यज्ञकर्तुर्मुनेः। शिष्यः=छात्रः। विचिन्त्य=विचारमभिनीय। विस्मयेन सहितं यथा स्यात्तथा सविस्मयम्। उवाचेति शेषः। महान् प्रभावो यस्य स महाप्रभावः=महानुभावः। 'अनुभावः—प्रभावेऽपी'त्यमरः। येन=यतः। सारथिद्वितीये=सूतमात्रपरिजने। तत्रभवति=माननीये। राजनि=दुष्यन्ते। आश्रमं=तपोवनं। प्रविष्ट एव प्रविष्टमात्रं, तस्मिन् प्रविष्टमात्रे=समागतवति। उपप्लवान्निर्गतानि-निरुपप्लवानि=निरुत्पातानि। 'उपप्लवः सैंहिकेये विप्लवोत्पातयोरपी'ति-मेदिनी। नः=अस्माकं। कर्माणि=यज्ञादिकार्याणि। संवृत्तानि=निष्पन्नानि। का कथेति। हि=यतः, सः=राजा। दूरतः=दूरादेव, धनुषः=कार्मुकस्य, हुङ्कारेणेव=

---

# अथ तृतीय अङ्क।

[ कुशा लिए हुए यजमान ( ऋषि ) के शिष्य का प्रवेश ]।

शिष्य—(कुछ विचारकर, आश्चर्य पूर्वक–) अहो ! यह राजा दुष्यन्त तो बड़ा ही प्रभावशाली है। क्योंकि–सारथि के साथ इस राजा के आश्रम में आते ही हमारे यज्ञ आदि सभी कार्य निर्विघ्न सम्पन्न हो गये !।

बाण के सन्धान की तो बात ही क्या है, [illegible] धनुष की टङ्कार रूपी

---

१. निरुपद्रवाणि

यावदेतान् वेदिसंस्तरणार्थं दर्भानृत्विग्भ्य उपहरामि। ( परिक्रम्यावलोक्य च, आकाशे- ) प्रियंवदे ! कस्येदमुशीरानुलेपनं, मृणालवन्ति च नलिनीदलानि नीयन्ते ? । ( श्रुतिमभिनीय- ) किं कथयसि—'आतपलङ्घनाद्बलवदसुस्थशरीरा शकुन्तला, तस्याः शरीरनिर्वापणाये'ति ? ।

---

'हुं'शब्देनैव, ज्यायाः शब्देन = मौर्वीध्वनिना, विघ्नान् = राक्षसादिकृतोपद्रवान्, व्यपोहति=अपसारयति । बाणस्य सन्धाने=शरसन्धाने तु, का कथा = प्रसङ्ग एव कः । विघ्नानां कथैव तदातु विलयं व्रजेदित्याशयः । एवञ्च दुष्यन्तेनाऽनायासेन विघ्ना निरस्ता इति प्रकटितम् । [ उत्प्रेक्षालङ्कारः ] ॥ १ ॥

शिष्यः स्वागमनप्रयोजनमाह —यावदिति । एतान् = मद्धस्तस्थान् । वेद्याः संस्तारणायेति—वेदिसंस्तरणार्थं = यज्ञवेदिसमास्तरणार्थं । कुशकण्डिकार्थमिति यावत् । ऋत्विग्भ्यः = होतृभ्यः । यावत्=प्रथमं तावदुपाहरामि = उपनेष्यामि । 'यावत्पुरानिपातयो'रिति लट् । परिक्रम्य = किञ्चिच्चलनं नाटयित्वा ।

आकाश इति । रङ्गमध्ये नेपथ्यातिरिक्तं स्थानमाकाश इत्युच्यते ।

तदुक्तं दशरूपके—

'किं ब्रवीष्येव'मित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवाऽनुक्तमप्येकः तत्स्यादाकाशभाषितम ॥' इति ।

कस्य = कस्योपभोगाय, इदं = तव हस्तस्थम् । उशीरकल्पितमनुलेपनम्—उशीरानुलेपनम्=वीरणमूलकल्पितमङ्गानुलेपनं । नलिनीदलानि=कमलिनीपत्राणि । मृणालानि सन्त्येषां, तानि मृणालवन्ति = बिससहितानि । सन्तीति शेषः । श्रुतिमभिनीय = श्रवणं नाटयित्वा । किं कथयसि ?=किमभिदधासि । ? आतपेन = घर्मेण । लङ्घनात्=अतिक्रमात् । बलवत्=दृढम् । असुस्थशरीरा=पीडिताङ्गयष्टिः ।

---

हुँकार से ही-यह तो राक्षस आदि के विघ्नों को दूर कर देता है ॥ १ ॥

अच्छा, तब तक वेदि के आस्तरण (आच्छादन, संस्कार विशेष) के लिए इन कुशाओं को मैं ऋत्विक् लोगों (होताओं) को जाकर देता हूँ। ( कुछ चलकर, सामने देखकर, आकाश में–अर्थात् स्वयमेव ) प्रियंवदे ! यह खस का अनुलेपन ( अङ्गराग ) और मृणाल ( कमल के सफेद तन्तु ) युक्त नलिनी (कमलिनी) कमल की लता के पत्ते किसके लिये ले जा रही हो ? । ( कानमें हाथ लगाकर कुछ सुनने का सा

प्रियंवदे ! यत्नादुपचर्य्यताम् । सा हि तत्रभवतः कुलपतेर्द्वितीय-मुच्छ्वसितम् । अहमपि तावद्वैतानिकं शान्त्युदकमस्यै [एव¹] गौतमीहस्ते विसर्जयामि । (—इति निष्क्रान्तः) ।

[ ¹इति ] विष्कम्भकः ।

---

शरीरस्य तापस्तस्य निर्वापणं, तस्मै—शरीरनिर्वापणाय = शरीरसन्तापशमनाय । इति = इत्येवं । 'त्वं वदसि किं'मिति योजना । एतेन शकुन्तलाया बिरहावस्था दर्शिता । यत्नात् = सावहितम् । उपचर्यताम् = चिकित्स्यताम् । कुलपतेः = कण्वस्य । द्वितीयम्=अपरम् । उच्छ्वसितम्=जीवनम् । तस्य बहिश्चराः प्राणा इत्यर्थः । वितानस्य = यज्ञस्य सम्बन्धि —वैतानिकं = यज्ञियं । शान्त्युदकम् = अभिमन्त्रितं रक्षाजलम् । अस्यै = शकुन्तलायै । तदर्थमिति यावत् । विसर्जयामि=प्रेषयामि । गौतमी = तन्नाम्नी कण्वभगिनी, वृद्धा तापसी वा काचित् ।

विष्कम्भक इति । भूतभविष्यदंशसूचकः कथाभागः । 'समाप्त' इति शेषः । तदुक्तं दर्पणे—

'अङ्केष्वदर्शनीया या, वक्तव्यैव च संमता ।
या च स्याद्वर्षपर्यन्तं कथा दिनद्वयादिजा ।
अन्यात्वविस्तरात्सूच्या साऽर्थोपक्षेपकैर्बुधैः ॥' इति ।

---

अभिनय करके— ) हैं ? क्या कहती हो कि—"घाम एवं लू के लग जाने से शकुन्तला बहुत बीमार हो गई है, उसके शरीर के सन्ताप को दूर करने के लिये ही मैं ये ठण्ढे उपचार ले जा रही हूँ" ? । अच्छा, तो प्रियंवदे ! देखो, शकुन्तलाका बड़े यत्न से उपचार ( दवा ) करना, क्योंकि यह तो हमारे पूज्य कुलपति कण्व का दूसरा प्राण ही–जीवन ही–है । और मैं भी यज्ञ का शान्ति सलिल ( अभिमन्त्रित जल ) इसके अभिषेक के लिये गौतमी के द्वारा भेज रहा हूँ । ( जाता है ) ।

( यह विष्कम्भक हुआ ) ।

[ विष्कम्भक—अङ्कों में नहीं दिखाने योग्य भूत और भविष्यत् बातों की संक्षिप्त सूचना देना ] ।

---

१ क्वचिन्न ।

( ततः प्रविशति स मदनावस्थो राजा )।

राजा—( सचिन्तं निःश्वस्य- )

जाने तपसो वीर्य्यं, 'सा बाला परवती'ति मे विदितम् ।
न च निम्नादिव सलिलं निवर्त्तते मे ततो हृदयम् ॥२॥

'अर्थोपक्षेपकाः पञ्च विष्कम्भक-प्रवेशकौ ।
चूलिकाऽङ्कावतारोऽथ स्यादङ्कमुखमित्यपि ॥' इति च ।

तल्लक्षणन्तु—

'वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु 'विष्कम्भ' आदावङ्कस्य दर्शितः ॥' इति ।

प्रकृते चाऽनेन-दुष्यन्तस्याऽऽश्रमप्राप्तिः, मुनिकार्यनिर्वहणं च भूतोऽर्थः, शकुन्तलाविरहावस्था, गौतमीसमागमश्च भविष्यन्नर्थः सूचित,-इति—विष्कम्भकोऽयम् । स च मध्यमपात्रप्रयोजितत्वाच्छुद्धविष्कम्भकः । तदुक्तं—

'मध्येन, मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः ।
शुद्धः स्यात, स तु सङ्कीर्णो नीचमध्यमकल्पितः ॥' इति ।

संस्कृतभाषिपात्रप्रयोजितः शुद्धः । संस्कृत-प्राकृतभाषिपात्रप्रयोजितस्तु सङ्कीर्ण इति तत्त्वम् ।

ततः = शिष्यनिर्गमनानन्तरं । मदनस्यावस्था यस्यासौ-मदनावस्थः = कामकृतावस्थां नाटयन् । 'कामयमानावस्थ' इति क्वचित्पाठः । तत्र कामयमानः= कामी, तस्येवावस्था यस्येत्याद्यर्थः। सचिन्तं=चिन्ताव्याकुलं। क्रियाविशेषणमेतत् ।

जाने इति। तपसः=कण्वस्य तपसः। वीर्यं=सामर्थ्यम् । 'वीर्यं शुक्रे प्रभावे च तेजःसामर्थ्ययोरपी'ति वैजयन्ती। जाने=वेद्मि । एवञ्च—बलाद्यदि शकुन्तलां हरामि तदा शापहतो भवेयमिति ध्वनितम् । सा = शकुन्तला तु । बाला=अप्रगल्भा ।

[ मदनावस्थायुक्त, विरहातुर राजा का प्रवेश ]।

राजा—( चिन्ता पूर्वक ऊँची सांस लेकर-) तपस्या का बल-शाप देकर मुझे सपरिवार भस्म कर देने की कण्व की शक्ति-को भी मैं खूब जानता हूं ।

१. 'अलमस्मि ततो हृदयं तथापि नेदं निवर्त्तयितु'मिति पा० ।

[1]भगवन्! मन्मथ! कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यमेतत्?। ( स्मृत्वा- ) आं ज्ञातम्!—

---

परवती = गुरुजनपरतन्त्रा चेति । मे=मम, विदितम् = मया ज्ञातम् । अतस्तस्याः स्वयमागमनमसम्भवीति ध्वनितम् । तर्हि तत्कथैव त्यज्यतामत आह-न चेति । निम्नात्=गम्भीरात्प्रदेशात् । 'निम्नं गभीरं गम्भीर'मित्यमरः । सलिलमिव=जलमिव । ततः = शकुन्तलायाः सकाशात् । मे=मम । हृदयं = चित्तं । न निवर्त्तते = तां मनसो दूरीकर्त्तुं न शक्नोमीत्यर्थः । [ 'प्रसह्य हरणीयत्वाऽभावे' प्रस्तुते कार्ये वक्तव्येऽप्रस्तुतस्य कार्यस्य 'तपसो वीर्यं जाने' इत्यस्य कथनादप्रस्तुतप्रशंसा । उपमा च । 'उपायाऽदर्शनं यत्तु तापनं नाम तद्भवे'दिति विश्वनाथोक्तेस्तापनं नाम प्रतिमुखसन्ध्यङ्गञ्च ॥ २ ॥ ] ।

मन्मथ != हे कन्दर्प ! । कुसुमानि-आयुधं यस्यासौ-कुसुमायुधः, तस्य=पुष्पायुधस्य । एतत् = ईदृशं । तीक्ष्णस्य भावस्तैक्ष्ण्यं = हृदयवेधकत्वम् । 'आम्' इति स्मृतौ । 'आं ज्ञाने निश्चयस्मृत्यो'रिति मेदिनी ।

---

और यह बाला पराधीन है, कण्व की आज्ञावर्त्तिनी है—यह भी मैं जानता हूं। अतः कण्व की आज्ञा के विना इसके साथ किसी प्रकार सम्बन्ध स्थापित करना विपत्ति से खाली नहीं है—यह भी मैं खूब समझ रहा हूं। परन्तु क्या करूँ-मेरा मन तो उसकी ओर से उसी प्रकार नहीं हट रहा है, जैसे नीची भूमि से ऊपर की ओर जल। अर्थात् नीचे भूभाग से जल को हटाना जैसे कठिन है, वैसे ही शकुन्तला की ओर से मेरे मन का हटाना भी अत्यन्त कठिन है ॥ २ ॥

मन को मथन करनेवाले हे भगवन्! कामदेव! तुम तो कुसुमायुध ( फूलों के बाण रखनेवाले ) हो, पर तुमारा इतना तीखापन कैसे है ?। फूलों के बाण चलाकर भी तुम इतनी भीषण व्यथा कैसे पहुँचाते हो ?।

(कुछ याद करके-) ओह! ठीक है, याद आ गया!

---



१. 'मदनबाधां निरूप्य'ति पाठान्तरमधिकमुपलभ्यते ।

अद्यापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाऽम्बुराशौ।
त्वमन्यथा मन्मथ ! मद्विधानां भस्मावशेषः कथमेवमुष्णः ? ॥३॥

अपि च—त्वया, चन्द्रमसा [1]चाऽतिविश्वसनीयाभ्यामतिसन्धीयते कामिसार्थः। कुतः—

अद्यापीति। मन्मथ ! = हे मदन !। अम्बुराशौ = समुद्रे। और्व इव = वडवानल इव। नूनं=निश्चितं। त्वयि=मदने। अद्यापि = बहुतिथे काले गतेऽपि। हरस्य कोप एव वह्निः-हरकोपवह्निः=रुद्रलोचनानलः। ज्वलति = नूनं दीप्यते। अन्यथा=नो चेत्। भस्मावशेषः = भस्ममात्रावशिष्टः। त्वं=मदनः। मद्विधानां= मादृशानां दीनानां विरहिणाम्। एवमुष्णः = ईदृक् सन्तापकः। कथम् ?। एवञ्च कालाग्निवन्मदनो मां दहतीत्युक्तम्। [ 'नून'मित्युक्तेरुत्प्रेक्षा। पूर्वार्द्धार्थं प्रत्युत्तरार्द्धार्थस्य हेतुत्वात्काव्यलिङ्गम्। 'हरकोपवह्नि'रिति च रूपकम्। ममेत्यनुक्त्वा मद्विधेत्युक्तेरप्रस्तुतप्रशंसा च ] ॥ ३ ॥

त्वया=कुसुमायुधनामधेयेन। चन्द्रमसा=आह्लादकार्थकचन्द्रपदाभिधेयेन। अतिविश्वसनीयाभ्याम् = उक्तनाम्नोरन्वर्थत्वभ्रमेण सम्पादितलोकविश्वासाभ्यां। कामिनां सार्थः–कमिसार्थः = विरहिलोकः। अतिसन्धीयते = वञ्च्यते। जातविश्वासं लोकं पीडयन्तौ नूनं वञ्चकावेव भवन्तावित्याशयः। बहिरीदृशं नामधेयम्, अन्तस्तु महती क्रूरतेत्यहो ! वञ्चनाचातुरी मदनचन्द्रयोर्भवतोरिति च हृदयम्। [ "मुख में राम, बगल में छुरी" ]।

ठीक है, तुमारे भीतर तो अभी तक भगवान् शङ्कर की क्रोधरूपी अग्नि वैसे ही जल रही है, जैसे समुद्र के भीतर बड़वानल ( = ज्वालामुखी ) जला करता है। अन्यथा हे मन्मथ ! शिवजी के तीसरे नेत्र से जलकर भस्म होकर भी तुम हमारे ऐसे विरहियों के लिए आग की तरह से सन्तापप्रद–कष्टदायक–कैसे हो सकते थे ?। अतः अभी तक तुमारे भस्मावशेष शरीरके भीतर भी-शिवकोपवह्नि अवश्य धधक रही है, तभी तो तुम हम विरहियों को इतना सन्ताप दे रहे हो। [ कामदेव को शिवजी ने अपने तीसरे नेत्र से भस्म कर दिया था, क्योंकि वह शिवजी की समाधि भङ्ग करने का उद्योग कर रहा था ] ॥ ३ ॥

१ 'विश्वसनीयाभ्यां' पा०।

✓ तव कुसुमशरत्वं, शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥ ४॥

तदेव स्फुटयति—तवेति । मद्विधेषु = मादृशेषु दीनेषु विरहिषु । तव = कामस्य । कुसुमशरत्वं = कुसुमायुधपदवाच्यत्वम् । इन्दोः = चन्द्रस्य । शीता रश्मयो यस्य, तस्य भावस्तत्त्वं—शीतरश्मित्वं = शीतकिरणनामव्यवहार्यत्वं च । द्वयमिदम् = उभयमेतत् । अयथार्थम् = निरर्थकं । कथमेतदत आह—विसृजतीति । यतः—इन्दुः = चन्द्रः । हिमं गर्भे येषान्तैः—हिमगर्भैः = तुषारगर्भैः । मयूखैः = किरणैः । अग्निं = दहनं । विसृजति=विकिरति । बहिश्शीतलैरपि अङ्गारैरिवान्तःसन्तापकैः किरणैर्विरहिणो दहतीत्याशयः । एवं—त्वमपि—कुसुमबाणोऽपि । कुसुमान्येव बाणास्तान् = पुष्पमयानपि शरान् । बहिः पुष्परूपेण प्रतीयमानानपि । अवज्रसारान् वज्रसारान् करोषि-वज्रसारीकरोषि = वज्रकठोरान् करोषि, चन्द्रो हिमाच्छादितमग्निं वर्षति, त्वञ्च कुसुमत्वेन बहिःप्रतीतानपि कुलिशकठोरान् बाणान् मुञ्चसीति स्फुटं युवयोर्वञ्चकत्वमित्याशयः । [ 'मयी'ति विशेषे वक्तव्ये, 'मद्विधेष्वि'ति सामान्योक्तेरप्रस्तुतप्रशंसा, पूर्वार्द्धार्थे उत्तरार्द्धार्थस्य हेतुत्वाच्च काव्यलिङ्गम् । 'हिमगर्भैरग्नि'मिति विरोधेऽपि विरहिस्वाभाव्याद्विरोधाऽऽभासः । कुसुमेषु बाणत्वमारोपितं च विरहदुःखदत्वेन प्रकृतोपयोगीति परिणामश्च । यथासङ्ख्यच्छेक—वृत्त्यनुप्रासा इति च राघवभट्टः ] ॥ ४ ॥

हे कामदेव ! तुमारा नाम कुसुमशर ( फूलों के कोमल बाण धारण करनेवाला ) है और चन्द्रमा का भी नाम शीतरश्मि ( ठण्डी किरण धारण करनेवाला ) है । आपलोगों के ये दोनों ही नाम हमारे ऐसे विरहिलोगों के लिए यथार्थ ( सच्चे, अन्वर्थ ) नहीं हैं । क्योंकि—चन्द्रमा तो अपनी किरणों से हिम गर्भ अग्नि ( ऊपर से दीखने में ठण्डा, पर भीतर में छिपी अग्नि ) वर्षाता है, और तुम भी नाम के ही कुसुमबाण हो, पर वज्र से भी कठोर बाण तुम तो विरहियों पर वर्षाते हो । अतः तुमारे तथा चन्द्रमा के मीठे २ नामों को सुनकर विश्वास में आए हुए विरही जन तुम लोगों द्वारा ठगे जाते हैं, और पीडित होते हैं ॥४॥

अथ वा—

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥५॥×

भगवन् ! एवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः ? ।

वृथैव सङ्कल्पशतैरजस्रमनङ्ग ! नीतोऽसि मयाऽतिवृद्धिम् ।
आकृष्य चापं श्रवणोपकण्ठे मय्येव युक्तस्तव बाणमोक्षः ? ॥६॥ ×

---

अनिशमिति । यदि—मदिरे-मादके आयते च नयने यस्याः सा, तां-मदिरायतनयनाम् = उन्मादकविस्तृतलोचनां । तां = शकुन्तलाम् । अधिकृत्य = तामपि विषयीकृत्य । प्रहरति = तस्या अपि उपरि बाणान् क्षिपति । तदा अनिशम् = अनवरतम् । मे = मम । मनसः = चित्तस्य । रुजं = पीडाम् । आवहन् = कुर्वन् । अपि । मकरः केतौ यस्यासौ—मकरकेतुः = मकरध्वजः । अभिमतः = अभीष्ट एव । यदि साऽपि विरहपीडामनुभवति, मयि च सानुरागं मनो वहति तदा कामं कृतोपकारमभिमतमेव मन्ये—इति भावः । [ रुजमावहन्नभिमत इति विरोधाऽऽभासः । ] ॥ ५ ॥

उपालब्धस्य = दत्तोपालम्भस्य । अनुक्रोशः = कारुण्यम् ।

वृथैवेति । हे अनङ्ग ! अजस्रम् = अनवरतम् । सङ्कल्पानां शतैः—सङ्कल्पशतैः = मनोरथकोटिभिः । वृथैव = मुधैव । मया = दुष्यन्तेन । अतितमां वृद्धि-

---

अथवा— निरन्तर मेरे मनको सन्तप्त करनेवाला भी मकरकेतु ( कामदेव ) मुझे अभिमत (इष्ट, प्रिय) हो सकता है, यदि यह उस मदिर=उन्मत्त कर देने वाले, और आयत = विस्तृत नेत्रवाली मेरी प्रिया पर भी इसी प्रकार अपने बाणों का प्रहार करे तो । अर्थात् मेरी—प्रिया शकुन्तला भी यदि मेरे कारण मेरी ही तरह विरह सन्ताप को धारण करे, तो मुझे यह कामदेव अवश्य प्यारा लगेगा ॥५॥

हे कामदेव ! आपको इतना उपालम्भ ( उलाहना ) देने पर भी मेरे ऊपर आपको दया नहीं आती है ! ।

हे अनङ्ग ! तुमको मैंने प्रिया विषयक नाना प्रकार के सङ्कल्पों से वृथा ही इतना बढ़ाया । ( कामदेव अनङ्ग = अङ्ग रहित है, वह केवल सङ्कल्प = इच्छा

( सखेदं परिक्रम्य- ) क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञातः खिन्नमात्मानं विनोदयामि ? । न च प्रियादर्शनादृते शरणमन्यत् । यावदेनामन्विष्यामि । ( ऊर्द्ध्वमवलोक्य- ) [1]इमामुग्रातपां वेलां प्रायेण

मतिवृद्धिं = परिपोषं । नीतोऽसि = गमितोऽसि । श्रवणस्योपकण्ठं, तस्मिन् श्रवणोपकण्ठे = आकर्णं । चापं = धनुः । आकृष्य = आरोप्य । मय्येव = परिपालक एव । तव—बाणानां मोक्षः—बाणमोक्षः = शरविक्षेपः । युक्तः ? = किमुचितः । यो हि सादरमभिरक्षितोऽपि तमेव रक्षितारं पीडयति तर्हि स 'वृथा परिरक्षित' इत्युच्यते । एवमयं मम मनोजन्मा कामो मया सङ्कल्पशतैर्वर्द्धितोऽपि मामेव राजानं विध्यतीति 'वृथा परिवर्द्धितः' खल्वयमिति युक्त एवोपालम्भोऽस्येत्याशयः । [ काव्यलिङ्गमत्रालङ्कारः ] ॥ ६ ॥

खेदेन सहितं यथा स्यात्तथा सखेदमिति क्रियाविशेषणम् । परिक्रम्य = किञ्चित्पादन्यासं कृत्वा । निरस्ता विघ्ना येषान्तैः—निरस्तविघ्नैः = निर्विघ्नसमाप्तयज्ञैः । तपस्विभिः = मुनिभिः । अनुज्ञातः = 'यथेष्टं विश्रम्यतां, जातं नः कार्य'मिति दत्तानुज्ञः । खिन्नं = विरहविक्लवम् । आत्मानं = मनः । विनोदयामि = प्रसादयामि । प्रियाया दर्शनं—तस्मात् शरणं = रक्षकम् । [ 'ततः प्रविशति कामयमानावस्थ' इत्यत आरभ्यैतदन्तं पञ्चमी स्वस्य कामावस्थोद्वेगाख्या सूचिता ] । प्रियादर्शनात् = प्रियाप्रेक्षणात् । यावदेनां = निश्चितमेनां शकुन्तलाम् । यावदिति

से ही उत्पन्न होता है, और बढ़ता है ) । भला, मेरे ऊपर कान तक धनुष तुमारा बाण चलाना क्या उचित है । अर्थात्–मैंने ही तो तुम्हें प्रिया विषयक नानाविध सङ्कल्प करके इतना बढ़ाया, और मेरे ही ऊपर धनुष तानकर तुम आक्रमण कर रहे हो, यह क्या तुमारा कार्य उचित है ? । कभी नहीं । क्योंकि–अपने बढ़ानेवाले, पालने पोसनेवाले पर तो कोई भी प्रहार नहीं करता है । तुम ही फिर ऐसा कुत्सित कार्य क्यों करते हो ? ॥६॥

( बड़े खेद व उदास भाव से कुछ चलकर– )

यज्ञ के विघ्न दूर होजाने से, अब विश्राम करने की तपस्वियों की आज्ञा पाकर, मैं अपने मनको कहाँ बहलाऊँ ? । प्रिया के दर्शन के बिना मेरे चित्त की

१ 'उग्रातपवेलां' । 'इमामुग्रां वेलां' ।

लतावलयवत्सु मालिनीतीरेषु ससखीजना तत्रभवती शकुन्तला गमयति । भवतु, तत्रैव तावद्गच्छामि । ( परिक्रम्यावलोक्य च- ) अनया बालपादपवीथ्या सुतनुरचिरं गतेति तर्कयामि । कुतः—

संमीलन्ति न तावद्बन्धनकोषास्तयाऽवचितपुष्पाः ।
क्षीरस्निग्धाश्चाऽमी दृश्यन्ते किसलयच्छेदाः ॥ ७ ॥

---

निपातो निश्चयद्योतकः । अन्विष्यामि=अन्वेक्ष्यामि । 'यावत्पुरानिपातयोर्लडिति लृडर्थे लट् । ऊर्ध्वं = गगनमभि, उग्रस्तपः = आतपो यस्यां सा ताम्—उग्रातपां=प्रखरातपवतीम् । वेलां = कालं । लतानां वलयानि येषु तेषु-लतावलयवत्सु = लतामण्डलमण्डितेषु । सखीजनेन सहिता—ससखीजना = सखीसहिता । प्रायेण गमयति = प्रायोऽतिवाहयति । [ 'यावदेना'मित्यारभ्य 'तावद्गच्छामी'त्यन्तेन परिसर्पो नाम प्रतिमुखाङ्गं दर्शितम् । 'दृष्टनष्टानुसरणं परिसर्प इतीरितः'—इत्युक्तेः ] ।

अनया = पुरतो दृश्यमानया । बालाश्च ते पादपाश्च बालपादपास्तेषां वीथिस्तया—बालपादपवीथ्या=अभिनवतरुपङ्क्तिपरिसरमार्गेण । सुतनुः=शकुन्तला । तर्कयामि = सम्भावयामि । संमीलन्तीति । तया=शकुन्तलया । अवचितानि-पुष्पाणि येभ्यस्ते—अवचितपुष्पाः = आच्छिन्नकुसुमाः । बन्धनानां कोषाः बन्धनकोषाः = प्रसवबन्धनोदराणि । न यावत् = नाद्यापि । संमीलन्ति = सङ्कुचन्ति । क्षीरेण स्निग्धाः,—क्षीरस्निग्धाः=दुग्धमसृणाः । किसलयानां छेदाः=

---

शान्ति का और कोई उपाय नहीं है, अतः उसे ही खोजता हूं । ( ऊपर आकाश की ओर देखकर- ) इस प्रखर ताप वाले दोपहर के समय को तो शकुन्तला अपनी सखियों के साथ प्रायः लतामण्डपों से आच्छन्न मालिनीनदी के तीर पर ही बिताया करती होगी । अच्छा तो फिर वहीं चलता हूँ । ( कुछ चलकर आगे को देखकर ) इन छोटे २ पौधों की पङ्क्तियों के बीच से होती हुई ही वह सुतनु शकुन्तला गई है—ऐसा मालूम होता है । क्योंकि—

उसके हाथसे तोड़े गए पुष्पों के वृन्त (बन्धन-टंठल) अभी तक संकुचित नहीं हुए हैं । अतः तत्काल ही यहाँ से पुष्प तोड़े गए हैं-ऐसा ज्ञात होता है । और ये कोमल पल्लवों के भङ्ग (जहाँ पत्ते लगे हुए थे वह स्थान ) भी दुग्ध से चिकने

( स्पर्शं रूपयित्वा- ) अहो ! प्रवातसुभगोऽयं वनोद्देशः—

शक्योऽरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैर्निर्दयमालिङ्गितुं पवनः ॥ ८ ॥

---

पल्लवभङ्गाः । अमी = इमे पुरतः । दृश्यन्ते = विलोक्यन्ते । [ अचिरावचित-कुसुमेषु पादपेषु कुसुमबन्धनाग्रभागस्थकोशा विवृता एव लक्ष्यन्ते । पत्रभङ्गस्थानेषु च पयः क्षरदवलोक्यत इति नूनमद्यैवामुना पथा याता सेति सम्भावयितुं शक्यत एवेति भावः ] ॥ ७ ॥

स्पर्शं = वातस्पर्शं । रूपयित्वा = नाटयित्वा । अहो ! = हर्षे । प्रकृष्टेन वातेन सुभगः-प्रवातसुभगः=सुरभिशीतलपवनललितः। वनस्योद्देशः-वनोद्देशः=वनप्रदेशः।

**शक्य इति ।** अरविन्दैः सुरभिः-अरविन्दसुरभिः = कमलामोदवासितः । मालिन्यास्तरङ्गास्तेषां मालिनीतरङ्गाणां = मालिनीनदीकल्लोलानां । कणान् वहति तच्छीलः—कणवाही = जललवशीतलः । पवनः = वातः । अनङ्गेन तप्तैः—अनङ्गतप्तैः = कामसन्तप्तैः। अङ्गैः = अवयवैः। निर्गता दया यस्मिन् कर्मणि तत्-निर्दयम् = आतृप्ति । आलिङ्गितुं = समालिङ्गितुं—शक्यः । एतेनास्य प्रदेशस्य कामिजनसेवनयोग्यत्वं, पवनस्य सुरभित्वं, शीतलत्वञ्च ध्वनितम् । शक्यमिति पाठे 'शक्य'मित्यव्ययं बोध्यम् । यथा–'शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः'

---

हो रहे हैं। अर्थात् जहाँ से कोमल पत्ते तोड़े गए हैं, उस स्थान पर से निकला हुआ दूध सा द्रव पदार्थ अभी ताजा ही टपक रहा है। अतः फूलपल्लव चुनती हुई वह मेरी प्रिया शकुन्तला इधर से ही गई है, ऐसा मैं समझता हूँ ॥ ७ ॥

( ठण्डी २ हवा लगने का अभिनय करता हुआ )

अहो ! इस वन प्रदेश में कैसी सुन्दर व सुगन्धयुक्त हवा चल रही है !।

यहाँ मेरे काम सन्ताप से सन्तप्त हुए अङ्गों को मालिनी-नदी के तरङ्गों से उड़े हुए ठण्डे २ जल के कणों को धारण करने वाले, कमल की गन्ध से सुगन्धित पवन के यथेच्छ सेवन से बड़ी ही शान्ति प्राप्त हो सकती है। अर्थात् ठण्डा और सुगन्धित यह वन का पवन मुझे बहुत ही सुहावना मालूप हो रहा है,

---

१ 'शक्यमरविन्द'-पा० ।

( विलोक्य— ) हन्त ! अस्मिन् वेतसलतामण्डपे सन्निहितया शकुन्तलया भवितव्यं। तथा हि—

**अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् ।**
**द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ९ ॥**

---

इति । [ अनुप्रासः । समाहितालङ्कारः । अरविन्दसुरभिः —पवनः = पवित्रः । कणवाही शीतलतुह्यदिवाऽऽलिङ्गनाद इत्यप्रस्तुतमित्रव्यवहारस्य समारोपात्समासोक्तिश्च ] ॥ ८ ॥

हन्तेति हर्षे। वेतसलताभिर्विरचिते मण्डपे—वेतसलतामण्डपे = वेत्रवल्लीविरचितमण्डपे । सन्निहितया = अवस्थितया । कथमेतज्ज्ञायतेऽत आह—अभ्युन्नतेति । पाण्डवः सिकता यस्मिन् तत् पाण्डुसिकतम्, तस्मिन्—पाण्डुसिकते = पाण्डुरबालुकासनाथे । अस्य = लतामण्डपस्य । द्वारे = प्रतीहारे । पुरस्तात् = अग्रभागे । अभ्युन्नता = समुन्नता । पश्चात् = पार्ष्णिभागे । जघनस्य गौरव, तस्मात्-जघनगौरवात् = नितम्बपुरःप्रदेशभारात् । अवगाढा = निखाता गभीरा । अभिनवा = अचिरोद्धृता । पदपङ्क्तिः = चरणचिह्नश्रेणिः । दृश्यते = विलोक्यते । 'पदं शब्दे च वाक्ये च पाद-तच्चिह्नयोरपी'ति विश्वः । [ अनुमानम् । स्वभावोक्तिः । 'अत्रैव शकुन्तला प्रविष्टे'त्यस्य भङ्ग्यन्तरेण प्रतिपादनात्पर्यायोक्तमपि । ] ॥ ९ ॥

---

और इसके यथेच्छ सेवन से काम के ताप से सन्तप्त हुए मेरे शरीर को भी यहाँ बड़ी ही शान्ति मिल रही है ॥ ८ ॥

( आगे की ओर देखकर ) अहा ! वेत की लताओं के इस मण्डप में ही मेरी प्रिया शकुन्तला होनी चाहिए। क्योंकि—

इस लता मण्डप के भूरी २ बालु से युक्त द्वार पर, आगे से ऊँची एवं पीछे से ( एडी की ओर से ) जघन स्थल के भार से दबी हुई ताजा पदपङ्क्ति ( पैरों के खोज, चिह्न, निशान ) स्पष्ट ही दिखाई पड़ रही है ॥ ९ ॥

यावद्विटपान्तरेणाऽवलोकयामि। ( तथा कृत्वा, सहर्षम्— ) अये! लब्धं नेत्रनिर्वाणम्, एषा मनोरथप्रिया मे सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामुपास्यते। भवतु। लताव्यवहितः शृणोमि विस्रम्भ[1]कथितान्यासाम। (—इति विलोकयन् स्थितः )।

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला )।

**सख्यौ**—( उपवीज्य— ) हला सउन्तले! अवि सुहाअदि दे णलिणीवत्तवादो ?।

[ हला शकुन्तले! अपि[2] सुखायते नलिनीपत्रवातः ? ]।

---

विटपस्य = शाखायाः। अन्तरेण = मध्यभागेन। तथा कृत्वा = विटपान्तरेण विलोक्य। 'सहर्ष'मिति क्रियाविशेषणम्। नेत्रयोर्निर्वाणं = लोचनसुखं। शकुन्तलेति यावत्। मनोरथैः प्रिया = सङ्कल्पप्रिया। अद्य यावद्रतेरलाभात्। कुसुमानामास्तरणेन सहितं—सकुसुमास्तरणं = पुष्पास्तीर्णम्। शिलायाः पट्टं = शिलाफलकम्। अधिशयाना = अधितिष्ठन्ती। विस्रम्भेण कथितानि—विस्रम्भकथितानि = निश्शङ्काऽऽलापान्। 'समौ विस्रम्भविश्वासौ' इत्यमरः। इति = इत्थमभिधाय। यथोक्तं व्यापारो यस्याः सा—यथोक्तव्यापारा = शिलाफलकमधिशयाना। उपवीज्य = व्यजनं दोलयित्वा।

'अपि'रत्र प्रश्ने। 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपिः'—इत्यमरः। सुखायते·

---

अच्छा, तब तक इसे मैं वृक्षों की शाखाओं की आड़ से देखता हूं। (देखकर सहर्ष-) ओह! मेरे नेत्र इसे देखकर तृप्त हो गए। मैंने नेत्रों का परमसुख पा लिया। यह मेरी मनोरथ विषयीभूता ( अभीष्ट ) प्राणप्रिया शकुन्तला फूलों की सेज से अलंकृत शिलातल पर लेटी हुई है, और इसकी दोनों ही सखियां इसके पास बैठी हैं। अच्छा, मैं इस लता की आड़ में होकर इनके आपुस के विश्वस्त वार्त्तालाप को सुनता हूं। ( इनकी ओर टकटकी लगाकर देखता हुआ, बातें सुनता हुआ बैठता है। ( या खड़ा रहता है )।

[ पूर्वोक्त प्रकारसे शिलातल पर बिछी हुई फूलों की सेजपर लेटी हुई सखी सहित शकुन्तला का प्रवेश ]।

**दोनों सखियां**—( कमल की लता के पत्तों से हवा करके ) हे सखी

---

१ 'विश्वस्तकथितानि' पा०। २ 'सुखयति' पा०।

शकुन्तला—( सखेदं— ) किं बीजअन्ति मं पियसहीओ ?।

[ किं बीजयतो मां प्रियसख्यौ ? ]।

[सख्यौ—सविषादं परस्परमवलोकयतः ]।

राजा—बलवदसुस्थशरीरा तत्रभवती दृश्यते । ( सवितर्कं— ) तत्किमयमातपदोषः स्यात् ?, उत यथा मे मनसि वर्त्तते ?। ( साभिलाषं निर्वर्ण्य— ) अथवा कृतं सन्देहेन—

---

सुखं करोति । सुखमुत्पादयति । नलिन्याः पत्राणां वातः = कमलिनीदलपवमानः । किमिति प्रश्ने । मां भवत्यौ बीजयतः किम् ?—इति प्रश्नः । कुत इति वा । एतेन विषयान्तरज्ञानशून्या विषयनिवृत्तिरूपा कामस्य षष्ठावस्था सूचिता । एतेन–विधूतं नाम प्रतिमुखाङ्गम्—'विधूत स्यादरति'रित्युक्तं दर्शितम् । सविषादमिति । ईदृशीमवस्थां दृष्ट्वा विषादः सख्योः । अनिष्टाशङ्कया च परस्परावलोकनम् । बलवत्= अत्यन्तं । न सुस्थं–न स्वस्थं शरीरं यस्याः सा असुस्थशरीरा=अप्रकृतिस्थवपुः । सवितर्कम् = विचारमभिनीय । मे मनसि वर्त्तते = कामसन्तापोऽयमिति मम चेतसि समायाति । कृतम् = अलम् ।

---

शकुन्तले ! कमलिनी लता के पत्तों की यह ठण्डी २ हवा क्या तेरेको कुछ शान्तिदायक मालूम होती है ?।

शकुन्तला—( बड़े ही दुःख के साथ ) हे सखियों ! तुम लोग वृथा ही इस कमलिनी पत्र से मुझे हवा क्यों कर रही हो ?। मुझे तो इससे कुछ भी शान्ति नहीं मालूम हो रही है।

[ दोनों सखियां बड़े खेद और उदासी व निराशभाव से परस्पर देखती हैं ]।

राजा—यह शकुन्तला तो बहुत बीमार मालूम होती है। ( विचार करता हुआ ) तो क्या घाम या लू लग जाने से इसकी यह दशा हुई है ?। अथवा–मैं मन में जो सोचता हूँ वही बात है। (मेरे में अनुराग व प्रेम का होना ही इसका कारण है ) ?। ( बड़ी चाह से देखकर– ) अथवा मेरे प्रति इसका अनुराग ही इसके इस अस्वास्थ्य का कारण है, इसमें सन्देह करना ही व्यर्थ है। क्योंकि—

**स्तनन्यस्तोशीरं, प्रशिथिलमृणालैकवलयं,**
**प्रियायाः साऽऽबाधं तदपि कमनीयं वपुरिदम् ।**
**समस्तापः कामं मनसिज-निदाघप्रसरयो-**
**र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥१०॥**

स्तनन्यस्त इति । प्रियायाः = प्रेयस्याः, स्तनयोर्न्यस्तमुशीरं यत्र तत्— स्तनन्यस्तोशीरं = पयोधरोत्सङ्गनिविष्टवीरणमूलं । प्रकर्षेण शिथिलं मृणालानामेकं वलयं यत्र तत्=सन्तापशुष्कशिथिलबिसैकवलयम् । एतेन-स्वर्णादिवलयं धारयितु-मशक्यमिति ध्वनितम् । आबाधया सहितं साबाधम्=व्यथितं । तदपि=तथापि । इदं वपुः=शरीरमेतत् । कमनीयं=मनोहरं । कामं=बाढं । मनसिजश्च, निदाघस्य प्रसरश्च—तयोः—मनसिजनिदाघप्रसरयोः = कामातपलङ्घनयोः । तापः = सन्तापः । समः = तुल्य एव । कामताप-निदाघाभिगमनयोर्व्यथा तुल्येति सत्यमित्याशयः । तु = तथापि । 'तु स्याद्भेदेऽवधारणे'इत्यमरः । ग्रीष्मस्य = निदाघप्रसरस्य । युवतिषु = तरुणीषु । एवम्=ईदृशम् । सुभगं=कमनीयतासम्पादकम् । अपराद्धं= सन्तापः । 'न भवती'ति शेषः । इयं च सन्तापेऽपि मनोहरा दृश्यते, लावण्यमात्रशेषा च, न चातपलङ्घनादीदृशी मनोहरता भवत्यतो नूनमियं कामसन्तापपीडितैवेति बाढमनुमीयत इति भावः । 'पीडाऽऽबाधा व्यथा दुःखम्' इत्यमरः ।

[ अत्रोपमानोपमेययोः स्मरातपसन्तापयोरेकस्याधिक्यकथनाद्व्यतिरेकालङ्कारः, 'युवतिषु'—इति सामान्यनिर्देशादप्रस्तुतप्रशंसा च । अनुप्रासश्च । ] ॥१०॥

मेरी प्रिया के स्तनों पर उशीर ( खश ) रक्खी हुई है, हाथों में ढीले २ मृणाल के ही वलय ( चूड़ी, कङ्कण, बाजूबन्द आदि ) बँधे हुए हैं । यद्यपि मेरी प्रियाका शरीर तो अवश्य पीड़ित है, परन्तु शरीरकी कमनीयता तो इसकी वैसी की वैसी बनी हुई है । यद्यपि काम का सन्ताप और ग्रीष्मका सन्ताप ( लू लग जाना ) समान हो सकता है, परन्तु घाम लगने से, या लू लगने से सौन्दर्य और कमनीयता जैसी की तैसी कभी नहीं रह सकती है । अतः इसकी यह दशा तो काम के सन्ताप से ही है, ग्रीष्म के सन्ताप से नहीं है । अतएव यह मेरे ऊपर अनुरक्त होने से ही अस्वस्थ है—यही बात स्पष्ट प्रतीत हो रही है ॥१०॥

प्रियंवदा—( जनान्तिकम्— ) अणसूए ! तस्स राएसिणो पढम-दंसणादो आरम्भिअ पज्जुच्छुअमणा सउन्तला। ण क्खु से अण्णणिमित्तो आतङ्को भवे।

[ अनसूये ! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकमनाः शकुन्तला। न खल्वस्या अन्यनिमित्त आतङ्को भवेत् ]।

अनसूया—सहि ! मम वि एआरिसी आसङ्का हिअस्स। भोदु। पुच्छिस्सं दाव णं। ( प्रकाशं– ) सहि ! पुच्छिदव्वासि किम्पि। बलीओ क्खु दे अङ्गाण सन्दावो ?।

[ सखि ! ममाप्येतादृशी आशङ्का हृदयस्य। भवतु। प्रक्ष्यामि तावदेनाम्। सखि ! प्रष्टव्याऽसि किमपि। बलीयान् खलु तेऽङ्गानां सन्तापः ? ]।

---

जनान्तिकम् = त्रिपताककरेणान्यानपवार्य। तस्य=दुष्यन्तस्य। प्रथमं दर्शनं तस्मात्=अवलोकनमात्रादेव। पर्युत्सुकं मनो यस्याः सा–पर्युत्सुकमनाः=उत्कण्ठा-कुलिता। खलु=निश्चये। अन्यन्निमित्तं यस्यासौ–अन्यनिमित्तः=कारणान्तरोत्पन्नः। आतङ्कः = सन्तापः। 'रुक्तापशङ्कास्वातङ्कः'—इत्यमरः। एतादृशी = ईदृशी। 'दुष्यन्तदर्शनकृत एवाऽस्याः सन्तापप्रसर' इति। प्रष्टव्याऽसीति। भवतीं किमपि प्रष्टुमभिलषामीत्यर्थः। अतिशयेन बली-बलीयान् = प्रबलतमः। सन्तापः=पीडा।

---

प्रियंवदा—( अलग से अनसूया के प्रति ) हे अनसूये ! उस राजर्षि दुष्यन्त को पहिले पहिल देखने के साथ ही यह शकुन्तला इस प्रकार उत्कण्ठित और आतुर हो गई है। अतः दूसरे कारण ( घाम लगने ) से इसकी यह दशा नहीं हो सकती है। किन्तु इस दशा का कारण तो उस राजर्षि दुष्यन्त का प्रथम दर्शन ही है। अतः यह उस पर आसक्त हो कर ही इस प्रकार काम दशा (सन्ताप) को प्राप्त हो रही है।

अनसूया—( अलग से ) सखी प्रियंवदे ! मेरे मन में भी यही शङ्का हो रही है, कि—यह दुष्यन्त पर आसक्त हो गई है। अच्छा, इसी से पूछती हूं। ( प्रकट में ) हे सखि शकुन्तले ! मैं तुमसे कुछ पूछना चाहती हूं। क्या तेरे अङ्गों में बड़ी पीड़ा हो रही है ?।

राजा—( किं ) वक्तव्यमेव ? ।

शशिकरविशदान्यस्यास्तथा हि दुःसहनिदाघशंसीनि ।
भिन्नानि श्यामिकया मृणालनिर्माणवलयानि ॥११॥

शकुन्तला–(पूर्वाङ्गेण[1] शयनादुत्थाय–) हला ! भण जं वत्तुकामासि। [ हला ! भण, यद्वक्तुकामाऽसि ] ।

अनसूया—हला सउन्तले ! अलद्धन्तरा अम्हे दे मणोगदस्स वुत्तन्तस्स। किन्तु जादिसी इदिहासकधाणुबन्धेसुं कामिजणाणं अवत्था

---

खल्वल प्रश्ने । वक्तव्यमेव ?=किमेतदपि वक्तव्यम् ? । ननु स्पष्टमेवैतदित्याशयः ।

शशीति । तथा हि=स्पष्टतामेव भणामि । अस्याः=शकुन्तलायाः । शशिनः करा इव विशदानि–शशिकरविशदानि = चन्द्रकिरणस्वच्छानि । दुःसहं निदाघं शंसन्ति तच्छीलानि–दुःसहनिदाघशंसीनि=दुःसहसन्तापसूचकानि । मृणालैर्निर्माणं येषान्तानि वलयानि मृणालनिर्माणवलयानि = बिसनिर्मितकरकङ्कणानि । श्यामिकया = कृष्णरेखया, भिन्नानि = संसक्तानि । एवञ्च स्पष्टोऽस्या अङ्गसन्ताप इति भावः । [ वाक्यार्थहेतुकं काव्यलिङ्गम् ] ॥ ११ ॥

पूर्वाङ्गेण = नाभ्यूर्द्ध्वभागेन । 'पूर्वार्द्धेन'त्यपि पाठः । भण = वद । वक्तुकामा=वक्तुमिच्छसि । न लब्धमन्तरं याभिस्ताः-अलब्धान्तराः = रहस्यानभिज्ञाः ।

---

राजा—इसमें भी कुछ कहना बाकी है, क्या ? । क्योंकि, देखो—

चन्द्रमा की किरणों की तरह श्वेत और स्वच्छ मृणालों (कमल के तन्तुओं) के बने हुए इसके वलय ( कङ्कन, बाजूबन्द, चूड़ी, कड़े आदि ) दुःसह विरह सन्ताप से काले पड़ गये हैं, मुरझा गए हैं । इससे स्पष्ट ही सूचित होता है, कि–यह अत्यन्त सन्ताप ( दाह, काम ज्वर ) से पीड़ित है । अतः यह तो पूछना ही व्यर्थ है ॥ ११ ॥

शकुन्तला—( तकिये के सहारे थोड़ी सी ऊँची होकर ) हे सखि ! तुम्हें जो कुछ कहना हो, कहो, जो कुछ पूछना हो सो पूछो ।

अनसूया—सखि शकुन्तले ! हम लोग तेरे हृदय की बात को तो जानती

---



[1] 'पूर्वार्द्धेन' पा० ।

सुणीअदि तादिसी तुह(त्ति)तक्केमि। ता कधेहि किंनिमित्तं दे अअं आआसो त्ति ?। विआरं परमत्थदो अजाणिअ अणारम्भो किल पदीआरस्य।

[ हला शकुन्तले ! अलब्धान्तरा वयं ते मनोगतस्य वृत्तान्तस्य। किन्तु यादृशी इतिहासकथानुबन्धेषु कामिजनानामवस्था श्रूयते तादृशी तव (इति) तर्कयामि। तत्कथय किंनिमित्तं तेऽयमायास इति ?। विकारं परमार्थतोऽज्ञात्वाऽनारम्भः किल प्रतीकारस्य ]।

राजा—अनसूययाऽपि मदीयस्तर्कोऽवगतः।

शकुन्तला—बलीओ आआसो, ण सक्कणोमि सहसा णिवेदिदुं।

[ बलीयनायासो, न शक्नोमि सहसा निवेदयितुम ]।

---

मनसि गतस्य-मनोगतस्य = हृदयनिहितस्य भावस्य। कामतत्त्वस्येति यावत्। इतिहासेषु याः कथास्तासामनुबन्धेषु—इतिहासकथाऽनुबन्धेषु = पुराणादिकथा-प्रसङ्गेषु। तादृशी = कामिजनाऽवस्थासदृशी। तत् = तस्मात्। किंनिमित्तः = कं पुरुषश्रेष्ठं लक्ष्यीकृत्य। आयासः = कामजनितः खेदः। तवायं सन्ताप इति यावत्।

विकारं=रोगम्। तत्त्वतः = किंनिमित्तोऽयमातङ्क इत्यादिरूपेण यथार्थतः। अज्ञात्वा = अविज्ञाय। प्रतीकारस्य = उपायस्य। न आरम्भः—अनारम्भः = प्रारम्भः-कर्त्तुमशक्यः। किल = प्रसिद्धमेतत्।

मदीयस्तर्कः = कामकृतेयमवस्थेति तर्कः। अवगतः = विज्ञातः। बलीयान्=

---

नहीं हैं। [ पाठान्तर में-हम लोग वनवासिनी होने के कारण मदन वृत्तान्त ( काम कथा ) से तो सर्वथा अपरिचित ही हैं ]। तो भी इतिहास पुराणों में कामी जनों की अवस्था का जैसा वर्णन सुना जाता है, वैसी ही तेरी अवस्था मालूम होती है। अतः बता—यह काम सन्ताप तुझे किस कारण से हो रहा है ?। क्योंकि वास्तविक रूप में रोग का कारण जाने बिना उसका प्रतीकार नहीं हो सकता है। अर्थात् रोग को ठीक २ समझे बिना उसके प्रतीकार का उपाय भी नहीं किया जा सकता है।

राजा—अनसूया ने भी मेरा तर्क समझ लिया है।

शकुन्तला—हे सखि ! यह सन्ताप (सन्ताप का कारण) बहुत बडा और गूढ

**प्रियंवदा**—सुष्ठु क्खु एसा भणादि, किं एदं अत्तणो उपद्दव्वं णिगूहसि, अणुदिअसं क्खु परहीअसि। अङ्गेसुं लावण्णमई छाआ केवलं तुमं ण मुञ्चदि।

[ सुष्ठु खल्वेषा भणति। किमेतमात्मन उपद्रवं निगूहसि?। अनुदिवसं खलु परिहीयसे। अङ्गेषु लावण्यमयी छाया केवलं त्वां न मुञ्चति ]।

**राजा**—अवितथमाह प्रियंवदा। तथा हि—

**क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं,**
**मध्यः क्लान्ततरः, प्रकामविनतावंसौ, छविः पाण्डुरा।**

---

प्रबलः। आयासः=सन्तापः। सहसा=झटिति। निवेदयितुं=तत्त्वतो निवेदयितुम्। न शक्नोमि=आ मूलाद्वक्तुं न शक्नोमि।

एषा=अनसूया। भणति=वदति। तव कामिजनसदृशी किलावस्थेति यद्भणति। तत्-सुष्ठु=ममापि सत्यं प्रतिभाति। एतं=स्पष्टं प्रतीयमानम्। उपद्रवं=सन्तापं। निगूहसि=निह्नुषे, अपलपसि। दिवसे दिवसे-इति अनुदिवसं=प्रतिदिनं। परहीयसे=क्षीणतां वहसि। खलु=निश्चितमेतत्। नन्वेतद्ग्रीष्मातपलङ्घनवशादेवेति चेदत आह—**अङ्गेष्विति**। लावण्यं प्रकृतं यत्र सा—लावण्यमयी=लावण्यप्रचुरा। छाया=कान्तिः। न मुञ्चति=न परिहीयते। एवञ्च कामकृतसन्तापेष्वेव खल्वीदृशी दशा नाऽऽतपलङ्घने, तव लावण्यस्यापि कालिम्ना विलयादिति भावः।

अवितथं=सत्यम्। **क्षामेति**। क्षामक्षामौ=कृशतरौ, कपोलौ यत्र तत्-क्षाम-क्षाम-कपोलम्=कृशतरकपोलम्। आननं=मुखम्। 'अस्या आलक्ष्यते'

---

है, इसको सहसा मैं कहने में असमर्थ हूं।

**प्रियंवदा**—सखि शकुन्तले! यह अनसूया ठीक कह रही है। अपने इस उपद्रव को क्यों छिपा रही हो?। प्रति दिन तुम क्षीण (दुबली) होती जा रही हो। केवल तुमारे शरीर में अब लावण्य (कान्ति) की छायामात्रा ही अवशिष्ट रह गई है।

**राजा**—प्रियंवदा बिलकुल ठीक कह रही है। जैसे—

इस शकुन्तला का मुख गालों के [illegible] होकर सुखी जाने से-परिम्लान

शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते,
पत्त्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥१२॥

शकुन्तला—( निःश्वस्य- ) कस्स वा अण्णस्स कधइस्सं, किन्तु आआसहेदुआ वो भविस्सं।

[ कस्य[1] वाऽन्यस्य कथयिष्यामि ? । किन्तु आयासहेतुका वो भविष्यामि ] ।

इति शेषः । काठिन्येन मुक्तौ स्तनौ यत्र तत्—काठिन्यमुक्तस्तनम् = अकठोरपयोधरम् । उरः = वक्षःस्थलं च । 'दृश्यते' इति शेषः । अतिशयेन क्लान्तः—क्लान्ततरः = परिम्लानः, मध्यः=अवलग्नप्रदेशः । प्रकामं विनतौ-प्रकामविनतौ = अत्यन्तमवनतौ । अंसौ = स्कन्धप्रदेशौ । 'लक्ष्येते' इति शेषः । पाण्डुरा = पाण्डुवर्णा । छविः = कान्तिः । अतः-पत्त्राणां = दलानां, शोषणकार्यकारिणा, मरुता = वायुना । स्पृष्टा = लङ्घिता । माधवीलतेव = वासन्तीवीरुदिव । मदनेन ग्लाना मदनग्लाना = कामशरसन्तप्ता । शोच्या च—शोचनीया । क्षीणाङ्गयष्टित्वात् । प्रियं दर्शनं यस्याः सा-प्रियदर्शना च=मनोज्ञदर्शना च । इयं=शकुन्तला । आलक्ष्यते = परिदृश्यते । [ शोच्या च प्रियदर्शना चेति विरोधाभासः, शोच्या = दयनीयेत्यर्थाद्विरोधपरिहारात् । मदनग्लानेत्यस्य-शोच्यत्वे हेतुत्वेनोपादानात् काव्यलिङ्गम् । उपमा । अनुप्रासः ] ॥ १२ ॥

कस्येति । यदि युवाभ्यां न कथयिष्यामि, तर्हि कस्यै कथयिष्यामि, युष्मद्भिन्ना का मेऽन्तरङ्गभूतेत्याशयः । तर्हि कथं न कथयसीत्यत आह—

हो गया है । स्तनों के ढीले पड़ जाने से इसकी छाती भी परिक्षीण हो गई है । मध्यभाग भी क्लान्त है=मुरझाया हुआ है । कन्धे भी बहुत झुक गये हैं । देह की कान्ति भी पीली पड़ गई है । अतः काम सन्ताप से परिक्षीण हो यह तो उसी प्रकार शोचनीय है, एवं देखने में सुन्दर भी मालूम पड़ रही है, जिस प्रकार पत्तों को सुखा देनेवाले पवन के झोंके से सूखी हुई ( मारी हुई ) माधवी (वासन्ती) लता शोचनीय और कमनीय मालूम होती है ॥ १२ ॥

शकुन्तला—( लम्बी साँस लेकर ) हे सखियों ! तुमारे सिवाय मैं अपना

१ 'कस्यै वाऽन्यस्यै' इति पाठान्तरम् ।

**उभे**— सहि ! अदो ज्जेव णिब्बन्धो । सिणिद्धजणसंबिभत्तं क्खु दुक्खं सज्झवेअणं होदि ।

[ सखि ! अत एव निर्बन्धः। स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति ]।

**राजा**—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रोत्तरश्रवणकातरतां गतोऽस्मि ॥ १३ ॥

किन्त्विति। आयासस्य हेतुरेव हेतुका=क्लेशकारिणी, कथमहं क्लेशकारिणी खल्वनयोर्जाताऽस्मीति सन्तापाधिक्यात्-निःश्वासः। अत एव='भूयान् खलु ते क्लेश' इति विभाव्यैव। निर्बन्धः=आग्रहोऽस्माकम्। खलु=निश्चयेन। स्निग्धेषु जनेषु—संविभक्तं=प्रियजननिवेदितम्। अत एव सम्यग्विभक्तमिव। दुःखं= क्लेशः। सह्या वेदना यस्य तत्-सह्यवेदनं=सहनीयपीडावेगम्।

पृष्टेति। समं दुःखं सुखं च यस्य तेन-समदुःखसुखेन=दुःखेषु सुखेषु च तुल्यमेव दुःखं सुखञ्चानुभवता। जनेन=सखीजनेन। मनोगतम्=हृदयकोण-निगूहितम्। आधेर्हेतुस्तम्-आधिहेतुम्=मानसिकक्लेशकारणम्। पृष्टा=अनुयुक्ता। इयं बाला=शकुन्तला। न न वक्ष्यति=अवश्यमेवाभिधास्यति। द्वौ नञौ

कष्ट कहूँगी भी किससे। परन्तु इस सन्ताप के कारण को तुम लोगों से कहकर मैं तुम लोगों के कष्ट का ही कारण बनूँगी। अर्थात् इस बात को सुनकर तुम लोग भी कष्ट में ही पड़ जाओगी।

**दोनों सखियाँ**—हे सखि ! इसीलिए तो तुमसे हम पूरी २ बात कहने का आग्रह कर रही हैं। क्योंकि-अपने स्नेही जनों को सुनाकर उनमें बाँट दिये जाने से दुःख भी सह्य हो जाता है, और उसकी पीड़ा भी कुछ कम ही हो जाती है।

**राजा**—अपने सुख और दुःख के साथी प्रिय सखी जनों से अनुरोधपूर्वक पूछे जाने पर यह बाला अपने मन की आधि=गुप्त व्यथाको अवश्य बतावेगी।

शकुन्तला—जदो पहुदि तवोवणरक्खिदा सो रायस्सी मम दंसणपधं गदो—'। ( इत्यर्द्धोक्तेन—लज्जां नाटयति )।

[ यतः प्रभृति तपोवनरक्षिता स राजर्षिर्मम दर्शनपथं गतः—' ]

उभे—कधेदु कधेदु पियसही।

[ कथयतु कथयतु प्रियसखी ]।

---

प्रकृतार्थदार्ढ्यं बोधयतः। अत्र=प्रश्नेऽस्मिन्। अनया=शकुन्तलया। बहुशः=भृशं। विवृत्य=परावृत्य। सतृष्णं=साभिलाषं। दृष्टोऽपि—प्रेक्षितोऽपि,-अहम्। उत्तरस्य श्रवणे कातरस्तस्य भावस्तत्ताम्—उत्तरश्रवणकातरताम्=[ किमियमभिधास्यति, किंनिमित्ताऽस्याः पीडेति-] उत्तरश्रवणातुरतां। गतोऽस्मि=प्राप्तोऽस्मि। अस्मीत्यहमर्थेऽव्ययम्। [ अवश्यमाधिहेतुं वक्ष्यतीत्यत्र समदुःखसुखेनेति हेतुगर्भविशेषणमुपात्तमिति काव्यलिङ्गमलङ्कारः। अनुप्रासः ]॥ १३ ॥

यतः प्रभृति = यत आरभ्य। तपोवनस्य रक्षिता = आश्रमसंरक्षणे व्यापृतः। सः = वृक्षसेचनकाले मया दृष्टः। राजर्षिः = दुष्यन्तः। दर्शनस्य पन्थाः—दर्शपथस्तं = लोचनगोचरम्। इति = इत्येतदन्तेन। अर्द्धोक्तेन=अर्द्धमभिहितेनैव

---

परन्तु मुझे भी इसने बार बार, घूम २ कर बड़े ही अनुराग पूर्ण सतृष्ण नयनों से देखा है, अतः मैं इसके उत्तर को सुनने के लिए उतावला हो रहा हूं।

अर्थात्—यह मेरे ही ऊपर अनुरक्त है, या अन्य कोई कारण है–इसका निर्णय करने के लिए, इसका उत्तर सुनने को मैं व्याकुल ( अधीर ) हो रहा हूं। मैं तो इसके हाव-भाव से अभी तक इसे अपने ही ऊपर अनुरक्त समझ रहा हूं। परन्तु इसके मुख से सुने बिना इस बातका ठीक २ निर्णय नहीं हो सकता है ॥१३॥

शकुन्तला—जबसे तपोवनके रक्षक वे राजर्षि मेरी दृष्टिमें आए हैं........ ( इस प्रकार आधा वाक्य कह कर लज्जा का अभिनय करती है = लज्जित होती है )।

दोनों सखियाँ—हाँ, हाँ, सखि ! कहती चलो, कहती चलो, रुकती क्यों हो ?।

**शकुन्तला**—तदो पहुदि तग्गदेण अहिलासेण एआवदवत्थह्मि संवुत्ता।

[ ततः प्रभृति तद्गतेनाऽभिलाषेण एतावदवस्थाऽस्मि संवृत्ता ]।

**उभे**— दिट्ठिआ दे अणुरूए वरे अहिलासो। अदवा साअरं उज्झिअ कहिं महाणईए पविसिदव्वं।

[ दिष्ट्या तेऽनुरूपे वरेऽभिलाषः। अथवा सागरमुज्झित्वा कस्मिन्महानद्या प्रवेष्टव्यम् ? ]।

**राजा**—( सहर्षं— ) श्रुतं यच्छ्रोतव्यम्।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः।
दिवस इवाऽभ्रश्यामस्तपाऽत्यये जीवलोकस्य ॥१४॥

---

वाक्येन। कथयतु=अलं लज्जयेत्याशयः। ततः प्रभृति=तत आरभ्य। तं गतः, स गतो=विषयो वा यस्य तेन–तद्गतेन=दुष्यन्तविषयकेण, अभिलाषेण=मनोरथेन। एतावती अवस्था यस्याः सा–एतावदवस्था=ईदृशदशाविकला। संवृत्ता=जाता।

एतेन लज्जानाशरूपा कामस्य सप्तमी खल्ववस्था शकुन्तलाया दर्शिता। दृष्ट्या=सौभाग्येन। अनुरूपे=समानशीलवयोलावण्यसौन्दर्यवति। वरे=वरयितव्ये। उज्झित्वा=त्यक्त्वा। महानद्या=भागीरथ्यादिरूपया। श्रोतव्यं=श्रवणयोग्यं। मदभिलषितं वाक्यं श्रुतमित्याशयः।

स्मर इति। स्मर एव=काम एव। तापस्य हेतुः–तापहेतुः=सन्ताप-

---

**शकुन्तला**—तभी से मैं उनपर आसक्त हो गई हूं, और उनके ही विरह में मेरी आज यह अवस्था हो रही है।

**दोनों सखियाँ**--हर्ष की बात है, कि—तेरी अपने योग्य वर में ही इच्छा हुई है। अथवा—समुद्र को छोड़कर महानदी (गङ्गा आदि बड़ी नदियाँ) दूसरी जगह जा भी कहाँ सकती हैं ?।

**राजा**—( हर्ष पूर्वक ) जिस बात को सुनने की मेरी चाहना थी—इच्छा थी—वही बात मैंने सुनली।

जिस कामदेव ने मुझे प्रिया के विरह में इतना सन्ताप पहुंचाया, वही काम-

**शकुन्तला**——ता जइ वो अणुमदं, तदो तधा पउत्तिदव्वं जधा तस्स राएसिणो अणुकम्पणीआ होमि त्ति। अण्णधा सुमरेध मं।

[ तद्यदि वामनुमतं, ततस्तथा प्रवर्त्तितव्यं यथा तस्य राजर्षेरनुकम्पनीया भवामीति, अन्यथा स्मरतं [1]माम् ]।

कारणम् । स एव = स्मर एव । तपस्यात्ययस्तपात्ययस्तस्मिन्—तपात्यये = ग्रीष्मविगमे । जीवलोकस्य = प्राणिसङ्घस्य । अभ्रैः श्यामः-अभ्रश्यामः = जलदपटलनीलः। दिवस इव=वासर इव । मे=मम । निर्वापयिता = हर्षप्रदः। जातः = सम्पन्नः। अहो मे सौभाग्यं यत्सन्तापकस्वभावोऽपि स्मरः प्रियानुरागप्रापणेन सुखप्रदो मे संपन्न इत्याशयः । [ यस्तापहेतुः स एव निर्वापयितेति विरोधाभासः । नायिकागतस्य निर्वापकतया, स्वहृद्गतस्य च तापकतया वास्तवविरोधाऽभावात् । दिवस इवेत्युपमा । अनुप्रासः । आर्या ]॥ १४॥

तत् = इत्थं कामस्य नितरां प्रवर्त्तनात् । वां = युवयोः । अनुमतम् = अभीष्टं । ततः = तदा । प्रवर्त्तितव्यं = समाचरणीयं । यथा = येनोपायेन । अनुकम्पनीया = दयनीया । तेन स्वीकृतेति यावत् । [ पाठान्तरे—अन्यथा = नो चेदभिमतं युवयोः,। तदा—अवश्यं = ध्रुवं । मे = मह्यं । तिलोदकं=तिलमिश्रमुदकं-तिलजला-ञ्जलिं। सिञ्चतं=निक्षिपतम् । नूनं मृतैवाद्य, श्वो वाऽहमित्याशयः।

[ शमो—नाम मुखसन्ध्यङ्गं, 'तस्योपशमनं यत्तु शमनं तदुदाहृत'—मिति तल्लक्षणात् । क्वचित्स्मरतं मामित्येव पाठः । तत्रापि स एवार्थः]। विमर्शं छिनत्ति

देव अब मेरे सन्ताप को दूर करने वाला भी वैसे ही हो गया है, जैसे—ग्रीष्म में सन्ताप देनेवाला भी दिवस—ग्रीष्म के चले जाने पर मेघों से आच्छन्न हो कर प्राणियों के सन्ताप का दूर करने वाला हो जाता है ॥ १४ ॥

**शकुन्तला**—अतः हे सखियो ! यदि तुम लोगों को भी जचे तो ऐसा कोई उपाय करो, जिससे मैं उस राजर्षि की दया को पात्र हो सकूं। नहीं तो मेरे मरने के बाद मुझे तुम लोग याद ही करना। अर्थात् मैं अब उनके विरह में बच नहीं सकूंगी। मरने के बाद मेरे को तो तुम लोग फिर तिलाञ्जलि ही देना।

१ 'अन्यथा अवश्यं सिञ्चतं मे तिलोदकम्' पा० ।

राजा—अहो ! [1]विमर्शच्छेदि वचनम् । एतदेव कामफलम्, यत्नफलमन्यत् । [2]एतदवस्थाऽपि मां सुखयति ।

प्रियंवदा—( जनान्तिकम्— ) अणसूए ! दूरगदो से मणोरहो, अक्खमा इअं कालहरणस्स ।

[ अनसूये ! दूरङ्गतोऽस्या मनोरथः । [3]अक्षमेयं कालहरणस्य ] ।

---

तच्छीलं—विमर्शच्छेदि = संशयनिरासकं । 'संशयच्छेदी'ति पाठेऽपि स एवार्थः । [एतेन दृढं निश्चयो जातो यदियं मामवश्यमेव कृतार्थयिष्यतीति-राज्ञ आशयः] ।

एतदेव = उभयोस्तुल्या प्रीतिः । कामस्य फलं = स्मरकरणीयम् । अन्यत् = सङ्गमनादिकं तु । यत्नस्य = प्रयत्नस्यैव । फलं = कार्यम् । प्रीतिरेव कामजन्या, सङ्गमनादिकन्तु प्रयत्नसाध्यमिति भावः । एषा अवस्था यस्याः सा—एतदवस्था = कामशरसन्तप्ताङ्गयष्टिरपीयं । सुखयति = प्रीणाति । दूरं गतो—दूरगतः= अतिभूमिं गतः । परां काष्ठां गतः । मनोरथः = अनुरागः । कालस्य हरणं, तस्य = कालक्षेपस्य । न क्षमते इत्यक्षमा=अयोग्या । कालक्षेपे हीयं म्रियेतेत्याशयः ।

---

राजा—अहो ! इसका यह वचन तो मेरे संशय को स्पष्ट ही दूर करने वाला है । यही काम का फल है । और तो सब प्रयत्न का ही फल है । अर्थात् इसका मेरे प्रति ऐसा गाढ अनुराग ही काम का मुख्य फल है । सङ्गम आदि तो फिर प्रयत्न मात्र साध्य है । इस प्रकार क्षीण अवस्था में होती हुई भी यह मुझे सुखी ही कर रही है । अर्थात्—मेरे सौभाग्य की यह पराकाष्ठा है, जो यह सुन्दरी मेरे ही कारण इस दशा को पहुँच गई है ।

प्रियंवदा—( अलग से ) हे अनसूये ! इसकी इच्छा, इसकी कामवासना

---

१ 'संशयच्छेदि' पा० । २ 'एतावदवस्था' पा० ।

३ इह—'यस्मिन्बद्धभावा एषा, स ललामभूतः पौरवाणां, तद्युक्तमस्या अभिलाषोऽभिनन्दितुम् । अनसूया-तथा यथा भणसि । प्रियंवदा—(प्रकाशं) सखि ! दृष्ट्याऽनुरूपस्तेऽभिनिवेशः, सागरमुज्झित्वा क्व वा महानदी अवतरति । क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते ? । राजा—किमत्र चित्रं—विशाखे शशाङ्कलेखामनुवर्तेते' ... [illegible]

**अनसूया**---पिअंवदे ! को णु उवाओ भवे, जेण अविलम्बिदं णिहुदञ्च सहीए मणोरहं सम्पादेह्म ।

[ प्रियंवदे ! को नु उपायो भवेद्येन अविलम्बितं, निभृतञ्च सख्या मनोरथं सम्पादयावः ? ] ।

---

[अत्र यावत् कामस्य सप्तमीमवस्थां नीतेयं । कालक्षेपे त्वचिकित्स्यातङ्केयं भवेत् । कामदशास्तु—'नयनप्रीतिः प्रथमं, चित्तासङ्गः, ततोऽर्थसङ्कल्पः । निद्राच्छेद-स्तनुता, विषयनिवृत्तिस्त्रपानाशः ।। उन्मादो मूर्च्छा, मृतिरित्येता दशैव स्मरदशाः स्युः ।।'—इति । तत्र सखीसन्निधौ स्वेच्छाप्रकाशनात्त्रपानाशावस्था जाता । यदी-दानीमपि नेयमुपचरिता भवेदन्त्यास्तिस्रोऽपि कामावस्था अस्या अमङ्गलरूपा भवेयुरिति ] अत्र पाठान्तरमप्यस्ति, तस्येत्थं व्याख्या—

यस्मिन् = राज्ञि दुष्यन्ते । बद्धो भावो यया सा-बद्धभावा = बद्धानुरागा । ललामभूतः = भूषणीभूतः । प्रधानतमो वा । पौरवाणां = पुरुवंश्यानां । युक्तं = योग्यः । योग्यार्थकमव्ययमेतत् । अभिनन्दितुम् = अनुमोदयितुं । तथा = तथैव युक्तम् । यथा भणसि = यथा त्वं वदसि । सखि ! = शकुन्तले ! दिष्ट्या = हर्षे । भाग्येन । अनुरूपः = योग्यः । अभिनिवेशः = स्नेहबन्धः । अतिमुक्तलतां = वासन्तीलताम् । पल्लवितां = किसलयवतीं । जातानुरागां वा । सहकारमन्तरेण = रसालपादपं विना । सहते = रञ्जयति । स्वीकुरुते इति वा । वासन्तीलतासमा-नायाः शकुन्तलाया जातरागायाः सहकार इवानुरूपे दुष्यन्ते भक्तिरित्याशयः । विशाखे = तारकाविशेषयुगलम् । चन्द्रलेखाम् = इन्दुलेखाम् । अनुवर्त्तेते = अनुगच्छतः । [अत्र सख्योर्विशाखासादृश्यं, शकुन्तलायाश्चन्द्रलेखासादृश्यं बोध्यम् । सखीभ्यामस्या अभिलाषोऽनुमत इति युक्तमेवैतदित्याशयः ] ।

अविलम्बितं = त्वरितं । निभृतं = निगूढं, सविनयञ्च । मनोरथं = दुष्यन्त-

---

तो बहुत दूर पहुँच चुकी है । (बहुत बढ़ चुकी है) । अब यह ज्यादा बिलम्बको सहन करने में असमर्थ है । अतः शीघ्र ही इसके प्रियजन को इससे मिलाना चाहिए ।

**अनसूया**—हे प्रियंवदे ! ऐसा कौन सा उपाय है, जिससे हम अपनी सखी के इस मनोरथ को ( दुष्यन्त के साथ समागम को ) जल्दी से और गुप्तरूप से सिद्ध कर सकें ? ।

**प्रियंवदा**—णिहुदं त्ति चिन्तणीअं, सिग्घं त्ति ण दुक्करं।

[ निभृतमिति चिन्तनीयम्। शीघ्रमिति न दुष्करम् ]।

**अनसूया**—कधं विअ?।

[ कथमिव ]।

**प्रियंवदा**—णं सो वि राएसी इमस्सिं जणे सिणिद्धदिट्ठिआ सूइदाहिलासो इमेसुं दिअसेसुं पजाअरकिसो विअ लक्खीअदि।

[ ननु सोऽपि राजर्षिरस्मिञ्जने स्निग्धदृष्ट्या सूचिताभिलाष एषु दिवसेषु प्रजागरकृश इव लक्ष्यते ]।

**राजा**—(आत्मानमालोक्य-) सत्यमित्थम्भूत एवाऽस्मि। तथा हि—

---

समागमलक्षणम्। निभृतमिति चिन्तनीयं=केनोपायेन निभृतं कार्यं भवेदित्येव विचारणीयं। न दुष्करं=न कठिनम्। यतः—

सोऽपि=दुष्यन्तोऽपि। अस्मिन् जने=शकुन्तलायाम्। स्निग्धया दृष्ट्या=स्नेहमसृणया दृष्ट्या। सूचितोऽभिलाषो यस्यासौ–सूचिताभिलाषः=प्रकटितानुरागः। एषु दिवसेषु=इदानीं। प्रजागरेण कृशः-इव=अनिद्राताान्त इव। लक्ष्यते=दृश्यते। एतेनाऽनिद्रालक्षणाऽवस्था राज्ञो दर्शिता। आत्मानं=स्वशरीरम्। इत्थम्भूतः=प्रियंवदोक्तावस्थः। कृशतर इति यावत्।

---

प्रियंवदा—'यह कार्य गुप्तरूप से कैसे हो सकेगा'–यही सोचना है। शीघ्र होना तो कोई कठिन नहीं है।

अनसूया—यह कार्य शीघ्र भी कैसे हो सकता है?।

प्रियंवदा—क्योंकि—वह राजर्षि दुष्यन्त भी इस शकुन्तला को बार २ स्नेह एवं चाह से देखने से, अपनी इसमें आसक्ति को सूचित कर ही चुका है, और आजकल इस शकुन्तला की चाह में रात को जागकर बिताने से ही मानों वह कृश और म्लान बदन हो रहा है।

राजा—( अपनी ओर देखकर ) सचमुच, मैं ऐसा (कृश) ही हो रहा हूं। क्योंकि, देखो—

अशिशिरतरैरन्तस्तापैर्विवर्णमलीमसं
निशि-निशि भुजन्यस्ताऽपाङ्गप्रवर्त्तिभिरश्रुभिः।
अनतिलुलितज्याघाताऽङ्कान्मुहुर्मणिबन्धना—
त्कनकवलयं स्रस्तं-स्रस्तं मया प्रतिसार्य्यते ॥१५॥

प्रियंवदा—( विचिन्त्य- ) हला ! मअणलेहणं दाणिं से करीअदु,

---

अशिशिरेति । निशि निशि=प्रतिनिशं । अन्तस्तापैः=हृदयदाहैः-हेतुभूतैः । अशिशिरतरैः = अत्युष्णैः । भुजे न्यस्तादपाङ्गाद्विवर्त्तन्ते तच्छीलैः-भुजन्यस्ता-पाङ्गविवर्त्तिभिः = हस्ततलन्यस्तनयनान्तनिर्गतैः । अश्रुभिः=लोचनजलबिन्दुभिः। विवर्णं च तन्मलीमसञ्च-विवर्णमलीमसं = विवर्णमलिनं, कनकस्य वलयं — कनकवलयं = स्वर्णकङ्कणम्,—न अतिलुलितो ज्याघातस्याऽङ्को यस्यासौ— तस्मात्-अनतिलुलितज्याऽऽघाताङ्कात् = अनभिव्यक्तमौर्वीकिणभूषितात्, मणि-बन्धनात् = प्रकोष्ठात्, मुहुः = भृशं । स्रस्तं-स्रस्तं = भ्रष्टं-भ्रष्टं सत् । पुनः = पुनरपि । प्रतिसार्यते = मया स्वस्थाने स्थाप्यते । [ स्वभावोक्तिः । हरिणी-वृत्तम् ] ॥ १५ ॥

---

हस्ततल पर या सोते समय भुजा पर रखे हुए नेत्र के कोने से, धारारूप से बहते हुए, भीतर की तपन से अत्यन्त उष्ण, ( गर्म-गर्म ) आँसुओं से काले और मलिन पड़े हुए, अपने सोनेके इस कड़ेको, जोकि धनुष की डोरीको बारंबार खिचने से जिसमें ताजे ही दाग पड़े हुए हैं-ऐसे मणिबन्धस्थान ( कलाई, पोंहचा ) पर से खिसक-खिसक कर गिरता रहता है, उसको मैं प्रत्येक रात्रिमें बारंबार (फिरसे) हाथ में डालता रहता हूं। अर्थात्—मैं इतना दुर्बल होगया हूं, कि-अपने हाथ के सोने के कड़े को-जो अनवरत गिरती हुई आँसुओं की धारा से काला और मलिन हो गया है, और जो बार २ हाथ से निकल २ कर गिरता रहता है, उसको रातभर फिर से हाथ में डालता रहता हूं। ऐसे ही मेरी प्रत्येक रात बीत रही है ॥ १५ ॥

प्रियंवदा—( कुछ सोचकर ) हे सखि ! इसके लिए एक मदनलेख ( प्रेम-

अहं तं सुमणोगोविदं कदुअ देवदासेवावदेसेण तस्स रण्णो हत्थं पावइस्सं।

[ हला ! मदनलेखनमिदानीमस्याः क्रियताम् । अहं तत् सुमनोगोपितं कृत्वा देवताप्रसादाऽपदेशेन तस्य राज्ञो हस्तं प्रापयिष्यामि ]।

**अनसूया**—सहि ! रोअदि मे सुउमारो एसो पओओ। किं वा सउन्तला भणादि ?।

[ सखि ! रोचते मे एष सुकुमारः प्रयोगः। किं वा शकुन्तला भणति ? ]।

**शकुन्तला**—सहीणिओओ वि विकप्पीअदि ?।

[ सखीनियोगोऽपि विकल्प्यते ? ]।

**प्रियंवदा**—तेण हि अत्तणो उवण्णासाणुरूअं चिन्तेहि ललिदपदावलिबन्धं गीदिअं।

---

मदनलेखनं = कामावस्थासूचकं पत्त्रलेखनं। तत् = मदनलेखनं। सुमनोभिर्गोपितं-सुमनोगोपितं=पुष्पपटलनिहितं। कृत्वा=विधाय। देवतानां प्रसादस्याऽपदेशस्तेन—देवताप्रसादापदेशेन=देवताप्रसादोऽयमिति च्छलेन। 'देवतासेवापदेशेने'ति पाठे देवतानां सेवा येन तत्—देवतासेवं=पुष्पादिकं, तस्यापदेशो=व्याजस्तेनेत्यर्थः। सुकुमारः = सरलतरः। अनायासप्रयोज्यः। प्रयोगः=उपायः।
किं भणति = तस्यै रोचते किमेतत् ?। सखीनां नियोगः—सखीनियोगः = सख्यादेशः, सख्युपदिष्टं। विकल्प्यते = विचार्यते ?। विचाल्यते वा। नैवेत्यर्थः।

---

पत्र ) लिखा जाए। उस पत्र को फूलों में छिपाकर, देवता के प्रसाद के बहाने से, मैं उस राजा के हाथ तक पहुँचा दूँगी।

**अनसूया**—हे सखि ! यह सरल और सुन्दर उपाय मुझे भी अच्छा लग रहा है। पर शकुन्तला से भी पूछ लो–वह इस विषय में क्या कहती है ?।

**शकुन्तला**—क्या सखियों की सलाह व आज्ञा भी कभी टाली जा सकती है ?। अर्थात्–मुझे भी यह उपाय अच्छा लगता है।

**प्रियंवदा**—तो फिर अपने प्रसङ्ग एवं स्वभाव के अनुरूप, सुन्दर एवं

[ तेन हि आत्मन उपन्यासानुरूपां चिन्तय ललितपदावलिबन्धां गीतिकाम ]।

शकुन्तला--चिन्तेमि ! किन्तु अवधीरणाभीरुअं वेवदि मे हिअअं।

[ चिन्तयामि, किन्तु अवधीरणाभीरुकं वेपते मे हृदयम् ]।

राजा--( विहस्य—)

अयं स ते तिष्ठति सङ्गमोत्सुको,
विशङ्कसे भीरु ! यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता, न वा श्रियं,
श्रिया दुरापः कथमीप्सितो भवेत् ? ॥ १६ ॥

---

तेन=यद्यनुमत पत्त्रलेखनं तर्हि, उपन्यासानुरूपाम्=स्वाभिप्रायप्रकाशिकां । ललितः पदावलीना बन्धो यस्यां सा, तां—ललितपदावलिबन्धां=कोमलप्रसन्न-पदकदम्बगुम्फितां । गीतिकां = छन्दोभेदम् । 'आर्यापूर्वार्द्धसमं द्वितीयमपि यत्र भवति हंसगते!। छन्दोविदस्तदानीं गीतिंताममृतवाणि भाषन्ते॥' इत्युक्तलक्षणां । चिन्तय = विरचय । अवधीरणाभीरुकम् = अवज्ञाभीतं । वेपते = कम्पते ।

विहस्येति । वृथाऽऽशङ्कमानां शकुन्तलां दृष्ट्वा राज्ञो हासः ।

अयमिति । भीरु !=हे वृथाभीतितरले !। यतः=दुष्यन्तात् । अवधीरणाम्= अवहेलनम् । विशङ्कसे = आशङ्कसे । सोऽयं=दुष्यन्तः । ते=तव । सङ्गमे उत्सुकः-सङ्गमोत्सुकः=सङ्गमोत्कण्ठाकुलः । तिष्ठति=त्वदाज्ञां प्रतीक्षमाणस्तिष्ठति । प्रार्थयिता=याचकः। लक्ष्मीसमुत्सुकः । श्रियं=लक्ष्मीं । लभेत वा = प्राप्नुयाद्वा । न

---

ललितपदावलि से घटित, कोई अच्छीसी सरस गीतिका ( आर्या बिशेष ) को सोचकर बनाओ, जो उस पत्र में लिखी जाए ।

शकुन्तला—ऐसी गीतिका तो मैं सोच रही हूं। परन्तु 'कहीं वे मेरी उपेक्षा व तिरस्कार न कर दें' इस भय से मेरा तो हृदय काँप रहा है।

राजा—( हंसकर )—हे भीरु ! जिससे तुम तिरस्कार एवं अवधीरणा ( अस्वीकार ) की शङ्का कर रही हो, वह तो मैं—तुमारे सङ्गम के लिए स्वयं

अपि च—

अयं स यस्मात्प्रणयावधीरणा—
मशङ्कनीयां करभोरु ! शङ्कसे ।
उपस्थितस्त्वां प्रणयोत्सुको जनो,
न रत्नमन्विष्यति, मृग्यते हि तत् ॥ १७ ॥

वा=न लभेत वा । परन्तु—श्रिया=लक्ष्म्या तु । ईप्सितः=प्रार्थयिता । कथं दुरापः?=कथं न सुलभः ? । श्रियाः प्रार्थयिता कदाचित्तां लभते, न वा लभत इति युक्तं, किन्तु लक्ष्म्या किं प्रार्थयितारो दुर्लभाः ? । एवञ्च भवत्याः प्रार्थनां विहातुं नाहं समर्थ इत्याशयः । [ सामान्येन विशेषसमर्थनादर्थान्तरन्यासः । 'वंशस्थं' वृत्तं ] ॥ १६ ॥

अयमिति । [1]करभाविवोरू यस्याः सा करभोरूः । तत्सम्बुद्धौ—हे ! करभोरु != करिकरोपमोरु ! । यस्मात् = यस्माज्जनात् । अशङ्कनीयां = शङ्कितुमप्ययोग्यां । प्रणयस्यावधीरणां—प्रणयावधीरणां = स्नेहप्रार्थनाभङ्गम् । शङ्कसे = त्वमाशङ्कसे । सोऽयं जनः = दुष्यन्तलक्षणो जनः । प्रणये उत्सुकः—प्रणयोत्सुकः = स्नेहोत्कण्ठितः सन् । त्वां—स्वयमेव प्रार्थयितुम् । उपस्थितः = बहिरवतिष्ठते ।

लाकायित हो रहा हूँ । प्रार्थी ( याचक ) तो लक्ष्मी की प्रार्थना करने पर भी लक्ष्मी को कदाचित् पा सके, या नहीं भी पा सके, परन्तु लक्ष्मी के लिए तो प्रार्थी ( याचक ) क्या कभी दुर्लभ होता है । नहीं । अर्थात्—लक्ष्मी तो किसीकी प्रार्थना स्वीकार करे, या न करे, यह तो सम्भव भी है, पर स्वयं लक्ष्मी यदि किसी के पास जाना चाहे, तो उसे कौन नहीं चाहेगा ? । अतः तुम स्वयं ही यदि मेरे को चाह रही हो, तो मैं तुमारी प्रार्थना को कैसे अस्वीकार कर सकता हूं ? ॥१६॥

और भी—हे करभोरु = गजनासोरु ! जिससे ( मुझसे ) तुम प्रार्थना की अस्वीकृति की अनुचित आशङ्का कर रही हो, वह जन ( मैं ) तो तुमारे स्नेह के लिए उत्सुक हो, तुम्हें खोजता २ स्वयं ही तुमारे पास उपस्थित है ! । क्योंकि

१ "मणिबन्धादाकनिष्ठं करस्य करभो बहि"रित्यमरात्—करभः = कनिष्ठिकाप्रान्तभागः ।

**सख्यौ**—अइ अत्तगुणावमाणिणि ! को णाम सन्दावणिव्वाण-हेतुअं सारदीअं ज्जोण्णं आदवत्तेण णिवारेदि ? ।

[ अयि आत्मगुणावमानिनि ! को नाम सन्तापनिर्वाणहेतुकां शारदीं ज्योत्स्नामातपत्त्रेण निवारयति ? ] ।

**शकुन्तला**—( सस्मितं—) णिओइदाह्मि । ( –इत्युपविष्टा चिन्तयति ) ।

नियोजिताऽस्मि ] ।

---

हि = यतः । रत्नं नान्विष्यति = रत्नं न स्वप्रार्थयितारमन्विष्यति । किन्तु—तत् = रत्नं । मृग्यते = अन्विष्यते । 'प्रार्थिभि'रिति शेषः । [ अर्थान्तरन्यासः । 'वंशस्थम्' ] ॥ १७ ॥

आत्मनो गुणानवमनुते तच्छीला—आत्मगुणावमानिनी । तत्सम्बुद्धौ–हे आत्मगुणावमानिनि ! = हे स्वगुणगौरवानभिज्ञे ! । सन्तापस्य निर्वाणे हेतुरेव हेतुका, तां—सन्तापनिर्वाणहेतुकां = सन्तापशमनकारिणीं । शरदि भवां—शारदीं = शरत्कालभवां । ज्योत्स्नां = चन्द्रिकाम् । आतपत्त्रेण = छत्रेण । एवञ्च भवत्या सङ्गतः स (राजा) नूनमात्मानं धन्यमनुमंस्यते, का कथा ततस्तवाऽवधीरणाया इति भावः । नियोजिता=कामलेखे नियुक्ताऽस्मि सखीभ्याम् । विस्मृतौ निमेषौ

---

रत्न किसी को खोजता नहीं है, किसी की प्रार्थना नहीं करता है, किन्तु उसको खोज दूसरे लोग ही करते हैं, प्रार्थना करते हैं। अतः मैं ही खोजता २ तुमारे पास आया हूं ॥ १७ ॥

**दोनों सखियां**—हे अपने गुणों को कम समझनेवाली सखि ! सन्ताप को दूर करनेवाली, शरदतु के चन्द्रमा की चन्द्रिका ( चाँदनी ) को भला छाता लगाकर कौन हटाता है ? । शारद चन्द्रमा की ठण्डी २ किरणों को, उसकी ताप को शान्त करनेवाली चाँदनी को, रोकनेके लिए भी कोई छाता लगाता है ?। नहीं । अतः वह राजा तुमको कैसे नहीं चाहेगा ? । कैसे रोकेगा ? । अवश्य चाहेगा ।

**शकुन्तला**—( हंसकर– ) सखियों के विशेष अनुरोध से ही मैं इस कार्य (पत्रलेखन) में प्रवृत्त हो रही हूं । ( बैठी हुई कविता का चिन्तन करती है ) ।

राजा—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि। यतः—

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन ॥ १८ ॥

शकुन्तला—हला ! चिन्तिदा मए गीदिआ, असण्णिहिदाणि उण लेहणसाहणाणि।

[ हला ! चिन्तिता मया गीतिका, असंनिहितानि पुनः लेखनसाधनानि ]।

---

यस्य, तेन विस्मृतनिमेषेण = निमेषशून्येन । प्रियां=शकुन्तलां । स्थाने = उचितेऽवसरे । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः ।

उन्नमितैकेति । पदानि = कवितापदानि । रचयन्त्याः = विरचयन्त्याः । अस्याः=शकुन्तलायाः । उन्नमिता एका भ्रूलता यस्मिन् तत्=उन्नमितैकभ्रूलतम्= उत्क्षिप्तैकभ्रुकुटिमनोहरम् । आननम् = मुखम् । पुलकैरञ्चितेन—पुलकाञ्चितेन= रोमाञ्चाऽञ्चितेन । कपोलेन=गण्डस्थलेन । मयि = दुष्यन्ते । अनुरागं = प्रेमबन्धं । कथयति = सूचयति । [ स्वभावोक्तिः । भ्रूलतामित्यत्रोपमा । 'आर्या' ] ॥ १८ ॥

असन्निहितानि=असन्निकटस्थानि । लेखनस्य साधनानि – लेखनसाधनानि=

---

राजा—मैं यहाँ निर्निमेष लोचन हो बड़े ही अच्छे मौके में प्रिया को देख रहा हूं। क्योंकि—

अपनी भ्रुकुटि को टेढ़ी करके, कविता के पदों को रचती हुई मेरी प्रिया का मुख ही पुलकाञ्चित = रोमाञ्चित—कपोल द्वारा मेरे प्रति इसके अनुराग को प्रकट कर रहा है ॥ १८ ॥

शकुन्तला—हे सखियों ! मैंने गीति तो सोच ( बना ) ली। परन्तु पत्र लेखन के साधन ( भोज-पत्र–स्याही-कलम-दवात आदि ) तो यहाँ हैं ही नहीं, पत्र कैसे लिखूँ ?

प्रियंवदा—णं इमस्सिं सुओदरसुउमारे णलिणीवत्ते पदच्छेद-भत्तीए णहेहिं अलिहीअदु ।

[ नन्वस्मिञ्छुकोदरसुकुमारे नलिनीपत्त्रे [1]पदच्छेदभक्त्या नखैरालिख्यताम् ] ।

शकुन्तला—( यथोक्तं रूपयित्वा- ) हला ! सुणध दाव सङ्गदत्था ण वत्ति ।

[ हला ! शृणुतं तावत्—सङ्गतार्था न वेति ] ।

उभे—अवहिद म्ह ।

[ अवहिते स्वः ] ।

( शकुन्तला—वाचयति ) ।

तुज्झ ण आणे हिअअं, मम उण मअणो दिवा वि रत्तिं वि ।
णिक्किव ! दावइ बलिअं, तुह हत्थमणोरहाइं अङ्गाइं ।

---

लेखनोपकरणानि, मसीपात्र-पत्त्रादीनि । शुकस्योदरमिव सुकुमारे शुकोदरसुकुमारे= कीरक्रोडकोमले । नलिनीपत्त्रे = पद्मिनीपत्त्रे । पदानां छेद एव भक्तिस्तया—पदच्छेदभक्त्या । पदच्छेदविधानमार्गेण । नखैरालिख्यतां = नखैरक्षराणि लिख । तावत् = लेखनात्पूर्वं । सङ्गतोऽर्थोऽस्याः-सा सङ्गतार्था = युक्तार्था । अवहिते = दत्तावधाने ।

---

प्रियंवदा—सुग्गे के उदर की तरह सुकुमार इस कमलिनी के हरे २ पत्ते पर ही नखों से 'पत्रच्छेद्य' ( पत्तों पर नाना प्रकार के लेख, चित्र आदि—लिखने की कला ) की तरह ही तुम पत्र लिखो ।

शकुन्तला—( नखाग्र से कमलिनी के कोमल पत्ते पर कवितामय प्रेम-पत्र लिखकर ) हे सखियों ! तुम लोग भी इसे सुन लो, मैंने ठीक लिखा है, या नहीं ?।

दोनों सखियाँ—हम सावधान हो इसे सुन रहीं हैं, सुनाओ ।

[ शकुन्तला—पत्र को बाँचती हैं ] ।

---

१. 'पत्त्रच्छेद्यभक्त्ये'ति शोभनः पाठः । पत्त्रच्छेद्यं—पत्त्रलेखन-कलाभेदः ।

**तव न जाने हृदयं, मम पुनर्मदनो दिवाऽपि रात्रिमपि।**
**निष्कृप ! तापयति बलीयस्तव हस्ते-मनोरथान्यङ्गानि ॥१९॥**

तवेति। निष्कृप ! = हे निर्दय ! तव हृदयं न जाने = तव कीदृशी दशेति न जानामि। पुनः=किन्तु। तव हस्तमनोरथानि=त्वदधीनसुखाभिलाषाणि। त्वय्यासक्तानि पाठान्तरे तु-त्वयि=भवद्विषये। वृत्ता = जाता मनोरथा येषान्तानि-वृत्तमनोरथानि = जाताभिलाषाणि। भवदालिङ्गनादिकमीहमानानि। मे= मम। अङ्गानि = अवयवांस्तु। मदनः = मन्मथः। दिवाऽपि = अहन्यपि। रात्रावपि = रजन्यामपि। 'रात्रिमपी'ति पाठे कालाध्वनोरिति द्वितीया। बलीयः= अत्यर्थं। क्रियाविशेषणमेतत्। तापयति = सन्तापयति।

यद्वा—तव हृदयं = गोपुरकपाटायमानं, रिपुशरकोटिभिरप्यभेद्यमुरः-स्थलं, न जाने इति न=किन्तु जान एव, आप्तैः श्रवणात्। अत एव मेऽङ्गानि सर्वाण्यपि कामो दिवानिशं तापयति, तव तु वक्षोमात्रमपि न तापयति, कथमन्यथा निदाघेऽपि शीतलतर-मत्कुचयुगल-परिरम्भणाय भवान्नागच्छति। इत्थं च तादृशं तव वक्ष आलिङ्गितुमिच्छामीत्यर्थो बोध्यः। अनुमानमलङ्कारोऽत्रार्थे।

यद्वा हृद् अयमिति च्छित्वा-अयं जनस्तव हृत् = हृदयमिति रूपकं बोध्यम्। कामः पुनर्ममाङ्गान्यपि यत्तापयति, तन्न जाने इति प्रश्नकाकुः। वृथैव तापयतीत्यर्थः।

यद्वा-अयं जनस्तव हृत् = हृदयरूप इति त्वत्कान्तिजितेन कामेन पीड्यत इति, तदहं न जान इति न-किन्तु जान एव। त्वां कठोरत्वात्पीडयितुमशक्तः कामो मां दहतीत्याशयः। प्रत्यनीकालङ्कारः। इत्येवमादयो नानाविधा अर्था श्रीराघवभट्टैरुट्टङ्किता विस्तरभयान्नात्र लिख्यन्ते।

निष्कृपेत्युक्तेर्वज्रनामकप्रतिमुखसन्ध्यङ्गं दर्शितं, 'विरूक्षवचनं यत्तु वज्रमित्यभिधीयते' इत्युक्तेः। अत्र काव्यलिङ्गानुप्रासरूपकसमासोक्त्यादयो बहवोऽलङ्काराः सन्ति, ते निपुणं स्वयं निर्णेयाः। आर्या ] ॥ १९ ॥

हे निर्दय ! हे प्राणप्यारे ! तुमारे हृदय की क्या दशा है, यह तो मुझे मालूम नहीं है, पर मेरे तो सम्पूर्ण अङ्गों को (शरीर को) जिनका सुख तुमारे हाथ है और जिनकी भावना तुमारे में लगी हुई है, मदन (कामदेव) दिन रात प्रबल वेग से जला रहा है ॥१९॥

१ 'त्वयि वृत्त'। २. रात्रावपि ३. मेऽङ्गानि

राजा—अवसरः खल्वयमात्मानं दर्शयितुम्। ( सहसोपसृत्य )-

तपति तनुगात्रि ! मदनस्त्वामनिशं, मां पुनर्दहत्येव।
ग्लपयति यथा शशाङ्कं, न तथा हि कुमुद्वतीं दिवसः ॥२०॥

---

उपसृत्य = समेत्य। तपतीति। तनु गात्रं यस्याः सा तनुगात्री। तत्सम्बुद्धौ हे! तनुगात्रि ! = हे तन्वि ! मदनः=कामः। त्वाम् = भवतीम्। अनिशम् = निरन्तरम्। तपति = सततं सन्तापयति। पुनः = तु। मां = दुष्यन्तन्तु। दहत्येव= भस्मीकुरुत एव। हि=यतः। दिवसः=वस्रः। यथा शशाङ्कं = यादृक् चन्द्रमसं, ग्लपयति = म्लापयति। न तथा = न तादृक्। कुमुद्वतीं=कुमुदिनीं—ग्लपयति। दिवसे चन्द्रस्य यादृशी ग्लानिस्तथा न कुमुदिन्या इति कामेनाऽहमेव बलवद्बाध्ये, न पुनर्भवतीत्याशयः। [ वाक्ययोर्बिम्बप्रतिबिम्बभावाद् दृष्टान्तालङ्कारः। मदनः=हर्षदः, तपतीति विरोधाभासः, मदनपदस्य मन्मथपरत्वात्। 'तनुगात्री'ति पुनरुक्तवदाभासः। अनुप्रासः। यतस्तनुगात्री, अतस्तपतीति पदार्थहेतुकं काव्यलिङ्गञ्च। आर्या ]॥ २० ॥

---

राजा—अपने को प्रकट करने का यही अच्छा मौका है। (सहसा शकुन्तला के पास पहुँच कर–) हे तनुगात्रि! = हे कृशाङ्गि! तुमको तो कामदेव रातदिन केवल सन्ताप ही पहुँचाता है,परन्तु मेरे को तो वह जला ही रहा है। क्योंकि–जितना दिवस का आगम– सूर्य का उदय) चन्द्रमा को मलिन और हतप्रभ कर ग्लानि पहुँचाता है, उसे निष्प्रभ कर देता है, उतना कुमुदिनी को नहीं। [सूर्य के उदय होने से यद्यपि चन्द्रमा और कुमुदिनी दोनों को हानि व सन्ताप पहुंचता है। परन्तु कुमुदिनी की तो केवल यही हानि होती है, कि वह सङ्कुचित हो जाती है, पर उसकी शोभा तो बनी रहती है, परन्तु चन्द्रमा की तो सारी शोभा ही नष्ट हो जाती है। सूर्य को देखकर कुमुदिनी सङ्कुचित हो जाती है, और चन्द्रमा को देखकर कुमुदिनी खिल उठती है। पर सूर्योदय होने से चन्द्रमा की तो चाँदनी व शोभा दोनों ही नष्ट हो जाती हैं। अतः कुमुदिनी की अपेक्षा दिन से ( सूर्य से ) चन्द्रमा की ही अधिक हानि होती है ] ॥ २० ॥

सख्यौ—( विलोक्य सहर्षमुत्थाय- ) साअदं जधासमीहिदफलस्स अविलम्बिणो मणोरहस्स ?।

[ स्वागतं यथासमीहितफलस्याऽविलम्बिनो मनोरथस्य ? ]।

( शकुन्तला—उत्थातुमिच्छति )।

राजा—अलमलमायासेन।

सन्दष्टकुसुमशयनान्याशुविमर्दितमृणालवलयानि।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ २१ ॥

---

समीहितमनतिक्रम्य यथासमीहितं, यथासमीहितं फलं यस्यासौ—तस्य = अभीष्टफलशालिनः। फलोन्मुखस्येति यावत्। अविलम्बिनः = सहसोपयातस्य। मनोरथस्य=अभिलषणीयस्य। दुष्यन्तस्येति यावत्। अलमलमिति। आग्रहातिशयबोधनाय द्विरुक्तिः।

सन्दष्टेति। गुरुः परितः तापो येषान्तानि=गुरुपरितापानि=तीव्रसन्तापानि। अत एव—सन्दष्टं कुसुमानां शयनं यैस्तानि—सन्दष्टकुसुमशयनानि=सन्तापपरिलग्नकुसुमशय्यानि, ग्लपितशयनीयकुसुमानि च। आशु विमर्दितानि मृणालानां वलयानि यैस्तानि—आशुविमर्दितमृणालवलयानि = अविलम्बितपरिमर्दितबिसकटकाङ्गदानि। ते=तव। गात्राणि=अवयवाः। उपचारं=लौकिकमर्यादापालनमभ्युत्थानादिकं। नार्हन्ति=कर्तुं न योग्यानि। [ परिकरालङ्कारः, उत्तरार्द्धं प्रति पूर्वार्द्धार्थस्य हेतुत्वात् काव्यलिङ्गञ्च। 'आर्या' ]॥ २१॥

---

दोनों सखियाँ—( देखकर हर्षपूर्वक उठकर ) हमारी सखी के सन्ताप की शान्तिरूप अभीष्ट फल के सहित, अविलम्ब सिद्ध होने वाले ( शीघ्र ही स्वयं उपस्थित होनेवाले ) मनोरथविषयीभूत आपका ( = प्रिय दुष्यन्त का ) स्वागत है।

[ शकुन्तला—उठना चाहती है ]

राजा—नहीं, नहीं, इस प्रकार परिश्रम की कोई आवश्यकता नहीं है।

सन्ताप से फूलों की शय्या में भी जिनके दाग पड़ गए हैं, या पुष्प-शय्या के फूल भी जिनसे चिपक गए हैं, मृणाल के वलयों ( कङ्कणों ) को भी जिन्होंने सन्ताप से विमर्दित कर दिया है, और मुरझा दिया है, ऐसे तुमारे अत्यन्त

**शकुन्तला**—( ससाध्वसमात्मगतम्- ) हिअअ ! तधा उत्ताम्मिअ दाणिं ण किम्पि पडिवज्जसि ।

[ हृदय ! तथोत्ताम्य इदानीं [1]न किमपि प्रतिपद्यसे ! ] ।

**अनसूया**—इदो सिलादलेक्कदेसं अणुगेह्लदु महाभाओ ।

[ इतः शिलातलैकदेशमनुगृह्लातु महाभागः ] ।

( शकुन्तला—किञ्चिदपसरति ) ।

**राजा**—( उपविश्य- ) कच्चित्सखीं वो नाऽतिबाधते (ऽ) शरीरतापः ? ।

ससाध्वसं=सभयं । 'भीतिर्भीः साध्वसं भय'मित्यमरः । तथोत्तम्य = पूर्वं दुष्यन्तप्रेक्षणाय एवं व्याकुलीभूतमपि । इदानीं=तस्मिन् सहसोपगते । श्रुतसर्व-वृत्तान्ते । दृष्टे । किमपि न प्रतिपद्यसे=किमपि उचितं सत्कारादिकमपि न करोषि । पाठान्तरे- किं प्रतिपद्यसे = किमभिधास्यसि । एवं स्वविरहौत्कण्ठ्यं स्वमुखादेव वर्णयित्वेदानीं भृशं लज्जितं भव, का प्रतिपत्तिरित्याशयः । दुष्यन्तस्य सहसोप-गमाद् व्रीडिताया नायिकाया इयमुक्तिः ।

शिलातलस्यैकदेशं = शिलाखण्डम् । अनुगृह्लातु = स्वीकरोतु । अपसरति = दूरीभवति । लज्जयैवेति बोध्यम् । 'कच्चित्कामप्रवेदने' इत्यमरः । वः = युवयोः । सखीं = शकुन्तलां । शरीरतापः = अङ्गपीडा । 'अशरीरे'त्यपि च च्छेदः । अश-

सन्तप्त एव कामल ये अङ्ग—इस प्रकार उपचार (अभ्युत्थान देने के शिष्टाचार ) को पालने के योग्य नहीं है ।। २१ ।।

**शकुन्तला**—( भय और घबराहट पूर्वक मनही मन- ) हे हृदय ! जिसके विरह में तू इतना क्लान्त और व्याकुल था, अब उसके आने पर भय व लज्जा से तूं उसका सत्कार स्वागत आदि कुछ भी काम कर सकने में असमर्थ हो रहा है-यह क्या बात है ? ।

**अनसूया**—हे महाभाग ! आप भी-जिस पर शकुन्तला लेटी है, इसी शिलातल के इस खाली भाग में बैठिए ।

[ शकुन्तला—कुछ खसक जाती है ] ।

**राजा**—( बैठकर ) आपकी सखी को शरीर का ( अशरीर=कामदेव का ) सन्ताप विशेष कष्ट ता नहीं दे रहा है ? ।

१ इदानीं किं प्रतिपद्यसे' इति पाठा० ।

**प्रियंवदा**— ( सस्मितम्— ) दाणिं लद्धोषधो उव्वसमं गमिस्सदि।
[ इदानीं लब्धौषध उपशमं गमिष्यति ]।

( शकुन्तला—सलज्जा तिष्ठति ) :

**प्रियंवदा**—महाभाअ ! दोण्णम्पि वो अण्णोण्णाणुराओ पच्चक्खो, सहीसिणेहो उण मं पुणरुत्तावादिणीं करोदि ।

[ महाभाग ! द्वयोरपि युवयोरन्योन्याऽनुरागः प्रत्यक्षः, सखीस्नेहः पुनर्मां पुनरुक्तवादिनीं करोति ]।

---

रीरः = कामः । तज्जनितस्तापः–नातिबाधते–नातितमां बाधते कच्चिदिति प्रश्नः।

**सस्मितमिति** । श्लेषेण कृतं प्रश्नं बुद्ध्वा तथैवोत्तरयन्त्याः स्मितं युक्तमेव। मनोरथसम्पत्त्या वा स्मयः । इदानीं = त्वत्समागमे सति । लब्धमौषधं येनासौ–लब्धभेषजः, शरीरतापः । उपशमं = शान्तिं, निर्वृतिं च । एतेनाक्षरसङ्घातो नाम नाट्यलक्षणमुक्तं—'वर्णनाऽक्षरसङ्घातश्चित्रार्थैरक्षरैर्मितैः'रिति ।

अन्योन्यानुरागः = परस्परस्नेहः । प्रत्यक्षः = स्पष्ट एव । सख्यां स्नेहः सखीस्नेहः=स्ववयस्यानुरागः। पुनरुक्तं वदति तच्छीला, तां—पुनरुक्तवादिनीम्= पुनरुक्तभाषणशीलाम्। स्पष्टस्यापि परस्परानुरागस्यैवाभिधानात्पुनरुक्तिः। एवञ्च–सखीस्नेहात्तदीयाऽनुरागस्यैवाभिधानात्पुनरुक्तिः । एवञ्च —सखीस्नेहात्तदीयमनु-

---

[ दूसरा गूढ़ अर्थ—आपकी सखी का कामसन्ताप अधिक व्याकुल तो नहीं कर रहा है ? ]।

प्रियंवदा—(हंसकर) हाँ, सन्ताप तो बहुत ही ज्यादा था। परन्तु अब उसकी औषध भी मिल ही गई है, ( आप इसे मिल ही गए हैं, ) अतः इसका वह सन्ताप अब शीघ्र ही शान्त हो जाएगा।

[ शकुन्तला—लज्जित हो सिकुड कर बैठी रहती है ]।

प्रियंवदा—हे महाभाग ! यद्यपि आप दोनों का परस्पर अनुराग प्रत्यक्ष ही है, क्योंकि—आप दोनों की ही परस्पर के विरह में ऐसी चिन्तनीय अवस्था हो ही रही है। परन्तु सखी के प्रति मेरा स्नेह ही मुझे पुनः उसी बात को कहने को प्रेरित कर रहा है।

राजा—भद्रे ! नैतत् परिहार्य्यम्, विवक्षितं ह्यनुक्तमनुतापं जनयति ।

प्रियंवदा—तेण हि सुणादु अज्जो ।

[ तेन हि शृणोतु आर्य्यः ] ।

राजा—अवहितोऽस्मि ।

प्रियंवदा—अस्समवासिणो जणस्स रण्णा अत्तिहरेण होदव्वं त्ति णं एसो धम्मो ।

[ आश्रमवासिनो जनस्य राज्ञा आर्त्तिहरेण भवितव्यमिति—नन्वेष धर्मः ] ।

राजा—अस्मत्परं किन्तत् ? ।

---

रागमेव भवद्विषयमधिकृत्य किञ्चिद्वच्मीत्याशयः । एतत् = पुनरुक्तिदोषसंसृष्टमपि वचनम् । न परिहार्यं = न त्याज्यम् । यतः—विवक्षितं = वक्तव्यम् । अनुक्तम् = अभाषितं सत् । अनुतापं = सन्तापं । जनयति = विधत्ते । अतोऽवश्यं विवक्षितं वदेत्याशयः । तेन = उत्सुकोऽसि चेत् । अवहितोऽस्मि = श्रोतुं सावधानोऽस्मि ।

आश्रमे वसति तच्छीलस्य—आश्रमवासिनः—जनस्य = तपस्विलोकस्य । आर्त्तिं हरति तच्छीलः—आर्त्तिहरस्तेन = पीडाहरेण । ननु = निश्चितः । एषः = अयं । धर्मः = धर्म्यः पन्थाः । अस्माकं परमस्मत्परम् = अस्मदायत्तं । किन्तत् ?—

---

राजा—हे भद्रे ! अवश्य कहो । बात को मन में ही मत रखो । क्योंकि—जिस बात को कहने को मन करे उसे नहीं कहने से मन में सन्ताप और विकलता ही बढ़ती है, अतः जो कुछ भी तुम कहना चाहती हो उसे अवश्य कहो ।

प्रियंवदा—तो हे आर्य ! आप ध्यान देकर सुनिए ।

राजा—मैं सावधान हूं, कहिए ।

प्रियंवदा—आश्रमवासी तपस्वियों की सभी प्रकार की पीड़ा को दूर करना—यह राजा का धर्म है ।

राजा—तो फिर मेरे अधीन और योग्य इसमें ( शकुन्तला की पीड़ा दूर करने का उपाय ) क्या है ?

**प्रियंवदा**—तेण हि इअं णो पिअसही तुमं ज्जेव उद्दिसिअ भअवदा मअणेण इमं अवत्थन्तरं पाविदा, ता अरिहसि अब्भुववत्तीए जीविदं से अवलम्बइदुं ।

[ तेन हि इयं नः प्रियसखी त्वामेवोद्दिश्य भगवता मदनेनेदमवस्थान्तरं प्रापिता, तदर्हसि अभ्युपपत्त्या जीवितमस्या अवलम्बयितुम् ]।

**राजा**—भद्रे ! साधारणोऽयं प्रणयः । सर्वथाऽनुगृहीतोऽस्मि ।

**शकुन्तला**—( अनुसूयामवलोक्य— ) हला ! अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण ।

[ हला ! अलं वामन्तःपुरविरहपर्युत्सुकेन राजर्षिणोपरुद्धेन ]।

---

अत्र किमस्ति भवत्सख्या येनार्त्तिपरिहारः स्यादिति प्रश्नाशयः । नाहं राजेत्याशयो वा । त्वामेवोद्दिश्य=त्वां निमित्तीकृत्य । इदं = विभाव्यमानम् । अन्यावस्था—अवस्थान्तरं=दशाविशेषं । प्रापिता = नीता । अभ्युपपत्त्या = स्वीकारेण । 'अभ्युपपत्तिरनुग्रहः'–इति शाश्वतः । अवलम्बयितुं=धारयितुम् । अर्हसि=योग्योऽसि । साधारणः=उभयोरपि समानावस्थः ।

सर्वथा = भवत्प्रार्थनया सर्वतो भावेन । स्वीकृतिरतो दर्शिता । अन्तःपुरस्य—तत्रत्यरमणीलोकस्य विरहेण पर्युत्सुकस्तेन = आन्तःपुरिकालोकविरहविकलेन । बहुवल्लभेन । राजर्षिणा = अनेन दुष्यन्तेन । उपरुद्धेन=अवरुद्धेन । वां=युवयोः । अमुना व्यापारेण नास्ति किमपि प्रयोजनमित्याशयः ।

---

प्रियंवदा—हाँ, तो–हमारी इस सखी को आपके ही कारण भगवान् कामदेव ने पीडित करके इस दशा को पहुंचा दिया है । अतः इस पर कृपा करिए, और इसके प्राणों को, एवं इसके जीवन को बचाना–आपका उचित कर्त्तव्य है ।

राजा—हे सुभगे ! हमारा तो दोनों का ही परस्पर अनुराग समान ही है । इसमें प्रार्थना की आवश्यकता ही नहीं है । अतः आपके इस कथन से मैं सर्वथा अनुगृहीत हूँ ।

शकुन्तला—( अनसूया की ओर देखकर ) हे सखि ! अपने अन्तःपुर (महल) की स्त्रियों के विरह में उत्सुक अन्यासक्त, बहुवल्लभ इस राजर्षि (दुष्यन्त) को तुम लोग इस तरह क्यों दबा रही हो ? । और क्यों रोक रही हो ।

राजा—

इदमनन्यपरायणमन्यथा हृदयसंनिहिते ! हृदयं मम ।
यदि समर्थयसे, मदिरेक्षणे ! मदनबाणहतोऽपि हतः पुनः ॥२२॥

अनसूया—बहुवल्लहा क्खु राआणो सुणीअन्ति । ता जधा इअं णो पिअसही बन्धुअणसोअणीआ ण होदि तधा करिस्सदि ।

[ बहुवल्लभाः खलु राजानः श्रूयन्ते, तद्यथा इयं नः प्रियसखी

इदमिति । हृदये सन्निहिते !=हे हृदयेश्वरि ! । [1]मदिरे ईक्षणे यस्याः सा तत्सम्बुद्धौ हे मदिरेक्षणे !=हे चञ्चललोचने ! । इदं =प्रकटिताशयम् । न अन्यत्–परमयनं यस्य तत्–अनन्यपरायणं=त्वदधीनं त्वदेकप्रणयप्रवणं । मे=मम । हृदयं=चित्तं । यदि—अन्यथा=अन्यपरायणतया । समर्थयसे=निश्चिनुषे तर्हि । मदनस्य बाणैरेव हतोऽपि=स्मरशरार्दितोऽपि, अहं— पुनः=पुनरपि—इतोऽप्यधिकं । हतः=विपन्नः । हृदयेश्वरी यद्यन्यथाऽस्मान् शङ्कते—का नु गतिरस्माकमिति महदिदं नो दौर्भाग्यमित्याशयः । [ मदिरेक्षणपदे उपमा । लाटानुप्रासः । परिकरश्च, 'हृदयवासिनी'त्यादेः साभिप्रायविशेषणघटितत्वात् । 'साम' नामकं प्रतिमुखसन्ध्यङ्गम् । 'तत्र साम प्रियं वाक्यं सानुवृत्तिप्रकाशक'मिति भरतोक्तेः । द्रुतविलम्बितं च वृत्तम् ] ॥ २२ ॥

बहवो वल्लभा येषां ते—बहुवल्लभाः=अनेकपरिग्रहाः । तत्=तस्मात् ।

राजा—हे हृदयस्थल निवासिनी प्रिये ! यदि मेरे अनन्य परायण (केवल तुमारे में ही अनुरक्त) इस हृदय को तुम इस प्रकार सन्देह की दृष्टि से देखोगी, ( अन्यासक्त समझोगी ), तो हे उन्मत्त कर देनेवाले तीखे नयनोंवाली प्रिये ! मैं तो मदन के बाणों से घायल तो पहिले से ही हूं, पर अब तुमारे इस प्रकार सन्देह करने से तो मैं सचमुच ही मारा जाऊँगा ॥ २२ ॥

अनसूया—'राजा लोग अनेक रमणियों से प्रेम किया करते हैं' ऐसा सुना

१ 'आघूर्णमानमध्या या, क्षामा चाऽञ्चिततारका ।
दृष्टिर्विकासिताऽपाङ्गा मदिरा तरुणे मदे' इति भरतः ।

बन्धुजनशोचनीया न भवति तथा करिष्यति[1] ]।

राजा—भद्रे ! किं बहुना ?—

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे[2] कुलस्य नः ।
समुद्ररसना चोर्वी, सखी च युवयोरियम् ॥ २३ ॥

---

यथा=येनोपायेन । इयं = मुग्धा तपस्विनी शकुन्तला । बन्धुभिर्जनैः शोचनीया-बन्धुजनशोचनीया = प्रियजनशोच्या । अयोग्ये पदे निवेशिता चेद्बान्धवदुःखहेतुरस्या अयमनुरागो भवेदिति भावः । भद्रे ! =हे शुभे ! बहुना=अनल्पभाषितेन । किं=किं प्रयोजनं । सारं ते वच्मीत्याशयः ।

परिग्रहेति। परिग्रहाणां बहुत्वं तस्मिन्-परिग्रहबहुत्वे=मम ललनाबाहुल्येऽपि। 'परिग्रहः परिजने पत्न्यां स्वीकारमूल्ययोः'–इति विश्वः। समुद्रो रसना यस्याः सा—समुद्ररसना=सागरमेखला ( समुद्रान्ता )। उर्वी च=वसुन्धरा च। युवयोः=भवत्योः । इयं सखी च=शकुन्तला । मुद्रया सहिता समुद्रा रसना यस्याः सा—समुद्ररसना=मितभाषिणी । मुद राति ददातीति मुद्रं=रत्नं । तेन सहिता समुद्रा रसना यस्याः सेति समासे —रत्नमेखलाललिता चेत्यर्थः। इमे द्वे, मे कुलस्य=अस्मद्वंशस्य । प्रतिष्ठे=मानवर्द्धिन्यौ । संस्थापिके । एवञ्चेयमेव मम पट्टमहिषी भविष्यतीत्याशयः । [ प्रतिष्ठात्वारोपादतिशयोक्तिः । तुल्ययोगिता । श्लेषः, रूपकमनुप्रासश्च । ] ॥ २३ ॥

---

जाता है। अतः हमारी यह सखी शकुन्तला अपने बन्धु जनों से शोचनीय न हो, (इसकी दुर्दशा को देखकर इसके बन्धुजनों का–हमलोगों को, तथा इसके पिता तात कण्व को भी दुःखित न होना पड़े) ऐसा आप करें। इसका पूरा ध्यान रखें।

राजा—हे सुभगे ! अधिक क्या कहूँ—

यद्यपि मेरे अन्तःपुर में स्त्रियों की कमी नहीं है, मेरे प्रिया भार्या भी बहुत सी हैं, परन्तु हमारे इस पौरवकुल की प्रतिष्ठा को तो मैं दो ही वस्तुओं से समझता हूँ–एक तो समुद्र पर्यन्त पृथिवी से, दूसरे आपकी इस सखी से। अर्थात्–अनेक स्त्रियों के रहते हुए भी, मैं शकुन्तला को ही पटराणी ( महारानी ) बनाऊँगा। और इसी का पुत्र मेरी राजगद्दी का उत्तराधिकारी भी होगा ॥२३॥

---

१ 'करिष्यसि' पा० । २ 'प्रतिष्ठा ... स्थिरता' इति हैमः ।

उभे—णिव्वुद ह्म ।

[ निर्वृते स्वः ] ।

( शकुन्तला—हर्षं सूचयति ) ।

प्रियंवदा—( जनान्तिकम्— ) अणसूए ! पेक्ख पेक्ख मेहवादाहदं विअ गह्मे मोरीं क्खणे क्खणे पच्चाअदजीविदं पिअसहीं ।

[ अनसूये ! प्रेक्षस्व प्रेक्षस्व मेघवाताहतामिव ग्रीष्मे मयूरीं क्षणे-क्षणे प्रत्यागतजीवितां प्रियसखीम् ! ] ।

शकुन्तला—हला ! मरिसावेध लोअपालं, जं अह्मेहिं विस्सद्धाला-विणीहिं उवआरादिक्कमेण भणिदं ।

[ हला ! मर्षयतं लोकपालं—यदस्माभिर्विश्रब्धप्रलापिनीभिरुप-चारातिक्रमेण भणितम् ] ।

---

निर्वृते=सुखिते । निश्चिन्ते । सूचयति=नाटयति । जनान्तिकम्=त्रिपताककरेणा-न्यानपवार्याऽनसूयायै कथयतीत्यर्थः । मेघवाताहतां=मेघागमशीतलपवनान्दोलितां । मयूरीमिव = बर्हिणवधूमिव । क्षणे क्षणे=प्रतिक्षणं । प्रत्यागतं जीवितं यस्याः सा, तां-प्रत्यागतजीवितां = समागतप्राणां । वातेन मेघागमाशायाः परिवर्द्धितत्वाद्वा प्रत्यागतप्राणता । मर्षयतं=क्षमापयतं युवां । लोकपालं = दुष्यन्तं । यतः—विश्रब्धं

---

दोनों सखियाँ—अब हमलोग कृतकृत्य और निश्चिन्त हो गईं ।

[ शकुन्तला—हर्ष प्रकट करती है ] ।

प्रियंवदा—( अलग से अनसूया के प्रति ) हे अनसूये ! देख, देख, जैसे ग्रीष्म के सन्ताप से सन्तप्त मयूरी, मेघके आगमन के सूचक पवन से पुनः जीवन को प्राप्त होती है, वैसे ही हमारी यह प्रिय सखी शकुन्तला भी इस राजर्षि के आगमन से तथा इसके आश्वासनप्रद वचनों से प्रति क्षण में जीवन को प्राप्त हो रही है ।

अर्थात्—मेघागमनसे जैसे मयूरी हर्षित होती है, वैसे ही यह शकुन्तला भी दुष्यन्त के आगमनसे हर्षित हो रही है, और पुनः नए जीवन को प्राप्त हो गई है ।

शकुन्तला—हला सखियो ! हमलोगों ने ( मैंने ) इस प्रजापालक राजर्षि

**सख्यौ**—( सस्मितम् ) जेण तं मन्तिदं सो ज्जेव मरिसावेदु, अण्णस्स को अच्चओ ?।

[ येन तन्मन्त्रितं स एव मर्षयतु। अन्यस्य कोऽत्ययः ? ]।

**शकुन्तला**—अरिहदि क्खु महराओ इमं विसोढुम्। परोक्खं वा ण किं को मन्तेदि।

[ अर्हति खलु महाराज इमं विषोढुम्। परोक्षं वा न किं को मन्त्रयति ? ]।

---

प्रलपितुं शीलं यासान्ताभिः—विश्रब्धप्रलापिनीभिः = यथेच्छमाभाषमाणाभिः। उपचारस्यातिक्रमेण=विनयबहिर्भावेन। भणितं=भाषितं। निष्कृपेत्यादिभिर्यदस्मै बहुश उपालम्भो मया दत्तः, तस्मादस्माभिः क्षमायाचना कार्येत्याशयः।

येन=येन जनेन। त्वयेति यावत्। तत् = अनुचितं। मन्त्रितं = भणितं। स एव=स एव जनः। त्वमेवेति यावत्। मर्षयतु = क्षमापयतु। अन्यस्य= अस्माकं। कोऽत्ययः=का हानिः। त्वयैव क्षमा प्रार्थनीया, यतस्त्वमेव तथा निगदितवतीत्याशयः। इदं = मदुक्तमनुचितं। विषोढुं = क्षन्तुं। परोक्षम् = अप्रत्यक्षं। को वा = को वा जनः। किं न मन्त्रयति=किं न विमृशति। युक्तमयुक्तं वा स्वगृहचत्वरस्थः किं को न जल्पति। तत्क्षन्तव्यं स्खलितं न इत्याशयः। ]

---

के प्रति जो शिष्टाचार का पालन न करते हुए अपनी बात-चीत में कुछ अनुचित भी कह दिया है, उसके लिए इनसे क्षमा माँगो।

**दोनों सखियाँ**—( कुछ हंसकर ) जिसनें कुछ अनुचित कहा हो, वही ( तुम ही ) क्षमा मांगे। दूसरे का ( हम लोगों का ) इसमें क्या बिगड़ता है, एवं हानि होती है। जो (हम) क्षमा मांगे।

**शकुन्तला**—हे महाराज ! आपके परोक्ष में आपके विषय में मैंने जो कुछ उपालम्भ वाक्य कहे हैं, उसको आप क्षमा करें। पीछे से तो किसको, कौन–जो चाहे सो नहीं कह देता है ?।

राजा—( सस्मितम्- )

अपराधमिमं ततः सहिष्ये यदि रम्भोरु ! तवाऽङ्गसङ्गमृष्टे ।
कुसुमास्तरणे क्लमापहेऽत्र स्वजनत्वादनुमन्यसेऽवकाशम् ॥ २४ ॥

प्रियंवदा—( सोपहासम्- ) णं एत्तिकेण उण्ण तुट्ठो भविस्सदि ? ।
[ नन्वेतावता पुनस्तुष्टो भविष्यति ? ] ।

शकुन्तला—( सरोषमिव- ) विरम विरम दुव्विणीदे । एतावद-वत्थं गदाए मए कीलसि ? ।

---

अपराधमिति । रम्भे इव ऊरू यस्याः सा—रम्भोरूः । तत्सम्बोधनं । हे कदलीकाण्डशीतपृथुलतरोरु इत्यर्थः । इम = त्वत्कृतम् । अपराधम्=अविनयं । ततः = तदैव । सहिष्ये = क्षमिष्ये । यदि = यदा । तव-अङ्गानां सङ्गेन मृष्टे—अङ्गसङ्गमृष्टे = अङ्गसंसर्गपरिम्लाने । अत एव क्लममपहन्ति तस्मिन् क्लमापहे = क्लान्तिहरे । तव = भवत्याः । अत्र = अस्मिन् । कुसुमानामास्तरणे-कुसुमास्तरणे= पुष्पशयनीये । स्वजनस्य भावस्तत्त्वं, तस्मात्-स्वजनत्वात् = आत्मीयबुद्धया । अवकाशम् = मदवस्थानम् । अनुमन्यसे = त्वं स्वीकुरुषे चेत् । यदि स्वशयनीये मां स्थापयसि तदा क्षमिष्ये तवापराधमित्याशयः । [ 'रम्भोरु'पदे उपमा । 'त्वदङ्गसंसर्गात्क्लमापहे'—इत्यत्र पदार्थहेतुकं काव्यलिङ्गम् । प्रगमनं नाम प्रतिमुखसन्ध्यङ्गम् , 'स्वागत'मित्यारभ्यैतदन्तमुत्तरप्रत्युत्तरभावस्य सत्त्वात् । 'उत्तरोत्तरवाक्यन्तु भवेत्प्रगमनं पुनः'—इत्युक्तेः । औपच्छन्दसिकं वृत्तम् ] ॥२४॥

एतावन्मात्रेण = शय्योपान्तनिवेशमात्रेण । तुष्टः = कृतार्थः । किं मोदक-

---

राजा—( हंसकर ) हे रम्भोरु ! तुमारे इस अपराध को मैं तभी क्षमा करूंगा, जब तुम अपने अङ्गों के सम्पर्क से मुरझाये हुए इस कुसुम-शयन ( फूलों की सेज ) पर-अपना ही समझ कर-मुझे भी सोने की अनुमति देदोगी ॥ २४ ॥

प्रियंवदा—( हंसी उड़ाती हुई ) बस, इतने से ही ( इसकी सेज पर साथ बैठने मात्र से ही ) क्या आप सन्तुष्ट हो जाएंगें ? ।

शकुन्तला—( कुछ बनावटी क्रोध के साथ ) अरी दुर्विनीते ! ( ढीठ ! )

[ विरम विरम दुर्विनीते! एतावदवस्थां गतया मया क्रीडसि ?]।

**अनसूया**—( बहिः-सदृष्टिक्षेपं- ) पिअंवदे ! एस तवस्सिमिअ-पोदओ इदो तदो दिण्णदिट्ठी णूणं मादरं पब्भट्ठं अण्णेसदि । ता संजोजेमि णं ।

[ प्रियंवदे ! एष तपस्विमृगपोतक इतस्ततो दत्तदृष्टिर्नूनं मातरं प्रभ्रष्टामन्विष्यति । तत्संयोजयाम्येनम् ] ।

**प्रियंवदा**—हला ! चवलो क्खु एसो, ण एणं संजोजइदुं एआइणी पारेसि, ता अहम्पि सहाअत्तणं करिस्सं । (-इत्युभे प्रस्थिते ) ।

[ हला ! चपलः खल्वेषो नैनं संयोजयितुमेकाकिनी पारयसि, तदहमपि सहायत्वं करिष्यामि ] ।

---

दर्शनमात्रेणैव शक्या क्षुदुपहन्तुम् ? । उपहासवाक्यमेतत् । दुर्विनीते = अविनीते ! विरम = मौनमास्स्व । एतावदवस्थां = शोचनीयदशां । गतया = प्राप्तयाऽपि मया । क्रीडसि != उपहससि माम् । दृष्टिक्षेपेण सह सदृष्टिक्षेपं = बहिर्विलोक्य । एषः = अतिबालः । अतएव स्वयं गन्तुमशक्तः । तपस्वी चासौ मृगपोतकश्च— तपस्विमृगपोतकः = मुग्धमृगकिशोरकः । 'तपस्वी तापसे चानुकम्पार्हे'— इति विश्वः । इतस्ततः = प्रतिदिशम् । दत्ता दृष्टिर्येनासौ तथा = निविष्टलोललोचनः । नूनं = ध्रुवं । प्रभ्रष्टां=वियुक्ताम् । अन्विष्यति=गवेषयति । तत = तस्मात् । संयोजयामि = तदन्तिकं प्रापयामि । चपलः = अतिचपलः । एषः = मृगशावकः । पारयसि = शक्ता भविष्यसि । वर्त्तमानसामीप्ये लट् ।

---

चुप रह, चुप रह, मेरी ऐसी अवस्था में भी ( ऐसी कष्ट व बीमारी की अवस्था में पड़ी हुई से भी ) मेरे से तू हंसी करती है ! ।

**अनसूया**—( बाहर की ओर दृष्टि डालती हुई- ) सखी प्रियंवदे ! देखतो यह बेचारा हरिण का बच्चा इधर उधर भटक रहा है, यह जरूर अपनी भूली हुई माता को ही खोज रहा है । अतः मैं जाकर इसको इसकी माँसे मिलाती हूँ ।

**प्रियंवदा**—हे सखी अनसूये ! यह बड़ा ही चञ्चल है, अतः तुम इसे इकली नहीं ले जा सकोगी । अतः मैं भी इस कार्य में तुमारी सहायता करती हूँ ।

शकुन्तला—हला ! इदो अण्णदो ण वो गन्तुं अणुमण्णे, जदो असहाइणी ह्मि ।

[ हला ! इतोऽन्यतो न वां गन्तुमनुमन्ये, यत एकाकिन्यस्मि ]।

उभे—( सस्मितं— ) तुमं दाव असहाइणी जाए पहवीणाहो समीवे वट्टदि ! ( —इति निष्क्रान्ते )।

[ त्वं तावदसहायिनी ! यस्याः पृथिवीनाथः समीपे वर्त्तते ]।

शकुन्तला—कथं गदाओ ज्जेव पिअसहीओ !।

[ कथं गते एव प्रियसख्यौ ! ]।

राजा—सुन्दरि ! अलमावेगेन, नन्वयमाराधयिता जनस्ते सखीभूमौ वर्त्तते, तदुच्यताम् ।

---

सहायत्वं=साहाय्यम् । प्रस्थिते=चलिते । इतः=अस्मात्प्रदेशात् । अन्यतः=अन्यत्र देशे । वां=युवाम् । अनुमन्ये=स्वीकरोमि । आज्ञापयामि । असहायाऽस्मि=एकाकिन्यस्मि । तावदिति । [1]यस्याः समीपे पृथ्वीनाथो वर्त्तते, सा कथमसहायेति—सोपहासं वचः । इति=इत्युक्त्वा । कथं गते=कुतोऽपयाते—इति सखेदं वचः । 'मद्वचनमनाकलय्य गते' इति एवकारेणोद्वेगः सूचितः । आवेगेन=उद्वेगेन । अलं=न प्रयोजनम् । ननुर्वाक्यालङ्कारे । आराधयिता=सेवकः । हृदयनिवेशितत्वत्प्रतिमः। सखीनां भूमिस्तस्यां-सखीभूमौ=सखीस्थाने। सहचरपदे-इति यावत् । तत्=तस्मात् । उच्यताम्=कथय । किं ते कार्यं करोमीत्यग्रिमश्लोकेन सम्बध्यते ।

शकुन्तला—हे सखियो ! तुम्हें अन्यत्र जाने की स्वीकृति मैं नहीं दूंगी। क्योंकि-मैं यहाँ असहाय ( एकाकिनी ) हूँ ।

दोनों सखी—( कुछ हंसकर ) क्या तुम भी असहाय हो, जिसके पास पृथ्वी का नाथ ( रक्षक ) बैठा है ।

( दोनों जाती हैं ) ।

शकुन्तला—हैं ! क्या करूं, ये तो दोनों ही चली गई !।

राजा—हे सुन्दरि ! घबड़ाओ मत । मैं तो तुमारी आराधना (सेवा) करने वाला सेवक, सखी की तरह तुमारे पास यहाँ बैठा ही हूं । कहो, तुमारी क्या सेवा करूँ—

---

१ "पृथिव्या यः शरणं स तव समीपे वर्त्तते"—पा० । शरणं—रक्षकः ।

किं शीकरैः क्लमविमर्द्दिभिरार्द्रवातं
सञ्चालयामि नलिनीदलतालवृन्तम् ।
अङ्के निधाय चरणावुत पद्मताम्रौ
संवाहयामि करभोरु ! यथासुखन्ते ॥२५॥

**शकुन्तला**—ण माणणीएसुं जणेसुं अत्ताणं अवराहइस्सं ।
[ न माननीयेषु जनेष्वात्मानमपराधयिष्यामि ] ।

---

किमिति ! क्लमं विमृद्नन्ति तच्छीलैः—क्लमविमर्दिभिः = सन्तापहारिभिः। शीकरैः=जलकणैः । आर्द्रो वातो यस्य तत्—आर्द्रवातं=क्लिन्नपवनं । नलिनीनां दलैर्निर्मितं—तालवृन्तं—नलिनीदलतालवृन्तं = पद्मिनीपत्रविरचितं व्यजनम् । 'व्यजनं तालवृन्तं स्या'दित्यमरः । सञ्चालयामि = वीजयामि किम् ? । उत=किं वा ? । हे ! करभोरु ! =परिवृत्तोरु ! पद्मवत्ताम्रौ—पद्मताम्रौ = कमलोदररक्तौ । ते = तव । चरणौ = पादौ । अङ्के=उत्सङ्गे । निधाय = स्थापयित्वा । यथासुखं= मन्दमन्दं । संवाहयामि = मर्दयामि किम् । [ पूर्वार्द्धोत्तरार्द्धयोर्विकल्पालङ्कारः। काव्यलिङ्गपरिकरवृत्त्यनुप्रासाः । पद्मताम्र –करभोरुपदयोरुपमा। नलिनीदले तालवृन्तत्वारोपस्य प्रकृतोपयोगित्वात्परिणामः । उपन्यासो नाम प्रतिमुखसन्ध्यङ्गम् । तदुक्तं विश्वनाथेन—'उपन्यासः प्रसादन'मिति । माला नाम नाट्यभूषणञ्च प्रदर्शितं—'माला स्याद्यदभीष्टार्थप्रकाशन'मिति भरतात् । वसन्ततिलकं छन्दः ] ॥ २५ ॥

माननीयेषु = चक्रवर्त्तितया माननीयेषु । जनेषु = भवद्विधेषु । आत्मानमपराधयिष्यामि = संवाहनादिकर्मानुज्ञानेनात्मानं कृतपापाचरणं विधास्यामि ।

---

क्या सन्ताप को दूर करने वाले और ठण्ढे २ जल के कणों से भींगे रहने से जिसकी हवा ठण्डी हो रही है, ऐसे कमलिनी के पत्ते के बने हुए इस पङ्खे को हिला कर तुम्हें हवा करूँ ? । या पद्म की तरह लाल व कोमल तुमारे दोनों चरणों को अपनी गोद में रख कर, क्या सुखदरूप से धीरे २ दबाऊँ ? ॥२५॥

**शकुन्तला**—मैं माननीय जनों से ( आप ऐसे प्रतापी चक्रवर्ती राजा से ) अपनी सेवा का कार्य कराकर अपने को अपराधी नहीं बनाऊँगी । [ ऐसा कह कर

१. शीतलैः

( इत्यवस्थासदृशमुत्थाय प्रस्थातुमिच्छति )।

राजा—( अवष्टभ्य ) सुन्दरि ! अपरिनिर्वाणो दिवसः । इयञ्च ते शरीरावस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणा ।
कथमातपे गमिष्यसि परिबाधाकोमलैरङ्गैः ? ॥२६॥

( इति बलान्निवारयति )।

---

अवस्थासदृशं=विरहजन्यकार्श्याद्यनुरूपं। मन्दं मन्दमिति यावत्। स्रस्तवसना वा। प्रस्थातुं = गन्तुम्। अवष्टभ्य = पटाञ्चलं धृत्वा। अपरिनिर्वाणः = अशान्ततापः। असमाप्तप्रखरताप इति यावत्। इयम्=ईदृशी। विरहविधुरा। शरीरस्य अवस्था—शरीरावस्था = देहदौर्बल्यादिकदर्थिता दशा।

उत्सृज्येति। नलिनीदलैः कल्पितं स्तनयोरावरणं यया सा—नलिनीदलकल्पितस्तनावरणा = कमलिनीपत्रावृतस्तनाभोगा। परिबाधया कोमलानि तैः—परिबाधाकोमलैः = व्यथाकदर्थितैः। कृशतरैः। अङ्गैः = अवयवैरुपलक्षिता। कुसुमकल्पितं शयनं=कुसुमशयनं = पुष्पशय्याम्। उत्सृज्य=विहाय। आतपे= निदाघे। कथ गमिष्यसि = कथं यास्यसि ?। द्वित्राणि पदान्यपि गन्तुं न समर्था त्वं भविष्यसीत्याशयः। [अनुप्रासः। परिकरः। काव्यलिङ्गम्। 'उपपत्तिकृतो योऽर्थ उपन्यासस्तु स स्मृतः' इति भरतोक्तोपन्यासलक्षणानुसारेणोपन्यासो नाम प्रतिमुखसन्ध्यङ्गमेतेन दर्शितम्। 'आर्या' ]॥ २६ ॥

---

अपनी कामातुर अस्वस्थ दशा के अनुकूल ही (धीरे २) उठकर जाना चाहती है।।

राजा—( पकड़कर ) हे सुन्दरि ! अभी तो दिन भी ढला नहीं है। अतः घाम (धूप) बहुत कड़ी पड़ रही है। और तुमारे शरीर की यह दशा है। अतः ऐसे समय में तो तुमारा बाहर जाना ठीक नहीं है।

हे सुन्दरि ! फूलों की इस सेज को छोड़कर, सन्ताप पीडित अपने कोमल इन अङ्गों को लेकर, कमलिनी के पत्तों से स्तनों को ढके हुए तुम भला बताओ तो-इस घाम में बाहर कैसे जाओगी ? ॥ २६ ॥

[ शकुन्तला को जबरदस्ती पकड कर राजा रोकता है ]।

**शकुन्तला**—मुञ्च मुञ्च मं, ण क्खु अत्तणो पहवामि। अथवा सहीमेत्तसरणा किं दाणिं एत्थ करिस्सं ?।

मुञ्च मुञ्च माम, न खल्वात्मनः प्रभवामि। अथवा सखीमात्र-शरणा किमिदानीमत्र करिष्यामि ? ]।

**राजा**--धिग्व्रीडितोऽस्मि।

**शकुन्तला**—ण क्खु अहं महाराअं भणामि, देव्वं उवालहामि। [ न खल्वहं महाराजं भणामि, दैवमुपालभे ]।

**राजा**—अनुकूलकारि दैवं कथमुपालभ्यते ?।

---

बलान्निवारयति=अनिच्छन्तीमपि तां बलादवरुणद्धि। आत्मनः=स्वस्य। गुरुजनाधीनाऽहं, न वपुस्ते दातुम्प्रभवामीत्याशयः। सख्यावेव शरणं यस्याः सा—सखीमात्रशरणा=सखीमात्रपरिरक्षिता। [ नात्र तातकण्वः सन्निहितः। राजा चायं बलशाली। तत्को मे त्राता भविष्यति ? । हा हताऽस्मि ]। किमिदानीं=बलात्कारमाचरितुं प्रवृत्ते राजनि। व्रीडितः=लज्जितः [ अनिच्छन्त्यां बलात्कारेण प्रवर्त्तमानोऽनया शकुन्तलया तातकण्वं स्मरन्त्योपालब्धो—लज्जितोऽस्मि ]।

न खलु=नैव। भणामि=उपालभे। किन्तु—दैवं=भाग्यम्। उपालभे=निन्दामि। अनुकूलं कर्त्तुं शीलमस्य-अनुकूलकारि=अभीष्टं सम्पादयत्।

---

**शकुन्तला**—मुझे छोड़ दो, मुझे छोड़ दो। मैं स्वतन्त्र नहीं हूं। अथवा-मेरी तो यहाँ केवल सखी ही सहायक हैं, वे भी यहाँ उपस्थित नहीं हैं अतः अब मैं क्या करूँ ?।

**राजा**—मुझे धिक्कार है। इसने मुझे खूब लज्जित व लाञ्छित किया-जो मेरे ऊपर यह ऐसा ( बलात्कारका ) दोषारोपण कर रही है !।

**शकुन्तला**—मैं महाराज को दोष नहीं दे रही हूं, किन्तु मैं तो अपने दैव ( भाग्य ) को ही दोष दे रही हूं।

**राजा**—अपने अनुकूलकारी दैव ( भाग्य ) को क्यों दोष दे रही हो ?। अर्थात् दैवने तो तुम को मेरे सदृश चक्रवर्ती राजा को पतिरूप से दे दिया, फिर भी तुम दैव को उलाहना दे रही हो !। [ जिसके लिए तुम व्याकुल थी वही मैं दैवात् तुम्हें मिल गया, फिर भी तुम दैव को क्यों दोष देती हो ? ]।

शकुन्तला—कधं दाणिं ण उवालहिस्सं, जं मं अत्तणो अणीसं कदुअ परगुणेहिं लोहावेदि ?।

[ कथमिदानीं न उपालप्स्ये, यन्मामात्मनोऽनीशां कृत्वा परगुणैर्लोभयति ? ]।

राजा—( स्वगतम्— )।

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः,
काङ्क्षन्त्योऽपि व्यतिकरसुखं, कातराः स्वाङ्गदाने।
आबाध्यन्ते न खलु मदनेनैव, लब्धान्तरत्वा-
दाबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः ॥२७॥

---

उपालभ्यते=निन्द्यते ?। मत्सङ्गममभिलषन्त्यास्तव दैवेन मया योजनमनुकूलमेवेत्याशयः। उपालप्स्ये=निन्दिष्यामि। आत्मनोऽनीशाम्=स्वशरीरस्यापि अस्वतन्त्राम्। परस्य=दुष्यन्तस्य। गुणैः=सौन्दर्यादिभिः। लोभयति=तदभिलाषिणीं मां विधत्ते। अतो दैवं निन्दामीत्याशयः।

अप्यौत्सुक्य इति। महति=विपुलेऽपि। औत्सुक्ये=औत्कण्ठ्ये। दयितस्य=प्रियस्य। प्रार्थनासु=अभ्यर्थनास्वपि। प्रतीपाः=विपरीता एव। व्यतिकरेण=परस्परसमागमेन, यत्सुखं तत् काङ्क्षन्त्योऽपि=अभिलषन्त्योऽपि, स्वस्य यदङ्गं, तस्य दाने=स्वशरीरसमर्पणे। कातराः=भीरुकाः। कुमार्यः=मुग्धाङ्गनाः। लब्धमन्तरं येनासौ तस्य भावस्तत्त्वात्—लब्धाऽन्तरत्वात्=प्राप्तावसरतया।

---

शकुन्तला—दैव को दोष क्यों न दूँ, जो दैव मुझ ऐसी परवश ( पिता के अधीन ) को भी, दूसरे ( आप ) के गुणों से यों लोभान्वित ( आप के गुणों पर आसक्त ) कर रहा है !।

राजा—( मनही मन ) प्रिय के प्रति अत्यन्त औत्सुक्य ( उत्कण्ठा ) होने पर भी दयित ( प्राणप्रिय ) की प्रार्थना (सुरत प्रार्थना) पर विरुद्ध ही आचरण ( नाहीं ) करने वाली, बाह्य और आभ्यन्तर सुरत सुख की इच्छा रहने पर भी, अपने अधर, कपोल, कुच आदि अङ्गों को प्रिय को देने में अत्यन्त कातर (अपने

( शकुन्तला—गच्छत्येव )।

राजा—न कथमात्मनः प्रियं करिष्ये ?।

( उपसृत्य पटान्तमवलम्बते )।

शकुन्तला—पोरव ! रक्ख रक्ख विणअं, इदो तदो इसिओ सञ्चरन्ति।

---

मदनेनैव = कामेनैव। आबाध्यन्ते=पीड्यन्ते। इति न खलु=नैवमेतत्। किन्तु-क्षिप्तः कालो याभिस्ताः- क्षिप्तकालाः=मौग्ध्येन व्यतिक्रान्तसुरतसुखसमयाः सत्यः। मनसिजमपि=मदनमपि। आबाधन्ते=पीडयन्ति। सङ्गमेच्छायां सत्यामपि, मदनेन ताड्यमाना अपि कालं क्षिपन्त्यः स्वाङ्गदाने कातरा मदनमपि विडम्ब्य पीडयन्तीति भावः। [ अन्योन्यमलङ्कारः। क्षिप्तकालाः सत्यो मदनेन पीड्यन्त इति पदार्थहेतुकं काव्यलिङ्गम्। शकुन्तलाप्रस्तावे मुग्धासामान्येन कथनादप्रस्तुतप्रशंसा च। 'मन्दाक्रान्ता' ]॥ २७॥

गच्छत्येव=निवर्त्यमानाऽपि गन्तुं प्रवर्त्तत एव। आत्मनः प्रियं=स्वेप्सितं। प्रियाऽवरोधनात्मकम्। कथं न करिष्ये=करिष्याम्येव।

उपसृत्य=गत्वा। पटान्तं=वल्कलाञ्चलम्। अवलम्बते=गृह्णाति। विनयं=

---

अङ्गों को छूने भी नहीं देनेवाली), अप्राप्तपतिसंसर्गसुखा कुमारियाँ-नवयुवतियाँ-मौका पाकर केवल कामदेव से ही ये पीडित होती हैं, यह बात नहीं है, किन्तु सुरत सुख देने में विलम्ब-कालक्षेप-करके ये स्वयं कामदेव को भी पीडित करती हैं। अर्थात्-कामदेव के अनेक प्रयत्न करने पर भी, पति के साथ आनन्द लेने की इनकी स्वयं इच्छा रहने पर भी, ये कुमारियाँ ( नववधू तथा युवति कुमारियाँ ) अपने शरीर पर हाथ ही नहीं लगाने देती हैं, अतः बेचारा कामदेव भी इन पर बाण छोड़ता छोडता थक-सा जाता है। ( अर्थात् इसकी भीतर से तो संभोग की इच्छा है, पर ऊपर से यह नखरा कर रही है )॥ २७॥

[ शकुन्तला—जाती है ]।

राजा—मैं अपने मन की चाहको क्यों न पूरी करूं ?। अवश्य पूरी करूंगा।

( जाकर उसका धोती का पल्ला (किनारा) पकड़ लेता है )।

शकुन्तला—हे पौरव ! विनय और शिष्टता की रक्षा करो। शिष्टता मत

[ पौरव ! रक्ष रक्ष विनयम् । इतस्तत ऋषयः सञ्चरन्ति ]।

राजा—सुन्दरि ! अलं गुरुजनाद्भयेन । न ते विदितधर्मा तत्रभवान्कण्वः खेदमुपयास्यति । यतः—

गान्धर्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः ॥ २८ ॥

---

शालीनतां । शिष्टतां । रक्ष=पालय । धाष्टर्यं मा कुरु । इतस्ततः=सर्वतः । सञ्चरन्ति = पर्यटन्ति । तत्कथं न लज्जसे । गुरुजनात् = कण्वादितः । भयेन = भीत्या । अलं=न प्रयोजनं । विदितो धर्मो येनासौ–विदितधर्मा=ज्ञातधर्मतत्त्वः । ( "धर्मादनिच् केवलात्" इत्यनिच् ) । तत्रभवान् = पूज्यः । कण्वः=त्वपिता काश्यपः । ते = तवोपरि । खेदं = क्रोधम् । नोपयास्यति = न समेष्यति । तदलं भीरु ! शङ्कया, अनुभव मया सह स्मरोपनतं रतिसुखमित्याशयः ।

अथ = कात्स्न्र्येन । बह्व्यः = सहस्रशः । मुनिकन्यकाः=ऋषिकुमार्यः । गान्धर्वेण विवाहेन="इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः" इति मनूक्तलक्षणेन विवाहविधिना । परिणीताः= कृतोद्वाहाः । ताः=गान्धर्वविधिना कृतोद्वाहाश्च । पितृभिः=गुरुजनैः । अनुमोदिताः= अभिनन्दिताः । श्रूयन्ते = पुराणादिषु गीयन्ते । अतो भयं विहाय विहर मया सह यथाकामं कामिनि !, सफलय स्मरपीडितं मामिति भावः । [ उपदिष्टं नाम नाटकलक्षणं सूचितमेतेन । तदुक्तम्–'उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः–' इति ] ॥ २८ ॥

---

छोड़ो । निर्लज्ज मत बनो । यहाँ इधर-उधर ऋषि-मुनि घूमते रहते हैं । हमें इस प्रकार कोई देख लेगा तो क्या कहेगा ? ।

राजा—हे सुन्दरि ! तुम अपने गुरु जनों का कुछ भी भय मत करो । तुमारे पिता कण्व धर्म ( गान्धर्व विधि से विवाह ) के तत्त्व को जानने वाले हैं, अतः वे तुमारे-हमारे इस सम्बन्ध से कभी अप्रसन्न व दुःखी नहीं होंगें । क्योंकि—

बहुत सी मुनियों की कन्याएँ गान्धर्व विधि से ( स्वेच्छा से ) विवाहित हो चुकी हैं, और उनके पिताओं ने उन विवाह सम्बन्धों को स्वीकार ही किया है ॥२८॥

( दिशोऽवलोक्य- )

कथं प्रकाशं निर्गतोऽस्मि ? ।

( शकुन्तलां हित्वा पुनस्तैरेव पदैर्निवर्त्तते ) ।

**शकुन्तला**—( पदान्तरे प्रतिनिवृत्य साङ्गभङ्गम्- ) पोरव ! अणिच्छापूरओ बि सम्भासणमेत्तपरिचिदो अअं जणो ण विसुमरिदब्बो। [ पौरव ! अनिच्छापूरकोऽपि सम्भाषणमात्रपरिचितोऽयं जनो न विस्मर्त्तव्यः ] ।

**राजा**—सुन्दरि !

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे ।
दिवावसाने छायेव पुरो मूलं वनस्पतेः ॥२६॥

---

दिशः = इतस्ततः । प्रकाशम् = अनावृतं प्रदेशं । निर्गतः = समायातः । शकुन्तलामनुसरन् लतामण्डपाद्बहिर्यातोऽस्मीति भावः । हित्वा = परित्यज्य । 'तैरेव पदै' रिति लोकोक्तिः । तथैव त्वरितं निवृत्त इति तदाशयः । पदान्तरे = द्वित्राणि पदानि गत्वा । प्रतिनिवृत्य = ततोऽपि पुनरागत्य । अङ्गभङ्गेन, सहितं-साङ्गभङ्गम्=सलीलम् । अङ्गानि मोटयित्वा वा । न इच्छायाः पूरकः—अनिच्छापूरकः = अपूरिताभिलाषः । सम्भाषणमात्रेणैव परिचितः = आलापमात्रपरिचितः । अयं जनः = शकुन्तलारूपः ।

त्वमिति । दिवावसाने = दिनापगमे । वनस्पतेः = वृक्षस्य । पुरो मूलं =

---

( चारों ओर देखकर— )

हैं ! मैं तो बाहर ( खुले स्थान में ) चला आया हूं ! ।

[ शकुन्तला को वहीं छोड़ कर, उन्हीं पावों से वापिस फिर कुञ्ज में ही लौट जाता है ] ।

**शकुन्तला**—( राजा के पीछे २ वापिस जाकर अङ्ग भङ्गपूर्वक अंगड़ाई, जंभाई लेती हुई ) हे पौरव ! तुमारी सुरतेच्छा को नहीं पूरण करनेवाले, केवल परस्पर बात-चीत मात्र से ही परिचित, इस जन (मुझ) को कहीं भूल मत जाना।

**राजा**—हे सुन्दरि ! तुम कितनी ही दूर क्यों न चली जाओ, पर मेरे हृदय

**शकुन्तला**—( स्तोकमन्तरं गत्वा, आत्मगतम्–) हद्दी हद्दी ! इमं सुणिअ ण मे चलणा पुरमुहा पसरन्ति । भोदु । इमेहिं पज्जन्तकुरुवएहिं ओवारिदसरीरा भविअ पेक्खिस्सं दाव से भावाणुबन्धं ।

[ हा धिक् ! हा धिक् ! इदं श्रुत्वा न मे चरणौ पुरोमुखौ प्रसरतः । भवतु । एभिः पर्यन्तकुरबकैरपवारितशरीरा भूत्वा प्रेक्षिष्ये तावदस्य भावानुबन्धम् ] ।

**राजा**—कथमेवं प्रिये ! अनुरागैकरसं मामुत्सृज्य निरपेक्षैव गताऽसि ! ।

---

मूलाग्रभागं । छायेव = अनातप इव । त्वं = भवती । दूरमपि गच्छन्ती = दूरतरमपगच्छन्त्यपि । मे = मम । हृदयं = स्वान्तं । न जहासि = न त्यजसि । अतो विस्मरणवार्त्तैव कुत इत्याशयः । [ उपमा ] ॥२९॥

इदं श्रुत्वा = ईदृशं स्नेहानुबन्धं विज्ञाय । पुरोमुखौ=गन्तव्यदिगभिमुखम् । अग्रतः । न प्रसरतः = न चलतः । पर्यन्ते स्थिताः कुरबकाः–पर्यन्तकुरबकाः, तैः–पर्यन्तकुरबकैः = परिसरवर्त्तिकुरबकैः । अपवारितं शरीरं यस्याः सा–अपवारितशरीरा=तिरोहिताङ्गयष्टिः । भावस्यानुबन्धं–भावानुबन्धम्=अनुरागसम्बन्धं । तथा कृत्वा=लतापिहिततनुर्भूत्वा । अनुराग एव एको रसो यस्यासौ, तम्–अनुरागैकरसं=प्रणयपेशलं । माम्=ईदृशीं दशामुपगतम् । एवम्=अगणितनिर्बन्धम् । उत्सृज्य = विहाय । निरपेक्षैव = निःस्नेहैव ।

---

से उसी तरह तुम दूर नहीं हो सकती हो, जिस तरह सायंकाल की छाया दूर तक जाने पर भी ( लम्बी होने पर भी ) वृक्ष की जड़ को नहीं छोड़ती है । [ सायंकाल में वृक्षों की छाया बहुत लम्बी हो जाती है, दूर तक चली जाती है, परन्तु फिरभी वृक्ष के मूल भाग को वह नहीं छोड़ता है ] ॥ २९ ॥

**शकुन्तला**—( थोड़ी दूर जाकर, मन ही मन ) हा धिक् ! हा धिक् ! ( हाय ! हाय ! ) इस राजा दुष्यन्त के मुख से ऐसा प्रेममय वचन सुनके तो मेरे पैर अब आगे की ओर बढ़ते ही नहीं हैं । अतः इस लताकुञ्जकी परिधि के पास के (बाडके) कुरबक के पौधों की आड़ में होकर मैं इसके प्रेम-भाव को देखती हूं।

**राजा**—हे प्रिये ! इस प्रकार तेरे अनुराग में लवलीन हुए मुझको भी ऐसे छोड़कर निरपेक्ष हो तूं कैसे चली गई ? ।

अनिर्दयोपभोगस्य रूपस्य मृदुनः कथम् ।
कठिनं खलु ते चेतः शिरीषस्येव बन्धनम् ॥३०॥

**शकुन्तला**—एदं सुणिअ ण मे अत्थि विभवो गच्छिदुं ।
[ इदं श्रुत्वा न मेऽस्ति विभवो गन्तुम् ] ।

**राजा**—सम्प्रति प्रियाशून्ये किमस्मिँल्लतामण्डपे करोमि ? । ( अग्रतोऽवलोक्य— ) हन्त ! व्याहतं मे गमनम् ।

---

अनिर्दयोपेति । अनिर्दयमुपभोगो यस्य तस्य–अनिर्दयोपभोगस्य = मन्द-मन्दमुपभोग्यस्य । मृदुनः = कोमलस्य । ते = तव । रूप्यते इति रूपं, तस्य–रूपस्य = शरीरस्य । शिरीषस्य = कुसुमविशेषस्य । बन्धनमिव = वृन्तमिव । कठिनं = कठोरं । चेतः = चित्तं । कथं खलु ? = कथं जातम् ? । मृदूपभोगस्य वपुषोऽसदृशं ते कठिनं हन्त ! स्वान्तं सम्पन्नम् । [ विभावनाविशेषोक्त्योः सन्देहसङ्करः । शिरीषस्येवेत्युपमा च ] ॥ ३० ॥

इदं श्रुत्वा = उपालम्भमिमं श्रुत्वा । गन्तुं—विभवः = सामर्थ्यं, नास्ति । सम्प्रति = इदानीं । प्रियया शून्ये प्रियाशून्ये = शकुन्तलाविरहिते । लतामण्डपे = वानीरलतामण्डपे । व्याहतं = केनापि वस्तुनाऽवरुद्धं । प्रियावलयस्य लाभादि-त्याशयः ।

---

बड़ी ही मृदुता से उपभोग करने योग्य, एवं अत्यन्त ही मृदु-मनोहर ऐसे सुन्दर रूप को पाकर भी, तेरा हृदय वैसे ही कठोर है, जैसे शिरिस के कोमल पुष्प का वृन्त ( बन्धनभाग, जोड़ का भाग ) कठोर होता है ॥ २० ॥

**शकुन्तला**—उपालम्भपरक इसके ऐसे करुण वाक्य सुनकर अब मेरी तो शक्ति जाने की नहीं है ।

**राजा**—अब प्रिया से शून्य इस लतामण्डप में मैं क्या करूं ? । ( जाता है ) । ( आगे की ओर देखकर— ) हा हन्त ! मेरी तो गति रुक गई । ( ठोकर लगने से गति रुक गई ) ।

मणिबन्धाद्गलितमिदं सङ्क्रान्तोशीरपरिमलं तस्याः ।
हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः ॥३१॥

( सबहुमानमादत्ते ) ।

शकुन्तला — ( हस्तं विलोक्य- ) अम्मो ! दोव्वल्लसिढिलदाए परिब्भट्टं एदं मिणालवलअं ण मए परिण्णादं ।

[ अहो ! दौर्बल्यशिथिलतया परिभ्रष्टमेतन्मृणालवलयं न मया परिज्ञातम् ] ।

राजा — ( मृणालवलयमुरसि निक्षिप्य- ) अहो स्पर्शः ! ।

---

मणिबन्धेति । तस्याः = शकुन्तलायाः । मणिबन्धात् = कलाचिकायाः । ( कलाई इति भाषा ) । गलितं = स्रस्तं । सङ्क्रान्तः—उशीरस्य परिमलो यस्मिंस्तत्-सङ्क्रान्तोशीरपरिमलं=संसर्गसङ्क्रान्तनलदाऽऽमोदनिर्भरं । मे=मम । हृदयस्य = मनसः । निगडमिव = बन्धनकटकमिव । गमनावरोधितया च निगडौपम्यम् । इदं मृणालवलयं = इदं मृणालनिर्मितं हस्ताभरणं । मे पुरतः स्थितं = मदग्रे वर्त्तते । मध्यमणिन्यायान्मेशब्दस्योभयत्रान्वयः । [ उत्प्रेक्षा । काव्यलिङ्गमपि केचित्समर्थयन्ते । 'आर्या' ] ॥ ३१ ॥

सबहुमानं = सादरम् । अम्मो ! इत्यव्ययं खेदे । दौर्बल्येन या शिथिलता, तया—दौर्बल्यशिथिलतया = अस्वास्थ्यकृतकार्श्यशैथिल्येन । परिभ्रष्टं=गलितम् । उरसि = हृदये । निक्षिप्य = आधाय । अहो स्पर्शः! = अहो सुखदः स्पर्श इत्यर्थः ।

---

कलाई पर से खिसक कर गिरा हुआ, खस की सुगन्धि से सुवासित, मेरी प्रिया का यह मृणालनिर्मित वलय ( कङ्कण ) मेरे हृदय के निगड ( बेड़ी ) की तरह सामने पड़ा हुआ है ॥ ३१ ॥

[ बड़े संमान पूर्वक उसे उठाता है ] ।

शकुन्तला—अरी मैया री मैया ! मेरी दुर्बलता से शिथिल होकर (खिसककर ) मेरा यह मृणालवलय गिर गया, पर मुझे पता ही न लगा ! ।

राजा—( मृणालवलय को छाती पर रखकर ) अहा ! इस वलय का स्पर्श क्या ही शीतल है ? ।

अनेन लीलाभरणेन ते प्रिये ! विहाय कान्तं भुजमत्र तिष्ठता ।
जनः समाश्वासित एष दुःखभागचेतनेनाऽपि सता न तु त्वया ॥३२॥

शकुन्तला—अदो वरं ण समत्थह्मि विलम्बिदुं । भोदु । एदेण ज्जेव अवदेसेण अत्ताणं दंसइस्सं । (—इत्युपसर्पति ) ।

[ अतः परं न समर्थाऽस्मि विलम्बितुम् । भवतु । एतेनैवाऽपदेशेनाऽऽत्मानं दर्शयिष्यामि ।

राजा—( दृष्ट्वा सहर्षम्- ) अये ! जीवितेश्वरी मे प्राप्ता । परिदेवनानन्तरं प्रसादेनोपकर्त्तव्योऽस्मि खलु दैवस्य ।

---

अनेनेति । प्रिये ! = हे दयिते । कान्तं = मनोज्ञं । तव भुजं = बाहुं । विहाय= परित्यज्य । तिष्ठता = समवस्थितेन । अचेतनेनापि = जडेनाऽपि । सता = दयालुना । अनेन = पुरतो विलोक्यमानेन । ते = तव । लीलायै-आभरणं, तेन-लीलाभरणेन = क्रीडाऽऽभूषणेन मृणालवलयेन । दुःखं भजतीति-दुःखभाक् = कामसन्तापकर्शितः । एष जनः = अयं दुष्यन्तलक्षणो लोकः । समाश्वासित एव= धैर्यं लम्भित एव । तु = पुनः । त्वया = सहृदयधोरणीधुरीणया भवत्या न = नैव धैर्यं लम्भितः ! । महदेव तेऽद्भुतमभिनवं काठिन्यं चेतस इत्याशयः । [ परिसङ्ख्या, व्यतिरेकश्च । वंशस्थं वृत्तम् । ] ॥ ३२ ॥

एतेन=मृणालवलयानयनरूपेण । अपदेशेन=व्याजेन । आत्मानं दर्शयिष्यामि= प्रकटयिष्यामि । वानीरमण्डपं प्रविशामि । उपसर्पति = गमनं नाटयति । दृष्ट्वा= शकुन्तलां विलोक्य । मे जीवितस्येश्वरी = मम प्राणेश्वरी । परिदेवनानन्तरं=

---

हे प्रिये ! तेरी मनोहर व सुन्दर भुजलता को छोड़कर यहां पड़े हुए, इस अचेतन लीलाभरण ( क्रीडा भूषण ) ने भी इस दुःखी जन (मुझ) को आश्वासन व शान्ति प्रदान की, पर तुमने तो मेरा कुछ भी ध्यान नहीं किया, और मुझे विकलता में ही छोड़कर ही तुम चली गई ! हा ! तुम बड़ी कठोर हो ॥३२॥

शकुन्तला—इससे अधिक विलम्ब करने में अब मैं असमर्थ हूं । अच्छा ! इस मृणालवलयको लेने के ही बहाने इसके सामने जाती हूं । (पास में जाती है) ।

राजा—( देखकर, हर्षपूर्वक ) अहा ! मेरी प्राणेश्वरी आ गई ! । इतना रुलाने पर ही दैव ( विधाता ) ने मेरा यह उपकार किया है ।

पिपासाक्षामकण्ठेन याचितश्चाऽम्बु पक्षिणा।
नवमेघोज्झिता चाऽस्य धारा निपतिता मुखे॥ ३३ ॥

शकुन्तला—( राज्ञः संमुखे स्थित्वा— ) अज्ज! अद्धपदे सुमरिअ एदस्स हत्थब्भंसिणो मिणालवलअस्स किदे पडिणिवुत्तह्मि, कधिदं मे हिअएण—तुए गहिदं त्ति। ता णिक्खिव एदं, मा मं अत्ताणञ्च मुणिअणेसुं पआसइस्सदि।

[ आर्य्य! अर्द्धपथे स्मृत्वा एतस्य हस्तभ्रंशिनो मृणालवलयस्य कृते प्रतिनिवृत्ताऽस्मि। कथितं मे हृदयेन—त्वया गृहीतमिति। तन्निक्षिपेदं। मा मामात्मानञ्च मुनिजनेषु प्रकाशयिष्यति ]।

---

विलापानन्तरं। प्रसादेन=प्रियासमागमरूपानुग्रहेण। दैवस्य = विधेः। उपकर्त्तव्यः = अनुग्राह्यः। तद्वशंवदः। अस्मि = जातः।

पिपासेति। पिपासया क्षामः कण्ठो यस्य तेन-पिपासाक्षामकण्ठेन = तृष्णाक्षीणशुष्कगलबिलेन। पक्षिणा च = चातकेन च। अम्बु = जलं। याचितं= मेघात् प्रार्थितम्। च = पुनः। नवेन मेघेन उज्झिता नवमेघोज्झिता = अभिनवजलधरविसृष्टा। धारा = जलधारा। मुखे = आस्ये। पतिता = प्रविष्टा। [ चकारद्वयेन प्रार्थनपतनक्रिययोरेककालिकत्वकथनात्समुच्चयालङ्कारः। अप्रस्तुतप्रशंसां केचन मन्यन्ते ]। ॥ ३३ ॥

एतस्य = त्वत्करस्थितस्य। मृणालवलयस्य = बिसकङ्कणस्य। हस्तभ्रंशिनः= मद्धुजभ्रष्टस्य। अर्द्धपथे=पथोऽर्धे। मार्गे। स्मृत्वा = विचिन्त्य। कृते = तदर्थे। तच्च

---

प्यास से जिसका गला सूख गया है, ऐसे चातक पक्षीनें तो जलकी बून्द ही मेघ से मांगी थी, परन्तु दैववशात् नवीन जलधर से वर्षाई गई जल की धाराही उसके मुख में आपड़ी। अर्थात्–मैं तो प्रिया के एकबार दर्शन पाने की ही प्रार्थना कर रहा था, परन्तु यहाँ तो दैववशात् ( भाग्य की अनुकूलता से ) मेरी प्रिया ही स्वयं सामनें आगई! ॥ ३३ ॥

शकुन्तला—( राजा के संमुख खड़ी होकर ) आर्य! आधी दूर जाने के बाद याद आने से, मेरे हाथ से खिसककर गिरे हुए, इस मृणालवलय को लेने के लिए ही

राजा—एकेनाऽभिसन्धिना प्रत्यर्पयामि ।

शकुन्तला—केण उण ? ।

[ केन पुनः ? ] ।

राजा—यदीदमहमेव यथास्थानं निवेशयामि । ( इत्युपसर्पति ) ।

शकुन्तला—आः, का गदी ? । भोदु एदं दाव ।

[ आः ! का गतिः । भवत्वेवं तावत् ] ।

राजा—इतः शिलापट्टैकदेशं संश्रयावः ।

( —इत्युभौ परिक्रम्योपविष्टौ ) ।

---

त्वया गृहीतमिति मम हृदयेन कथितमिति सम्बन्धः । तत्=यतो भवतैव गृहीतं तस्मात् । निक्षिप=समर्पय । मा-मेति निषेधदार्ढ्याय । यदीदं त्वया धृतं स्यान्मुनयो मत्सङ्गतं त्वां जानीयुरिति भावः । अभिसन्धिना=अभिप्रायेण । लाभेच्छया । इदं=मृणालवलयं । स्थानमनतिक्रम्य यथास्थानं=समुचिते स्थाने त्वद्भुजलक्षणे । 'आः' इति पीडासूचनाय । गतिः=उपायः । एवन्तावत्=एवमेव । त्वमेव मम भुजे परिधापयेत्यर्थः । शिलापट्टस्यैकं देशं-शिलापट्टैकदेशं=शिलाफलकप्रदेशं । संश्र-

---

मैं लौट कर, यहाँ फिर आई हूं । मेरे हृदयनें मुझसे कहा है, कि—आपनें ही मेरा वह मृणालवलय लिया है ।' अतः उसे मुझे दे दो । उसे धारण कर आप अपने को और मुझको भी कहीं मुनिजनों में प्रकटकर लज्जित मत कर देना ।

राजा—इसे एक ही शर्त्त पर मैं लौटा सकता हूं ।

शकुन्तला—कहो, किस शर्त्त पर ? ।

राजा—यदि इस मृणालवलयको मैं ही अपने हाथ से यथास्थान ( तुमारे हाथ में ) पहनाऊं, तो मैं उसे लौटा सकता हूं ।

( शकुन्तला के पास में उसे पहिराने के लिए खिसककर आता है ) ।

शकुन्तला—आह ! अब क्या किया जाए ! । अब तो दूसरा उपाय ही नहीं है । अच्छा, तुम ही इसे मुझे पहिना दो ।

राजा—आओ, उस शिला पट्ट के कोने पर बैठ जाएं ।

( दोनों कुछ चलकर शिलातल पर जाकर बैठते हैं ) ।

राजा—( शकुन्तलाया हस्तमादाय- ) अहो स्पर्शः ! ।

हरकोपाग्निदग्धस्य दैवेनाऽमृतवर्षिणा ।
प्ररोहः सम्भृतो भूयः किं स्वित्कामतरोरयम् ? ॥३४॥

शकुन्तला—( स्पर्शं रूपयित्वा- ) तुवरदु तुवरदु अज्जउत्तो ।
[ त्वरतां त्वरतामार्यपुत्रः ] ।

राजा—( सहर्षमात्मगतम्- ) इदानीमस्मि विश्वसितः । भर्त्तु—राभाषणपदमेतत् । ( प्रकाशम्- ) सुन्दरि ! नाऽतिश्लिष्टः सन्धिरस्य मृणालवलयस्य । यदि तेऽभिमतं, तदन्यथा घटयिष्यामि ।

---

यावः = उपविशावः । स्पर्शः = शरीरसंस्पर्शोऽपि । अहो ! = अतितरां सुखदः ।

हरेति । हरस्य कोप एवाऽग्निस्तेन दग्धस्य—हरकोपाग्निदग्धस्य = स्मरहर-लोचनानलभस्मीकृतस्य । काम एव तरुस्तस्य = कामवृक्षस्य । अमृतं वर्षति तच्छीलेन-अमृतवर्षिणा=सुधामुचा । दैवेन = दिष्टेन । भाग्येन । भूयः सम्भृतः= पुनरपि पोषितः । प्ररोहः=अभिनवोऽङ्कुरोद्भेदः । अयं किंस्वित् = किमयम् ? । [ रूपकं । सन्देहश्च ] ॥ ३४ ॥

विश्वसितः = जाताश्वासः । एतत्=आर्यपुत्रेति पदं । भर्त्तुः = पत्युः । आभा-षणे पदं—आभाषणपदं = संलापप्रयोज्यं सम्बोधनपदम् । 'सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने' इत्युक्तेः । न = नैव । अतिश्लिष्टः = सुश्लिष्टः । सन्धिः = ग्रन्थिसन्धिः । तेऽभिमतं = भवत्यै रोचते । अन्यथा=पुनरपि सुश्लिष्टं । घटयि-

---

राजा—( शकुन्तला का हाथ पकड़ कर ) अहा ! कैसा आनन्द-दायक इसका स्पर्श है ! ।

रुद्र के कोप रूपी अग्नि से जले हुए कामदेव रूपी वृक्ष का क्या यह नया अंकुर ही दैवने अमृत की वर्षा कर पुनः खड़ा किया है ? ॥ ३३ ॥

शकुन्तला—( स्पर्श के आनन्द का अनुभव करती हुई ) हे आर्यपुत्र ! ( हे प्राणनाथ ! ) जल्दी करिए, जल्दी करिए ।

राजा—(सहर्ष मनही मन) अब मुझे पक्का विश्वास व सन्तोष हो गया । क्यों कि—'आर्यपुत्र' यह सम्बोधन तो भर्त्ता (पति) काही हो सकता है । अतः सिद्ध हो गया कि इसने मुझे अपना पति स्वीकार कर लिया है । ( प्रकट में )

सुन्दरि ! इस मृणाल के कङ्कण की बनावट बढ़िया नहीं है,

**शकुन्तला**—( स्मितं कृत्वा- ) जधा दे रोअदि ।

[ यथा ते रोचते ]।

**राजा**—( सव्याजं विलम्ब्य, प्रतिमोच्य- ) सुन्दरि ! दृश्यताम्—

**अयं स ते श्यामलतामनोहरं विशेषशोभार्थमिवोज्झिताम्बरः ।**
**मृणालरूपेण नवो निशाकरः करं समेत्योभयकोटिमाश्रितः ॥३५॥**

ष्यामि = रचयिष्यामि । करोमि । सव्याजं विलम्ब्य=केनापि च्छलेन रचना-परिधापनादिव्यापारेषु कालविलम्बं विधाय । सुखस्पर्शलोभेनैव चेह विलम्ब इति ध्येयम् । प्रतिमोच्य = भुजे परिधाप्य ।

**अयमिति** । विशेषशोभायै इति—विशेषशोभार्थम् = अतिशयसौन्दर्यसम्प-त्त्यर्थम् । उज्झितमम्बरं येनासौ-उज्झिताम्बरः = परित्यक्तगगनाङ्गणः । त्यक्त-वस्त्रश्चेति गूढोर्थः । सोऽयं = जगद्विदितसौन्दर्यः । नवः = अभिनवः । कला-मात्रसारः । कलङ्कविकलः । निशाकरः = कलानिधिः । अहञ्चेति गूढार्थः । श्यामलतया = नीलिम्ना । श्यामलता ज्योतिष्मती, तद्वन्मनोज्ञमिति वा । करं = भुजं । मृणालरूपेण = मृणालाकारेण । समेत्य = प्राप्य । उभयकोटिं = प्रान्त-द्वयम् । संशयं च । आश्रितः = वलयाकारेण कुण्डलीकुरुते । वलयाकारतामा-श्रयत इत्यर्थः । सोऽयं जनः सम्प्रति मैथुनाय त्वरते इति गूढोऽर्थः । 'द्व्यर्थैः पदैः प्रकटयेच्च रहस्यवस्तु''इत्युक्तेः । [ उत्प्रेक्षा । वंशस्थं वृत्तम् ] ॥ ३५ ॥

इसकी गांठ ढीली हो गई है । अतः कहो तो ( तुमारी अनुमति हो तो ) इससे भी उत्तम व नवीन प्रकार से इसे बना दूं ? ।

**शकुन्तला**—( कुछ मुसकाकर ) जैसी आपकी इच्छा हो, वैसा करिए ।

**राजा**—( झूठे-झूठे बहानों से खोलने में, तथा बनाने में विलम्ब करने के बाद शकुन्तला के हाथ में पहिनाकर ) हे सुन्दरि ! देखो—

यह द्वितीया का नवीन चन्द्रमा अधिक शोभा प्राप्त करने के लिए ही मानों गगनाङ्गण को छोड़कर मृणालरूप से—श्यामलता ( प्रियङ्गुलता ) की तरह मनोहर तुमारी भुजा को प्राप्त होकर, वलयाकार धारण कर रहा है । अर्थात् नवीन ( दूज की ) चन्द्रमा ही वलय ( दोनों कोना मिलाने से चूड़ी, कङ्कण ) की तरह होकर तुमारे हाथ में विराज रहा है ॥ ३५ ॥

शकुन्तला—ण दाव णं पेक्खामि, पवणकम्पिदकण्णुप्पलरेणुणा कलुसीकिदा मे दिट्ठी।

[न तावदेनत्प्रेक्षे, पवनकम्पितकर्णोत्पलरेणुना कलुषीकृता मे दृष्टिः]।

राजा—( सस्मितम्— ) यद्यनुमन्यसे, तदहमेनां वदनमारुतेन विशदां करवाणि।

शकुन्तला—तदो अणुकम्पिदा भवेअं, किन्तु उण अहं ण दे वीससेमि!

[ तदाऽनुकम्पिता भवेयम्। किन्तु पुनरहं न ते विश्वसिमि ]।

राजा—मा मैवम्, नवो हि परिजनः सेव्यानामादेशात् परं न वर्त्तते।

---

एनत्=नवचन्द्रतुल्यं मृणालवलयं। प्रेक्षे=द्रष्टुं शक्नोमि। पवनेन कम्पितं यत् कर्णोत्पलं, तस्य रेणुना = वातान्दोलितकर्णपूरपरागेण। कलुषीकृता = आविला। एनां=दृष्टिं। वदनमारुतेन=मुखवातेन। विशदां=प्रसन्नाम्। अनुकम्पिता= अनुगृहीता। न विश्वसिमि=न ते विश्वासः। एतद्व्याजेन कमप्यविनयं चुम्बनरूपं कर्म कदाचित्—भवान् विदध्यात्। मा मैवं=नैवमविश्वासो विधेयः। नवः=सद्यो नियुक्तः। परिजनः=सेवकः। सेव्यानां=स्वामिनाम्। आदेशात्=आज्ञायाः। परम्=

---

शकुन्तला—मैं तो इस मृणालवलय को नहीं देख सक रही हूँ, क्योंकि—मेरी आँख में पवन से कम्पित कानके भूषण कमल-की रेणु के गिर जानेसे मेरी आँख कलुषित ( देख सकने में असमर्थ ) हो गई है।

राजा—( मुसकुराते हुए ) यदि तुम स्वीकृति दो तो तुमारी आँख को अपनें मुख से फूक मारकर मैं ठीक कर दूं।

शकुन्तला—यदि आप ऐसा कर दें तब तो मैं अनुकम्पित ही हो जाऊं। परन्तु मैं आपका विश्वास नहीं करती हूँ। कदाचित् आप कोई गड़बड़ ( चुम्बन लेना आदि कार्य ) कर बैठें तो?।

राजा—ऐसा भय मत करो। क्योंकि–नया नौकर कभी मालिक की आज्ञा के बाहर नहीं जा सकता है। और मैं अभी तुम्हारे लिए नया ही हूँ। अतः तुमारी स्वीकृति के बिना गड़बड़ नहीं करूंगा।

**शकुन्तला**—अअं ज्जेव अच्चाअरो अविस्सासजणओ।

[ अयमेवाऽत्यादरोऽविश्वासजनकः ]।

**राजा**—( स्वगतम्— ) नाऽहमेवं रमणीयमात्मनः सेवावसरं शिथिलयिष्ये। (–मुखमुन्नमयितुं प्रवृत्तः )।

( [1]शकुन्तला—प्रतिषेधं रूपयन्ती विरमति )।

**राजा**—अयि मदिरेक्षणे! अलमस्मदविनयाशङ्कया।

---

अधिकं। न वर्त्तते=नाचरति। अत्याचारः=स्वामित्वेन निर्देशात्प्रतीयमानः। अविश्वासजनकः=अविस्रम्भभाजनतां मे व्यनक्तीत्यर्थः।

एवं रमणीयम्=अतिपेशलं। सेवावसरम्=उपचारावसरम्। एकान्ते विस्रब्ध-प्रियालाभादुपनतं नेत्रविशदीकरणरूपं। शिथिलयिष्ये=अपनयामि। मनसि विभाव्येत्थं–लोचनरजोऽपनयनाय प्रवर्त्तमाने राजनि—शकुन्तला। प्रतिषेधं रूपयन्ती=निषेधं नाटयन्ती।

अविनयस्याशङ्का तया–अविनयाशङ्कया=धाष्ट्याशङ्कया। नाहं बलात्कारविरसं प्रणयं करिष्यामीत्याशयः। एवञ्च ते नेत्ररज एवापनेष्यामीति भावः।

---

**शकुन्तला**—आपका यह मेरा ज्यादा सत्कार करना ही तो मेरे मन में अविश्वास उत्पन्न कर रहा है।

**राजा**—( मन ही मन ) में ऐसे इस रमणीय अवसर को अपने हाथ से जाने नहीं दूंगा। ( शकुन्तला का मुख ऊपर को करने में प्रवृत्त होता है )।

[ **शकुन्तला**—नाहीं नाहीं करती हुई, अन्त में चुप रह जाती है ]।

**राजा**—हे सुन्दर तीखे नयनवाली प्रिये! तुम मेरे अविनय ( गड़बड़ ) की कुछ भी शङ्का मत करो।

---

१ अत्र—'शकुन्तला—मुञ्च तावन्मां भूयोऽपि सखीजनमनुमानयिष्ये। राजा—भवतु मोक्ष्यामि। शकुन्तला——कदा?। राजा—"अपरिक्षत-कोमलस्य यावत्कुसुमस्येव नवस्य षट्पदेन। अधरस्य पिपासता मया ते सदयं सुन्दरि! गृह्यते रसोऽस्य"।—( इति मुखमस्याः समुन्नमयितुमिच्छति। शकुन्तला—परिहरति नाट्येन' )।—इति पाठान्तरम्।

( शकुन्तला—किञ्चिद् दृष्ट्वा व्रीडावनतमुखी तिष्ठति )।

राजा—( अङ्गुलीभ्यां मुखमुन्नमय्य, आत्मगतम् )—

चारुणा स्फुरितेनाऽयमपरिक्षतकोमलः ।
पिपासतो ममाऽनुज्ञां ददातीव प्रियाऽधरः ॥ ३६ ॥

शकुन्तला—परिण्णाणमन्थरो विअ अज्जउत्तो ।
[ परिज्ञानमन्थर इव आर्यपुत्रः ] ।

---

चारुणेति । अपरिक्षतश्चासौ कोमलश्च–अपरिक्षतकोमलः = अनुच्छिष्टो, मृदुतरश्च । प्रियाया अधरः = प्रियाधरोष्ठः । चारुणा = मनोहरेण । स्फुरितेन = स्फुरणेन । पिपासतः=सतृष्णस्य मम पानाभिलाषिणः । अनुज्ञाम् = अनुमतिं । ददातीव = प्रयच्छतीव । [ उत्प्रेक्षा । ] ॥ ३६ ॥

परिज्ञाने = लोचनपतितरजोविज्ञाने । मन्थरः = उदासीन इव । कर्णो-

---

[ शकुन्तला—राजा की ओर थोड़ा देखकर लज्जित हो नीचा मुख कर लेती है ] ।

राजा—( दो अङ्गुलियों से ठुड्डी पकड़कर, उसका मुख ऊँचा करके, मनहीं मन) मनोहर कान्तिवाला, चमचमाता हुआ ( या फड़कता हुआ ) यह प्रिया का अपरिक्षत ( अभी तक किसी से भी अनास्वादित ) अधरोष्ठ—अपनें पान करने की इच्छा वाले मुझको, पान करने की मानों स्वयं अनुमति ही दे रहा है ॥३६॥

शकुन्तला—आप तो इधर उधर टटोल रहे हैं, मालूम होता है, आपको मेरे नेत्र का पता ही नहीं लग रहा है ! ।

---

[ २१४ पृष्ठे टिप्पण्याम्–अपरिक्षतेति पाठान्तरं । तस्यार्थः—हे सुन्दरि != मानिनि ! अपरिक्षतं च तत्कोमलं च तस्य–अपरिक्षतकोमलस्य=भ्रमरादिनाऽक्षतस्य । मृदुनः । नवस्य = अभिनवस्य । कुसुमस्य = प्रसूनस्य । षट्पदेनेव = भ्रमरेणेव । पातुमिच्छता-पिपासता = सतृष्णेन । मया = त्वत्प्रणयिना । ते = तव । अस्य=कामनिधानभूतस्य । अधरस्य = अधरोष्ठस्य । सदयं=मन्दं मन्दं । यावदित्यवधिं द्योतयति । कात्स्न्र्ये वा । यदि–रसः–गृह्यते = आस्वाद्यते । यदि मह्यमिममधरोष्ठं दातुं प्रतिजानासि तदा त्वां मुञ्चामीत्याशयः । [ श्लेषवाच्योपमा । अनुप्रासः । 'औपच्छन्दसिकं वृत्तम्' ] ।

**राजा**—कर्णोत्पलसन्निकर्षादीक्षणमूढोऽस्मि ।

(—इति मुखमारुतेन चक्षुः सेवते )।

**शकुन्तला**—भोदु। पइदित्थदंसणह्मि संवुत्ता। लज्जेमि उण अणुवआरिणी पिअआरिणो अज्जउत्तस्स ।

[ भवतु। प्रकृतिस्थदर्शनाऽस्मि संवृत्ता। लज्जे पुनरनुपकारिणी प्रियकारिण आर्यपुत्रस्य ]।

**राजा**—सुन्दरि ! किमन्यत्—

**इदमप्युपकृतिपक्षे सुरभि मुखं ते यदाघ्रातम् ।**
**ननु कमलस्य मधुकरः सन्तुष्यति गन्धमात्रेण ॥ ३७ ॥**

---

त्पलस्य। सन्निकर्षात् = सान्निध्यात्। ईक्षणे = नेत्रपरिज्ञाने। इदं नेत्रमिदं वेति परिज्ञानाऽभावात्। एतेन लोचनस्य नीलोत्पलसादृश्यं सूचितम्। मूढोऽस्मि = अजातनिश्चयोऽस्मि। अथवा—ईक्षणे = प्रेक्षणे। सेवते = फूत्करोति। प्रकृतिस्थं दर्शनं लोचन-यस्याः सा = रेण्वपगमात्स्वस्थलोचना। संवृत्ता = जाता। प्रियं कर्त्तुं शीलमस्य-तस्य-प्रियकारिणः = उपकारपरायणस्य भवतः। अनुपकारिणी = अप्रत्युपकारकारिणी। अन्यत् = उपकारान्तरम्।

**इदमिति**। सुरभि = सुगन्धि। ते=तव। मुखं = वदनकमलं। यदाघ्रातं =

---

**राजा**—तुमारे नेत्र के समीप लटकते हुए कान के भूषण-कमल में और तुमारें नेत्र में कोई भेद नहीं होने से मुझे पता ही नहीं लग रहा है कि कौनसा तुमारा नेत्र है, और कौनसा कर्णोत्पल है !।

[ मुख की मारुत से आँख में फूँक देता है ]।

**शकुन्तला**—बस हो गया रहने दीजिए। मेरी आँख अब ठीक हो गई। परन्तु हे प्राणनाथ ! मेरा इतना प्रिय ( उपकार ) करने वाले आपका भी मैं कुछ भी प्रत्युपकार नहीं कर सक रही हूँ, इस कारण से मैं बहुत लज्जित हूँ ।

**राजा**—हे सुन्दरि ! तुमारे इस सुगन्धित मुख कमल का मैंने इस प्रकार आघ्राण किया (उसे मैंने सूँघा)—यह क्या मेरा कम प्रत्युपकार है ?। भ्रमर तो

**शकुन्तला**—( सस्मितम्– ) असन्तोसे उण किं करेदि ?।

[ असन्तोषे पुनः किं करोति ? ]।

**राजा**—इदम्–( –इति व्यवसितः )।

( **शकुन्तला**—वक्त्रं ढौकते )।

---

यदनुभूतं । इदमपि = एतदपि । उपकृतिपक्षे = उपकारकोटौ गण्यताम् । ननु = यतः—मधुकरः = भ्रमरः । कमलस्य = पद्मस्य । गन्धमात्रेण = सौरभमात्रेण । सन्तुष्यति = प्रसीदति । तदलमुपकारान्तरचिन्तयेत्याशयः । [ प्रतिवस्तूपमा । दृष्टान्तो वा । 'आर्या' ] ॥ ३७ ॥

असन्तोषे = गन्धमात्रेण यदि न सन्तुष्यति, तदा । किं करोति = भ्रमरः किं कुरुते ? । यदि भवान् वदनगन्धमात्रेण न तुष्येत्तदा मया किं प्रत्युपकरणीयमिति सरलः प्रश्नाशयः । व्यवसितः = मुखं चुम्बितुं प्रवृत्तः । ढौकते = ददाति । अपनयतीति व्याख्यानं तु न रहस्यविदाम् । तदेवं तयोः सुरतं प्रवृत्तमित्याशयः ।

संभोगस्य रङ्गे दर्शयितुमयोग्यतया तौ विघटयितुं द्वितीयं पताकास्थानकं योजयति—

---

कमल की गन्ध से ही सन्तुष्ट हो जाता है, चाहे मकरन्द रस का पान करने को उसे मिले या न मिले । अतः तुमारा यही प्रत्युपकार क्या कम है ? ।

शकुन्तला—( हँसती हुई ) परन्तु भ्रमर केवल कमल की गन्ध से ही यदि सन्तुष्ट न हो तो वह क्या करता है ।

राजा—यह करता है—( अधरोष्ठ का चुम्बन आदि यथेच्छ रति क्रीडा करता है )।

[ शकुन्तला—अपने मुख और अधरोष्ठ को उसके और भी पास में कर देती है ]।

[ इसके बाद वहाँ जो होने लगा, उसे कवि की लेखनी लिखने में असमर्थ है, सहृदय पाठक स्वयं समझ सकते हैं, कि–यहाँ इसके अनन्तर क्या होने लगा । इसके बाद के प्रसंग को नाटकों में दिखलाने की आज्ञा शास्त्रकारों की नहीं है, अतः कवि ने इसके आगे का सरस वृत्तान्त नहीं लिखा है ]।

( नेपथ्ये— )

चक्कवाअवहु ! आमन्तेहि सहचरं णं उअत्थिदा रअणी।

[ चक्रवाकवधु ! आमन्त्रयस्व सहचरम् । ननूपस्थिता रजनी ]।

**शकुन्तला**—( कर्णं दत्त्वा, ससम्भ्रमम्— ) अज्जउत्त ! एसा क्खु तादकण्णस्स धम्मकणीअसी मम वुत्तन्तोवलम्भणणिमित्तं अज्जा गोदमी आअच्छदि, ता विडवान्तरिदो होहि।

[ आर्यपुत्र ! एषा खलु तातकण्वस्य धर्म्मकनीयसी मम वृत्तान्तो-

---

नेपथ्य इति। चक्रवाकवधु !=हे! चक्रवाकि ! । सहचरं=प्रियम् । आमन्त्रयस्व=आपृच्छस्व। प्रस्थातुमाज्ञां याचस्व। रजनी=निशा। उपस्थिता= आयाति। रात्रौ चक्रवाकमिथुनं वियुज्यते इति वियोगसमयस्ते समुपस्थित इत्याशयः। अमुनाऽप्रकृतेन च—"शकुन्तले ! दुष्यन्तमापृच्छस्व, उपस्थिता तत्र भवती गौतमी'ति प्रस्तुतो गम्योऽर्थः। [ अप्रस्तुतप्रशंसा चेयम् । इत्थञ्च द्वितीयं पताकास्थानकमेतत् । तदुक्तं धनिकेन 'प्रस्तुतागन्तुभावस्य प्रस्तुताऽन्योक्तिसूचकम् । पताकास्थानवत्तुल्यसविधानविशेषण' मिति। प्रकृते चान्योक्त्या सूचनमर्थान्तरस्येति पताकास्थानकमेतत् । 'मुखे प्रतिमुखे गर्भे विमर्शे च चतुर्ष्वपि। भेदाः सन्धिषु कर्त्तव्याः पताकास्थानकस्य तु'–इति मातृगुप्ताचार्योक्तेर्युक्तं पताकास्थानकमिदम् ]।

कर्णं दत्त्वा=श्रवणं नाटयित्वा। ससम्भ्रमं=सत्वरं। तातकण्वस्य= मम पितुः कण्वस्य। धर्मतः कनीयसी–धर्मकनीयसी=कनीष्ठा धर्मभगिनी। अस-

---

[ नेपथ्य में=पर्दे के पीछे से ]।

हे चक्रवाकवधु=हे चकवी ! अपने सहचर चक्रवाक ( चकवे ) से अब छुट्टी ले ले। क्योंकि-देख, यह रात्रि आ रही है।

चक्रवाक और चक्रवाकी ( चकवा-चकवी ) दिन भर साथ ही रहते हैं, परन्तु रात्रि होते ही वे दोनों अलग २ हो जाते हैं। इस प्रकार रात भर उनका विरह ही रहता है। [ यहाँ चक्रवाकवधू–शकुन्तला है। सहचर=चक्रवाक–दुष्यन्त है। विरहप्रद रात्रि—गौतमी है ]।

**शकुन्तला**—(कान दे सुनकर, घबड़ाहट के साथ) हे प्राणनाथ ! मेरे पिता कण्व की छोटी धर्म[बहिन यह आर्या] गौतमी मेरे स्वास्थ्य का वृत्तान्त जानने के

पलम्भननिमित्तमार्या गौतमी आगच्छति, तद्विटपान्तरितो भव ]।

राजा—तथा। ( —इत्येकान्ते स्थितः )।

( ततः प्रविशति पात्रहस्ता गौतमी )।

गौतमी—जादे ! अच्चाहिदं सुणिअ आअदा, एदं शान्तिउदअं। ( दृष्ट्वा, समुत्थाप्य च —) इध देवदासहाइणी चिट्ठसि ?।

[ जाते ! अत्याहितं श्रुत्वा आगता। एतच्छान्त्युदकम्। इह देवतासहायिनी तिष्ठसि ? ]।

शकुन्तला—दाणिं ज्जेव अणसूआपिअंवदाओ मालिणीं ओदीण्णाओ।

[ इदानीमेवाऽनसूयाप्रियंवदे मालिनीमवतीर्णे ]।

---

होदराऽपि धर्मसम्बन्धद्भगिनी धर्मभगिनीत्युच्यते। वृत्तान्तस्योपलम्भनं—तस्य निमित्तं-वृत्तान्तोपलम्भननिमित्तं = मत्स्वास्थ्यवृत्तान्तज्ञानार्थम्। आर्या = पूज्या। विटपान्तरितः = शाखाव्यवहितः। तथा = विटपान्तरितो भवामि। एतेन विरोधो नाम प्रतिमुखाङ्गं दर्शितं, 'विरोधो व्यसनप्राप्तिः' इति लक्षणात्। एकान्ते = रहसि। जाते ! = पुत्रि !। अत्याहितं = शरीराऽस्वास्थ्यम्। एतत् = इदं। शान्त्युदकं = शान्तिजलं। गृहाणेति शेषः। दृष्ट्वा = हस्तेन स्पृष्ट्वा। समुत्थाप्य= शिलाफलकादुत्थाप्य। देवतासहायिनी=देवतामात्रसहाया। एकाकिनीति यावत्। एकाकिनीत्यमङ्गलप्रायं वचोऽनया न प्रयुक्तं। मालिनीं = तदाख्यां स्रवन्तीम्।

---

लिए यहाँ आ रही है। अतः आप वृक्षों की इन शाखाओं के पीछे छिप जाइए।

राजा—अच्छा ( छिपता है )।

[ पात्रहस्ता गौतमी का प्रवेश ]।

गौतमी—हे पुत्रि ! तेरे अस्वास्थ्य की खबर सुनकर मैं यहाँ आई हूं। यह यज्ञकलशका शान्ति का जल है। ( देखकर और हाथ से उठाकर ) हैं ! तूं यहाँ क्या इकल्ली ही बैठी है ?

शकुन्तला—अनसूया और प्रियंवदा अभी २ मालिनी नदी में स्नान करने चली गई हैं।

**गौतमी**—( शान्त्युदकेन शकुन्तलामभ्युक्ष्य ) जादे ! णिराबाधा से च्चिरंजीव । अवि लहुसन्दावाइं अङ्गाइं ? । (—इति स्पृशति ) ।

[ जाते ! निराबाधा से चिरं जीव । अपि लघुसन्तापानि अङ्गानि ? ] ।

**शकुन्तला**—अम्मो ! अत्थि विसेसो ।

[ अम्मो ! अस्ति विशेषः ] ।

**गौतमी**—परिणदो दिअसो, ता एहि उडअं ज्जेव गच्छह्म ।

[ परिणतो दिवसः, तदेहि उजटमेव गच्छावः ] ।

**शकुन्तला**—( कथंचिदुत्थाय, स्वगतम्-) हिअअ ! पढमं सुहोवणदे मणोहरे कालहरणं करेसि, सम्पदं अणुभव दाव दुक्खं । ( पदान्तरे प्रतिनिवृत्त्य, प्रकाशम्-) लदाघर ! सन्दावहर ! आमन्तेमि तुमं पुणोवि परिभोअत्थं ।

[ हृदय ! प्रथमं सुखोपनते मनोरथे कालहरणं करोषि । [1]साम्प्रत-

---

अवतीर्णे = स्नातुं गत । अभ्युक्ष्य = अभिषिच्य । निराबाधा = अपगतव्यथा । लघुः सन्तापो येषान्तानि-लघुसन्तापानि = शान्तव्यथानि । स्पृशति = हस्तेन परामृशति । अम्मो ! इति हर्षे —देशी । विशेषः=पूर्वतो लाघवं । परिणतः = अस्तमितः । उटजं = पर्णशालां । सुखेन उपनते–सुखोपनते = अनायासलब्धे ।

---

गौतमी—[ शान्तिजल से शकुन्तला का अभिषेक ( जल से छींटे दे ) करके हे पुत्रि ! तूं रोग-सन्ताप से मुक्त हो, बहुत समय तक जीवित रह । ( हाथ फेरती हुई ) बेटी ! अब तो सन्ताप कुछ कम है न ? ।

शकुन्तला—हर्ष की बात है कि-अब कुछ तो फर्क पड़ा है ।

गौतमी—पुत्रि ! दिन छिप रहा है, अतः चल, कुटी पर ही चलें ।

शकुन्तला—( किसी तरह अनिच्छापूर्वक उठकर, मन ही मन ) हे हृदय ! पहिले तो तूं सुखपूर्वक (अनायास ही) प्राप्त हुए मनोरथ = प्राणप्यारे—को पाकर भी वृथा ही कालयापन कर रहा था। बातों ही बातों में समय खोकर तूने पूरा २

---

१. 'सानुशयं विघटितस्य कथन्ते सम्प्रत सन्तापः'। पा० । अनुशयः-पश्चात्तापः ।

मनुभव तावद् दुःखम्। लतागृह! सन्तापहर! आमन्त्रयामि त्वां पुनरपि परिभोगार्थम् ( -इति निष्क्रान्ते )।

**राजा**—(पूर्वस्थानमुपेत्य सनिःश्वासम्) अहो! विघ्नवत्यः प्रार्थितार्थ-सिद्धयः। मया हि—

मुहुरङ्गुलिसंवृताऽधरोष्ठं
प्रतिषेधाऽक्षरविक्लवाऽभिरामम्।

---

मनोरथे = अभिलाषभूते प्रियतमे। कालस्य हरणं-कालहरणं = कालक्षेपं। वृथा मौग्ध्येन कालं क्षिपन्ती न कृतार्थमात्मानं कृतवती। साम्प्रतम् = इदानीम्। दुःखं = प्रियवियोगं। लतागृह! = लतागृहसन्निहितप्रियतम!। सन्तापं हरति तच्छील! = सन्तापहर! = हे तापहरिन्। प्रिय दुष्यन्त!। आमन्त्रये = प्रार्थये। परिभोगार्थं = त्वया मम सन्तापहरणार्थं पुनरप्यागन्तव्यमिति भावः। लतागृहमपि शीतलतया सन्तापहारकम्। परिभोगः=स्वसंभोगः, सुखञ्च। अनेन मनोरथो नाम भूषणं—'मनोरथस्तु व्याजेन विवक्षित-निवेदन'मित्युक्तलक्षणं सूचितम्। प्रार्थितानामर्थानां सिद्धयः-प्रार्थिताऽर्थसिद्धयः = अभिलषितार्थसम्पत्तयः। विघ्नवत्यः = सान्तरायाः। गौतमीप्राप्त्या प्रियाविप्रलम्भादभिलषितस्य विहतत्वात्।

मुहुरिति। मुहुः = वारं वारम्। अङ्गुल्या संवृतः-अधरोष्ठो यत्र तत्—अङ्गुलिसंवृताधरोष्ठं = तर्जनीसमाच्छादिताधरोष्ठं। प्रतिषेधाक्षराणां विक्लवेन =

---

आनन्द नहीं लिया। ले, अब तू उसीका फल दुःख (विरहदुःख) भोग। (कुछ दूर जाकर फिर लौट कर प्रकट में—राजा को सुनाती हुई) हे लतागृह! हे मेरे सन्ताप को दूर करने वाले! ( राजापक्ष में—हे लतागृह में आकर मेरे काम सन्ताप को दूर करने वाले! छिपे हुए प्राणनाथ!) अब तो मैं जाने के लिए आपसे अनुमति लेती हूं। आपके पास सुख भोग (सुरतसुख) के लिये मैं फिर उपस्थित होऊंगी। [ प्रकट में तो यह वाक्य लताकुञ्ज को संबोधन करके कहा गया है, परन्तु इसके दो अर्थ होते हैं, ( १ लताकुञ्जपरक, २ राजा दुष्यन्तपरक अर्थ ) ]।

( दोनों जाती हैं )।

**राजा**—( पहिले स्थान—शिलातल—पर आकर दीर्घश्वास छोडता हुआ ) अहो! मनोरथ की सिद्धियाँ भी विघ्नों से भरी हुई ही होती हैं। मैंने सुन्दर

मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं, न चुम्बितं तु ॥ ३८ ॥

क नु खलु सम्प्रति गच्छामि ?। अथवा—इहैव प्रियापरिभुक्ते लतामण्डपे मुहूर्त्तं तिष्ठामि। ( सर्वतोऽवलोक्य— )

✓तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं,
कान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।

---

वैक्लव्येन- स्फुटमनुच्चारणेनाभिरामं–प्रतिषेधाक्षरविक्लवाभिरामं = मामाऽलमाद्यक्षरास्फुटोच्चारणहृद्यम्। विक्लवशब्दो धर्मपरः। अंसयोर्विवर्त्तितुं शीलं यस्य तत्—अंसविवर्त्ति = स्कन्धपरावर्त्तनशीलं। पक्ष्मले अक्षिणी यस्यास्तस्या पक्ष्मलाक्ष्याः = चारुनेत्रलोमललितलोचनायाः। मुखं=वदनं। कथमपि=यत्नशतादपि। मया उन्नमितं = चुम्बनार्थमुन्नमितं। तु=किन्तु यथेच्छं। न चुम्बितं। गौतमीसमागमादेव। [ स्वभावोक्तिः। श्रुतिवृत्त्यनुप्रासौ। कथमपीत्येतदर्थं प्रति विशेषणत्रयार्थस्य हेतुत्वेनोपादानात्—काव्यलिङ्गम्। औपच्छन्दसिकं वृत्तम् ] ॥ ३८ ॥

सम्प्रति = इदानीम् प्रियाविरहितः। प्रियया परिभुक्ते प्रियापरिभुक्ते = प्रियावस्थानमनोज्ञे। मुहूर्त्तं = क्षणमात्रम्।

**तस्या इति**। शिलायां = शिलापट्टे। तस्याः = प्रियायाः। शरीरेण=वपुषा। लुलिता = इतस्ततो विक्षिप्ता। पुष्पाणि प्रकृतानि यत्र सा—पुष्पमयी = कुसुमकल्पिता। इयं = पुरतो दृश्यमाना। नलिन्याः=कमलिन्याः। पत्रे=दले। नखैः=

---

नयनों वाली अपनी प्यारी के बारंबार अङ्गुलियों से ढके गए, 'नहीं, नहीं रहने दो', ऐसे मधुर अक्षरों से, तथा घबड़ाहटसे युक्त, पीछे की तरफ घुमाए हुए, मुख को किसी प्रकार उठा कर भी मैं पूरा २ चुम्बन नहीं कर सका। अब क्या करूं ? ॥३८॥

अब कहाँ जाऊं ? क्या करूं ?। अथवा अपनी प्रिया के संभोग व सम्पर्क से मनोहर इस लतागृह में ही थोड़ी देर–दो घड़ी–बैठूं। ( चारों ओर देखकर– )

इधर तो शिलापर मेरी प्रिया के शरीर से लुलित ( परिम्लान, चिथी हुई ) फूलों की यह सेज दीख रही है, इधर कमलिनी के पत्ते पर लिखा हुआ काम-

हस्ताद् भ्रष्टमिदं बिसाभरणमित्यासज्जमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहादीशोऽस्मि शून्यादपि ॥३९॥

( विचिन्त्य- )

अहो धिग् ! असम्यक् चेष्टितं-प्रियां समासाद्य कालहरणं कुर्वता मया । तदिदानीम्—

रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुन-
र्न कालं हास्यामि, प्रकृतिदुरवापा हि विषयाः ।

---

कररुहैः । अर्पितः = उल्लिखितः । कान्तः = ललितपदः । एषः = निकटतरं दृश्यमानः । मन्मथलेखः = कामलेखः । हस्तात् = भुजलतायाः । भ्रष्टं = परिगलितम् । इदं = पुरतो विभाव्यमानं । बिसाभरणं = मृणालवलयं । दृश्यत इति शेषः । इति = इत्थम् । आसज्जमाने ईक्षणे यस्यासौ—आसज्जमानेक्षणः = संसक्तलोचनयुगलः । शून्यादपि = प्रियारहितादपि । वेतसगृहात् = इतो वानीरकुञ्जात् । निर्गन्तुं = बहिर्यातुं । सहसा = अकस्मात् । न शक्नोमि = न पारयामि । प्रियापरिचितान्याभरणादीनि निरीक्षमाणो नास्माद्वेतसकुञ्जाद्बहिर्गन्तुं समर्थ इत्याशयः । [ निर्गमनस्य कारणे शून्यत्वे सति यस्तदभावः— सा विशेषोक्तिः । प्रियासद्भावरूपकारणाऽभावेऽपि गमनविलम्बरूपकार्योदयाद्विभावना । द्वयोरपि साधकबाधकप्रमाणाऽभावात्सन्देहसङ्करः । 'पुष्पं वाच्यं विशेषवत्'—इति धनिकोक्तेः पुष्पं नाम प्रतिमुखसन्ध्यङ्गं चतुर्थचरणे बोध्यम् । शार्दूलविक्रीडितम् ] ॥ ३९ ॥

धिक् = मां धिक् । असम्यक्=अनुचितं । चेष्टितम्=आचरितं । कालहरणं= कालक्षेपं । कुर्वता = मुहुर्मुहुः सम्प्रयोगशतान्यनाचरता ।

---

बाधा सूचक उसका यह प्रेम पत्र पड़ा है । इधर यह हाथ से खिसक कर गिरा हुआ बिस का बना भूषण (कङ्कन) पड़ा है । यहाँ इस प्रकार चारों ओर मेरी दृष्टि आकृष्ट हो अटक रही है, अतः मैं प्रिया से रहित इस वेत्रलतागृह से भी सहसा जाने में असमर्थ ही हो रहा हूँ ॥ ३९ ॥

( कुछ सोचकर ) हा धिक् ! अपनी प्रियाको इस प्रकार एकान्तमें पाकर भी, इधर उधर की बातों में वृथा समय खोकर, मैंने बहुत ही अनुचित कार्य किया है ।

इति क्लिष्टं विघ्नैर्गणयति च मे मूढहृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव ॥४०॥

( नेपथ्ये- )

भो भो राजन् !

सायन्तने सवनकर्मणि सम्प्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः ।

---

रह इति । सुवदना = कमलवदना । रहः = रहसि । पुनः = पुनरपि यदि । प्रत्यासत्तिं = समागमं । यास्यति = प्राप्स्यति । तदा कालं न हास्यामि=कालक्षेपं न करिष्यामि । [ अहो ! महाराजदुष्यन्तस्य हतगाम्भीर्याः प्राकृतजनसाधारणा उक्तयः ! ] । हि = यतः मनोरथाः । प्रकृत्यैव दुरवापाः = स्वभावदुर्लभाः । इति = इत्थं । विघ्नैः = दुरदृष्टकल्पितैरन्तरायैः । गौतम्यागमनरूपैः । क्लिष्टं=विक्लवं । मे = मम । मूढं = मुग्धं । हृदयं = स्वान्तं । प्रियायाः = प्रेयस्याः । प्रत्यक्षं = पुनः समागमं । गणयति=प्रतीक्षते, कल्पयति च । तथा = किञ्च—कातरमिव= इतरपामरजनसाधारणमिव किंकर्त्तव्यशून्यं खिद्यमानं । किमपि = एवमेवं प्रियां प्राप्य करिष्याम्यात्मनो मतमिति सङ्कल्पशतान्याचरतीति शेषः । [ उत्प्रेक्षा । 'शिखरिणी' वृत्तम् ] ॥ ४० ॥

नेपथ्ये = जवनिकायां । क्वचिदाकाश इति पाठः । सायन्तन इति । सायं भवे—सायन्तने = सायङ्कालिके, सवनमेव कर्म—सवनकर्म—तस्मिन्—

---

अब तो वह सुमुखी यदि कभी मुझे एकान्तमें फिर मिल जाएगी, तो मैं वृथा समय न खोकर, अपनें मनकी चाह पूरी तरहसे पूरी करूंगा । क्योंकि-मनचाहे विषयोपभोग-सुख बहुत ही कठिनता से प्राप्त होते हैं—इस बात को मेरा मूर्ख हृदय विघ्नों से दुःखी होकर अब समझ रहा है, जो प्रिया के सामनें तो कातर और किङ्कर्त्तव्य विमूढसा हो रहा था, और अपनी कुछ भी चाह पूरी न कर सका ॥४०॥

[ नेपथ्य में ]

अहो राजन् ! अहो राजन् ! सावधान २ ! देखो, देखो—

हमारे यज्ञ के सायङ्कालिक अनुष्ठान के प्रारम्भ होते ही, अग्नि से सुशोभित

छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम् ॥ ४१ ॥

राजा—( आकर्ण्य, सावष्टम्भम्— ) भो भोस्तपस्विनः ! मा भैष्ट, अयमहमागत एव ।

(–इति निष्क्रान्तः ) ।

* इति तृतीयोऽङ्कः *

---

सवनकर्मणि = यज्ञकर्मणि । सम्यक् प्रवृत्ते—प्रारब्धे सति । हुताशनवतीं = वैश्वानरवतीं । वेदिं=यज्ञवेदिं । परितः = सर्वतः । प्रकीर्णाः = इतस्ततो विक्षिप्ताः । अत एव–बहुधा = नैकविधं । भयं=साध्वसम् । आदधानाः=कुर्वाणाः । पिशितमशनं येषान्तेषां–पिशिताशनानां = रक्षसां । सन्ध्यायामभ्राणि तेषां कूटवत् कपिशाः—सन्ध्याभ्रकूटकपिशाः = सन्ध्यामेघपुञ्जवत्कृष्णपीतवर्णाः । छायाः = प्रतिबिम्बानि । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । बहुधा=नैकविधं । सञ्चरन्ति = भ्रमन्ति समायान्ति । 'बहुधे'ति मध्यमणिन्यायादुभयत्राप्यन्वेति । [श्रुतिच्छेकवृत्त्यनुप्रासाः 'परितः प्रकीर्णा अत एव भयमादधाना'इति हेतुहेतुमद्भावात्काव्यलिङ्गं । 'सन्ध्याभ्रकूटकपिशा'इत्यत्र चोपमा । 'वसन्ततिलका'] ॥४१॥

आकर्ण्य = श्रुत्वा । सावष्टम्भं=सधैर्यं । मा भैष्ट = भयं न कार्यम् । अयं= पूर्वानुभूतः । अहं=महेन्द्रादानामपि साहाय्यकारी महाराजो दुष्यन्तः । आगत एव=इष्टिरक्षायै द्रागेवागच्छामि । इति=इत्यभिधाय । निष्क्रान्तः = गतः । 'अन्तनिष्क्रान्तनिखिलपात्रोऽङ्कः'–इत्युक्तेरङ्कान्ते पात्रनिर्गमस्यावश्यकत्वादिति शिवम् ।

इति तृतीयोऽङ्कः ।

---

वेदि के चारों ओर फैली हुई, भय को देनेवाली, सायंकालिक मेघों की घटा की तरह काली पीली, मांस भोजी राक्षसों की ये छाया दीख पड़ रही हैं । अतः सावधान ! सावधान ! ! ॥ ४१ ॥

राजा—( सुनकर बड़े तपाक व धीरज के साथ ) हे तपस्वियों ! डरो मत, डरो मत, इष्टि ( यज्ञ ) की रक्षा के लिए मैं यह आया ।

( राजा जाता है ) ।

तृतीय अङ्क समाप्त ।

॥ श्रीः ॥

# अथ चतुर्थोऽङ्कः ।

## [ विष्कम्भकः ] ।

( ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ ) ।

**अनसूया**——हला पिअंवदे ! जइ वि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा पिअसही सउन्तला अणुरूवभत्तिभाइणी संवुत्ता, तह वि मे ण णिव्वुदं हिअअं ।

[ हला प्रियंवदे ! यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा

---

### ॐ अभिनवराजलक्ष्मीः ॐ

इत आरभ्य गर्भसन्धिस्तृतीयः सार्धपञ्चमेनाङ्केन निबद्ध इति राघवभट्टादयः । विश्वनाथस्तु दर्पणे—'यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः । शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः ॥' इति वदन्—'यथा—शाकुन्तले चतुर्थाङ्कादौ—'अनुसूया—प्रिअंवदे जइ वि ।' इत्याद्यारभ्य सप्तमाङ्के शकुन्तला प्रत्यभिज्ञानात्प्राग्विमर्शसन्धि'रित्युदाहरंश्च—विमर्शसन्धिं मनुते । अस्माभिस्तु राघवानुसारेणैव सन्धिरङ्गानि च प्रदर्शितानि । 'आदौ विष्कम्भकं कुर्यान्नाटकेषु महाकविः । अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् ॥ यदा संदर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा । यथोचितन्तु विष्कम्भं सर्वाङ्केषु प्रकल्पये' दिति भरतोक्तेरादौ विष्कम्भकं योजयति-तत इति । कुसुमानामपचयं = पुष्पादानम् । अभिनयन्त्यौ = नाटयन्त्यौ । हलेति सखीसम्बोधनं । निर्वृत्तं कल्याणं यस्याः सा निर्वृत्त-

---

# अथ चतुर्थ अङ्क ।

[ विष्कम्भक = बीच की कथा का संक्षेप–का प्रारम्भ ] ।

[ फूल तोड़ने का अभिनय करती हुई दो सखियों का प्रवेश ] ।

**अनसूया**—हे सखि प्रियंवदे ! यद्यपि गान्धर्व विधि से ( स्वेच्छा कृत विवाह विधि से ) शकुन्तला का मङ्गलमय विवाह संपन्न हो गया, और इस प्रकार

प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी [1]संवृत्ता, तथापि मे न निर्वृतं हृदयम् ]।

प्रियंवदा—[ कधं विअ ? ]।

[ कथमिव ? ]।

अनसूया—अज्ज सो राएसी इट्ठिपरिसमत्तीए इसिहिं विसज्जिदो अत्तणो णअरं पविसअ अन्तेउरसमागमादो इमं जणं सुमरेदि ण वेत्ति।

[ अद्य स राजर्षिरिष्टिपरिसमाप्त्या ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्य अन्तःपुरसमागमादिमं जनं स्मरति नवेति ? ]।

प्रियंवदा—एत्थ दाव वीसत्था होहि। णहि तादिसा आकिदिबिसेसा गुणविरहिणो होन्ति। एत्तिअं उण चिन्तणीअं,-तादो तीत्थजात्तादो पडिणिउत्तो इमं सुणिण ण आणे किं पडिवज्जिस्सदि त्ति।

---

कल्याणा = जातविवाहमङ्गला। 'कल्याणं मङ्गलेऽपि चे'ति विश्वः। अनुरूपं = योग्यं, भर्त्तारं = दुष्यन्तं, गच्छति तच्छीला—अनुरूपभर्तृगामिनी। संवृत्ता= जाता। निर्वृतं = सुखितं। राजर्षिः = दुष्यन्तः। इष्टिपरिसमाप्त्या=यज्ञस्य समाप्ततया। विसर्जितः = अनुज्ञातनगरगमनः। आत्मनो नगरं=हस्तिनापुरम्। अन्तःपुरस्य = अवरोधललनाजनस्य। समागमात् = संप्राप्तेः। इमं = शकुन्तलालक्षणं।

---

शकुन्तला ने अपने योग्य भर्त्ता को प्राप्त कर लिया है, फिर भी मेरा मन निश्चिन्त और प्रसन्न नहीं होरहा है।

प्रियंवदा—क्यों अब क्या बात है ?।

अनसूया—यही कि-आज ही राजर्षि दुष्यन्त को इष्टि ( यज्ञ ) की समाप्ति हो जाने से ऋषियों ने अपने नगर को जाने की स्वीकृति देदी है, अतः वह राजर्षि दुष्यन्त अपनी राजधानी में जाकर अन्तःपुर की एक से एक सुन्दर रानियों के साथ भोग विलास में लिप्त होकर, सखी शकुन्तला को याद करेगा, या नहीं, यही चिन्ता मुझे अभी भी व्याकुल कर ही रही है।

प्रियंवदा—हे सखि ! इस बात की ओरसे तो तूं बिलकुल निश्चिन्त रह।

---

१ 'संवृत्तेति निर्वृतं मे हृदयं, तथाप्येतावच्चिन्तनीयम्' पा०।

[ अत्र तावद्विश्वस्ता भव। नहि तादृशा आकृतिविशेषा गुणविरहिणो भवन्ति। एतावत् पुनश्चिन्तनीयं,—तातस्तीर्थयात्रातः प्रतिनिवृत्त इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यते इति ]।

**अनसूया**—जधा मं पुच्छसि, तधा अभिमदं तादस्स।

[ [1]यथा मां पृच्छसि, तथा अभिमतं तातस्य ]।

**प्रियंवदा**—कधं विअ?।

[ कथमिव? ]।

---

अत्र=अस्मिन् विषये। विश्वस्ता=विस्रब्धा। तादृशाः=तथाविधाः। दुष्यन्ते दृश्यमानाः। आकृतिविशेषाः=महापुरुषादिसूचकाश्चिह्नविशेषाः। गुणैर्विरहोऽस्त्येषां ते-गुणविरहिणः = सौजन्यादिगुणरहिताः। 'यत्राकृतिस्तत्र गुणा वसन्ती'त्यभियुक्तोक्तेः। तातः = कण्वः। तीर्थयात्रातः = सोमतीर्थात्। प्रतिनिवृत्तः=परावृत्तः। इमं वृत्तान्तं=शकुन्तलागान्धर्वविवाहरूपं। प्रतिपत्स्यते=ज्ञास्यति। करिष्यति वा। यथा=यदि। मां पृच्छसि चेत्तदाऽभिमतं तातस्य=कण्वस्येदं संमतमेवेति मे मतम्।

---

इसकी तो तूं चिन्ता बिलकुल ही मत कर। क्योंकि—ऐसी सुन्दर और शान्त आकृति वाले पुरुष कभी गुणों से ( दया, दाक्षिण्य, कृतज्ञता आदि गुणों से ) रहित नहीं हो सकते हैं। अतः 'राजा इसे भूल जायगा।' यह तो सन्देह तुम्हें करना ही नहीं चाहिए। हाँ, यह एक अवश्य चिन्ता की बात है, कि—तात कण्व जब तीर्थयात्रा से लौटेंगें, तब इस बात को सुनकर न जाने-क्या कहेगें?। इस बात को ( शकुन्तला के स्वेच्छा विवाह को ) स्वीकार करेंगें, या राजा को शाप दे देंगें—कुछ कहा नहीं जा सकता है। अतः मुझे तो इसी की चिन्ता हो रही है।

**अनसूया**—यदि तू मुझसे पूछती है, तो मेरी समझ में तो यह बात ( शकुन्तला का यह विवाह ) तातकण्व को भी पसन्द ही आवेगी।

**प्रियंवदा**—यह कैसे?।

---

[1] 'यथाऽहं प्रेक्षे' 'पश्यामि' इति वा पाठे यथाशब्दो योग्यतायाम्। योग्यतया = सुष्ठु, अहं जानामीत्यर्थः।

अनसूया—अणुरूवस्स वरस्स हत्थे कण्णआ पडिवादणीअत्ति अअं दाव पढमो कप्पो । तं जइ देव्वं सम्पादेदि णं कअत्थो गुरुअणो।

[ अनुरूपस्य वरस्य हस्ते कन्यका प्रतिपादनीयेति—अयं तावत् प्रथमः कल्पः । तं यदि दैवं सम्पादयति, ननु कृतार्थो गुरुजनः ]।

प्रियंवदा—एवण्णेदं। ( पुष्पभाजनं विलोक्य- ) सहि ! अवचिदाइं क्खु बलिकम्मपज्जत्ताइं कुसुमाइं ।

[ एवमेतत्। सखि ! अवचितानि खलु बलिकर्मपर्य्याप्तानि कुसुमानि]।

अनसूया—णं सउन्तलाए वि सोहग्गदेवदाओ अच्चिदव्वाअ, ता अवराइं वि अवचिणुह्म।

[ ननु शकुन्तलाया अपि सौभाग्यदेवता अर्चितव्यास्तदपराण्यप्यवचिनुवः ]।

---

अनुरूपस्य = योग्यस्य। कल्पः = कर्त्तव्यं कर्म। तत् = कर्त्तव्यं कर्म। दैवं=भाग्यं। स्वत एव तथा भवेदिति यावत्। ननु=निश्चितं। कृतार्थः=कृतकृत्यः। तत्रान्यथा-प्रतिपत्तेरवसर एव नास्तीत्यर्थः। पुष्पभाजनं = पुष्पकरण्डकं। खलु = निश्चयेन। बलिकर्मणे पर्याप्तानि। सौभाग्यदेवताः = मङ्गलागौर्यादयः। सौभाग्याधिष्ठातृदेवताहि विवाहत आरभ्यावश्यं स्त्रीभिः पूज्याः। अपराण्यपि=इतोऽधिकान्यपि कुसुमानि।

---

अनसूया—'योग्य वर ( भर्त्ता ) के हाथ में कन्या को देना'—यही तो विवाह सम्बन्धमें देखने की एक मुख्य बात है, उसको यदि दैव (भाग्य) ही स्वयं सम्पादन कर देता है, (दैवात् ऐसा योग्य वर स्वयं ही प्राप्त हो जाता है,) तो गुरु जन (माता पिता आदि) कृतार्थ ही हो गये। अतः दुष्यन्त ऐसा योग्य वर यदि स्वयं ही शकुन्तला को मिल गया तो तात कण्व प्रसन्न ही होंगे।

प्रियंवदा—ठीक बात है। ( फूलों की डलिया की ओर देखकर ) हे सखि ! बलिकर्म ( देवपूजा गृहपूजा आदि ) के लायक तो फुल बहुत हो गए। अतः-अब तो फूल चुनना ( तोड़ना ) बन्द करें।

अनसूया--हे सखि ! शकुन्तला के सौभाग्य देवताओं का भी तो आज से पूजन करना होगा, अतः और भी फूल चुनने (इकट्ठे करने) चाहिए। [ विवाहिता

**प्रियंवदा**—जुज्जदि । ( —इति तदेव कर्म्माभिनयतः ) ।

[ युज्यते ] ।

( नेपथ्ये- )

अयमहं भोः ! ।

**अनसूया**—( कर्णं दत्त्वा ) सहि अदिधिणा विअ णिवेदिदं ।

[ सखि ! अतिथिनेव निवेदितम् ] ।

**प्रियंवदा**—णं उडए सण्णिहिदा सउन्तला ।

[ ननूटजे सन्निहिता शकुन्तला ] ।

**अनसूया**—आं, अज्ज उण असण्णिहिदा हिअएण । तेन हि भोदु, एत्तिकेहिं कुसुमेहिं पओअणं । (—इति प्रस्थिते ) ।

---

युज्यते = आवश्यकमेतत् कर्मेति तदुक्तानुमोदनं । तदेव = पुष्पावचयमेव । नेपथ्ये = जवनिकायाम् ।

अयमहं भोः = भो गृहस्वामिन् ! अहं समुपस्थितस्ते गृहद्वारि । दुर्वाससो वाक्यमेतत् । निवेदितं = स्वागमनसूचकं वचः । ननुरत्र प्रश्ने, निश्चये, स्मरणे वा । हृदयेन = मनसा । दुष्यन्तगतमानसेति भावः । एवञ्च साऽतिथि-सत्कारे न दत्तावधाना भवेदतः । एतावद्भिरेव कुसुमैः प्रयोजनं=कार्यं भवतु । अस्माभिः कुसुमावचयं विहाय गन्तव्यमिति सूचितम् । प्रस्थिते = चलिते ।

---

कन्याएं, तथा बहुएं-प्रतिदिन तथा पर्व त्यौहार पर अपने सौभाग्य की वृद्धि के लिए देवी-देवताओं का पूजन किया करती हैं, उसी की ओर अनसूया का यह सङ्केत है ] ।

**प्रियंवदा**—ठीक बात है । ( फिर फूल तोड़ने लगती हैं ) ।

[ नेपथ्य में— ]

यह मैं ( अतिथि दुर्वासा ) आकर द्वारपर खड़ा हूँ ।

**अनसूया**—( कान लगाकर सुनती हुई ) हे सखि ! यह तो अतिथि की तरह ही कोई बोल रहा है ।

**प्रियंवदा**—तो कुटी में शकुन्तला तो है ही ।

**अनसूया**—हाँ, है तो अवश्य । परन्तु आज उसका हृदय तो कहीं दूसरी

[ आम । अद्य पुनरसन्निहिता हृदयेन । तेन हि भवतु, एतावद्भिः कुसुमैः प्रयोजनम् ] ।

( पुनर्नेपथ्ये— )

आः ! कथमतिथिं मां परिभवसि !

विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥

---

आ इति अपमानजनितपीडायाम् । परिभवसि = अवमन्यसे । 'आः अतिथिपरिभाविनि !' इति शोभनः पाठः ।

यं=जनम् । अनन्यं मानसं यस्याः सा–अनन्यमानसा=अनन्यचित्ता सती । विचिन्तयन्ती = स्मरन्ती । तपोनिधिं = तपोमूर्तिं । मां = दुर्वाससम् । उपस्थितं= गृहद्वारि स्वयमेवागतमपि । न वेत्सि = न जानासि । सः = दुष्यन्तः । त्वाम् = अतिथिजनावमानिनीं,—प्रमत्तः=मादकद्रव्यादिप्रयोगत उन्मत्तः । प्रथमं कृतां= पूर्वं स्वयमेवानुभूतां । स्वीकृताञ्च । कथामिव = वार्तामिव । बोधितोऽपि सन् = त्वया निवेदितोऽपि । न स्मरिष्यति । [ विचिन्तयन्ती यतोऽतोऽनन्यमानसेति हेतुहेतुमद्भावात्काव्यलिङ्गम् । श्लेषः । उपमा । अनुप्रासाश्च । 'वंशस्थम्' ] ॥१॥

---

ही जगह ( राजा दुष्यन्त में ) ही लगा हुआ है। अतः वह इस अतिथि के शब्द को सुनेगी, या नहीं—इसमें सन्देह ही है। अतः रहने दो, इतने ही फूलों से काम चल जायगा । चलो, कुटीपर ही चलें ।

[ फिर नेपथ्य में— ]

आह ! मुझ अतिथि का तूं इस तरह तिरस्कार कर रही है ! । मेरी बात का उत्तर तक तूँ नहीं देती है ! । अतः—

अनन्य भाव से जिस ( दुष्यन्त ) की चिन्ता करती हुई तूं मुझ तपस्वी अतिथि को भी नहीं देख रही है, वह तेरा प्रिय ( दुष्यन्त ) तुझको वार २ कहने पर भी, याद दिलाने पर भी, तुझे उसी प्रकार नहीं पहिचानेगा, तुझे बिलकुल भूल जायगा, जिस प्रकार उन्मत्त-विक्षिप्त ( पागल ) हुआ मनुष्य अपने पहिले के किये हुए कार्यों को भूल जाता है ॥ १ ॥

**प्रियंवदा**—हद्धी हद्धी ! तं ज्जेव संवुत्तं जं मए चिन्तिदं । कस्सि पि पूआरिहे अवरद्धा सुण्णहिअआ सउन्तला ।

[ हा धिक् हा धिक् ! तदेव संवृत्तं यन्मया चिन्तितं, कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला ] ।

**अनसूया**—( पुरोऽवलोक्य— ) ण क्खु जस्सिं कस्सिं पि, एसो दुव्वासा सुलहकोवो महेसी । तथा सविअ अविरलपाददुवराए गदीए पडिणिउत्तो ।

[ न खलु यस्मिन् कस्मिन्नपि, एष दुर्वासाः सुलभकोपो महर्षिः— तथा शप्त्वाऽविरलपादत्वरया[1] गत्या प्रतिनिवृत्तः ] ।

**प्रियंवदा**—को अण्णो हुदवहादो पहवदि दहिदुं । ता गच्छ पाएसुं पडिअ णिउत्तावेहि । जाव से अहं पि अग्घोदअं उवकप्पेमि ।

---

उभे = सख्यौ । संवृत्तं = जातं । पूजार्हे = पूजनीयेऽतिथिविशेषे । अपराधे हेतुः—शून्यहृदयेति । यस्मिन् कस्मिन् = साधारणे । सुलभः कोपो यस्यासौ सुलभकोपः = अतिकोपनः । तथा = विचिन्तयन्तीत्यादिरीत्या । अविरलाः पादा यस्यां त्वरायां सा, तया—अविरलपादत्वरया = घनचरणविन्यासशालिन्या

---

**प्रियंवदा**—हा धिक्, हा धिक् ( हाय ! हाय ! ) यह तो—वही हुआ जो मैं पहिले ही से समझ रही थी । मालूम होता है—किसी पूजा के योग्य व्यक्ति विशेष को शून्यहृदया ( भर्तृगतमानसा ) शकुन्तला ने अप्रसन्न कर दिया है । वही इस प्रकार उसे शाप दे रहा है ।

**अनसूया**—( सामने की ओर देखकर ) किसी ऐसे वैसे साधारण मनुष्य का ही शकुन्तला ने अपराध किया है—यह बात नहीं है, किन्तु ये तो सुलभ कोप=बहुत शीघ्र क्रुद्ध होनेवाले—अत्यन्त क्रोधी दुर्वासा महर्षि हैं, जो कि—इस प्रकार शकुन्तलाको शाप देकर जल्दी२ लम्बे२ पैर रखते हुए वापिस जा रहे हैं ।

**प्रियंवदा**—हे सखि ! ठीक कहती हो । भला, अग्नि के बिना दाह कौन

---

१ 'वेगबलोत्फुल्लया दुर्वारया गत्या' इति पाठः ।

[ कोऽन्यो हुतवहात् प्रभवति दग्धुम् । तद्गच्छ । पादयोः पतित्वा निवर्त्तय । यावदस्याऽहमर्घ्यर्घोदकमुपकल्पयामि ] ।

अनसूया—तह ( -इति निष्क्रान्ता ) ।

[ तथा ] ।

प्रियंवदा—अव्वो ! आवेअक्खलिदाए गदीए परिब्भट्टं मे अग्गहत्थादो पुप्फभाअणं । ( —इति पुष्पावचयं रूपयति ) ।

[ अहो ! आवेगस्खलितया गत्या परिभ्रष्टं मेऽग्रहस्तात्पुष्पभाजनम् ] ।

अनसूया—( प्रविश्य— ) सहि ! सरीरी विअ कोवो कस्स अणुणअं सो गेह्णदि । किञ्च उण सो अणुकम्पिदो मए ।

---

त्वरया । प्रतिनिवृत्तः = आश्रमाद्बहिर्यातः । हुतवहादन्य इति । अग्निकल्पाद् दुर्वासःसदृशान्महर्षेर्विना कोऽन्यः शप्तुं शक्नोति महर्षेः कण्वस्य हितां शकुन्तलामित्यर्थः । पादयोः पतित्वा = प्रणम्य । अस्य = दुर्वाससः । अर्घ्योदकं = पाद्यार्घ्यादिकम् । उपकल्पयामि = विदधामि । तथा = तथैव करोमि । अव्वो इति दुःखे । आवेगेन = उद्वेगेन । स्खलितया = विक्लवया । गत्या = गमनेन । परिभ्रष्टं = स्रस्तम् । अग्रहस्तात् = हस्ताग्रात् । पुष्पावचयं=पुष्पचयनं । पुनरा-

---

कर सकता है ? । दुर्वासा तो साक्षात् अग्नि ही हैं । अतः उन्होंने झट शाप देही तो दिया । अब तूं शीघ्र जा, और उनके पैर में पड़कर उनको वापिस ला । तब तक मैं भी उनके अतिथि-सत्कार के लिए अर्घ्यजल ( पूजा के लिए जल ) तैयार करती हूँ ।

अनसूया—ठीक है । ( दुर्वासाजी के पीछे २ जाता है ) ।

प्रियंवदा—हाय ! घबड़ाहट और जल्दी से चलने से ठोकर लग जाने से मेरे हाथ से तो यह फूलों की डलिया ही गिर पड़ी है । ( यह अशकुन अमङ्गल सूचक हुआ ) । [ गिरे हुए फूलों को उठाती है या पुनः पुष्प तोडती है ] ।

अनसूया—( आकर ) हे सखि ! वह दुर्वासा तो मानों साक्षात् शरीर धारण किए हुए क्रोध ही है, (क्रोध की मूर्त्ति ही है)। भला वह किस की अनुनय-

[ सखि ! शरीरीव कोपः कस्य अनुनयं स गृह्णाति । किञ्च पुनः—स अनुकम्पितो मया । ]।

**प्रियंवदा**—एदं ज्जेव तस्सिं बहुदरं । ता कधेहि कधं तए पसादिदो ? ।

[ एतदेव तस्मिन् बहुतरं । तत्कथय कथं त्वया प्रसादितः ? ]।

**अनसूया**—जदो णिउत्तिदुं ण इच्छदि तदो पाएसुं पडिअ विण्णविदो मए-भअवं पढमं त्ति पेक्खिअ अविण्णादतवप्पहावस्स दुहिदिजणस्स अअं अवराहो भअदा मरिसिदव्वो त्ति ।

[ यदा निवर्त्तितुं न इच्छति, तदा पादयोः पतित्वा विज्ञापितो मया,—भगवन् ! प्रथममिति प्रेक्ष्याऽविज्ञाततपःप्रभावस्य दुहितृजनस्याऽयमपराधो भवता मर्षयितव्य इति ]।

**प्रियंवदा**—तदो तदो ? ।

[ ततस्ततः ? ]।

---

चरति । शरीरी=मूर्त्तिमान् । कोप इव=क्रोध एव । अनुनयं=प्रार्थनाम् । किञ्च पुनः=किन्तु । अनुकम्पा सञ्जाता अस्य अनुकम्पितः=दयार्द्रहृदयः । तदेव=प्रसादनमपि । बहुतरम्=अत्यधिकं । निवर्त्तितुं=पुनरातिथ्यग्रहणायागन्तुं । विज्ञापितः=प्रार्थितः । प्रथमः=सकृदयमपराधः, प्रेक्ष्य=विचार्य । अविज्ञातः तपसः प्रभावो येन तस्य—अविज्ञाततपःप्रभावस्य=अज्ञातत्वत्तपोवीर्यस्य । दुहितृज-

---

विनय ( मनावना, वापिस आने की प्रार्थना ) सुनता है ! । परन्तु बड़ी ही कठिनता से मैंने उन्हें किसी तरह कुछ दयार्द्र ( राजी ) तो कर ही लिया ।

**प्रियंवदा**—चलो, दुर्वासाजी के विषय में यही बहुत है । कहो कैसे उन्हें तूने प्रसन्न ( राजी ) किया ? ।

**अनसूया**—जब बहुत प्रार्थना करने पर भी वे ( दुर्वासा ) वापिस आश्रम में आने को राजी नहीं हुए, तब मैंने उनके पैरों में पड़कर उनसे प्रार्थना की, कि—हे भगवन् ! आपके तपके प्रभाव को नहीं जानने वाली, आपकी पुत्री के समान उस शकुन्तला का यह पहिले ही पहिले अपराध है, अतः उस अपराध को तो आप अवश्य क्षमा करें ।



**प्रियंवदा**—तब क्या हुआ, तब क्या हुआ ! ।

अनसूया— तदो तेण भणिदं,-ण मे वअणं अण्णधा भविदुं अरिहदि। किन्तु आहरणाहिण्णाणदंसणेण से सावो णिउत्तिस्सदि त्ति मन्तअन्त ज्जेव अन्तरिदो।

[ ततस्तेन भणितं, न मे वचनमन्यथा भवितुमर्हति। किन्तु आभरणाभिज्ञानदर्शनेन अस्याः शापो निवर्त्तिष्यते इति [1]मन्त्रयन्नेवान्तर्हितः]।

प्रियंवदा—सक्कं दाणिं समास्ससिदुं। अत्थि तेण राएसिणा संपत्थिदेण अत्तणो णामाङ्कितं अङ्गुलीअअं सुमरणीअं त्ति सउन्तलाए हत्थे सअं ज्जेव परिधाविदं। एसो ज्जेव तस्सिं साहीणो उवाओ भविस्सदि।

[ शक्यमिदानीं [2]समाश्वसितुम्। अस्ति तेन राजर्षिणा संप्रस्थितेनात्मनो नामाङ्कितमङ्गुलीयकं 'स्मरणीय'मिति शकुन्तलाया हस्ते स्वयमेव परिधापितम्। [3]एष एव तस्मिन् स्वाधीन [4]उपायो भविष्यति ]।

---

नस्य = कन्यकालोकस्य। मर्षयितव्यः = क्षन्तव्यः! अन्यथा = मिथ्या। आभरणमेवाभिज्ञानं तस्य दर्शनेन = अङ्गुलीयकप्रदर्शनेन। निवर्त्तिष्यते = अपयास्यति। मन्त्रयन् एव = कथयन्नेव। अन्तर्हितः=अन्तर्धानमगात्। आश्वसितुं=धैर्यमालम्बितुं। तेन राजर्षिणा = दुष्यन्तेन। सम्प्रस्थितेन = प्रचलितेन। हस्ते स्वयमेव परिधापितम=अङ्गुल्यां योजितं। स्मरणीयम्=स्मृतिपरिपोषकम्। अस्तीति योजना।

---

अनसूया—तब उन्होंनें कहा, कि—मेरा वचन ( शाप ) तो मिथ्या हो नहीं सकता है, किन्तु यह शकुन्तला अपने प्रिय को जब उसका कोई आभरण (अंगूठी ) किसी प्रकार दिखावेगी, तभी इसका यह शाप छूट जाएगा। ऐसा कहते ही कहते वह महर्षि तो अन्तर्धान हो गए!।

प्रियंवदा—अच्छा! तब तो कुछ धीरज धरने की बात हुई। क्योंकि–उस राजर्षि दुष्यन्तनें जाते समय स्वयं ही शकुन्तला के हाथ में स्मृति चिह्न (यादगार) के स्वरूप में, अपनें नामके अक्षरों से युक्त अंगूठी पहिना दी है। यही उपाय

---

१ मन्त्रयमाणः। पा०। २ 'इदानीमाश्वसितु'। ३ "एष तस्मिन् उपायो भविष्यति" पा०। तस्मिन् = शापे, स्मरणे वा। एष उपायः—अङ्गुलीयकदर्शनरूपः। ४ 'स्वाधीनोपायो' इति पाठे–स्वाधीनसाधना शकुन्तलेत्यर्थः।

अनसूया—सहि ! एहि, देवकज्जं दाव से णिव्वुत्तेह्य।

( —इति परिक्रामतः )

[ सखि ! एहि, देवकार्य्यं तावदस्या निर्वर्त्तयावः ]।

प्रियंवदा—( अवलोक्य— ) ! अणसूये । पेक्ख दाव वामहत्थ विणिहिदवअणा आलिहिदा विअ पिअसही तग्गदाए चिन्ताए अत्ताणम्पि ण विभावेदि, किं उण आगन्तुअं !।

[ अनसूये ! प्रेक्षस्व तावत्,—वामहस्तविनिहितवदना आलिखितेव प्रियसखी तद्गतया चिन्तया आत्मानमपि न विभावयति, किं पुनरागन्तुकम् ]।

---

पाठान्तरे-तस्मिन्=अङ्गुलीयके सति-स्वाधीनोपाया=शापविगमे स्वायत्तसाधना।
अस्याः=शकुन्तलायाः । देवकार्यं=सौभाग्यदेवीपूजनं । वामहस्ते विनिहितं वदनं यया सा—वामस्तविनिहितवदना=वामकरतलनिविष्टकपोला। आलिखितेव=चित्रितेव । तद्गतया = दुष्यन्तगतया । आत्मानमपि=स्वतनुमपि । विभावयति=

---

उसको दिखाने के लिए शकुन्तला के स्वाधीन रहेगा । अर्थात—उसकी दी हुई अंगूठी को दिखाकर ही शकुन्तला उस दुष्यन्त को अपना याद दिला सकेगी।

अनसूया—हे सखि ! आओ, अब इस ( शकुन्तला ) के सौभाग्य देवताओं की पूजा के आवश्यक कार्य को हम लोग सम्पन्न करें।

( दोनों कुछ चलती हैं )।

प्रियंवदा –( देखकर ) हे अनसूये ! देख तो, यह प्रियसखी शकुन्तला अपनें बाएं हाथ की हथेली पर अपना गाल रखकर, चित्र लिखित सी होकर, अपनें प्यारे की चिन्ता में ऐसी तल्लीन हो रही है, कि-अपनें को भी यह नहीं जान रही है, (अपनें को ही भूल रहा है,) अतिथि की तो भला बात ही क्या है ?। अर्थात्—यह इतनी बेसुध हो रही है, कि-इसे अपनें शरीर की भी सुध नहीं है, अतिथि दुर्वासा को यह देखती और उनका सत्कार करती-यह तो नितान्त ही असम्भव है।

**अनसूया**—हला ! दोण्णं ज्जेव णो हिअए एसो वुत्तन्तो चिट्ठदु। रक्खीणीआ क्खु पइदिपेलवा पिअसही।

[ हला ! द्वयोरेवावयोर्हृदये एष वृत्तान्तस्तिष्ठतु। रक्षणीया खलु प्रकृतिपेलवा प्रियसखी ]।

**प्रियंवदा**—को दाव उण्णोदएण णोमालिअं सिञ्चदि ?।

(—इत्युभे निष्क्रान्ते )

[ कस्तावदुष्णोदकेन नवमालिकां सिञ्चति ]।

---

जानाति। आगन्तुकम् = अतिथिम्। नौ = आवयोः। हृदये=मनसि एव। एष वृत्तान्तः = शापरूपः। रक्षणीया = अप्रियश्रवणदुःखात्परिहरणीया। प्रकृति-पेलवा = प्रकृतिसुकुमारा। शकुन्तलां प्रति शापाऽकथनादभूताहरणं विमर्श-सन्ध्यङ्गम्। तदुक्तं—'तत्र व्याजाश्रयं वाक्यमभूताहरणं मत'मिति। उष्णो-दकेन = तप्तेन पयसा। नवमालिकां = सप्तलां। एतेन तस्यै शापकथनमत्यन्त-मनुचितमिति भाव आविष्कृतः।

---

**अनसूया**—हे सखी प्रियंवदे ! दुर्वासाजी के इस शाप की बात मेरे और तेरे मन में ही रहनी चाहिए। क्योंकि—स्वभाव से ही कोमल स्वभाव वाली इस शकुन्तला की रक्षा भी हमें करनी है। अर्थात्—इस शापवाली बात को यदि शकुन्तला सुनेगी, तो और भी व्याकुल और दुःखित होगी, अतः यह बात इससे नहीं कहनी चाहिए। यह बात तो हमारे ही दोनों के मन में ही गुप्त रहनी चाहिए।

**प्रियंवदा**—ठीक है, भला ऐसा कौन होगा जो नवमालिका ( नेवारी ) के कोमल पौधे को गर्म जल से सींचेगा। अर्थात्—इस बात को शकुन्तला को सुनाना, और नवमालिका के अत्यन्त कोमल व सुकुमार पौधे में गर्म जल देना दोनों बराबर है। [ नवमालिका को गर्म जल से सींचने से वह तत्काल सुख जाती है। इसी प्रकार शकुन्तला भी इस बातको सुनते ही प्राण छोड़ देगी ]।

( दोनों जाती हैं )।

[ इति विष्कम्भकः ]।

( ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः )—

**शिष्यः**—वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासात् प्रतिनिवृत्तेन कण्वेन। तत् प्रकाशं निर्गत्याऽवलोकयामि कियदवशिष्टं रजन्या इति ?। ( परिक्रम्यावलोक्य च— ) हन्त ! प्रभाता रजनी। तथाहि—

यात्येकतोऽस्तशिखरं पतिरोषधीना-
मा‍विष्कृतोऽरुणपुरस्सर एकतोऽर्कः।

---

विष्कम्भक इति। भूतस्य—शकुन्तलापरिणयस्य, भविष्यतः—शापादिवृत्तान्तस्य च सूचनादयं विष्कम्भको नामार्थोपक्षेपकः। शुद्धश्चायं, प्राकृतभाषिपात्ररचितत्वात्। 'समाप्त' इति शेषः।

ततः=सखीनिर्गमनानन्तरं। पूर्वं सुप्तः पश्चादुत्थितः-सुप्तोत्थितः=जागरितः। निद्राघूर्णितलोचनः। वेलोपलक्षणार्थं = कालपरिज्ञानार्थं। प्रवासात् = यात्रातः। प्रतिनिवृत्तेन=आगतेन। प्रकाशं = निरावरणं प्रदेशं। ( 'खुला मैदान' )। रजन्याः = रात्र्याः। कियत् = कियानंशोऽवशिष्यते। प्रभाता = व्युष्टा। गता। हन्त ! इति खेदे।

यातीति। ओषधीनां = फलपाकान्तानां सस्यादीनां। पतिः = ईश्वरः। चन्द्रः। 'ओषध्यः फलपाकान्ताः', 'ओषधीशो निशापतिः' इति चामरः। एकतः=

---

[ विष्कम्भक=इधर उधर की बातों की आवश्यक सूचना-समाप्त ]।

[ सोकर उठे हुए कण्व के शिष्य का प्रवेश ]।

**शिष्य**—प्रवास से लौट कर आए हुए कुलपति पूज्य कण्वजी ने मुझे समय ( 'रात्रि कितनी बाकी है' यह ) जानने की आज्ञा दी है। अतः बाहर निकल कर देखूं—'रात्रि कितनी और बाकी रही है ?'। ( कुछ चलकर, आकाश की ओर देखकर ) ओह ! रात्रि तो बीत ही चुकी है, और अब प्रभात होना ही चाहता है। क्योंकि—देखो—

एक ओर ( पश्चिम दिशा में ) तो यह ओषधीश भगवान् चन्द्रमा अस्ताचल पर जा रहे हैं, और दूसरी ओर (पूर्व दिशा में) अरुणसारथि भगवान् दिवाकर भी

तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवैष दशान्तरेषु ॥ २ ॥

अपि च—

अन्तर्हिते शशिनि सैव कुमुद्वतीयं
दृष्टिं न नन्दयति संस्मरणीयशोभा ।

---

एकस्यां दिशि । पश्चिमदिग्भागे । अस्तशिखरं याति = अस्तङ्गच्छति । एकतः= पूर्वस्यां दिशि च । अरुणः पुरस्सरो यस्यासौ—अरुणसारथिः । अर्कः = सूर्यः । आविष्कृतः = उद्गच्छति । आदिकर्मणि क्तः । एवं-तेजोद्वयस्य = चन्द्रस्य, सूर्यस्य च । युगपत् = एककालं । व्यसनेन = व्यसनप्राप्त्या । अस्तङ्गमनेन । उदयेन च = वृध्या-आविर्भावेण च । एष लोकः = सुखदुःखवान् जनोऽयं । दशान्तरेषु नियम्यते इव='सुखदुःखयोरनियतत्वात्तयोः प्राप्तौ हर्षशोकावनुचिताऽ-विति शिक्ष्यत इव । 'आत्मदशान्तरेष्विऽत्यपि पाठान्तरम् ।

[ सज्जनदुर्जनव्यवहारारोपात्समासोक्तिः । द्वयोरपि प्राकरणिकयोरेकक्रियान्व-यात्तुल्ययोगिता । यथासङ्ख्यम् । उत्प्रेक्षा । दृष्टान्तो नाम नाट्यलक्षणम् । 'दृष्टान्तो यस्तु पक्षार्थसाधनाय निदर्शन'मिति दर्पणोक्तेः । 'वसन्ततिलका' ]॥२॥

अन्तर्हित इति । शशिनि = इन्दौ । अन्तर्हिते = अस्तं याते सति । संस्मरणीया शोभा यस्याः सा—संस्मरणीयशोभा=स्मरणीयशोभातिशयसौभाग्या ।

---

उगना ही चाहते हैं । इस प्रकार एक साथ दो तेजो मण्डलों के ( सूर्य-चन्द्रमा के ) उदय और विपन्न ( अस्त ) होने से, इस संसार की भी नाना प्रकार की दशा की सूचना प्राप्त हो रही है । अर्थात—एक ओर जब चन्द्रमा का पतन हो रहा है, तो उसी समय सूर्य का उदय भी हो रहा है । इसी प्रकार इस संसार में भी एक का अधःपतन होता है, एक रोता है, तो उसी समय दूसरे का अभ्युदय होता है, वह हंसता है । यही संसार की दशा है । इसकी सूचना सूर्य-चन्द्रमा की इस दशा से ही प्राप्त हो रही है ॥ २ ॥

और भी—भगवान् चन्द्रमा के अन्तर्हित होते ही ( छिपते ही ) यह वही कुमुदिनी ( 'कोई' ) है—जो चन्द्रमा के रहते इतनी सुन्दर व हृदय को

इष्टप्रवासजनितान्यबलाजनेन
दुःखानि नूनमतिमात्रदुरुद्वहानि ॥३॥

अपि च—

कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या,
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः।

सैवेयं कुमुद्वती = पूर्वमभिनन्दितसौन्दर्यसौभाग्याऽपि कुमुदिनी। दृष्टिं=लोचनं। न नन्दयति=न हर्षयति। चन्द्रे सन्निहिते लोचनलोभनीयसौन्दर्याऽपि कुमुदिनी तस्मिन् प्रयाते सति नष्टसौभाग्या लोचनयोर्हर्षं न दिशतीत्याशयः। इष्टस्य प्रवासनेन जनितानि = स्वप्रियवियोगसमुद्भूतानि। दुःखानि = कष्टानि। अबलाजनेन = प्रमदालोकेन। नूनं = ध्रुवम्। अतिमात्रम् = अत्यन्तं। दुःखेनोद्वहनीयानि = कष्टेन सोढव्यानि भवन्ति। [ शकुन्तलादुष्यन्तव्यापारसमारोपात्समासोक्तिः। 'संस्मरणीयशोभा दृष्टिं न नन्दयती'ति काव्यलिङ्गम्। अर्थान्तरन्यासः। एषामङ्गाङ्गिभावसङ्करः। 'वसन्ततिलकम्' ]। ॥ ३ ॥

अत्र कुमुदिनी शकुन्तला। चन्द्रो दुष्यन्त इति तृतीयं पताकास्थानकं बोध्यम्।

कर्कन्धूनामिति। अग्रसन्ध्या=प्रभातसन्ध्या। कर्कन्धूनां = बदरीपत्राणाम्।

आनन्द देती थी, अब इसकी वह शोभा केवल याद करने की बात रह गई है। अर्थात्-इसकी वह शोभा चली गई है, और अब यह नेत्रों को वैसा आनन्द नहीं देती है। ठीक ही है, अबला जनों के लिए ( स्त्रीजनों तथा कुमुदिनी के लिए ) अपने प्रिय के ( प्राणप्यारे के तथा प्रकृत में अपने प्रिय चन्द्रमा के ) वियोग से जनित दुःख का सहन करना बड़ा कठिन होता है। प्रिय के वियोग में स्त्रियों की यही हालत हो जाती है। कुमुदिनी (कोई का फूल) चन्द्रमा को देखकर रात्रिको खिलता है, चन्द्रमा के अस्त होते ही इसकी शोभा चली जाती है, और वह संकुचित हो जाता है। यही हाल शकुन्तला का भी दुष्यन्त के वियोग में हो रहा है-यह भी इससे सूचित होता है ॥ ३ ॥

और भी देखो-झाडियों के पत्तोंके ऊपर गिरे हुए ओस के बिन्दुओं को यह प्रभातकालिक सन्ध्या-अरुण वर्ण ( लाल रंग ) का कर रही है। मयूर भी निद्रासे



१. सुदुःसहानि

वेदिप्रान्तात्खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः ॥ ४ ॥

अपि च—

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः ।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखै-
रत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ॥ ५ ॥

तत्फलानां वा । उपरि = उपरिस्थितं । तुहिनं = तुषारम् । रञ्जयति = लोहिती-करोति । दर्भाणामिदं — दार्भं=कुशनिर्मितम् । उटजस्य पटलम्–उटजपटलम्= पर्णशालाच्छदिः । 'पर्णशालोटजोऽस्त्रियाम्' इति, 'पटलं छदिः'–इति चामरः । वीता निद्रा यस्यासौ — वीतनिद्रः = विगतनिद्रः । मयूरः = बर्हो । मुञ्चति = त्यजति । खुरैर्विलिखितात् — खुरविलिखितात् = खुरक्षुण्णात् । वेदेः प्रान्तात्– वेदिप्रान्तात् = वेदिपरिसरप्रदेशात् । सद्य उत्थितश्च=अद्यैव उत्थाय निस्सृतश्च । एष हरिणः=मृगः । स्वाङ्गमायच्छमानः=स्वावयवं प्रसारयन् । पश्चादुच्चैर्भवति= कायपश्चिमभागेन उन्नतो भवति । स्वकटिप्रदेशमुन्नमयतीत्यर्थः । , स्वभावोक्ति-तद्गुणालङ्कारौ । 'मन्दाक्रान्ता-वृत्तम्' ] ॥ ४ ॥

पादेति । क्षितिधराणां गुरोः—क्षितिधरगुरोः = सकलमहीधरश्रेष्ठस्य, राजा-धिराजस्य नन्दस्य च । सुमेरोः = सुरालयस्य । विद्वदाश्रयस्य स्वर्णाकरस्य च । मूर्ध्नि=मस्तके । पादयोः पादानां वा न्यासं=पादक्षेपं । किरणप्रसारं च । कृत्वा= विधाय । क्षपितं तमो येन, तेन — क्षपिततमसा = नाशितान्धकारेण । दूरीकृताऽ-ज्ञानेन च । येन = चन्द्रमसा । चन्द्रगुप्तेन राज्ञा च । विष्णोः = वामनस्य ।

जाग कर अब कुशा की बनी कुटी की छान ( छाजन ) को छोड़ रहे हैं । इधर यज्ञवेदि के पास की—अपने खुरों से खोदी हुई—भूमि से तत्काल उठकर ये हरिण भी अपने शरीरों को लम्बा कर रहे हैं, अर्थात् अंगडाई ले रहे हैं ॥ ४ ॥

और भी देखो—पर्वतों के गुरु ( श्रेष्ठ ) सुमेरु पर्वत के शिर ( शिखर ) पर पैर रखकर, जिसने संसार का अन्धकार दूर करते हुए भगवान् विष्णु के

**अनसूया**—( अपटीक्षेपेण प्रविश्य— ) एव्वं णाम विसअपरम्मुहस्स जणस्स ण णिपडिदं-जधा तेण रण्णा सउन्तलाए अणज्जं आचरिदं त्ति।

---

मध्यमं धाम = गगनं । भूमण्डलञ्च । क्रान्तं = व्याप्तं । स्वायत्तीकृतञ्च । सोऽयं= लोकप्रसिद्धः । चन्द्रः=इन्दुः । चन्द्रगुप्तमहाराजश्च । अल्पशेषैः=किञ्चिदवशिष्टैः। मयूखैः = सम्पद्भिः, शोभाभिः, किरणैश्चोपलक्षितः । 'मयूखः किरणेऽपि च। ज्वालायामपि शोभाया'मिति मेदिनी । गगनात् = आकाशात् । सिंहासनलक्षणा- दूर्ध्वप्रदेशाच्च । पतति । महतामपि—अत्यारूढिः=अत्युन्नतिः । अपभ्रंशः निष्ठा यस्याः सा—अपभ्रंशनिष्ठा=पतनपरिणामशालिनी—भवति । 'निष्ठा निष्पत्तियोगा- न्ता' इत्यमरः । [ समासोक्तिः । अर्थान्तरन्यासः । श्लेषः । अनुप्रासश्च । 'वसन्त- तिलकं वृत्तम्' ] ॥ ५ ॥

अपटीक्षेपेण = जवनिकाऽपसारणेन । सूचनां विनैवेति यावत् । 'अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्करिणी'ति हलायुधः । 'पटीक्षेपेणे'ति पाठेऽपि स एवार्थः । यद्यपि 'असूचितस्य प्रवेशोऽनुचितः, तथापि—'पटीक्षेपेण कर्तव्यमात्तराजप्रवेशन'मित्युक्तेः शकुन्तलादुःखेन, प्रभातकालिककार्यत्वरया चार्त्तायास्तथा प्रवेशे बाधकाऽभाव इत्यवधेयम् । हर्षशोकादिसम्भ्रमवतः पात्रस्य प्रवेशः पटाक्षेपेण क्रियते, हर्षशोकादिसूचनायेति हि नाटकसमयः । केचित्तु— 'पटीक्षेपो न कर्त्तव्य आत्तराजप्रवेशने' इति पठन्तः—अपटीक्षेपेण=जवनिकाऽ- नपसारणेनैवेत्यर्थमाहुः ।

---

मध्यम धाम ( आकाशमण्डल ) को भी आक्रान्त कर लिया था, वही चन्द्रमा- अब स्वल्पावशिष्ट अपनी किरणों के साथ गगनाङ्गण से नीचे गिर रहा है । ठीक है, ज्यादा ऊँचा चढ़ना—बड़ों को भी अन्त में नीचे ही गिराता है । जो बड़ों के शिर पर पैर रखकर ( गुरुजनों का अतिक्रमण कर ) बढ़ता है, वह कभी न कभी इसी प्रकार अवश्य ही गिरता है [ जैसे नन्द वंश को दबा कर बढा हुआ चन्द्रगुप्त मौर्य भी गिरा ] ॥ ५ ॥

**अनसूया**—( बीच में ही पर्दा हटाकर प्रविष्ट हो ) विषयों से स्वभावतः विमुख तपस्वियों के प्रति ऐसा अनुचित व्यवहार कभी किसी ने नहीं किया

[ एवं नाम विषयपराङ्मुखस्य जनस्य [1]न निपतितं—यथा तेन राज्ञा शकुन्तलायामनार्य्यमाचरितमिति ]।

शिष्यः—यावदुपस्थितां होमवेलां गुरवे निवेदयामि ।

(—इति निष्क्रान्तः)

अनसूया—णं पहादा रजणी । ता सिग्धं सअणं परिच्चआमि । अथवा लहु लहु उत्थिदावि किं करिस्सं, ण मे उइदेसुं पहादकरणीएसु हत्थपाआ प्पसरन्ति । कामो दाणिं सकामो भोदु । जेण असच्चसन्धे

एवं नाम=ईदृशं । विषयेभ्यः पराङ्मुखस्तस्य=विषयविरतस्य । कामोपभोगानभिज्ञस्य । जनस्य=तपस्विलोकस्य । न निपतितं=न जातं । नोत्पन्नमिति वा । पाठान्तरे तु—मादृशस्य । न विदितं = न ज्ञातं । न स्मर्यत इत्यर्थः । यथा= यादृशं । शकुन्तलायां = तामधिकृत्य । अनार्यम् = असज्जनोचितम् ।

उपस्थितां = प्राप्तां । होमवेलां=हवनकालं । गुरवे = कण्वाय । निवेदयामि =निर्दिशामि । लघु-लघु = त्वरितं त्वरितं । प्रभातकरणीयेषु = प्रातःकर्त्तव्येषु गृह-

था, जैसा अनुचित व्यवहार तपस्विनी शकुन्तला के साथ—पहिले तो उसे लुभा कर अपने वशीभूत कर फिर इस प्रकार इसे भुलाकर—दुष्यन्त ने किया है। अर्थात्—पहिले तो लम्बी-चौड़ी बातें बनाकर बेचारी भोली-भाली सीधी शकुन्तला को फँसा लिया, अब उस बेचारी की खबर तक उस राजा ने नहीं ली, यह बहुत ही अनुचित काम दुष्यन्त ने किया है ।

'अपटी' नाम पर्दे का है । पर्दा हटाकर सहसा अनसूया प्रविष्ट हो यह बात कहती है । जब कोई ज्यादा गडबड ( व्यतिक्रम ) की बात नाटक में सुनानी होती है, तब अपटीक्षेप से पात्र का प्रवेश कराया जाता है। अन्यथा नाटक में असूचित पात्र का प्रवेश नहीं होता है ।

शिष्य—अच्छा, होम का समय हो गया है यह बात गुरुजी को जाकर कहता हूं । ( जाता है ) ।

अनसूया—अब तो सबेरा भी हो ही गया है, अतः जल्दी ही (शय्या=सेज)

१ 'न विदितम्' इति पाठान्तरम् ।

जणे पिअसहि सुद्धहिअआ पदं कारिदा। [ स्मृत्वा- ] अधवा ण तस्स राएसिणो अवराहो, दुव्वासासावो क्खु एसो पहवदि। अण्णधा कधं सो राएसी तादिसाइं मन्तिअ एत्तिअस्स कालस्स वात्तामात्तं पि ण विसज्जेदि ?। [ विचिन्त्य- ] ता इदो अहिण्णाणं अङ्गुलीअअं से विसज्जेम। अधवा दुक्खसीले तवस्सिजणे को अब्भत्थीअदु ?। ण सही-गामी दोसो त्ति व्ववसाइदुं पि ण पारेह्म, तादकण्णस्स वा पवासप-डिणिउत्तस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्तलं णिवेदिदुं। ता एत्थ दाणिं किं णु क्खु अह्मेहिं करणिज्जं ?।

[ ननु प्रभाता रजनी। तच्छीघ्रं शयनं परित्यजामि। अथवा लघु लघूत्थितापि किं करिष्यामि ?। न मे उचितेषु प्रभातकरणीयेषु हस्त-पादं प्रसरति। काम इदानीं सकामो भवतु, येन असत्यसन्धे जने प्रियसखी शुद्धहृदया पदं कारिता।

अथ वा न तस्य राजर्षेरपराधः, दुर्वासःशापः खल्वेष प्रभवति। अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वा एतावतः कालस्य वार्त्ता-

---

संमाजनादिषु। उचितेषु = अवश्यकरणीयेष्वपि। हस्तौ पादौ च-हस्तपादं = करचरणादिकं। न प्रसरति = न प्रचलति। कामः = हिताहितविचारराहित्येन प्रवर्त्तनशीलो मदनः। सकामः = सफलमनोरथः। येन=कामेन। असत्या सन्धा यस्य तस्मिन्-असत्यप्रतिज्ञे। जने = दुष्यन्ते। शुद्धहृदया = वञ्चनाशून्यहृदया। पदं=स्नेहबन्धरूपं व्यवसायं। प्रभवति=विजृम्भते सर्वं विधत्ते। तादृशानि=पूर्वानु-

---

पर से उठू। अथवा जल्दी-जल्दी उठकर भी मैं क्या कर लूंगी ? चिन्ता के कारण अवश्य करणीय प्रभातकालिक कृत्यों में भी ( स्नान, ध्यान, जप, पूजा, गृह कृत्य आदि में भी ) मेरे हाथ-पाँव नहीं चलते हैं !। अब उस निर्दय-हृदय कामदेव की इच्छा पूरी हुई है, जिसने ऐसे झूठे, मिथ्या प्रतिज्ञा करने वाले पुरुष ( दुष्यन्त ) में शुद्ध हृदया सखी शकुन्तला का मन आसक्त व अनुरक्त करा दिया है।

[ याद करके ] अथवा-उस धर्मात्मा राजर्षि दुष्यन्त का भी इसमें कोई दोष नहीं है। यह तो दुर्वासा के शाप का ही प्रभाव दृष्टिगोचर हो रहा है, जो

मात्रमपि न विसर्जयति ? । तदितोऽभिज्ञानमङ्गुलीयकं विसर्जयामः ? ।
अथवा दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम् ? ।
ननु 'सखीगामी दोष' [1]इति व्यवसाययितुमपि न पारयामः, तात-कण्वस्य वा प्रवासप्रतिनिवृत्तस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां

---

भूतानि । नैकविधं स्नेहालापादिकं, प्रतिज्ञादिकं च । मन्त्रयित्वा = कृत्वा । एतावतः=इयतः । बहुतिथस्य । कालस्य=समयस्य गतस्यापि । वार्तामात्रं=कुशलवृत्त-मात्रं । न विसर्जयति = न प्रेरयति । इतः=आश्रमादेव । अभिज्ञानं=स्मारकम् ।
दुःखं शीलं यस्यासौ, तस्मिन्-दुःखशीले = तपःक्लेशशीले । शृङ्गारकथाऽयोग्ये । कः=को नु खलु तपस्वी । प्राभ्यर्थ्यतां=याच्यताम् । कं प्रेषयामः । न कोऽपि तद्योग्य इत्याशयः । सखीगामी=शकुन्तलागतः । दोषः=अपराधः । कथमियं पूर्वा-परानुसन्धानराहित्येन स्वात्मानमर्पितवतीति शकुन्तलागतोऽयं दोषः । इति=इति-हेतोः । व्यवसाययितुं = निश्चेतुं । प्रकटयितुं वा । न पारयामः = न शक्नुमः ।
प्रतिनिवृत्तस्य = प्रत्यागतस्य । दुष्यन्तेन परिणीतां=दुष्यन्तेन विवाहिताम् ।

---

वह राजा शकुन्तला को यों भूल गया है। अन्यथा—वह राजर्षि दुष्यन्त ऐसी ऐसी लम्बी चौड़ी प्रतिज्ञाएँ करके और शकुन्तला को बड़ी बड़ी आशाएं दिला कर भी, अब इतने दिन बीत जाने पर भी, क्या कुशल-क्षेम की वार्ता ( चिट्ठी-पत्री, संदेश ) भी दूत के द्वारा नहीं भेज सकता है ।
[कुछ सोचकर—] तो क्या यहाँ से राजनामाङ्कित उस अंगूठी को ही परिचय के रूप में भेजा जाए ? । अथवा—तपोनिष्ठ अतएव क्लेशयुत इन ( दुःखिया ) तपस्वियों के बीच में से किसको कहें ? । किसको वहाँ भेजें ? । और यह तो सखी का ही दोष है—इसलिए इसे किसी से कहने में भी हम असमर्थ हैं। और इसी कारण तीर्थयात्रा से लौटकर आए हुए तातकण्व से भी 'शकुन्तला का और दुष्यन्त का गान्धर्व विधि से विवाह हो गया है, और अब शकुन्तला

---

१ 'दोष इति व्यवसिताऽपि न पारयामि प्रवासप्रतिनिवृत्तस्ये'ति पाठे—इति= इति हेतोः, न पारयामि = न शक्नोमि निवेदयितुं, व्यवसिता=बहुशः कथनार्थं कृतनिश्चयाऽपीत्यर्थः

निवेदयितुम। तदत्रेदानीं किं नु खल्वस्माभिः करणीयम् ? ]।

**प्रियंवदा**—( प्रविश्य- ) अणसूए तुवर तुवर सउन्तलाए पत्थाण-कोदूहलं णिव्वत्तिदुं।

[ अनसूये ! त्वरस्व त्वरस्व शकुन्तलायाः प्रस्थानकौतूहलं निर्व-र्त्तयितुम ]।

**अनसूया**—( सविस्मयम्- ) सहि, कथं विअ ?।

[ सखि ! कथमिव ? ]।

**प्रियंवदा**—सुणाहि, दाणिं ज्जेव सुहसुत्तिआपुच्छणणिमित्तं सउन्तलाए सआसं गदह्मि।

[ शृणु, इदानीमेव 'सुखसुप्तिकाप्रच्छननिमित्तं शकुन्तलायाः सकाशं गताऽस्मि ]।

---

अतएव च—आपन्नसत्त्वां = गर्भिणीम्। 'आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी'त्यमरः। निवेदयितुं वा—''कथयितुं वा न पारयाम' इति पूर्वेण सह सम्बन्धः। तत् = तस्मात्। अत्र=अस्मिन् कार्ये।

प्रस्थाने=गमने। कौतुकं = मङ्गलं। निर्वर्त्तयितुं=कर्त्तुं। 'कौतुकं नर्मणी-च्छायामुत्सवे कुतुके मुदि। पारम्पर्यागतख्यातमङ्गलोद्वाहसूत्रयोः'रिति हैमः। सुखसुप्तिकाप्रच्छननिमित्तं=सुखेन सुप्तायास्ते रात्रिः कच्चिद्व्यतीतेति प्रश्नार्थम्। 'सुखशयनपृच्छिका' इति पाठान्तरे तु—सुखेन ते शयनं जातमिति या पृच्छति

---

गर्भवती है'—इस बात को कहने में भी हम लोग असमर्थ हैं। अब कुछ समझ में नहीं आ रहा है, कि–अब हमें इस प्रसङ्ग में क्या करना चाहिए ?।

**प्रियंवदा**—( प्रविष्ट होकर— ) सखि अनसूये ! शकुन्तला के प्रस्थान ( यात्रा ) के मङ्गलाचार करने के लिए जल्दी कर, उठ, शीघ्रता कर।

**अनसूया**—( आश्चर्यान्वित हो— ) हैं सखि ! यह क्या बात है ?। शकुन्तला कहाँ जा रही है ?।

**प्रियंवदा**—हे सखि ! सुन, मैं अभी शकुन्तला से 'रात्रि में तुझे सुख से तो नींद आई'—यह कुशल वृत्तान्त पूछने के लिए गई थी।

---

१ 'सुखशयनपृच्छिका शकुन्तलाया सकाशं' पाठ।

अनसूया—तदो तदो ?।

[ ततस्ततः ? ]।

प्रियंवदा—तदो एणं लज्जावणदमुहीं परिस्सइअ सअं तादकण्णेण एव्वं अहिणन्दिदं—'वच्छे ! दिट्ठिआ धूमोवरुद्धदिट्ठिणो वि जजमाणस्स पावअस्स ज्जेव मुहे आहुदी णिपडिदा। सुसिस्सपरिदिण्णा विअ विज्जा असोअणीआसि मे संवुत्ता। अज्ज ज्जेव तुमं इसिपरिरक्खिदं करिअ भत्तुणो सआसं विसज्जेमि'त्ति।

[ तत एनां लज्जावनतमुखीं परिष्वज्य स्वयं तातकण्वेनैवमभिनन्दितं—'वत्से ! दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता। सुशिष्यपरिदत्तेव विद्या अशोचनीयाऽसि मे संवृत्ता। अद्यैव [1]त्वामृषिपरिरक्षितां कृत्वा भर्त्तुः सकाशं विसर्जयामि' इति ]।

सा सुखशयनपृच्छिका। यावत्=साकल्येन। लज्जयाऽवनतं मुखं यस्याः सा, तां-लज्जावनतमुखीं=व्रीडानम्रवदनाम्। परिष्वज्य=आलिङ्गय। अभिनन्दितं=तत्कृतं कर्म प्रशंसितम्। धूमेन आकुलिता दृष्टिर्यस्य तस्य—धूमाकुलितदृष्टेः=आज्यधूमोपहतदर्शनशक्तेरपि। यजमानस्य=होतुः। प्रकृते तवेति यावत्। पावक एव=अग्नावेव। कामवशीभूतयाऽपि त्वया योग्ये पात्रे एवात्मा समर्पित इत्याशयः। सुशिष्यपरिदत्ता=योग्यशिष्यसमर्पिता। दुष्यन्तहस्तगता। त्वं न

अनसूया—हाँ, हाँ, कहो तब क्या हुआ ?।

प्रियंवदा—तब वहाँ पर स्वयं तातकण्व ने लज्जा से अवनतमुखी (नीचे मुख किए हुए) उस शकुन्तला को छाती से लगाकर, विवाह की बात का यों अभिनन्दन किया, कि—'हे वत्से ! बड़े ही हर्ष की बात है, कि—धूएँ से अवरुद्ध दृष्टि वाले यजमान के हाथ से भी छोड़ी हुई आहुति सौभाग्य से अग्नि के ही मुख में पड़ी। अर्थात्—कामोपहत बुद्धि होकर भी तैंने अपने को योग्य वर (दुष्यन्त) के ही हाथ में सौंपा है। अस्तु, जैसे योग्य शिष्य को दी हुई विद्या अशोचनीय होती है, उसी प्रकार 'योग्य पात्र के हाथ में तूं गई है' इसलिए

१ 'ऋषिरक्षितां' पा०।

अनसूया—सहि ! केण उण आचक्खिदो तादकण्णस्स अअं वुत्तन्तो ? ।

[ सखि ! केन पुनराख्यातस्तातकण्वस्याऽयं वृत्तान्तः ? ] ।

प्रियंवदा—अग्गिसरणं पविट्ठस्स किल सरीरं विणा छन्दोमईए वाआए ।

[ अग्निशरणं प्रविष्टस्य किल शरीरं विना छन्दोमय्या वाचा ] ।

अनसूया—( सविस्मयं— ) कधं विअ ? ।

[ कथमिव ? ] ।

प्रियंवदा—सुणाहि ।

[ शृणु ] ।

---

शोचनीयतां गतेत्याशयः । पाठान्तरे–ऋषिभी रक्षिताम्–ऋषिरक्षितां=मुनिरक्षितां । भर्त्तुः = दुष्यन्तस्य । सकाशं = समीपम् । विसर्जयामि=प्रहिणोमि । वर्त्तमानसामीप्ये लट् । इति = इत्येवं शकुन्तलाकृतमभिनन्दितमिति योजना ।

आख्यातः=कथितः । सूचितः । वृत्तान्तः=शकुन्तलापरिणयात्मको वृत्तान्तः । 'अथ केन सूचितवृत्तान्तः कृतस्तातकण्वः' इति पाठान्तरे सूचितो वृत्तान्तो गान्धर्वविवाहरूपो यस्मै इति विग्रहः । अग्निशरणम् = अग्न्यागारं । शरीरं विना = शरीररहितया । छन्दोमय्या = मन्त्रमय्या । वाण्या = आकाशवाण्या ।

---

मुझे तेरे विषय में सोच या चिन्ता नहीं है । और आज ही मैं तुझको ऋषियों की रक्षा में देकर तेरे पति के घर पर भेजता हूं ।'

अनसूया—हे सखि ! शकुन्तला वाली यह बात तात कण्व को किसने कही ? ।

प्रियंवदा—तात कण्व जब हवन करने को अग्निशाला में गए तब अशरीरिणी, छन्दोमयी, आकाशवाणी ने ही उनसे यह हाल कह दिया ।

अनसूया—( बड़े विस्मय के साथ ) उसने क्या कहा ? ।

प्रियंवदा—ले सुन.....

( संस्कृतमाश्रित्य— )

**दुष्यन्तेनाऽऽहितं तेजो दधानां भूतये भुवः ।**
**अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ६ ॥**

**अनसूया**—( प्रियंवदामाश्लिष्य- ) सहि पिअं मे (ऽ) पिअं। किन्तु अज्ज ज्जेव सउन्तला णीअदि त्ति उक्कण्ठासाहारणं परिदोषं अणुभवेमि ।

[ सखि ! प्रियं मे (ऽ) प्रियम्। किन्त्वद्यैव शकुन्तला नीयते इति

---

संस्कृतमाश्रित्येति । 'विद्वद्भिः प्राकृतं कार्यं कारणात्संस्कृतं क्वचि'दिति मातृगुप्ताचार्योक्तेरत्र प्रियंवदया संस्कृतभाषयाऽनुवादः कृत इत्यवधेयम् ।

दुष्यन्तेनेति । ब्रह्मन् = हे महर्षे कण्व ! भुवः = पृथिव्याः । भूतये = अभ्युदयाय । कल्याणाय । दुष्यन्तेन आहितं=निषिक्तं, तेजः = वीर्यं, ज्योतिश्च । दधानां=धारयन्तीम् । अग्निः गर्भे यस्याः सा, ताम्—अग्निगर्भां=वैश्वानरगर्भां । शमीमिव = सक्तुफलामिव । तनयां=स्वपुत्रीं शकुन्तलाम् । अवेहि=त्वं जानीहि । [ श्लेषसङ्कीर्णोपमा । अनुप्रासः । 'भूतार्थवचनं चैव 'मार्ग' इत्यभिधीयते' इत्युक्तेर्मार्गो नाम गर्भसन्ध्यङ्गम् ] ॥ ६ ॥

प्रियं = पित्राऽभिनन्दनं प्रियमपि । मेऽप्रियं = मेऽनिष्टमेव । शकुन्तला-

---

[ संस्कृत भाषा में श्लोकबद्ध रूप से- ]

हे ब्रह्मन् ! तुम अपनी कन्या शकुन्तला को, दुष्यन्त के द्वारा, पृथ्वी (प्रजा) के कल्याण के लिए, अपना तेज ( वीर्य ) इसमें स्थापित कर देने से उसी प्रकार गर्भवती समझो, जिस प्रकार अग्नि ( के तेज ) से शमी ( जांटी छोंकरा, ) गर्भवती होती है । [ शमी वृक्ष में अग्नि का निवास रहता है । अतएव-शमी के गर्भ से ( शमी वृक्ष के काष्ठ से ) अरणि बनाकर पीपल के दण्डे से उसे मथकर यज्ञ आदि में अग्नि उत्पन्न की जाती है ] ॥ ६ ॥

**अनसूया**—( प्रियंवदा को छाती से चिपटाकर ) हे सखि ! तुमने मुझको यह तो बहुत ही प्रिय बात सुनाई है, किन्तु आज ही शकुन्तला जा रही है,

उत्कण्ठासाधारणं [1]परितोषमनुभवामि ]।

**प्रियंवदा**—सहि ! अह्मे कधं पि उक्कण्ठां विणोदइस्सामो, सा दाणिं तपस्सिणी णिव्वुदा होदु।

[ सखि ! वयं कथमपि उत्कण्ठां विनोदयिष्यामः। सा इदानी तपस्विनी निर्वृता भवतु ]।

**अनसूया**—तेन हि एकस्सिं चूअसाहावलम्बिदे णारिएलसमुग्गए एदण्णिमित्तं ज्जेव मए कालहरणक्खमा [1]केसरमालिआ णिक्खित्ता चिट्ठदि। ता इमं णलिणीबत्तसङ्गदं करेहि, जाद से अहं पि गोरोअणं तित्थमित्तिअं दुव्वाकिसलआइं मङ्गलसमालम्भणं विरएमि।

[ तेन हि एकस्मिंश्चूतशाखावलम्बिते नारिकेलसमुद्गके एतन्निमित्त-

---

वियोगात्। 'प्रिय मे प्रिय'मिति पाठे—हर्षेण सम्भ्रमेण द्विरुक्तिः। उत्कण्ठा-साधारणम् = अरतिसहितं। परितोषं = हर्षं। 'अपरितोष'मिति वा पाठः। कथमपि=पत्रादिना कुशलवृत्तान्तज्ञानादिभिः। विनोदयिष्यावः = परिहरिष्यावः। सा = शकुन्तला। तपस्विनी=अनुकम्पार्हा वराकी तावत्। 'तपस्वी चानुकम्पार्हः' इत्यमरः। निर्वृता = भर्तृगृहगमनेन सुखिनी।

चूतस्य = आम्रस्य। शाखायां = विटपे। अवलम्बिते = संसक्ते। नारिकेल-

---

इस बात से थोड़ी उत्कण्ठा भी हो रही है, उद्वेग और असन्तोषसा भी हो रहा है। क्योंकि शकुन्तला के विना हम लोगों का अब मन कैसे लगेगा? इस उत्कण्ठा के ही कारण मुझे कुछ असन्तोष हो रहा है।

[पाठान्तर में—मुझे उद्वेग और सन्तोष दोनों ही साथही साथ हो रहे हैं]।

**प्रियंवदा**—हे सखि ! हम लोग तो अपनी उत्कण्ठा ( शकुन्तला को देखने की उत्कट इच्छा) को तो कथंचित् सहन कर ही लेंगे। पर इस बेचारी को तो अपने पति के यहाँ जाकर किसी तरह से सुखी होने दो।

**अनसूया**—तो फिर ठीक ही है। अच्छा तो तूँ जा, और देख, मैंने उस आम के वृक्ष की शाखा में लटकते हुए नारियल के सम्पुट ( डिब्बे ) में इसी

---

१ 'अपरितोषं' पा०।

मेव मया कालहरणक्षमा केसरमालिका[1] निक्षिप्ता तिष्ठति। तदिमां नलिनीपत्त्रसङ्गतां कुरु। यावदस्या अहमपि गोरोचनां, तीर्थमृत्तिकां, [1]दूर्वाः, किसलयानि, मङ्गलसमालम्भन विरचयामि ]।

( प्रियंवदा—तथा करोति )।

( अनसूया—निष्क्रान्ता )।

( नेपथ्ये— )

गौतमि ! आदिश्यन्तां शार्ङ्गरव-शारद्वतमिश्राः—'वत्सां शकुन्तलां नेतुं सज्जीभवन्तु भवन्तः' इति।

---

करण्डके। एतन्निमित्तमेव = गमनमङ्गलसम्पादनायैव। कालस्य हरणं क्षमते या सा—कालहरणक्षमा = बहुकालस्थायिनी। केसरमालिका = बकुलपुष्पमाला। निक्षिप्ता=स्थापिता। कमलिनीपत्रेण—सङ्गतां=नियोजितां। गोरोचनां='गोरोचन' इति प्रसिद्धां। तीर्थमृत्तिकां = गङ्गादिपवित्रतीर्थरजश्च। दूर्वाः=शतपर्वाः। किसलयानि=पल्लवानि। 'पल्लवोऽस्त्री किसलयम्' इत्यमरः। 'दूर्वाकिसलयानी'-त्येकं पदं वा। मङ्गलसमालम्भनानि=माङ्गलिकवस्तूनि, अङ्गरागादीनि। 'समालम्भनमालेपे तिलकेऽलङ्कृतावपी'ति वैजयन्ती। 'केसरगुण्डे'ति पाठे—गुण्डा=पुष्पपरागः। केसरः=बकुलः। आदिश्यन्तां=समाज्ञाप्यन्तां। मिश्राः=

---

दिन के लिए ( शकुन्तला के मङ्गलाचारों में काम आने के लिए ) कई दिन तक ठहर सकने वाला बकुल ( मौलसिरी, ) का पराग ( केसर ) सावधानी से रखा हुआ है। जा उसे नलिनी कमल की लता के पत्ते पर केसर की जगह रख। जब तक मैं भी शकुन्तला के मङ्गलाचारों के लिए गोरोचन, तीर्थों की मृत्तिका, दूब, पद्म पल्लव और माङ्गलिक मेंहदी आदि चीजें इकट्ठी करके ले आती हूं।

[ प्रियंवदा—मौलसिरी के पराग (केसर) को कमलिनी के पत्ते पर रखती है। और अनसूया—जाती है ]।

( नेपथ्य में )

हे गौतमि ! जाकर विद्वान् और कर्मठ शार्ङ्गरव और शारद्वतमिश्र को मेरी आज्ञा सुनाओ, कि—वत्सा शकुन्तला को पतिगृह पहुँचाने के लिए तुम लोग शीघ्र ही तैयार हो जाओ।

---

१ 'केसरगुण्डा'—पा०। २ 'दूर्वाकिसलयानि' पा०।

**प्रियंवदा**—अणसूए ! तुवर तुवर । एदे क्खु हत्थिणाउरगामिणो इसीओ सद्दाविअन्ति ।

[ अनसूए ! त्वरस्व त्वरस्व । एते खलु हस्तिनापुरगामिन ऋषयः शब्दायन्ते ] ।

**अनसूया**—( समालम्भनहस्ता प्रविश्य- ) सहि ! एहि गच्छह्म । ( -इति परिक्रामतः ) ।

[ सखि ! एहि गच्छावः ] ।

**प्रियंवदा**—( विलोक्य— ) एसा सुज्जोदए ( [1]एव्व ) [2]किदमज्जणा पडिच्छिदणीवारसाअणाहिं सोत्थिवाअणिआहिं तावसीहिं अहिणन्दीअमाणा चिट्ठदि सउन्तला । ता उवसप्पह्म णं ।

( —इत्युभे तथा कुरुतः ) ।

[ एषा सूर्य्योदये [3]एव कृतमज्जना [4]प्रतीष्टनीवाराभिः स्वस्तिवाच-

श्रेष्ठाः । सज्जीभवन्तु=सन्नद्धा भवन्तु । हस्तिनापुरगामिनां महर्षिणां वचनमेतत् । शब्दं कुर्वन्ति—शब्दायन्ते=आह्वानं कुर्वन्ति । 'शब्दाय्यन्ते' इति पाठे—आहूयन्ते—इत्यर्थः । समालम्भनहस्ता=मङ्गलोपकरणहस्ता ।

कृतं मज्जनं यया सा—कृतमज्जना = कृतस्नाना । पाठान्तरे—शिखामज्जिता= शिरःस्नाता । प्रतिष्ठिताः = गृहीता नीवारा हस्तेषु याभिस्ताभिः=गृहीतनीवाराख्य-

**प्रियंवदा**—हे अनसूये ! जल्दी कर, जल्दी कर । देख, ये शकुन्तला को हस्तिनापुर ले जाने के लिए ऋषि लोग बाहर से आवाज दे रहे हैं, ( अथवा—बुलाए जा रहे हैं ) ।

**अनसूया**—( रोली, उबटन, अङ्गराग, मेंहदी, गोरोचन, दूब आदि लगाने की माङ्गलिक वस्तुएँ हाथ में लिए हुए आकर ) हे सखि ! आओ, चलें ।

**प्रियंवदा**—( सामने देखकर- ) यह देखो सामने—शकुन्तला सूर्योदय होते ही शिर नहाकर, शिरसे स्नान करके, चोटी गुथवाकर और नीवार ( तिन्नी

१ एवेति क्वचिन्न । २ 'शिखामज्जिता' पा० ।
३ 'एव' इति क्वचिन्न । ४ 'प्रतिष्ठित'—पा० ।

निकाभिः तापसीभिरभिनन्द्यमाना तिष्ठति शकुन्तला। तदुपसर्पाव एनाम् ॥

( ततः प्रविशति यथानिर्दिष्टव्यापारा सपरिवारा शकुन्तला )।

शकुन्तला—भअवदीओ वन्दामि।

[ भगवतीर्वन्दे ]।

गौतमी—जादे ! भत्तुणो बहुमाणसुहहेतुअं देवीसद्दं अहिगच्छ।

[ जाते ! भर्तुर्बहुमानसुखहेतुकं देवीशब्दमभिगच्छ ]।

तापस्यः—वीरप्पसविणी होहि।

[ वीरप्रसविनी भव ]।

( -इत्याशिषो दत्त्वा गौतमीवर्जं सर्वा निष्क्रान्ताः )।

---

मङ्गलधान्याभिः। 'प्रतीष्टे'ति पाठेऽपि-प्रतीष्टाः=गृहीताः। स्वस्तिवाचनिकाभिः= मङ्गलमयशब्दोच्चारणचतुराभिः। अभिनन्द्यमाना = स्तूयमाना। कारितोत्साहा।

भगवतीः=तापसीः। जाते=पुत्रि !। बहुमानस्य सुखस्य च हेतुकं=संमान-सुखसूचकं। देवीशब्दं=पट्टमहिषीनामधेयम्। 'देवी कृताभिषेका या' इत्यमरः। वीर-

---

के चावल ) हाथ में लिए हुए स्वस्तिवाचन, मङ्गलाचार करने वाली, तथा आशीस एवं शिक्षा आदि देनेवाली तापसी सौभाग्यवती स्त्रियों से अभिनन्दन की जाती ( लाड-प्यार-चाव की जाती हुई, तथा आशीर्वाद दी जाती ) हुई यहाँ बैठी है। आओ, इसके पास चलें। ( दोनों शकुन्तला के पास जाती हैं )।

[ पूर्वोक्त प्रकार से मङ्गलाचार करने वाली तापसियों से घिरी हुई, आसन पर बैठी हुई, शकुन्तला का प्रवेश ]।

शकुन्तला—हे भगवतियों ! ( हे देवियों ), मैं आप लोगों को प्रणाम करती हूं।

गौतमी—हे पुत्रि ! अपने पति से मानसूचक और सुखप्रद 'देवी' शब्द को प्राप्त कर। अर्थात्—अपने पति की पटरानी ( प्रधान राजमहिषी ) हो।

तापसियाँ—हे पुत्रि ! तूं वीर पुत्र को जन्म देने वाली हो। (आशीर्वाद देकर सब तापसी स्त्रियाँ जाती हैं, केवल गौतमी भी जाती है )।

**सख्यौ**—( उपगम्य- ) सम्मज्जणं दे भूदं ?।

[ संमज्जनं ते भूतम ? ]।

**शकुन्तला**—साअदं पिअसहीणं। इदो णिसीदध।

[ स्वागतं प्रियसख्योः। इतो निषीदतम् ]।

**सख्यौ**—( उपविश्य— ) हला! उज्जुआ दाव होहि, जाव दे मङ्गलसमालम्हडं करेम्ह।

[ हला! ऋजुका तावद्भव, यावत्ते मङ्गलसमालम्भनं कुर्वः ]।

**शकुन्तला**—उजिदं पि एदं अज्ज बहु मणिदव्वं, जदो दुल्लहं दाव पुणो मे पिअसहीमण्डणं भविस्सदि।

( —इति बाष्पं विसृजति )।

[ उचितमप्येतदद्य बहु मन्तव्यं, यतो दुर्लभं तावत् पुनर्मे प्रियसखीमण्डनं भविष्यति ]।

---

प्रसविनी=वीरपुत्रजननी। गौतमीवर्जं=गौतमीं विहाय। संमज्जनम्=अभ्यङ्गस्नानम्। ऋजुका = सरलिताङ्गयष्टिः। उचितमपि = चिरपरिचितमपि। एतत् = भवत्कृतं मण्डनं। बहु = अनर्घम्। 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति वैजयन्ती। प्रियसखीभ्यां कृतं-प्रियसखीकृतं = युवाभ्यां कृतम्। पतिगृहगतायाः क्व मे भवत्कृत-

---

**दोनों सखियाँ**—(पास में आकर) हे शकुन्तले! क्या तू नहा चुकी ?।

**शकुन्तला**—आओ, प्रियसखियों! आओ, तुम्हारा स्वागत है। आओ, यहाँ मेरे पास बैठो।

**दोनों सखियाँ**—( बैठकर- ) हे सखि! तुम थोड़ी ठीक से सीधी होकर बैठ जावो तो तुम्हारे अङ्गराग एवं मेंहदी रोली आदि माङ्गलिक वस्तुएँ लगाकर, तुम्हारा समालम्भन ( शृंगार ) कर दें।

**शकुन्तला**—यह तुम्हारा आवश्यक समयोचित कार्य भी मुझे आज बहुत प्रिय मालूम हो रहा है, क्योंकि फिर तुम्हारे हाथ से मेरा इस प्रकार मण्डन ( टीकी, बिन्दी, रोली आदि लगाकर शृङ्गार करना ) मेरे लिए दुर्लभ ही हो जाएगा। (–आँसू टपकाती है )।

सख्यौ—सहि ! ण जुत्तं मङ्गलकाले रोदिदुं ।

[ सखि ! न युक्तं मङ्गलकाले रोदितुम् ] ।

( —इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः ) ।

प्रियंवदा —सखि ! आहणारिहं दे रूअं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि ।

[ सखि ! आभरणार्हं ते रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्य्यते ] ।

( प्रविश्य, आभरणहस्तः— )

ऋषिकुमारः—इदमलङ्कारजातम् । अलङ्क्रियतामायुष्मती ।

( सर्वाः—विलोक्य विस्मिताः ) ।

---

मण्डनलाभ इत्याशयः । प्रमृज्य = विशोध्य । आभरणार्हं = कनकभूषणार्हम् । प्रसाधनैः = अङ्गरागादिभिः । विप्रकार्यते = तिरस्क्रियते, अशोभनतां नीयते । नैतान्याभरणानि तवोचितानीत्याशयः । एतेनालङ्कारहस्तकुमारागमनं सूचितम् , 'नाऽसूचितस्य प्रवेशोऽस्ती'त्युक्तेः ।

अलङ्कारजातम् = आभरणसमूहः । 'गृह्यतां तावत्' इति शेषः । आश्रमे कुतः खल्वेषां सम्भव इति सर्वासां विस्मयः । इदम् = अलङ्कारजातम् । आसा-

---

दोनों सखियाँ—हे सखि ! इस मंगल समय में ( यात्रा में ) रोना ठीक नहीं है । ( आँसू पोंछ कर उसका शृङ्गार करने का अभिनय करती हैं ) ।

प्रियंवदा—हे सखि ! यह तुम्हारा रूप तो नाना प्रकार के रत्नों के गहनों के ही योग्य है, वह इस प्रकार आश्रम सुलभ फूल पत्तियों आदि से शृंगार करने से तो उलटा बिगड़ता ही है । अर्थात् तेरे शरीर के लायक ये फूल-पत्तियों के गहने नहीं हैं । इसके योग्य तो राजोचित रत्नाभरण ही हो सकते हैं । ये फूल-पत्तियाँ तो तेरे शरीर पर अच्छी ही नहीं लगती हैं ।

[ रत्नाभरणों को हाथ में लिए हुए ऋषि कुमार का प्रवेश ] ।

ऋषि कुमार—लो, ये नाना प्रकार के रत्नों के भूषण हैं, इनसे इस आयुष्मती ( चिरजीविनी ) शकुन्तला का शृंगार करो ।

[ सब स्त्रियाँ—दुर्लभ एवं बहुमूल्य उन आभूषणों को देखकर आश्चर्य चकित होती हैं ] ।

गौतमी—वच्छ हारीद ! कुदो इदं आसादिदं ? ।

[ वत्स ! हारीत ! कुत इदमासादितम् ? ]।

हारीतः—तातकण्वप्रभावात् ।

गौतमी—किं माणसी सिद्धी ? ।

[ किं मानसी सिद्धिः ? ]।

हारीतः—न खलु । श्रूयताम् । तत्रभवता कण्वेन वयमाज्ञप्ताः- 'शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरते'ति । ततश्च—

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं,
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित् ।

दितं = लब्धं । प्रभावात् = सामर्थ्यात् । मानसी = मनःसङ्कल्पमात्रजा । सिद्धिः= ऐश्वर्यविजृम्भितम् । प्राप्तिः । न खलु = नैव मानसी सिद्धिरियम् । वनस्पतिभ्यः= वृक्षेभ्यः । आहरत = आनयत ।

क्षौममिति । केनचित् —तरुणा = वृक्षेण । माङ्गल्यं = मङ्गलकर्मयोग्यम् । इन्दुरिव पाण्डु इन्दुपाण्डु = चन्द्रपाण्डुरं । चन्द्रधवलम् । क्षौमं=महार्हं दुकूलम् । आविष्कृतं = प्रकटीकृतं । केनचित्— तरुणा । चरणयोरुपरागे सुभगः—चरणोपरागसुभगः = पादलेपमनोहरः । लाक्षारसः = अलक्तकरसः । निष्ठ्यूतः =

गौतमी—हे वत्स हारीत ! ये आभूषण तुम्हें कहाँ से प्राप्त हुए ?।

हारीत—ये तात कण्व के (तपस्या) के प्रभाव से ही प्राप्त हुए हैं ।

गौतमी—क्या ये गहने कण्व जी ने अपनी मानसी सिद्धि के प्रभाव से उत्पन्न किए हैं ?

हारीत—नहीं नहीं, सुनिए-तात कण्व ने हम लोगों से कहा कि–तुम लोग जाकर आश्रम के वृक्षों से शकुन्तला के ( योग्य आभरणों के ) लिए पुष्प आदि माँग कर ले आओ । तब तो—

किसी वृक्ष ने तो चन्द्रमा की तरह कुछ २ पीला व सफेद (स्वच्छ चन्दनी) रंग के मांगलिक वस्त्र ( साड़ियाँ ) अभिव्यक्त कर के हमें दिए, किसी वृक्ष ने

अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
दत्तान्याभरणानि नः किसलयच्छायापरिस्पर्द्धिभिः ॥७॥

प्रियंवदा—( शकुन्तलां विलोक्य— ) हला ! कोटरसम्भवावि महुअरी पोक्खरमहु जेव अहिलसदि ।

[ हला ! कोटरसम्भवापि मधुकरी पुष्करमध्वेव अभिलषति ] ।

गौतमी—जादे ! इमाए अब्भुववत्तीए सूइदा—भत्तुणो गेहे अणुहोदव्वा राअलच्छी ।

[ जाते ! अनयाऽभ्युपपत्त्या सूचिता—'भर्त्तुर्गेहे अनुभवितव्या राजलक्ष्मीः' ] ।

---

आविष्कृतः । अन्येभ्यः=अन्यतरुभ्यः । पर्वभागं मर्यादीकृत्य आपर्वभागम्-उत्थितैः=मणिबन्धपर्यन्तं बहिर्निस्सृतैः । किसलयानां छायां परिस्पर्द्धन्ते तच्छीलैः=किसलयच्छायापरिस्पर्द्धिभिः=पल्लवशोभानुकारिभिः । वनदेवतानां करतलैः=वनदेवतापाणितलैः । आभरणानि=भूषणानि । नः=अस्मभ्यं । दत्तानि=समर्पितानि । [ उपमाऽनुप्रासाः । 'शार्दूलविक्रीडितवृत्तम्' ] ॥ ७ ॥

कोटरे सम्भवो यस्याः सा—कोटरसम्भवा=तरुकुहरजाताऽपि । मधुकरी=भ्रमरी । पुष्कराणां मधु=कमलमधु एव । शकुन्तलाया दुष्यन्तसमागम इहाभिप्रेतोऽर्थः । तपोवनवर्द्धिताऽपि शकुन्तला स्वोचितमाभरणादिकमभिलष्यति, लभते वेत्येवं प्रस्तुतं च गम्यते इत्यप्रस्तुतप्रशंसा । अभ्युपपत्तिः=प्राप्तिः ।

---

पैरों में लगाने को उत्तम लाक्षारस ( महावर, यावक, ) निकाल कर दे दिया । अन्य वृक्षों से—बनदेवताओं ने कलाई तक ( या कोहनी तक ) पल्लवों की तरह कोमल हाथ बाहर निकाल कर हमें नाना प्रकार के ये आभूषण दे दिए ॥७॥

प्रियंवदा—( शकुन्तला को देखकर ) हे सखि ! अनसूये ! वृक्ष के सूखे कोटर ( खोडर-फटे हुए भाग ) में उत्पन्न होनेवाली भ्रमरी भी फूलों का मकरन्द ही पीना चाहती है । अर्थात् वन में उत्पन्न होकर भी यह शकुन्तला तो राजोचित गहने ही पहिनना चाहती है !

गौतमी—हे पुत्रि ! इस बात से ( वनस्पतियों से रत्नाभरण प्राप्तिरूप

( **शकुन्तला**—लज्जां नाटयति )।

**हारीतः**—यावदिमां वनस्पतिसेवामभिषेकार्थं मालिनीमवतीर्णाय तत्रभवते कण्वाय निवेदयामि। ( -इति निष्क्रान्तः )।

**अनसूया**—सहि ! अणणुभूदभूसणो अअं जणो कधं तुमं अलङ्करेदि ?। ( चिन्तयित्वा, विलोक्य च- ) चित्तपरिचएण दाणिं दे अङ्गेसु आहरणविणिओअं करेह्म।

[ सखि ! अननुभूतभूषणोऽयं जनः कथं त्वामलङ्करोतु[1]। चित्रपरिचयेनेदानीं तेऽङ्गेष्वाभरणविनियोगं कुर्वः ]।

---

आकस्मिकोऽनायासेन लाभः। वनस्पतिसेवां=वनस्पतिभिर्दत्तान्याभरणजालानि। भषेकाय = स्नातुम्।

न अनुभूतानि भूषणानि येनासौ—अननुभूतभूषणः = भूषणपरिधापनाद्यनभिज्ञः। कथमलङ्करोतु = कथं भूषणविन्यासं करोतु। चित्रैः परिचयस्तेन=चित्रपटेषु राजमहिष्यादिदर्शनाज्जातेन परिचयेन। आभरणानां विनियोगं = यथा·

---

इस शकुन से ) यह सिद्ध होता है, कि—'तूं पति के घर में जाकर राजलक्ष्मी का उपभोग करेगी'।

[ शकुन्तला—लज्जा का अभिनय करती है है ]।

हारीत—वनस्पतियों द्वारा इस प्रकार रत्नाभरण देकर की गई सेवा की मालिनी नदी में स्नान करने गए हुए तात कण्व को जाकर मैं सुनाता हूं।

( जाता है )

अनसूया—हे सखि ! आभूषण कैसे पहिने-पहिनाए जाते हैं—यह तो हम लोगों को अनुभव है नहीं, अतः इनसे तुम्हारा श्रृङ्गार हम कैसे करें ?। ( कुछ सोचकर और देखकर ) हमने चित्रों में गहने पहिने हुए राजा-रानियों की तस्वीर देखी हैं, उसी के आधार पर हम तुम्हारा आभरण विन्यास करती हैं। ( तुम्हें गहने पहिनाती हैं )।

---

[1] करोति' पा०।

शकुन्तला—जाणामि वो णिउत्तणं।
[ जानामि वां निपुणत्वम् ]।
( सख्यौ—नाट्येनाऽलङ्कारान् विनियुञ्जाते )।

( ततः प्रविशति स्नानोत्तीर्णः कण्वः )।

कण्वः—( विचिन्त्य—)

'यास्यत्यद्य शकुन्तले'ति हृदयं संस्पृष्टमुत्कण्ठया,
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।

---

स्थानं संनिवेशनं। निपुणत्वं = कुशलतां। जानामि = वेद्मि। केवलं मदुपहासायैव भवत्यावेवं निगदत इति भावः। स्नानोत्तीर्णः = स्नात्वा नद्या बहिर्यातः।

यास्यत्यद्येति। अद्य शकुन्तला यास्यति = गमिष्यति। 'पतिगृह'मिति शेषः। इति = अतो हेतोः। ममापि—हृदयम्—उत्कण्ठया=चिन्तया। संस्पृष्टम्= व्याप्तम्। गदितं=भाषितम्। 'अन्तःस्तम्भितबाष्परोधि गदितम्' इति पाठे—'अन्तर्बाष्पभरोपरोधि गदितम्' इति वा पाठान्तरे च—अन्तः स्थितानां बाष्पाणां भरेणोपरोधोऽस्त्यस्य तत्तथा = अन्तःस्तम्भितबाष्पभारकलुषम् इत्यर्थः। 'कण्ठः स्तम्भितबाष्पवृत्तिकलुषः' इति पाठे—स्तम्भितया बाष्पाणां वृत्त्या = प्रवृत्त्या, आरम्भेण वा विकृत इत्यर्थो बोध्यः। दर्शनं = लोचनं, ज्ञानं वा। चिन्तया—

---

शकुन्तला—तुम्हारी कुशलता एवं चतुरता को मैं जानती हूं। तुम बिना अनुभव के भी चतुराई से उचित रूप से ही गहने ठीक २ पहिना सकोगी।

दोनों सखियाँ—यथास्थान गहने पहिराने का अभिनय करती हैं ]।

[ स्नान कर वापिस आए हुए महर्षि कण्व का प्रवेश ]

कण्व—( कुछ सोचकर ) आज शकुन्तला जायगी—इसलिए मेरा हृदय आज उत्कण्ठा से व्याकुल हो रहा है। आँसुओं को भीतर ही भीतर रोकने से मेरा गला भी भर आया हैं। मेरे नेत्र भी चिन्ता से जडीभूत होकर देखने में

---

१ 'अन्तःस्तम्भितबाष्परोधि गदितम्' इति, 'अन्तर्बाष्पभरोपरोधि गदितम्' इति च पाठान्तरम्।

वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः,
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ॥ ८ ॥

( —इति निष्क्रान्तः ) ।

**सख्यौ**—हला सउन्तले ! अवसिदमण्डणाऽसि, सम्पदं परिहेहि क्खोमजुअलं ।

[ हला शकुन्तले ! अवसितमण्डनाऽसि, साम्प्रतं परिधेहि क्षौमयुगलम् ] ।

( **शकुन्तला**—उत्थाय नाट्येन परिधत्ते ) ।

---

जडं = स्वविषयाऽग्राहकं । मम तावत्—अरण्यौकसोऽपि = वनवासिनोऽपि । 'ओकः सद्मनि चाश्रये' इति मेदिनी । स्नेहात् ईदृशम् = एवंरूपं । वैक्लव्यं = कातरत्वं यदि भवति । तदा—गृहिणः = गृहस्थाः । दृढं मायापाशबद्धाः । नवैः= अभिनवैः । तनयाया विश्लेषेण जातैः दुखैः=पुत्रीवियोगदुःखैः । कथं न पीड्यन्ते= कथं नाभिभूयन्ते । अपि तु पीड्यन्त एव । [ व्यतिरेकः । अनुप्रासः । काव्य-लिङ्गम् । 'शार्दूलविक्रीडितं वृत्तम्' ] ॥ ८ ॥

अवसितं मण्डनं यस्याः सा तथा = जातभूषणसंनिवेशा । क्षौमयोर्युगलं—

---

असमर्थ हो रहे हैं । यदि वनवासी वीतराग मेरे ऐसे निःस्पृह का भी—कन्या के वियोग की कल्पना से, स्नेह से ऐसी दशा ( इस प्रकार विकलता ) हो रही है, तो फिर बेचारे गृहस्थ सांसारिक लोग कन्या के नवीन विश्लेष ( वियोग ) रूपी दुःख से कैसे न दुःखित होते होंगे ? ॥ ८ ॥

[ जाता है ] ।

**दोनों सखियाँ**—हे सखी शकुन्तले ! तेरा आभूषणों से शृङ्गार तो हो गया, अब तूं इस साडी को पहिर ले ( और इस ओढने को ओढ ले ) ।

[ शकुन्तला—उठकर साडी और दुपट्टा ( ओढणे ) के पहिरने ( और ओढणे ) का अभिनय करती है ] ।

गौतमी—जादे ! एस दे आणन्दबाप्प-परिवाहिणा लोअणेण परिस्सजन्तो विअ गुरू उबत्थिदो। ता समुदाआरं पडिवज्जस्स।

[ जाते ! एष ते आनन्दबाष्पपरिवाहिना लोचनेन परिष्वजमान इव गुरुरुपस्थितः। तत्समुदाचारं प्रतिपद्यस्व ]।

( शकुन्तला—सव्रीडं वन्दनां करोति )।

कण्वः—वत्से !

ययातेरिव शर्मिष्ठा भर्त्तुर्बहुमता भव।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ६ ॥

---

क्षौमयुगलं = कौशेयवस्त्रयुग्मम्। आनन्देन बाष्पं परिवहति तच्छीलेन = हर्षाश्रूणि परिमुञ्चता। लोचनेन = नयनेन-उपलक्षितः। परिष्वजमान इव = आलिङ्गन्निव। समुदाचारम् = उचितमाचारम्। उत्थानासनप्रणामादिकम्। प्रतिपद्यस्व = स्वीकुरु। विधेहि।

ययातेरिति। ययातेः = प्रसिद्धस्य सोमवंशीयस्य राज्ञः। शर्मिष्ठादेवयानी-नामकभार्याद्वयवतः—शर्मिष्ठेव, त्वमपि अनेकभार्यस्य—पत्युः = दुष्यन्तस्य। बहुमता=प्रिया—भव।

किञ्च–सा = शर्मिष्ठा, पूरुमिव = तन्नामकं सम्राजं पुत्रमिव। त्वमपि सम्राजं= चक्रवर्त्तिनं। पुत्रं = तनयमवाप्नुहि। [ उपमा। क्रमो नाम गर्भाङ्गम्-'तत्त्वो-

---

गौतमी—हे पुत्रि ! देख, जिसके नेत्रों से आनन्दाश्रु बह रहे हैं, और जो अश्रुप्लुत नेत्रों से ही मानों तुझे छाती से लगाकर वात्सल्य से तेरा आलिङ्गन कर रहे हैं, ऐसे तेरे पिता कण्व तेरे सामने उपस्थित है, अतः तूं उचित अभ्यु-त्थान-प्रणाम आदि आचार का पालन कर उनका संमान कर। अर्थात्–इन्हें उठकर प्रणाम कर।

[ शकुन्तला—लज्जित भाव से वन्दना ( प्रणाम ) करती है ]।

कण्व—हे वत्से ! जैसे पूर्वकाल में राजा ययाति के शर्मिष्ठा रानी बहुमता थी, वैसे ही तूं अपने पति दुष्यन्त की बहुमता ( अत्यन्त प्यारी ) हो। और

**गौतमी**—जादे ! वरो क्खु एसो, ण आसिसो ।

[ जाते ! वरः खल्वेषः, [1]नाऽऽशीः ] ।

**कण्वः**—वत्से ! इतः सद्योहुतानग्नीन् प्रदक्षिणीकुरुष्व ।

( सर्वे—तथा कारयितुं परिक्रामन्ति ) ।

**कण्वः**—( [2]ऋक्छन्दसाऽऽशास्ते ) [2]वत्से !

अमी वेदिं परितः क्लृप्तधिष्ण्याः,
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।

---

पलब्धिरिष्टस्य क्रम इत्यभिधीयते'—इत्युक्तलक्षणं दर्शितम् । 'आशीरिष्टजनाऽऽशंसे'ति नाम्स्यालङ्कारोऽपि आशीर्दर्शितः ] ॥ ६ ॥

वरः=वरदानमिदम् । वरप्रदानञ्चाऽवश्यफलदं । नाशीः=केवलं शुभप्रार्थनामात्रं नेदम् ।

सद्यो हुतान्=इदानीमेव विधिना सन्तर्पितान् । ऋक्छन्दसा=ऋक्छन्दोरचितवाक्येन । अयं पाठः क्वाचित्को, न सार्वत्रिकः ।

असी इति । वेदिं=परिष्कृतभूमिम् । परितः=सर्वतः । क्लृप्तं धिष्ण्यं

---

जैसे ययाति से शर्मिष्ठा ने सम्राट् पूरु को जन्म दिया था, वैसे ही तूं भी दुष्यन्त से चक्रवर्ती पुत्र ( भरत ) को प्राप्त कर ( जन्म दे ) ॥ ९ ॥

गौतमी—हे पुत्रि ! यह इनका वरदान है, इसे केवल आशीर्वाद मात्र ही नहीं समझना ।

कण्व—हे वत्से ! इधर अग्निहोत्र शाला में स्थित सद्यःहुत ( अभी हवन की हुई—) ये तीनों अग्नि विराजमान हैं, इनकी तूं प्रदक्षिणा कर । ( इनकी परिक्रमा कर ) ।

[ सब—शकुन्तला को अग्नियों की परिक्रमा कराने के लिए ले चलती हैं ]।

कण्व—( ऋग्वेद के मन्त्र की छाया से विरचित वाक्य से आशीर्वाद देते हैं— )

वेदि के चारों ओर बिराजमान, समिधाओं से प्रज्वलित एवं देदीप्यमान,

---

१ 'नाऽऽशिषः' पा० । २ अयं पाठः क्वाचित्कः ।

अपघ्नन्तो दुरितं हव्यगन्धै-
वैंतानास्त्वां वह्नयः पावयन्तु ॥ १० ॥

( शकुन्तला—प्रदक्षिणं करोति )।

कण्वः—वत्से ! प्रतिष्ठस्वेदानीम् । ( सदृष्टिक्षेपम्—)
क नु ते शार्ङ्गरव शारद्वतमिश्राः ?।

शिष्यौ—( प्रविश्य—) भगवन् ! इमौ स्वः ।

कण्वः—वत्सौ ! भगिन्याः पन्थानमादेशयतम् ।

---

यैर्येषां वा ते क्लृप्तधिष्ण्याः = रचितनिवासाः । 'धिष्ण्यं स्थाने गृहे' इत्यमरः । समिधः सन्त्येषान्ते—समिद्वन्तः = आहितसमिधः । परिपूर्णेन्धनज्वलिताः । प्रान्ते संस्तीर्णा दर्भा येषां ते—प्रान्तसंस्तीर्णदर्भाः = पर्यन्तनिविष्टकुशाः । हव्यानां= हविषां, गन्धैः दुरितम्=विघ्नम् पापं वा अपघ्नन्तः=हवनीयद्रव्यजातसुगन्धेन पापं नाशयन्तः । अमी=पुरःस्थिताः । वितानस्य इमे वैतानाः=यज्ञसम्बन्धिनः । वह्नयः= आहवनीयगार्हपत्यादयो नाम अग्नयस्त्रयः । त्वां पावयन्तु=पवित्रतां नयन्तु । तव दुरितं नाशयन्त्विति यावत् । [परिकरालङ्कारः । उपजातिविशेषच्छन्दः ] ॥१०॥

इदानीं = सम्प्रति । प्रतिष्ठस्व = याहि । सदृष्टिक्षेपं = विलोक्य । इमौ स्वः= उपस्थितावेव । मार्गम् = पन्थानम् । आदेशयतं = निर्दिशतं । दर्शयतम् ।

---

प्रान्त भाग में चारों ओर जिनके कुशाएं बिछी हुई हैं, ऐसे हव्य गन्ध युत ये वैतानाग्नि=यज्ञ के अग्नि ( दक्षिणाग्नि आहवनीयाग्नि, गार्हपत्याग्नि ) अपने हव्यों (घृत, साकल्य आदि हवनीय पदार्थों )की सुगन्ध से तेरे पापों को और विघ्नों को दूर करके तेरी रक्षा करें ॥ १० ॥

[ शकुन्तला—अग्नियों की परिक्रमा करती है ]।

कण्व—हे पुत्रि ! अब मङ्गलप्रस्थान करो । (अर्थात् जाओ)। ( इधर-उधर दृष्टिपात कर = देखकर–) वे वैदिक विद्वान् शार्ङ्गरव और शारद्वतमिश्र कहाँ हैं?।

दोनों शिष्य—( भीतर आकर ) हे भगवन् ! हम लोग ये उपस्थित हैं। अर्थात् शकुन्तला के साथ हस्तिनापुर जाने को सन्नद्ध हैं।

कण्व—वत्स ! तुम दोनों अपनी बहिन को मार्ग दिखलाओ। अर्थात् ले जाओ।

शिष्यौ—इत इतो भवति ! ।

( सर्वे—परिक्रामन्ति ) ।

कण्वः—भो भोः ! संनिहितवनदेवतास्तपोवनतरवः !—

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या,
नाऽऽदत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम् ।
आदौ वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं, सर्वैरनुज्ञायताम् ॥११॥

---

भवति = हे श्रीमति ! । इत इतः = अमुना पथा त्वमायाहि । परिक्रामन्ति = प्रचलन्ति ।

संनिहिता वनदेवता येषु ते–संनिहितवनदेवताः = वनदेवताधिष्ठिताः ।

पातुमिति । या—शकुन्तला । युष्मासु असिक्तेषु = जलमप्रापितेषु सत्सु । जलमपि=पानीयमपि । प्रथमम्=आदौ । पातुं=ग्रहीतुं । न व्यवस्यति=नेच्छति । या च स्नेहेन = प्रेम्णा । प्रियाणि मण्डनानि यस्याः सा—प्रियमण्डनाऽपि = भूषणप्रियाऽपि सती । भवतां-पल्लवं = किसलयमपि । प्रेम्णा, दयया वा । नाऽऽदत्ते = न गृह्णाति । किञ्च वः = युष्माकं । कुसुमानां प्रवृत्तिः = प्रारम्भस्तस्य समये = काले । आदौ = प्रथममेव, यस्या उत्सवः = आनन्दो, हर्षश्च भवति । सा इयं शकुन्तला, पतिगृहं = भर्तृभवनं । याति = सम्प्रति गच्छति । तत्—

---

दोनों शिष्य—हे भगवति ! ( श्रीमति ! ) इधर से आओ, इधर से ।

[ सब—चलते हैं ] ।

कण्व—हे वनदेवताओं से सदा विराजमान आश्रम के वृक्षों !

जो शकुन्तला—तुमारा जलसे सेचन किए बिना कभी जल भी पहिले नहीं पीती थी, जो-पत्र पुष्पों के बने हुए आभूषणों की प्रिय ( अनुरागिणी-शौकीन ) होती हुई भी, स्नेह से तुमारे कोमल पत्तों तक को नहीं तोड़ती थी, और तुमारे पहिले पहिल फूल आने के समय जो बड़ा भारी उत्सव आनन्द मनाती थी,

( आकाशे— )

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमिताऽर्कमरीचितापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च, शिवश्च पन्थाः ॥१२॥

---

सवः = भवद्भिः पादपैः । अनुज्ञायताम् = अनुमन्यतामियम् । [ समासोक्तिः । अनुप्रासः । काव्यलिङ्गञ्च । शार्दूलविक्रीडितम् ] ॥११॥

आकाश इति ।

"किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवाऽनुक्तमप्येकस्तत्स्यादाकाशभाषितम् ॥"

—इति धनिकोक्तरीत्या विनापात्रमुक्तिप्रत्युक्तिरूपेणेत्यर्थः ।

रम्यान्तर इति । अस्याः = शकुन्तलायाः । कमलिनीभिः हरितानि—तैः—कमलिनीहरितैः = पद्मिनीषण्डहरितायमानैः । सरोभिः = सरोवरैः । रम्यमन्तरं यस्यासौ—रम्यान्तरः = हृद्यमध्यः । छायायुक्ता द्रुमाः—छायाद्रुमास्तैः—छायाद्रुमैः = शीतलच्छायामनोहरैः तरुभिः । नियमितोऽर्कमरीचीनां तापो यत्रासौ = अवरुद्धदिवाकरकिरणसन्तापः । कुशेशयानां रज इव मृदुः रेणुर्यत्रासौ तथा = कमलपरागकोमलधूलिपटलः । अत एव शिवः—सुखदः, शान्तोऽनुकूलश्च पवनो यत्रासौ, तथा—मार्गः—भूयादित्यर्थः । अत्र च पादत्रयगतानि विशेषणानि वायुपरतयाऽपि योजनीयानि । तथा हि—

वायुपक्षेपि हि—कमलसम्बन्धात्, छायाद्रुमसम्बन्धात्, कमलरेणुसम्पर्काच्च

---

वही शकुन्तला—आज पतिगृह जा रही है, आप लोग सब मिलकर इसे अनुमति ( आज्ञा, स्वीकृति ) दीजिए ॥ ११ ॥

[ आकाशवाणी होती है—]

इसका मार्ग बीच बीच में कमल की लताओं से हरे-भरे सरोवरों से मनको हरनेवाला, घनी छाया से युक्त वृक्षों से सूर्य की किरणों के सन्ताप से रहित, कमलों की रज (धूलि) से मृदुल शान्त और अनुकूल मन्द-मन्द

( सर्वे—सविस्मयमाकर्णयन्ति ) ।

शार्ङ्गरवः—( कोकिलशब्दं सूचयित्वा- ) भगवन् !

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यतः प्रतिवचनीकृतमेभिरात्मनः ॥ १३ ॥

---

सौरभ-शैत्य-मान्द्यानि बोध्यानि । एवमेव मार्गपक्षेऽपि च-शैत्य-सौरभ-मार्दवादीनि यथायथं ज्ञेयानि । इत्थञ्चोक्तिभङ्गया मार्गे एवाऽस्याः कुशलमिति सूचनात्पतिगृहं प्राप्तायां न सम्प्रति शुभमिति भविष्यदमङ्गलसूचना । [ तुल्ययोगिता । परिकरः । काव्यलिङ्गञ्चेत्यादयोऽलङ्काराश्च विभावनीयाः । 'वसन्ततिलका' वृत्तम् ] ॥ १२ ॥

सविस्मयं=साश्चर्यम् । देवताभाषितमेतदिति हि विस्मयः । आकर्णयन्ति= शृण्वन्ति । सूचयित्वा = निर्दिश्य । भगवन् ! = हेकण्व ! ।

अनुमतेति । यतः—कलं=मधुरं, परभृतस्य विरुतं-कोकिलध्वनिः । एभिः= तरुभिः । आत्मनः=स्वस्य । प्रतिवचनीकृतं = स्वोत्तररूपेण प्रकटितं । ततः-वने वासेन बन्धुभिरिव बन्धुभिः=वने वासाद्बन्धुतां प्राप्तैः । तरुभिः=पादपैः । इयं शकुन्तला—अनुमतं गमनं यस्याः सा—अनुमतगमना=अनुज्ञातपतिगृहगमना एव । [ परभृतरुते प्रतिवचनत्वारोपस्य प्रकृतगमनोपकारकतया परिणामोऽत्राऽलङ्कारः । अपरवक्त्रं चच्छन्दः ] ॥ १३ ॥

---

पवन से सुखप्रद, और कल्याणकारी हो । अर्थात्—'मार्ग में इसे किसी प्रकार का भी कष्ट न हो' । यह वृक्षों की ओर से, तथा वनदेवताओं की ओर से, शकुन्तला को आशीर्वाद है ॥ १२ ॥

[ सब—आश्चर्य चकित हो सुनते हैं ]— ।

शार्ङ्गरव—( कोकिल के शब्द की सूचना देकर- ) हे भगवन् ! वन में साथ ही रहने से बन्धु भाव को प्राप्त इन वृक्षोंने शकुन्तला को पति गृह जाने की अनुमति दे दी है, क्योंकि—इन्होंने मधुर एवं मनोहर कोकिल का शब्द ही अपने उत्तर में मानो प्रकाशित किया है । ( कहा है ) ॥ १३ ॥

गौतमी—जादे ! ण्णादिजणसिणिद्धाहिं अणुण्णादगमणासि तवोवणदेवदाहिं । ता पणम भअवदीणं ।

[ जाते ! ज्ञातिजनस्निग्धाभिरनुज्ञातगमनाऽसि तपोवनदेवताभिः, तत्प्रणम भगवतीः ] ।

शकुन्तला—( सप्रणामं परिक्रम्य, जनान्तिकं– ) हला पिअंवदे ! अज्जउत्तदंसणोस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खदुक्खेण चलणा मे पुरोमुहा ण णिवडन्ति ।

[ हला प्रियंवदे ! आर्यपुत्रदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्या दुःख-दुःखेन चरणौ मे पुरोमुखौ न निपततः ] ।

प्रियंवदा—ण केवलं तुमं ज्जेव तवोवणविरहकादरा, तुए उवत्थिदविओअस्स तवोवणस्सवि अवत्थं पेक्ख दाव—।

[ न केवलं त्वमेव तपोवनविरहकातरा, त्वयोपस्थितवियोगस्य तपोवनस्याप्यवस्थां प्रेक्षस्व तावत्— ] ।

---

ज्ञातिजन इव स्निग्धाभिः—ज्ञातिजनस्निग्धाभिः = बन्धुवर्गवत्त्वय्यनुरागशालिनीभिः । भगवतीः = तपोवनदेवताः । परिक्रम्य=किञ्चिद्गमनं नाटयित्वा । जनान्तिकम् = त्रिपताककरेण अन्यान् निवार्य केवलं सखीं प्रत्येवाहेत्यर्थः । आर्यपुत्रस्य=दुष्यन्तस्य । दर्शने=प्रेक्षणे । उत्सुकाया अपि=उत्कण्ठिताया अपि । आश्रमपदं=तपोवनभूमिं । दुःख-दुःखेन=कृच्छ्रादपि । पुरोमुखौ=गन्तव्यदिगभिमुखं । न निपततः=न गच्छतः । स्वजनजन्मभूमिस्नेहसम्बन्धादिति भावः । तपोवनविर-

---

गौतमी—हे पुत्रि ! वन में रहने से हमारे में बन्धु भाव से स्नेहान्वित हो इन वन देवियोंनें तुम्हें जाने की अनुमति दी है । अतः इन भगवती वनदेवियों को तूँ प्रणाम कर ।

शकुन्तला—( प्रणाम करती हुई, कुछ चलकर, अलग से प्रियंवदा से– ) हे सखी प्रियंवदे ! आर्यपुत्र (=प्राणप्यारे–अपने पति) को–देखने के लिए मेरे उत्सुक होने पर भी, इस आश्रम को छोड़ते हुए, अति दुःख से मेरे पैर आगे को नहीं पड़ रहे हैं ।

प्रियंवदा—इस आश्रम के वियोग से केवल तूं ही दुःखी और व्याकुल

उग्गिण्णदब्भकवला मेई, परिच्चत्तणत्तणा [2]मोरी।
ओसरिअपाण्डुपत्ता मुअन्ति अस्सुं विअ लदाओ ॥ १४ ॥

[ उद्गीर्णदर्भकवला [1]मृगी, हरित्यक्तनर्त्तना [2]मयूरी।
अपसृतपाण्डुपत्रा मुञ्चन्ति अश्रु इव लताः ॥ १४ ॥ ]

**शकुन्तला**—( स्मृत्वा— ) ताद ! लदावहिणीं दाव माहवीं आमन्तइस्सं।

[ तात ! लताभगिनीं तावन्माधवीमामन्त्रयिष्ये ]।

---

हेण कातरा=व्याकुलीभूता। उपस्थितो वियोगो यस्य तस्य—उपस्थितवियोगस्य=सम्भावितवियोगस्य।

उद्गीर्णेति। उद्गीर्णो दर्भाणां कवलो याभिस्ताः—उद्गीर्णदर्भकवलाः=त्यक्तकुशग्रासाः। मृग्यः=हरिण्यः। मृगाश्च। मृगी=हरिणी पाठान्तरे-परित्यक्तं नर्त्तनं यैस्ते—परित्यक्तनर्त्तनाः=वर्जितनर्त्तनाः। मयूराः=बर्हिणाः। 'मयूरी'ति पाठान्तरम्। अपसृतानि पाण्डूनि पत्राणि यासां ताः—अपसृतपाण्डुपत्राः=पतितपरिणामपाण्डुपत्राः। ( तेन व्याजेन ) लताः=वल्ल्यः। अश्रूणीव मुञ्चन्तीति योजना [ उत्प्रेक्षा। मृगादिषु बन्धुव्यवहारसमारोपात्समासोक्तिश्च ] ॥ १४ ॥

लता एव भगिनी, तां=भगनीस्थानीयां लताम्। आमन्त्रयिष्ये=प्रेक्षिष्ये।

---

हो रही है-यह बात नहीं है, किन्तु उपस्थित तेरे इस वियोग के कारण इस आश्रम की भी कैसी दशा हो रही है, देख—

ये हरिण और हरिणियाँ-अपने मुख से कुशा के ग्रास को भी छोड़कर दुःखित हो खड़ी हैं। और इन मोरों और मयूरियों ( मोरनी ) ने—नाचना ही छोड़ दिया है। और ये लताएं भी-अपने पुराने पत्तों को छोड़ने के बहाने मानों आंसू बहा रही हैं। ( मानों रो रही हैं ) ॥ १४ ॥

**शकुन्तला**—( याद करके कण्व से- ) हे तात ! मैं अपनी लता-बहिन माधवी ( वासन्ती लता ) से भी मिल आऊं ?। ( अर्थात्—उससे भी पूछ आऊं। उससे भी अनुमति ले आऊं )।

---

१ 'मृगाः' इति, 'मृग्यः' इति च पा०। २ 'मयूराः' इति 'मयूरः' इति च पा०।

कण्वः---वत्से ! अवैमि ते तस्यां सौहार्दम्[1] । इयं सा [2]दक्षिणेन पश्य ।

शकुन्तला---( उपेत्य, लतामालिङ्ग्य--) लदावहिणी ! ( [3]चूदसंगदापि ) पच्चालिङ्गस्स मं (इदो गदेः) साहामएहिं बाहुहिं। अज्ज पहुदि दूरवत्तिणी क्खु दे भविस्सं । ताद ! अहं विअ इअं तुए चिन्तणीया ।
[ लताभगिनि ! ( चूतसङ्गता[3]ऽपि ) प्रत्यालिङ्ग मामितो[3] गतैः शाखामयैर्बाहुभिः[4] । अद्य प्रभृति दूरवर्त्तिनी खलु ते भविष्यामि । तात ! अहमिवेयं त्वया चिन्तनीया ] ।

कण्वः---वत्से !

सङ्कल्पितं प्रथममेव मया त्वदर्थं
भर्त्तारमात्मसदृशं स्वगुणैर्गताऽसि ।

---

तस्यां = माधवीलतायाम् । सौहार्दं = स्नेहम् । पाठान्तरे च—सोदर्यस्नेहं = सहोदरभ्रातृस्नेहं । दक्षिणेन = दक्षिणदिशि । 'वर्त्तते' इति शेषः ।

चूतसङ्गताऽपि=सहकाराश्लिष्टापि । प्रत्यालिङ्ग=परिष्वजस्व । इतो गताभिः= मदभिमुखं प्रवृद्धाभिः । शाखाबाहाभिः = शाखामयैर्भुजैः । दूरवर्त्तिनी = दूरतरनगरवर्त्तिनी । त्वया विरहिता । इयं = लताभगिनी । त्वया=कण्वेन । चिन्तनीया= अवेक्षणीया ।

सङ्कल्पितमिति । मया प्रथममेव = आदावेव, त्वदर्थं-सङ्कल्पितं =

---

कण्व—हे पुत्रि ! तेरा उस वासन्ती लता में कितना प्रेम है, यह मैं जानता हूं । यह देख, दक्षिण की ओर यह वासन्ती लता है ।

शकुन्तला—( वासन्ती लता के पास जाकर उसे आलिङ्गन कर ) हे लता बहिन ! तूं ( अपनें पति आम से सङ्गत होती हुई भी ) मेरी ओर फैली हुई अपनी शाखा रूपी इन भुजाओं से मुझे आलिङ्गन कर । अब आज से मैं तेरे से दूर हो जाऊंगी । ( कण्व से--) हे तात ! आप इसका मेरे ही तरह पालन पोषण करें और इसका मेरी ही तरह पूरा २ ध्यान रखें ।

कण्व—हे वत्से ! पहिले तो तेरे लिए योग्य वर की मुझे चिन्ता थी, सो

---

१ 'सोदर्यस्नेहम्' पा० । २ 'दक्षिणे' पा० । ३ 'इतोगतैः' क्वचित् । ४ 'बाहाभिः' ।

अस्यास्तु सम्प्रति वरं त्वयि वीतचिन्तः
कान्तं समीपसहकारमिमं करिष्ये ॥१५॥

—तदितः प्रस्थानं प्रतिपद्यस्व ।

शकुन्तला—( सख्यावुपेत्य— ) हला ! एसा दोण्णं पि वो हत्थे णिक्खेवो ।

[ हला ! एषा द्वयोरपि वां हस्ते निक्षेपः ! ]

---

चिन्तितम् । आत्मनः सदृशं = स्वयोग्यभर्त्तारं । स्वगुणैरेव = स्वसौभाग्यादिभिरेव गुणैः। गताऽसि=त्वं स्वत एव प्राप्तासि । तु=पुनः। त्वयि वीता चिन्ता यस्यासौ-वीतचिन्तः=अपगतचिन्तः सन् । अहं सम्प्रति = इदानीम् । इमं समीपसहकारं= इमं निकटस्थं चूतम् । अस्याः = माधवीलतायाः । कान्तं = भर्त्तारं । करिष्ये= करिष्यामि । [ समासोक्तिः । काव्यलिङ्गम् । समः । अन्योन्यमित्यादयोऽलङ्काराः। 'वसन्ततिलक वृत्तम्' ] ॥ १५ ॥

इतः = अस्या दिशि । प्रतिपद्यस्व = समालम्बस्व । द्वयोः = सख्योः । हस्ते= पाणौ । निक्षेपः = न्यासः । परिरक्षणार्थं भवद्धस्ते इयं मया निवेशिता, भव-

---

तूं स्वयमेव योग्य वर के हाथ में अपने ही रूप सौन्दर्य आदि गुणों से चली गई है । अतः अब तेरी तो चिन्ता मुझे रही नहीं है । अब इस माधवीलता का भी इस पार्श्ववर्त्ती आम्र के वृक्ष साथ विवाह कर दूंगा । अर्थात्—इस आम्र वृक्ष को ही इस लता का वर ( पति ) बना दूंगा ॥ १५ ॥

अतः—अब तूं निश्चिन्त होकर यहाँ से प्रस्थान कर ।

शकुन्तला—( सखियों के पास जाकर ) हे सखियों ! इस माधवी लता को तुम दोनों के हाथ में धरोहर के रूप में छोड़ जाती हूं । अर्थात्—इसकी रक्षा का भार मैं तुम दोनों पर छोड़ती हूँ ।

---

१ 'चूतेन संश्रितवती नवमालिकेय—
मस्यामहं त्वयि च सम्प्रति वीतचिन्तः ।' पा० ।

सख्यौ—अअं जणो दाणिं कस्स हत्थे समप्पिदो ?।

( —इति बाष्पं विसृजतः )।

[ अयं जन इदानीं कस्य हस्ते समर्पितः ? ]।

कण्वः—अनसूये ! प्रियंवदे ! अलं रुदितेन। ननु भवतीभ्यामेव शकुन्तला स्थिरीकर्त्तव्या।

( इति सर्वे परिक्रामन्ति )।

शकुन्तला—( विलोक्य— ) ताद ! एसा उडअपज्जन्तचारिणी गब्भहारमन्थरा मिअवहू जदा सुहप्पसवा भविस्सदि तदा मे कम्पि पिअणिवेदअं विसज्जइस्ससि, मा एदं विसुमरिस्ससि !

[ तात ! एषा उटजपर्य्यन्तचारिणी गर्भभारमन्थरा मृगवधूर्यदा सुखप्रसवा भविष्यति, तदा मे कमपि प्रियनिवेदनकं विसर्ज्जयिष्यसि। मा इदं विस्मरिष्यसि ]।

---

तीभ्यां परिरक्षणीयेति यावत्। अयं जनः = सखीजनः। भवतीभ्यामेव = युवाभ्यामेव। स्थिरीकर्त्तव्या=सान्त्वनीया।

परिक्रामन्ति = गच्छन्ति। उटजस्य = पर्णशालायाः, पर्यन्ते = समीपे चरितुं शीलमस्याः सा। गर्भभारेण मन्थरा = गर्भभारमन्दगमना। मृगवधूः = हरिणी। सुखेन प्रसवो यस्याः सा, तथा = सुखप्रसूतिः। निवेद्यते अनेनासौ निवेदनः। प्रियस्य निवेदन एव निवेदनकः = शुभसूचको जनः। तं विसर्जयिष्यसि =

---

दोनों सखियाँ—और हे सखि ! हम लोगों को किसके सहारे छोड़कर जा रही हो ?। ( दोनों आंसू बहाती हैं )।

कण्व—हे अनसूये ! हे प्रियंवदे ! तुम लोग रोओ मत। तुम लोगों को तो शकुन्तला को ही धीरज देना चाहिए, उलटे तुम लोग ही रो रही हो !।

( सब—चलते हैं )।

शकुन्तला—( देखकर ) हे तात ! कुटी के पास फिरती हुई, गर्भ भार से क्लान्त, यह मृगी जब सुख से प्रसव कर ले, तो इस प्रिय वृत्तान्त को सुनाने के लिए मेरे पास किसी शुभ समाचार पहुँचाने वाले दूत को अवश्य भेजिएगा। यह बात आप भूल मत जाइएगा।

**कण्वः**—वत्से ! नेदं विस्मरिष्यामि ।

**शकुन्तला**—( गतिभेदं रूपयित्वा- ) अम्मो ! को णु क्खु एसो पदक्कन्तो विअ मे पुणो पुणो वसणन्ते सज्जदि ? ।

( —इति परावृत्त्याऽवलोकयति ) ।

[ अम्मो ! को नु खल्वेष पदाक्रान्त इव मे पुनः पुनर्वसनान्ते सज्जते ? ] ।

**कण्वः**— वत्से !

> **यस्य त्वया व्रणविरोपणमिङ्गुदीनां**
> **तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।**
> **श्यामाकमुष्टिपरिवर्द्धितको जहाति**
> **सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १६ ॥**

---

प्रेषयिष्यसि । एतेन प्रसवादनन्तरं निवेदकेन दुष्यन्तेन सङ्गमः सूच्यते । गतिभङ्गं = गमनरोध । पादाक्रान्तः = पादलग्न इव । वसनान्ते = पटाञ्चले । एतेन भाव्यमङ्गलं सूच्यते ।

**यस्येति** । यस्य—कुशसूच्या विद्धे = क्षते । मुखे । व्रणस्य = क्षतस्य । विरोपणं = विरोहणम् । इङ्गुदीनां = वृक्षविशेषाणां । तैलं = स्नेहः । त्वया न्यषिच्यत = निक्षिप्तं । श्यामाकानां = मुन्यन्नविशेषाणां—मुष्टिभिः परिवर्द्धितकः=

---

**कण्व—नहीं, नहीं, इसे मैं नहीं भूलूंगा । इस शुभ समाचार को पहुंचाने के लिए तेरे पास जरूर किसी को भेज दूँगा ।**

**शकुन्तला—( अपनी गति के अवरोध का अभिनय करती हुई ) अरी मैया री ! यह मेरे पैरों में बार-बार आता हुआ कौन मेरे कपड़ों में बार २ लिपट रहा है ! । ( घूमकर देखती है ) ।**

**कण्व—हे पुत्रि ! जिसके मुख क कुशा की सूची ( तीक्ष्ण अग्रभाग ) से विद्ध ( विक्षत ) हो जाने पर तैने घाव भरने वाला इङ्गुदी का तैल सींचकर जिसका व्रण ठीक किया था और श्यामाक ( सामा, कूट ) की मुट्ठियाँ दे देकर**

शकुन्तला---वच्छ ! किं मं सहवासपरिच्चाइणीं अणुबन्धेसि। णं अचिरप्पसूदोवरदाए जणणीए विणा जधा मए वड्ढिदो सि तधा दाणिंपि मए विरहिदं तादो तुमं चिन्तइस्सदि। ता णिउत्तस्स।

( ---इति रुदती प्रस्थिता )।

[ वत्स ! किं मां सहवासपरित्यागिनीमनुबध्नासि[1]। ननु अचिर-प्रसूतोपरतया जनन्या विना यथा मया वर्द्धितोऽसि, तथा इदानीमपि मया विरहितं तातस्त्वां चिन्तयिष्यति। तन्निवर्त्तस्व ]।

---

पालितः। कृतकश्चासौ पुत्रश्च---पुत्रकृतकः = पुत्रस्थानीयः। सोऽयं मृगः। ते पदवीं = पन्थानम्। न जहाति = न परित्यजति। [ स्वभावोक्तिः, अनुप्रासः। 'वसन्ततिलकम्' ]॥ १६ ॥

सहवासपरित्यागिनीं=तव सहवासं विहाय गच्छन्तीम्। अनुबध्नासि = अनुसरसि। वृथैव किं स्नेहबन्धमनुबध्नासि। अचिरं प्रसूतया च तया उपरतया च अचिरप्रसूतोपरतया = अचिरप्रसूतयैव मृतया। जनन्या = मात्रा। मया = मातृकल्पया। चिन्तयिष्यति = पर्यवेक्षिष्यते। निवर्त्तस्व = आश्रमपदं याहि।

---

जिसका तूंने पालन किया है, बच्चे की तरह तेरा पाला हुआ, वह हरिण का बच्चा तेरे मार्ग को नहीं छोड़ रहा है, ( तेरे साथ २ ही चल रहा है ), और तेरे पैरों में बार २ लोट रहा है॥ १६॥

शकुन्तला---बच्चे ! तुम लोगों के सहवास के सुख को भी छोड़कर जाने वाली मेरे साथ भी तूं इस प्रकार प्रेम से क्यों आ रहा है ?। जैसे तुझे जन्म देकर ही सद्यः तेरी माता के मर जाने पर तेरी माता के अभाव में मैंने तेरा माता की तरह पालन-पोषण किया था, और तुझे इस प्रकार बड़ा किया था, उसी प्रकार मेरे अभाव में भी तेरा पालन-पोषण तात कण्व करते रहेंगे। और तेरी देख-रेख अच्छी तरह करते रहेंगे। अतः अब तूं लौट जा।

( इस प्रकार रोती हुई प्रस्थान करती है )।

---



१ 'अनुसरसि' पा०।

**कण्वः**—वत्से ! अलं रुदितेन । स्थिरा भव । इतः पन्थानमालोकय ।

**उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्ति**
**[1]बाष्पं कुरु स्थिरतया शिथिलानुबन्धम् ।**
**अस्मिन्नलक्षितनतोन्नतभूमिभागे**
**मार्गे पदानि खलु ते विषमीभवन्ति ॥ १७ ॥**

रुदितेन = रोदनेन । अलं = न प्रयोजनम् । स्थिरा = धैर्यशीला । आलोकय = पश्य ।

उत्पक्ष्मणोरिति । उत्—ऊर्ध्वं-पक्ष्मणी ययोस्तयोः—उत्पक्ष्मणोः = ऊर्ध्वीभूतनेत्रलोमशालिनोः । नयनयोः = लोचनयोः, उपरुद्धा—विषयेषु प्रतिहता, वृत्तिः = वर्त्तनं येन तम्—उपरुद्धवृत्तिं = प्रतिहतदर्शनशक्तिं । बाष्पम् = अश्रुजलं । स्थिरतया = धैर्येण । शिथिलोऽनुबन्धो यस्य तं—शिथिलानुबन्धं = संरुद्धप्रसरं । कुरु = विधेहि । खलु = यतः । अलक्षितो = नतोन्नतो भूमिभागो यया तत्सम्बुद्धौ = ( हे ) अलक्षितनतोन्नतभूमिभागे ! = हे अविदितसमविषमप्रदेशे शकुन्तले ! । अथवा मार्गविशेषणमेतत् । शष्पाद्यावृततयाऽलक्षितसमविषमप्रदेशे । अस्मिन् मार्गे=आश्रमनिकटवर्त्तिनि चिरपरिचितेऽपि मार्गे । ते पदानि= चरणविन्यासाः । विषमीभवन्ति = स्खलन्ति । का कथाऽपरिचितेऽग्रिमे पथि तव स्यादित्याशयः । [ काव्यलिङ्गम् । अनुप्रासः ] ॥ १७ ॥

**कण्व—हे पुत्रि ! रोओ मत । धैर्य धारण करो, और चित्त को स्थिर करो । रास्ता इधर है, इधर देखो ।**

**उन्नत पक्ष्म—नेत्रलोम—( बाफण, बरौनी ) से सुशोभित तेरे नयनों की दृष्टि शक्ति को रोक लेने वाले आँसुओं को—धैर्य से, और चित्त को स्थिर करके हटा । क्योंकि—इस ( अपरिचित एवं ) ऊँचे-नीचे भूभाग वाले मार्ग में तेरे पैर लडखडा रहे हैं, ऊँचे-नीचे पड़ने से डगमगा रहे हैं । अतः रोना बन्द कर ॥१७॥**

१ 'पुमांस्त्वश्रूणि बाष्पम्' इति कशवारुस्यापि बाष्पशब्दः ।

शिष्यौ—भगवन् ! 'ओदकान्तं स्निग्धोऽनुगम्यते' इति श्रूयते। तदिदं सरसीतीरम्। अत्र नः सन्दिश्य प्रतिगन्तुमर्हसि।

कण्वः—तेन हीमां [1]क्षीरिवृक्षच्छायामाश्रयामः।

( सर्वे—तथा नाटयन्ति )।

कण्वः—किंनु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपं सन्देष्टव्यम् ?।

( —इति चिन्तयति )।

---

आ उदकान्तं = जलाशयपर्यन्तं। स्निग्धः = प्रियः। गच्छन् = प्रचलन्। अनुगम्यते = अनुस्रियते। श्रूयते = श्रुत्या प्रतिपाद्यते। सरसीतीरं = सरोवरतीरं। नः = अस्मान्। सन्दिश्य = किं राज्ञे वक्तव्यमित्यादिकमुपदिश्य। प्रतिगन्तु-मर्हसि=निवर्त्तितुमर्हसि। पाठान्तरे—क्षीरप्रधानो वृक्षः-क्षीरवृक्षः। तस्य च्छायां= क्षीरिणो वटादेश्छायाम्। क्षीरिवृक्षपर्यन्तमुदकाधारपर्यन्तं वा प्रियजनानुगम-नस्य श्रुतिसिद्धत्वात्क्षीरिवृक्षोपादानम्। 'ओदकान्तं प्रियं प्रोथमनुव्रजे'दिति हि श्रुतिः। तत्रभवतः = मान्यस्य राजर्षेः। अतिशयेन युक्तं—युक्तरूपं = योग्यम्।

---

दोनों शिष्य—हे भगवन् ! परदेश जाते हुए अपने स्नेहीजनका जलाशय पर्यन्त ही अनुगमन करना चाहिए—ऐसी श्रुति है। और वह सरोवर का तट भी आगया है, अतः हम लोगों को आवश्यक सन्देश देकर आप अब आश्रम को लौट जावें। [ अपना स्नेही जन = बान्धव जब परदेश जाए, तो उसको जलाशय तक साथ जाकर पहुंचाना चाहिए—ऐसा शिष्टाचार है, एवं श्रुति भी है। इसीलिए कण्व भी शकुन्तला को सरोवर तक पहुँचाने आए हैं ]।

कण्व—तो ठीक है, हम लोग इस दूधवाले वृक्ष ( तोड़ने पर जिस वृक्ष से दूध निकले, जैसे—बड, पीपल, गूलर, आक-आदि) की छाया में खड़े हो जाएं।

[ सब—क्षीरी ( वट-पीपल आदि ) वृक्ष की छाया में खड़े होते हैं ]।

कण्व—माननीय राजा दुष्यन्त को उसके अनुरूप एवं उचित क्या सन्देश ( सन्देशा ) दूं ?। ( सोचते हैं )।

---



१ 'क्षीरवृक्ष' पा०।

[ शकुन्तला—( जनान्तिकं— ) हला ! पेक्ख । णलिणीपत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरडदि—दुक्करं अहं करोमित्ति ।

[ हला ! प्रेक्षस्व नलिनीपत्त्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारटति—'दुष्करमहं करोमी'ति ]।

**अनसूया**—सहि ! मा एव्वं मन्तेहि । [सखि ! मैवं मन्त्रयस्व]।

**एसा वि पिएण विणा गमेइ रअणिं विसाअदीहअरं ।**
**गरुअं पि विरहदुक्खं आसाबन्धो सहावेदि ।**

---

(पाठान्तरे-) नलिनीपत्रान्तरितमपि=पद्मिनीदलपिहितमपि । सहचरं=प्रियम्। आतुरा=विरहविह्वला । आरटति=करुणं रौति । पाठान्तरे—आरौति = क्रन्दति। दुष्करं=प्रियं विनाऽवस्थानरूपं कष्टं कर्म । अहं=चक्रवाकी । पत्रान्तरितेऽपि प्रिये यदहं जीवामि तन्मेऽनुचितमिति चक्रवाकी विरौति, अहं पुनः शकुन्तला इयद्दूरवर्त्तिनि प्रियेऽपि जीवामीति महन्मे कठिनं हृदयमिति भावः।

---

[यहाँ से लेकर १८ वें श्लोक तक का यह शकुन्तला—अनसूया संवाद सार्वत्रिक नहीं है। किसी २ पुस्तक में ही देखा जाता है ]।

**शकुन्तला**—( अलग से ) हे सखि ! देख तो, कमलिनी के पत्तों की ओट में हुए अपने सहचर चकवे को नहीं देखकर भी यह चक्रवाकी ( चकवी ) आतुर (व्याकुल) हो बोल रही है, कि—'अपने प्रिय के वियोग में भी मैं जो जी रही हूं—यह मैं अति कठिन कार्य कर रही हूँ'। भावार्थ—केवल पत्ते के ही आड़ में अपने प्राणप्यारे के रहने पर भी चक्रवाकी उसके विरह में विकल हो अपने जीने को भी कठिन कार्य कह रही है; पर देख मैं तो कितनी कठोर हूं—जो अपने प्रिय से इतने दूर रहकर भी जी रही हूं। अर्थात् मेरा हृदय तो वज्र से भी कठोर है, जो प्रिय के विरह में भी नहीं फट रहा है।

**अनसूया**—हे सखि ! ऐसा मत सोच, (ऐसा मत कह)। क्योंकि देख,—यह चकवी तो अपने प्रिय के विना उसके वियोग में भी विषाद और शोक

---

१ [ ] इत आरभ्य १८ श्लोकपर्यन्तं पाठान्तरमेतत्क्वचिन्न ।

[ एषा प्रियेण विना गमयति रजनीं विषाददीर्घतराम् ।
गुर्वपि　　विरहदुःखमाशाबन्धः　　साहयति ] ॥

अनसूया—सहि ! अस्समपदे ण अत्थि को वि चित्तवन्तो जो तए विरहिज्जन्तो ण ताम्मदि । पेक्ख दाव—

[ सखि ! आश्रमपदे नास्ति कोऽपि चित्तवान् यस्त्वया विरहय्यमाणो न ताम्यति । प्रेक्षस्व तावत्—' ] ।

पुडइणि-वत्तन्तरिअं वाहरिओ वि ण हु वाहरेइ पिअं ।
मुह उव्वूडमिणालो तइ दिट्ठिं देइ चक्काओ ॥ १८ ॥

---

मा एवं मन्त्रय=मैवं कथय । एषाऽपीति । एषापि चक्रवाकी प्रियेण विना, विषादेन=दुःखेन । दीर्घतराम्=आयामवतीं त्रियामां नाम रात्रिं गमयति । यतो गुर्वपि दुःखम् । आशाबन्धः = सङ्गमाशातन्तुः । साहयति=मर्षयति। [अर्थान्तरन्यासः] ।

चित्तवान् = चेतनो जीवः । विरहय्यमाणः = सन्त्यज्यमानः । न ताम्यति = न ग्लायति ।

---

से अधिक लम्बी मालूम होने वाली संपूर्ण रात्रि को भी केवल पति मिलन की आशा से ही बिता देती है । क्योंकि अति गुरु विरह के दुःख को भी आशातन्तु सहन करा ही देता है । [चक्रवाक पक्षी और चक्रवाकी प्रायः जलाशयों पर रहते हैं, और दिन भर तो वे साथ ही रहते हैं, पर रात्रि को दोनों का विरह हो जाता है, चक्रवाकी इस तट पर आती है, तो चक्रवाक उस तट पर चला जाता है। चकवा इस तट पर आता है, तो चकवी झट उड़कर उस तट पर चली जाती है । रात भर इसी प्रकार वे विरह में बिताते हैं ] । इसी प्रकार हे सखि ! तूं भी मिलने की आशा से ही इस विरह के काल को बिता दे। घबड़ा मत । शीघ्र ही तेरा भी तेरे पति से संसर्ग होगा ।

अनसूया—हे सखि ! इस आश्रम में ऐसा कोई भी चित्तवान् = प्राणी— नहीं है, जो तेरे विरह से उदास और व्याकुल नहीं हो रहा हो । देख तो—

कमलिनी के पत्तों की ओट में छुपी हुई अपनी प्रिया चक्रवाकी (चकवी)

[ पुटकिनीपत्रान्तरितां व्याहृतोऽपि न खलु व्याहरति प्रियाम्।
[1]मुखोद्व्यूढमृणालस्त्वयि दृष्टिं ददाति चक्रवाकः[2] ॥ १८ ॥ ]

**कण्वः**—'वत्स ! शार्ङ्गरव ! इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्याऽभिधातव्यः—' ।

**शार्ङ्गरवः**—आज्ञापयतु भवान् ।

**कण्वः**—

**अस्मान्त्साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मन-**
**स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम् ।**

---

पुटकिनीति । पद्मिनीपत्रान्तरितां । 'नालीकिनी पुटकिनी विषनालिश्च पद्मिनी'ति उत्पलिनीकोशः । प्रियां = चक्रवाकीं । मुखोद्व्यूढमृणालः = वदनधृतबिससूत्रः । व्याहृतोऽपि=वारंवारमाहूतोऽपि । चक्राह्वः=चक्रवाकः । न व्याहरति= न वाचं प्रतिपद्यते । केवलं त्वयि दृष्टिं ददाति = त्वामेव प्रेक्षते । तिर्यञ्चोऽपि त्यक्तरतयो विरहविक्लवास्त्वां प्रेक्षन्ते, का कथाऽऽश्रमवासिनां सचेतसां जनानामित्याशयः । अनेन भावी दुष्यन्ताऽस्वीकारः सूचितः ॥ १८ ॥

शकुन्तलां पुरस्कृत्य = शकुन्तलाविषये । तामुद्दिश्येति यावत् ।

**अस्मानिति** । संयम एव धनं येषान्ते—संयमधनाः । तान्—संयमधनान् = तपोधनान् । अस्मान्-साधु = सम्यक्तया । विचिन्त्य = विचार्य ।

---

को भी यह चक्रवाक ( चकवा ) उत्तर भी नहीं दे रहा है । केवल अपने मुख ( चोंच ) में कमल के तन्तु ( मृणाल ) को पकड़े हुए एक टक तेरी ही ओर देख रहा है ॥ १८ ॥

**कण्व**—हे वत्स शार्ङ्गरव ! मेरे वचन से शकुन्तला को आगे करके राजा दुष्यन्त से यों मेरा सन्देश कहना, कि—

**शार्ङ्गरव**—आप आज्ञा करिए ।

**कण्व**—हे राजन् ! संयम धन (इन्द्रिय निग्रही) और तपस्यापरायण हमारी

---

१ 'मुखे उद्व्यूढमृणालः' पा० । २ 'चक्राह्वः' इति पाठः क्वाचित्कः ।

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया,
भाग्याधीनमतः परं, न खलु तद्वाच्यं वधूबन्धुभिः ॥१९॥

आत्मनः = स्वस्य । उच्चैः = उन्नतं । कुलं = वंशं च—विचार्य, त्वयि—अस्याः = शकुन्तलायाः । कथमपि = केनापि प्रकारेण, साक्षात् परोक्षं वा, अबान्धवकृतां—न बान्धवैः कृतां = साहजिकीम् । तां = बहुशः त्वयाऽनुभूतां । [1]स्नेहप्रवृत्तिं = स्नेहप्रवाहम्, स्नेहाधिक्यं च,—विचार्य । सामान्या = सर्वस्त्री-साधारणी, या—प्रतिपत्तिः = गौरवम् । 'प्रतिपत्तिः पदे प्राप्तौ प्रवृत्तौ गौरवेऽपि च'ेति विश्वः । तत्पूर्वकं=सर्वसाधारणगौरवपूर्वकं तु, त्वया दारेषु=स्वकीयभार्यासु, इयं = शकुन्तला । दृश्या = दर्शनीया । गणनीया । अतः परम् = इतोऽधिकं प्रधानमहिष्यादिपदन्तु । भाग्यायत्तं = भाग्याधीनं । तत—वन्धूबन्धुभिः = अस्माभिः कन्यापक्षीयैः । न खलु वाच्यं = नैव किल कथनीयं । प्रधानपदन्तु स्त्रीणां स्वभाग्याधीनमित्याशयः । [ काव्यलिङ्गम् । अप्रस्तुतप्रशंसा । अनुप्रासः । शार्दूलविक्रीडितम् ] ॥ १९ ॥

प्रतिष्ठा और मानमर्यादा को अच्छी तरह समझकर, तथा अपने उच्च कुल की ओर भी देखकर, तथा तुमारे में (इस) शकुन्तला की अपने बन्धु-बान्धवो से नहीं कराई हुई,अतएव स्वाभाविक इस विशिष्ट प्रीति को भी देखते हुए, इस शकुन्तला को अपनी और स्त्रियों के बराबर ही समझना" यही मेरा कहना है । इससे आगे तो (विशिष्ट'देवी' पद प्रदान आदि तो) सब भाग्याधीन है । अर्थात् अपने गुणों से यह स्वयं ही इस पदको योग्यतावश प्राप्त कर सकती है । इसके लिए तो स्त्री के बन्धु-बान्धवों को कुछ कहना नहीं चाहिए । अर्थात—मेरी कन्या शकुन्तला को तुम कम से कम उसी प्रकार स्नेह से रखना, जिस प्रकार तुम अपनी और पत्नियों को रखते हो । इससे अधिक 'इसे ही महारानी बनाना' यह मैं नहीं कहना चाहता हूं, क्योंकि पति के विशेष स्नेह—और अनुराग, तथा महारानी पद आदि की प्राप्ति तो उसके अपने भाग्य और गुणों के ही अधीन है । अतः उसके लिए कहना तो हमारा व्यर्थ ही है ॥ १९ ॥

१ 'प्रवृत्तिः कथिता वृत्तौ प्रवाहे स्नेहवार्तयोः' इति विश्वः ।

**शार्ङ्गरवः**—गृहीतोऽयं सन्देशः ।

**कण्वः**—( शकुन्तलां विलोक्य— ) वत्से ! त्वमिदानीमनुशासनीयाऽसि, वनौकसोऽपि वयं लौकिकज्ञा एव ।

**शार्ङ्गरवः**—भगवन् ! न खलु कश्चिदविषयो नाम धीमताम् ।

**कण्वः**—सा त्वमितः पतिगृहं प्राप्य—

**शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने,**
**भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।**

---

अनुशासनीया=शिक्षणीया । वनौकसोऽपि=वनवासिनोऽपि । लौकिकज्ञाः=लोकाचारपटवः । अतो लोकाचारं त्वां शिक्षयाम इत्यर्थः । अविषयः = अज्ञातः । सा त्वम्-इतः=आश्रमादस्मात् । पतिगृहं प्राप्य । इदं-'गुरून् शुश्रूषस्वे'त्यादि-अग्रिमश्लोकेन सह संबध्यते ।

शुश्रूषस्वेति । गुरून् = पूज्यान् । पत्युर्जनन्यादीन् । शुश्रूषस्व = सेवस्व । समानः पतिर्यासां ताः—सपत्न्यः । ता एव जनस्तत्र = सपत्नीसमूहे । प्रियसखी-

---

शार्ङ्गरव—भगवन् ! आपके इस सन्देश को हमनें खूब अच्छी तरह समझ लिया है । इसी प्रकार उन्हें हम जाकर कह देगें ।

कण्व—( शकुन्तला की ओर देखकर- ) हे वत्से ! अब मैं तुझे भी कुछ उपदेश ( शिक्षा ) देता हूं । यद्यपि हम बनवासी तापस हैं, पर लोकाचार को भी हम खूब जानते हैं ।

शार्ङ्गरव—हे भगवन् ! आप सदृश बुद्धिमानों के लिए भला कौन ऐसी बात है जो अज्ञात हो सकती है ? । आप तो सर्वज्ञ हैं ।

कण्व—हे पुत्रि ! तू यहाँ से पति के भवन में जाकर—

( १ ) सास, ससुर आदि अपने गुरुजनों ( बड़ों ) की सेवा करना । और ( २ ) अपनी सपत्नियों ( सौतों ) से अपनी प्रिय सखियों की तरह ही व्यवहार करना । ( ३ ) पति के द्वारा किसी समय तिरस्कार करने, या विपरीत आचरण करने पर भी उससे कभी अप्रसन्न और विरुद्ध मत होना । अर्थात् पति पर कोप

भूयिष्ठं भव दक्षिणा परिजने [1]भोगेष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो, वामाः कुलस्याऽऽधयः ॥२०॥
गौतमी वा किं मन्यते ? ।

ष्विव = प्रियसखीवदेव । वृत्तिं = व्यवहारं । कुरु=विधेहि । किञ्च–विप्रकृताऽपि= निराकृताऽपि । 'निकारो विप्रकारः स्या'दित्यमरः । रोषणतया = क्रोधेन । ईर्ष्यया वा । भर्तुः = पत्युः । प्रतीपं = भर्त्तुर्विरुद्धं । मा गमः = मा याहि । किञ्च परिजने = सेवकवृन्दे । भूयिष्ठं = बाढं । दक्षिणा = अनुकूला—भव । भाग्येषु = परमसौभाग्यसम्पत्सु । भोगेष्विति पाठे तु—भोगान् प्राप्येत्यर्थः । अनुत्सेकिनी = अभिमानरहिता, ईर्ष्याविरहिता च-भव । एवं ( सति )—युवतयः = स्त्रियः । गृहिण्याः पदं = स्थानं । गृहिणीत्याख्याम् । यान्ति = लभन्ते । ता एव गृहलक्ष्म्य इत्याशयः । वामाः = इतो विरुद्धाः स्त्रियस्तु । कुलस्य = वंशस्यापि, न पत्युरेव केवलम् । आधयः=पीडाजनिका एव । 'पुंस्याधिर्मानसी व्यथा'इत्यमरः । 'वामौ वल्गुप्रतीपौ च' इत्यमरः । [ रूपकम् । अर्थान्तरन्यासः । 'उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः' इत्युक्तेरुपदेशो नाम नाटकलक्षणं च निर्दिष्टम् । 'शार्दूलविक्रीडितं वृत्तम् ] ॥ २० ॥

स्त्रीणामुचितं स्त्री वेत्तीति गौतमी त्वां किमुपदिशतीत्याह–किं मन्यते इति ।

मत करना । और ( ४ ) अपने परिजनों ( नौकर, चाकर, बन्धु-बान्धव आदि पार्श्ववर्त्ती जनों ) पर सदा अनुकूल भाव रखना, अर्थात् उनपर दया का भाव सदा रखना । ( ५ ) राजोचित सुख भोगों को पाकर किसी से ईर्ष्या और गर्व कभी मत करना । इस प्रकार चलने से (व्यवहार करने से) युवति स्त्रियाँ सुयोग्य गृह-स्वामिनी पद को प्राप्त होती हैं । और इससे विरुद्ध चलने वाली स्त्रियाँ कुल के लिए विपत्ति और पीड़ा देनेवाली होती हैं । अतः तूं सावधान होकर सबके साथ उचित व्यवहार करना । अभिमान, राग, द्वेष, ईर्ष्या आदि दोषों को पास में भी मत आने देना । इस प्रकार चलने से तूं ही घर की मालकिन हो जाएगी ॥२०॥

मेरा तो तेरे को यही उपदेश है । आगे जैसा गौतमी के जचे वही ठीक है ।

१ 'भाग्येषु' इति पा० ।

**गौतमी**—एत्तिओ क्खु बहूजणे उवदेसो। जादे ! एदं क्खु हिअए करेहि, मा विसुमरिस्ससि।

[ एतावान् खलु वधूजने उपदेशः। जाते ! एतत्खलु हृदये कुरु, मा विस्मरिष्यसि ]।

**कण्वः**—वत्से ! एहि परिष्वजस्व मां, सखीजनञ्च।

**शकुन्तला**—ताद ! इदो ज्जेव किं पिअसहीओ णिउत्तिस्सन्ति ?।

[ तात ! इत एव किं प्रियसख्यौ निवर्त्तिष्येते ? ]।

**कण्वः**—वत्से ! इमे अपि प्रदेये, तन्न युक्तमनयोस्तत्र गन्तुम्, त्वया सह गौतमी गमिष्यति।

**शकुन्तला**—( पितुरङ्कमाश्लिष्य— ) कधं दाणिं तादस्स अङ्काइं परिब्भट्टा मलअपव्वदादो उम्मुलिदा चन्दणलदा विअ देसन्तरे जीविदं धारइस्सं ?।

---

सा कमुपदेशं तव युक्तं मन्यत इत्यर्थः। एतावान्=यावान् भवता उपदिष्टः, तावान् पर्याप्त उपदेश इत्याशयः। एतत्=उपदिष्टं कण्वस्य। परिष्वजस्व=आश्लेषं कुरु। इत एव=अस्मादेव स्थानात्। किं मया सह मत्पतिगृहं न गमिष्यत इत्याशयः। इमे अपि=तव सख्यावपि। प्रदेये=परिणेये। अनयोः=

---

गौतमी—ठीक है, नववधुओं को यही उपदेश देना उचित है। बेटी ! इस उपदेश को सदा हृदय में रखना। इसे कभी मत भूलना। इससे तू सदा सुखी रहेगी।

कण्व—हे पुत्रि ! मेरे को तथा अपनी सखियों को आलिङ्गन कर, और अब बिदा ग्रहण कर।

शकुन्तला—हे तात ! क्या यहीं से ये मेरी सखियाँ मुझे छोड़कर वापिस चली जाएगीं ?।

कण्व—हे पुत्रि ! इन दोनों का भी तो विवाह करना है, अतः इन दोनों का तो तेरे साथ जाना ठीक नहीं है। हाँ, तेरे साथ यह गौतमी जाएगी।

शकुन्तला—( पिता की गोद में जा, छाती से चिपटकर ) अब मैं अपने

[कथमिदानीं तातस्याऽङ्कात्परिभ्रष्टा-मलयपर्वतादुन्मूलिता चन्दन-लतेव—देशान्तरे जीवितं धारयिष्यामि ? ]।

कण्वः— वत्से ! किमेवं कातराऽसि ?।

**अभिजनवतो भर्त्तुः श्लाघ्ये स्थिता गृहिणीपदे,**
**विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला।**
**तनयमचिरात्प्राचीवाऽर्कं प्रसूय च पावनं,**
**मम विरहजां न त्वं वत्से ! शुचं गणयिष्यसि ॥२१॥**

---

सख्योः। तत्र = त्वद्भर्त्तृ गृहे। अङ्कम् = उत्सङ्गं। परिभ्रष्टा = च्युता। मलयः = चन्दनद्रुमोद्भवस्थानं पर्वतविशेषः। चन्दनलता च मलयाचलादन्यत्र खलु देशान्तरे न प्ररोहतीति प्रसिद्धम्। 'उत्सङ्गचिह्नयोरङ्कः'—इत्यमरः। एवम् = इत्थं। कातरा = विह्वला।

अभिजनेति। वत्से ! = हे पुत्रि। अभिजनवतः = प्रसिद्धकुलसम्भूतस्य। 'अभिजनाऽन्वयौ' इत्यमरः। भर्त्तुः=पत्युः। श्लाघ्ये = प्रशंसनीये। गृहिणीपदे= महादेवीपदे। स्थिता = अभिषिक्ता सती। अस्य = भर्त्तुः। विभवेन = सम्पत्त्या। गुरुभिः = महनीयैः। कृत्यैः = कर्मभिः। प्रतिक्षणम् = अहर्निशम्। आकुला = व्याकुला। कार्यप्रत्यवेक्षणविह्वला। अचिरात् = शीघ्रमेव। प्राची =

---

पिता ( आप ) की गोद से हटाई जाकर ( दूर होकर )–मलय पर्वत से उखाड़ी हुई चन्दन लता की तरह–दूसरी जगह कैसी जीवित रहूंगी ?। ( चन्दन का पौधा मलयगिरि से उखाड़ कर अन्यत्र ले जाए जाने पर कहीं पर भी नहीं लगता है, किन्तु सूख ही जाता हैं। अतः चन्दन केवल मलयगिरि पर ही होता है, अन्यत्र नहीं )।

कण्व—हे वत्से ! इस प्रकार कातर क्यों होती है ?। क्यों घबड़ाती है !।

हे पुत्रि ! ऊँचे कुल में उत्पन्न अपने पति के संमानित गृहस्वामिनी पद पर आरूढ हो, धन सम्पत्ति, और राज वैभव के अनुकूल अपने पति के नाना-विध गृह कार्यों से ( यज्ञ याग आदि बड़े २ कार्यों से ) प्रति क्षण व्याकुल रहती हुई, प्राचीन ( पूर्व ) दिशा जैसे पवित्र सूर्य को जन्म देती है, वैसे ही

**शकुन्तला**—( पितुः पादयोः पतित्वा— ) ताद ! वन्दामि ।

[ तात ! वन्दे ] ।

**कण्वः**—वत्से ! यदहमिच्छामि तदस्तु ते ।

**शकुन्तला**—( सख्यावुपगम्य— ) सहीओ ! एध, दुवे वि मं समं ज्जेव परिस्सजेध ।

[ सख्यौ ! एतं, द्वे अपि मां सममेव परिष्वजेथाम् ] ।

**सख्यौ**—( तथा कृत्वा— ) सहि ! जइ णाम सो राएसी पञ्चहिण्णाणमन्थरो भवे, तदो से इमं अत्तणो णामधेअङ्किदं अङ्गुलिअअं दंसइस्ससि ।

---

पूर्वा दिग् । अर्कमिव = भास्करमिव । पावन = पवित्रं । चक्रवर्त्तिनं । तनयं = पुत्रं । प्रसूय=उत्पाद्य । मम विरहजां=मद्विरहोत्थाम् । शुचं = शोकव्यथां । त्वं-न गणयिष्यसि = न ज्ञास्यसि । [ काव्यलिङ्गम् । उपमा : समुच्चयः । 'हरिणी वृत्तम्' ] ॥ २१ ॥

यत् = महत्सौभाग्यादिकम् । सर्वाभीष्टसम्पत्सुखम् । एतम् = आगच्छतम् ।

---

समय पर पवित्र, तेजस्वी पुत्र रत्न का प्रसव कर, तूं मेरे विरह से उत्पन्न इस शोक को बिलकुल भूल जाएगी । अर्थात्-तेरे को घरके बड़े २ कार्यों से, पति की सेवा से, तथा पुत्र के लालन-पालन से, क्षण भर की भी छुट्टी नहीं मिलेगी । और तूं मुझे शीघ्र ही भूल जाएगी । अतः घबड़ा मत ॥ २१ ॥

शकुन्तला—( पिता के पैरों में गिरकर, प्रणाम करके ) हे तात ! मैं आप को प्रणाम करती हूं ।

कण्व—हे पुत्रि ! तेरे लिए जो मैं चाहता हूं वह हो । अर्थात् तूं सम्राट् की प्रधान महिषी हो, और चक्रवर्त्ती पुत्र की माता हो ।

शकुन्तला—( दोनों सखियों के पास जाकर ) हे सखियो ! आओ, तुम दोनों एक साथ ही मेरी छाती से लगो । ( मुझे एक साथ आलिङ्गन करो ) ।

दोनों सखियाँ—( एक साथ शकुन्तला की छाती से लिपट कर ) हे

[ सखि ! यदि नाम स राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत्तदाऽस्य इदमात्मनो नामधेयाऽङ्कितमङ्गुलीयकं दर्शयिष्यसि ]।

शकुन्तला—इमिणा वो सन्देसेण कम्पिदं मे हिअअं।

[ अनेन वां सन्देशेन कम्पितं मे हृदयम् ]।

सख्यौ—सहि ! मा भाआहिं। सिणेहो पावमासङ्कदि।

[ सखि ! मा बिभेहि। स्नेहः पापमाशङ्कते ]।

शार्ङ्गरवः—भगवन् ! [1]दूरमधिरूढः सविता, तत्त्वरयाऽत्रभवतीम्।

शकुन्तला—(भूयः पितुरङ्कमाश्लिष्य, आश्रमाभिमुखीभूय च–) ताद ! कदा णु क्खु भूओ तवोवणं पेक्खिस्सं ?।

---

परिष्वजेथाम्=परिश्लिष्यतम्। तया=सहैवालिङ्गय। प्रत्यभिज्ञाने=तव परिचये। मन्थरः=मन्दः। यदि स त्वां-'ममेयं भार्ये'ति न परिचिनोति तदा त्वया तदङ्गुलीयकं तस्मै प्रदर्शनीयमित्याशयः। सन्देशेन=उपदेशेन। पापम्=अमङ्गलम्। दूरम्=बहुल गगनाङ्गणं। सविता=सूर्यः। अधिरूढः=आरूढः।

---

सखि ! यदि वह राजर्षि दुष्यन्त तेरे को पहिचानने में कुछ विलम्ब करें, और वह कदाचित् तुझे न पहिचाने, तो उसको 'दुष्यन्त' इस नाम से अङ्कित यह अंगूठी तूं परिचय के लिए दिखला देना, तो वह तुझे अवश्य पहिचान लेगा।

शकुन्तला—हे सखियो ! तुम्हारे इस सन्देश से तो मेरा हृदय अनिष्ट की आशङ्का से काँप उठा है।

दोनों सखियां—हे सखि ! डर मत। स्नेह सदा पाप की ही शङ्का किया करता है। अतः हमने शङ्कावश यों ही तुम से यह कह दिया है। इसमें भय की कोई बात नहीं है।

शार्ङ्गरव—भगवन् ! सूर्य भगवान् बहुत ऊँचे चढ आए हैं, अतः श्रीमती शकुन्तला से आप चलने की जल्दी करिए।

शकुन्तला—[ फिर पिता की गोद में (–छाती से) लिपटकर, और

---

१ 'युगान्तरं' पा०।

[ तात ! कदा नु खलु भूयस्तपोवनं प्रेक्षिष्ये ? ] ।

कण्वः—वत्से !

भूत्वा चिराय सदिगन्तमहीसपत्नी,
दौष्यन्तिमप्रतिरथं तनयं प्रसूय ।
तत्संनिवेशितधुरेण सहैव भर्त्रा
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥ २२ ॥

[ पाठान्तरे—युगान्तरं = 'युगं हस्तचतुष्केऽपी'ति विश्वाद्धस्तचतुष्टयपरिमितं गगनप्रदेशम् । दिनस्यैकः प्रहरो जात इत्याशयः ] । त्वरय = त्वरया विसृज । भूयः = पुनरपि ।

भूत्वेति । चिराय = बहुवेलं । दिगन्तैः सहितायाः मह्याः = धरित्र्याः । सपत्नी = समानभर्तृका । भूत्वा = चतुरुदधिपर्यन्तभूभागपालकस्य पत्युः प्रिया भूत्वा । अप्रतिरथं = जगदेकवीरं । दौष्यन्ति = दुष्यन्तस्यापत्यं भरतनामकं । तनयं = पुत्रं च । प्रसूय = उत्पाद्य । तस्मिन् संनिवेशिता धूर्येनासौ, तेन = तत्संनिवेशितधुरेण = दौष्यन्तिभरतनिवेशितराज्यभारेण । भर्त्रा=पत्या दुष्यन्तेन सहैव । शान्ते=पवित्रे । अस्मिन् आश्रमे = अस्मिन् तपोवने । पुनः = पुनरपि । पदम् = अवस्थानं । करिष्यसि = विधास्यसि । वानप्रस्थाश्रमयोग्ये कालेऽत्रागमिष्यसीत्याशयः । [ मालादीपकम् ] ॥ २२ ॥

आश्रम की ओर देखकर-] हे तात ! अब मैं इस तपोवन को फिर कब देखूंगी ? । और मुझे आप कब यहाँ बुलाओगे ? ।

कण्व—हे पुत्रि !

तू—बहुत समय तक दशों दिशाओं से युक्त सागर पर्यन्त पृथ्वी की सपत्नी होकर (चक्रवर्त्ती दुष्यन्त की पट रानी होकर), नानाविध राज्य सुखों का उपभोग करके, तथा असमान योद्धा—जगत्प्रसिद्ध वीर पुत्र—भरत को जन्म देकर, उसके ऊपर राज्य का भार देकर, अपने पति के साथ वृद्ध अवस्था में इस शान्त तपोवन में फिर आवेगी ( पुनः यहाँ आवेगी ) ॥ २२ ॥

गौतमी—जादे ! परिहीअदि दे गमनवेळा। ता णिउत्तावेहि पिदरं। (कण्वं प्रति) अधवा चिरेण वि एसा ण णिउत्तिस्सदि, ता णिउत्तदु भवं।

[ जाते ! परिहीयते ते गमनवेला, तन्निवर्त्तय पितरम्। अथवा चिरेणापि एषा न [1]निवर्त्तिष्यते। तन्निवर्त्ततां भवान्।

कण्वः—वत्से ! उपरुध्यते मे तपोऽनुष्ठानम्।

शकुन्तला—तवच्चरणवावारेण णिरुक्कण्ठो तादो, अहं उण उक्कण्ठाभाइणी संवुत्ता।

[ तपश्चरणव्यापारेण निरुत्कण्ठस्तातः, अहं पुनरुत्कण्ठाभागिनी सवृत्ता ]।

---

परिहीयते = अपयाति। गमनवेला = यात्रामुहूर्तः। निवर्तय = मुञ्च। चिरेण = विपुलेन कालेन। एषा—शकुन्तला। न निवर्त्तयिष्यति = त्वां न परिहास्यति। भवान् = कण्वः। उपरुध्यते = अतिवर्त्तते। तदनुष्ठानवेला गच्छतीति यावत्। तपश्चरणव्यापारेण=यज्ञादिकर्मणा। निरुत्कण्ठः=मयि निरक्षेपः। उत्कण्ठाभागिनी = अत्युत्कण्ठाविकला। केवलं ममैव भवति स्नेहो, न भवतो

---

गौतमी—हे पुत्रि ! तेरे गमन का समय बीत रहा है, अतः अब तो तूं अपनें पिता को छुट्टी दे। इन्हें आश्रम में वापिस जाने दे। (कण्व से) अथवा—यह तो बहुत काल तक भी आपको जाने नहीं देगी, ऐसे ही कुछ न कुछ कहती ही रहेगी। अतः आप अब आश्रमको पधारिए।

कण्व—हे पुत्रि ! देख मेरा तपस्या का अनुष्ठान रुक रहा है, और मेरा भजन-पूजन छूट रहा है, अतः मुझे अब जाने दे।

शकुन्तला—तात तो ( आप तो ) तपस्या के व्यापार के कारण मेरे प्रति उदासीन हो रहे हैं, मैं ही अब ऐसी रह गई हूं, जो इस प्रकार उत्कण्ठित ( विरहातुर ) हो रही हूँ। अर्थात्—मेरी आप लोगों को अब क्या चिन्ता है। मुझे ही आप लोगों की अब इस प्रकार चिन्ता करनी पड़ रही है।

---

१ 'निवर्त्तयिष्यति' पा०।

**कण्वः**—वत्से ! [1]मामेवं जडीकरोषि ! । ( निःश्वस्य )—

**अपयास्यति मे शोकः, कथं नु वत्से ! त्वया रचितपूर्वम् ।**
**उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ २३ ॥**

—गच्छ । शिवास्ते सन्तु पन्थानः ।

—इति निष्क्रान्ताः—

( शकुन्तलया सह गौतमी-शार्ङ्गरव-शारद्वतमिश्राः ) ।

---

मयीत्युपालम्भोऽयम् । एवम् = इत्थमुपालम्भदानेन । किं जडीकरोषि = मां व्याकुलयसि किम् ? । काकुरियम् । नोचितमेतत्तवेत्याशयः ।

अपयास्यतीति । वत्से ! त्वया पूर्वं रचितः रचितपूर्वः । तं—रचितपूर्वं= पूर्वमुपकल्पितम् । उजटस्य द्वारे विरूढम्—उजटद्वारविरूढं = पर्णशालाद्वार-प्ररूढम् । नीवाराणां बलिस्तं—नीवारबलिं = नीवारधान्योपकल्पितदेवोपहारं । विलोकयतः = प्रेक्षमाणस्य । मे शोकः । कथं नु = कथमिव । यद्वा कथमपया-स्यति=कथं नु दूरीभविष्यति ? । नैव भविष्यतीत्याशयः । तदलं चिन्तया । नाहं भवतीं विस्मरिष्यामीत्याशय आविष्कृतः । 'विरूढोऽङ्कुरिते जाते' इति मेदिनी । [ काव्यलिङ्गम् ] ॥ २३ ॥

---

**कण्व**—हे वत्से ! तू मुझे यों व्याकुल और हतप्रभ क्यों कर रही है ? ।

( दीर्घश्वास लेकर — )

हे वत्से ! तेरे द्वारा बलिरूप से दिए गए नीवार के (तिन्नी के) चावलों को जो अब कुटी के द्वार के ही आगे उग आए हैं— देख देखकर, तुझे स्मरण करके, मेरा शोक तो बढता ही जाएगा । अर्थात्-द्वार पूजा के लिए बिखेरे गए तिन्नी के चावल जो कुटी के द्वार पर अब उग आए हैं— उनको देख देखकर, तुझे याद कर करके, मेरा शोक प्रति-दिन नया ही होता जाएगा ॥ २३ ॥

अच्छा, हे पुत्रि ! अब जा, तेरे लिए तेरे ये मार्ग कल्याणकारी व सुखप्रद हों।

[ शकुन्तला—के साथ गौतमी एवं शारद्वत और शार्ङ्गरव जाते हैं ] ।

---

१ 'किं मामेवं' पा० ।

सख्यौ--( चिरं विचिन्त्य, सकरुणं- ) हद्धी हद्धी ! अन्तरिदा सउन्तला वणराइहिं ।

[ हा धिक् हा धिक् ! अन्तरिता शकुन्तला वनराजिभिः ] ।

कण्वः--( सनिःश्वासम्- ) अनसूये ! प्रियंवदे ! गता वां सहचरी । निगृह्य शोकावेगं मामनुगच्छतम् ।

( सर्वे—प्रस्थिताः ) ।

उभे--ताद ! सउन्तलाविरहिदं सुण्णं विअ तवोवणं पविसह्म ।

[ तात ! शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशामः ] ।

कण्वः--स्नेहप्रवृत्तिरेवंदर्शिनी । ( सविमर्शं परिक्रम्य- ) हन्त भोः ! शकुन्तलां पतिगृहे विसर्ज्य लब्धमिदानीं स्वास्थ्यम् ।

---

शिवाः = कल्याणप्रदाः । वनराजिभिः = वनश्रेणिभिः । 'श्रेणी लेखास्तु राजयः' इत्यमरः । निगृह्य = अवरुद्धय । अनुगच्छतं = मत्पृष्ठलग्ने भूत्वाऽऽश्रमं प्रति युवां समागच्छतम् । शून्यमिव = उदासीनमिव भासमानं । स्नेहप्रवृत्तिः = स्नेहानुबन्धः । एवं द्रष्टुं शीलं यस्याः सा—एवंदर्शिनी = इत्थंविचारपरा । एवं-भावयित्री । स्नेहबद्धो लोक एव हि एवं पश्यति, वस्तुतो जगति न शून्यं, न च पूर्णं वा किमपीति भावः । सविमर्शं = विचारमभिनीय । स्वास्थ्यं = मनोनिर्वृतिः । निश्चिन्तता । सुखमिति यावत् ।

---

दोनों सखियाँ—(देरतक देखकर बड़ी करुणा से) हाय ! हाय ! अब तो बनराजि ( वन की झाड़ियों की पंक्तियों ) से शकुन्तला हमारी आखों से ओझल हो गई !.!

कण्व—हे अनसूये ! हे प्रियंवदे ! तुम्हारी सखी तो अब गई । अतः तुम दोनों मेरे पीछे २ आओ । आश्रम को चलो ।

[ सब—जाते हैं ] ।

दोनों—हे तात ! शकुन्तला के विना यह तपोवन तो ( जिसमें हम लोग प्रविष्ट हो रहे हैं ) अब शून्य सा मालूम हो रहा है ।

कण्व—स्नेह की प्रवृत्ति ( सम्बन्ध एवं कारण ) से ही तुम्हें ऐसा मालूम

कुतः—

**अर्थो हि कन्या परकीय एव,**
**तामद्य सम्प्रेष्य परिग्रहीतुः।**
**जातोऽस्मि सद्यो विशदान्तरात्मा**
**चिरस्य निक्षेपमिवार्पयित्वा ॥२४॥**

( इति निष्क्रान्ताः सर्वे )।

* इति चतुर्थोऽङ्कः *

अर्थ इति। हि = यतः। कन्या = पुत्री। अर्थः=कन्यारूपं द्रव्यं। परस्यायं-परकीयः = परस्यैव। तां = कन्यां। परिग्रहीतुः=उद्वोढुः पत्युः-पार्श्वे। संप्रेष्य = प्रस्थाप्य। चिरस्य = बहुकाल यावत्। स्वनिकटे स्थापितं। निक्षेपं = न्यासम्। ( 'धरोहर' )। अर्पयित्वा इव = तत् स्वामिने दत्त्वेव। सद्यः = अचिरादेव। विशदः अन्तरात्मा यस्यासौ-विशदान्तरात्मा = प्रसन्नचित्तः। स्वस्थः। अद्य = इदानीं। जातोऽस्मि=अहं निष्पन्नोऽस्मि। चिरेण निष्पन्नोऽस्मीति वा सम्बन्धः। [ उत्प्रेक्षा। 'उपजातिः' ] ॥ २४ ॥

इति श्रीगुरुप्रसादशास्त्रिरचितायामभिज्ञानशाकुन्तलटीकाया-मभिनवराजलक्ष्म्यां चतुर्थोऽङ्कः।

होता है। (विचार करते हुए कुछ चलकर—) अहा ! शकुन्तला को अपने पति के घर भेजकर मैंने आज ही स्वास्थ्य ( चित्त की शान्ति ) प्राप्त किया है। क्योंकि—

कन्यारूपी धन तो दूसरे का ( पति का ) ही है, अतः आज उसको उसके पाणिग्रहीता ( स्वामी ) के पास भेजकर, मैं उसी प्रकार प्रसन्नचित्त और चिन्ता-मुक्त हो गया हूं, जैसे बहुत दिनों से अपने पास रखे हुए दूसरे के निक्षेप ( धरोहर ) को उसके स्वामी को वापिस सौंपकर धनी साहूकार प्रसन्न और चिन्तामुक्त हो जाता है।

[ सब—जाते हैं ]।

चतुर्थ अङ्क समाप्त।

१ 'जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा' इति पाठान्तरम्।

# अथ पञ्चमोऽङ्कः ।

( ततः प्रविशति कञ्चुकी ) ।

कञ्चुकी——अहो बत ! कीदृशीं वयोऽवस्थामापन्नोऽस्मि !

आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।

---

## * अभिनवराजलक्ष्मीः *

कञ्चुकी — वारबाणोऽस्यास्तीति — कञ्चुकी = सौविदल्लः । तल्लक्षणमुक्तं मातृगुप्ताचार्यैः—

'ये नित्यं सत्यसम्पन्नाः, कामदोषविवर्जिताः ।
ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः ।' इति ।
'अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः ।
सर्वकार्यार्थकुशलः 'कञ्चुकी'त्यभिधीयते ।' इति च ।
'जरावैक्लव्ययुक्तेन विशेद्गात्रेण कञ्चुकी ।' इति च ।

'विदुषां संस्कृतभाषा मन्त्रिकञ्चुकिनामपि'—इत्युक्तेः संस्कृत-भाषा चाऽस्य ।

'अहो' इत्याश्चर्ये । 'बते'ति खेदे । कीदृशीं = पूर्वाननुभूतां विसदृशीम् । वयःकृतामवस्थां—वयोऽवस्थां = वार्द्धक्यकृतां दशाम् । विडम्बनाम् । आपन्नः= प्राप्तः । तामेवाह—

आचार इति । राज्ञः = दुष्यन्तस्य । अवरोधगृहेषु=अन्तःपुरगृहेषु । अधि-

---

## * अथ पञ्चम अङ्क *

[ लम्बा चोगा = अचकन पहिने हुए कञ्चुकी = राजा के अन्तःपुर के वृद्ध दर्बारी अफसर का प्रवेश ] ।

कञ्चुकी—राज्य के अधिकारी (अफसर) के लिए यष्टि (छड़ी) का धारण करना

---

१ 'अवहितेन' ।

काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनाय ॥ १ ॥

यावदभ्यन्तरगताय देवाय स्वमनुष्ठेयमकालक्षेपार्हं निवेदयामि। ( स्तोकमन्तरं गत्वा—) किं पुनस्तत् ?। ( विचिन्त्य—) आं ज्ञातम्! 'कण्वशिष्यास्तपस्विनो देवं द्रष्टुमिच्छन्ति' ( इति )।

---

कृतेन=नियुक्तेन मया। आचार इति=प्रक्रियेति, परम्परागता राजभृत्यमर्यादेयमिति च हेतोर्या वेत्रयष्टिः = वेत्रलता। मया गृहीता = आलम्बिता। ( शक्तेनापि मर्यादामात्रमवेक्ष्य प्रक्रियामात्रनिर्वाहार्थं या यष्टिर्यौवने मया धृताऽऽसीत्—)सैव वेत्रलता—सम्प्रति बहुतिथे = बहूनां पूरणे— बहुसङ्ख्ये। काले गते = समये व्यतीते सति। प्रस्थाने विक्लवा गतिर्यस्य तस्य—प्रस्थानविक्लवगतेः = गमनारम्भ एव स्खलितपादस्य। मम—अवलम्बनाय = शरीरधारणाय। जाता = सम्पन्ना। यष्टिं विना पदात्पदमपि चलितुं नाऽहं सम्प्रति शक्नोमीति भावः। [काव्यलिङ्गम्। विशेषः। विभावना। समाहितं। छेकवृत्तिश्रुत्यनुप्रासाः। 'वसन्ततिलकं वृत्तम्' ]॥ १॥

अभ्यन्तरगताय = अन्तःपुरवर्तिने। अकालक्षेपार्हं = विलम्बाऽसहम्। स्वमनुष्ठेयं = राज्ञा स्वयमनुष्ठेयं कार्यम्। मया निवेदनीयं वा। देवाय = राज्ञे निवेदयामि। किं पुनः=किं खलु। तत्=निवेदनीयं। विस्मृतवानस्मीत्याशयः।

---

आचार प्राप्त ( परम्परा से चला आता हुआ एक नियम सा ) है, इसी लिए राजा के महलों का अधिकार प्राप्त करते समय मैंने जिस यष्टि ( छड़ी ) को केवल नियम पालन के लिए ही धारण किया था, वही यष्टि अब बहुत समय बीत जाने पर और मेरे ( वृद्ध हो जाने से ) चलने-फिरने में असमर्थ हो जाने से, मेरे को सहारा देने वाला ( अवलम्बस्वरूप ) एक आवश्यक वस्तु ही हो गई है ॥ १ ॥

अच्छा, अब चलकर मैं अन्तःपुर में गए हुए महाराज दुष्यन्त को, बिलम्ब करने के अयोग्य और उनके ही द्वारा स्वयं कर्त्तव्य आवश्यक कार्य की सूचना उन्हें देता हूँ। ( कुछ दूर चलकर ) हाँ, तो वह आवश्यक कार्य क्या है ?। ( विचार कर—) हाँ, याद आ गया, 'कण्व के शिष्य तपस्वी—मुनि जन महाराज से मिलना चाहते हैं'।

भोः ! चित्रमेतत्—

**क्षणात्प्रबोधमायाति, लङ्घ्यते तमसा पुनः ।**
**निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥ २ ॥**

( परिक्रम्याऽवलोक्य च — ) एष देवः—

**प्रजाः प्रजाः स्वा इव तन्त्रयित्वा,**
**निषेवते श्रान्तमना विविक्तम् ।**
**यूथानि सञ्चार्य्य रविप्रतप्तः**
**शीतं गुहास्थानमिव द्विपेन्द्रः ॥ ३ ॥**

---

भोः—इति विषादे । 'भोस्तु सम्बोधनविषादयो'रिति मेदिनी । चित्रं = विचित्र-मेतत् । तदेवाह—

क्षणादिति । निर्वास्यतः = निर्वाणं यास्यतः । विनाशोन्मुखस्य । प्रदीपस्य= दीपस्य । शिखेव = अर्चिरिव । जरतः = वृद्धस्य-मम । 'प्रवयाः स्थविरो जरन्' इत्यमरः । मतिः = बुद्धिः । क्षणात् = सहसा । प्रबोधं = दीप्तिम् । उन्मेषम् । आयाति = प्राप्नोति । पुनः = क्षणादेव च । तमसा = अन्धकारेण । अज्ञानेन च । लङ्घ्यते = अभिभूयते । [ श्लेषः । उपमा । अनुप्रासः ] ॥ २ ॥

'एष देवः' इति वाक्यं-श्लोकेनाग्रिमेण सम्बध्यते । प्रजा इति । यूथानि=

---

अहो ! यह बड़े ही आश्चर्य की बात है, कि—

बुझते हुए दीपक की शिखा ( लौ ) की तरह ही वृद्ध मनुष्य की बुद्धि भी क्षणभर में तो प्रबुद्ध = कार्यक्षम हो जाती है, और फिर क्षणभर में ही अन्धकार से ( अज्ञान से ) आच्छन्न हो जाती है। अर्थात्—जैसे बुझते हुए दीपक की लौ कभी मन्द पड़ती है, और कभी तेज हो जाती है, इसी प्रकार मेरी बुद्धि भी क्षणभर में लुप्त और क्षणभर में प्रबुद्ध हो जाती है। इसी लिए मैं अपनी बातों को प्रायः भूल जाता हूं, और फिर बहुत प्रयत्न करने पर ही उन्हें स्मरण कर पाता हूँ ॥ २ ॥

( कुछ चलकर, सामनें देखकर-) ये महाराज दुष्यन्त विराज रहे हैं।

ये महाराज दुष्यन्त-अपने पुत्र की तरह ही प्रजाओं का पालन व नियमन

भोः ! सत्यं धर्मकार्य्यमनतिपात्यं देवस्य, तथापि शङ्कितवानस्मी-दानीमेव धर्मासनादुत्थिताय देवाय कण्वशिष्याऽऽगमनं निवेदयितुम्।

गजवृन्दानि। सञ्चार्य=यूथ्यैः सहचरित्वा। तानि स्वस्वकार्यें योजयित्वा वा। रविणा प्रतप्तः=सूर्यकिरणसन्तापसन्तप्तः। शीतलं=शीतं। गुहास्थानं=गह्वरप्रदेशं। द्विपेन्द्र इव=गजराज इव। घर्मादिश्रान्तो यथा गजेन्द्रो विविक्तं स्थानं सेवते तद्वदित्यर्थः। एष देवः=महाराजो दुष्यन्तः। स्वाः प्रजा इव=स्वापत्यानीव। प्रजाः=लोकान्। तन्त्रयित्वा=नियम्य। ताः स्वस्वधर्मे यथावदवस्थाप्य। श्रान्तं मनो यस्यासौ—श्रान्तमनाः=परिश्रान्तचित्तः सन्। विविक्तं=विजनम्। 'विविक्तौ पूतविजनौ' इत्यमरः। सेवते=आश्रयते। [ यमकम्, उपमा चाऽलङ्कारौ। उपजातिर्वृत्तम् ]॥ ३॥

देवस्य=राज्ञः। धर्मकार्यं=धर्मतः प्राप्तं प्रजारक्षणाऽवेक्षणादिरूपम्। कार्यं=कर्त्तव्यं कर्म। यद्यपि—अनतिपात्यं—नोपेक्षणीयं। सर्वं विहायाऽऽदावनुष्ठेयमिति यत्तत्। सत्यम्=यथार्थमेवैतत्। 'सत्यं प्रश्नेऽभ्युपगमे' इति मेदिनी। तथापि—इदानीमेव=सद्य एव। धर्मासनात्=सिंहासनात्। धर्माधिकरणात्, आस्थानमण्डपाद्वा। ( 'दर्बार' )। उत्थिताय=उत्थायागताय। निवृत्ताय। शङ्कितवानस्मि='ऋष्यागमनं निवेदयामि, न वे'ति शङ्काकुलोऽस्मि। सम्प्रति

करके, शान्तमन हो अब इसी प्रकार एकान्त का सेवन कर रहे हैं, जैसे गजयूथों का यथोचित सञ्चालन करके, सूर्य के सन्ताप ( घाम ) से सन्तप्त हो, यूथपति गजराज ठण्डी गिरि गुफा के शीतल स्थान का सेवन करता है। अर्थात्—दर्बार से आकर अब महाराज एकान्त में आराम कर रहे हैं॥ ३॥

यद्यपि यह बात सत्य है, कि धर्म के कार्यों में ( ऋषि मुनियों के सत्कार आदि कार्यों में ) महाराज का कभी विलम्ब नहीं करना चाहिए सब काम छोड़कर भी उनका कार्य एवं आदर सत्कार महाराज को तुरन्त करना चाहिए। अतः ऋषियों के आगमन की सूचना भी शीघ्र ही मुझे दे देनी चाहिए। परन्तु अभी २ धर्मासन ( राज सिंहासन, कचहरी, दर्बार ) से उठकर आए हुए महाराज से कण्व के शिष्यों के आगमन की सूचना देने में मुझे कुछ शङ्का एवं हिचकिचाहट सी हो रही है।

अथवा-कुतो विश्रामो लोकपालानाम् ? । तथाहि—

**भानुः सकृद्युक्ततुरङ्ग एव, रात्रिन्दिवं गन्धवहः प्रवाति ।**
**शेषः सदैवाऽऽहितभूमिभारः, षष्ठांशवृत्तेरपि धर्म एषः ॥ ४ ॥**

( –इति परिक्रामति ) ।

राजकार्यभारेण परिश्रान्तत्वाद्देवस्येत्याशयः । लोकपालानां = जगत्परिपालकानां चन्द्रसूर्यादीनां, राज्ञाञ्च ।

भानुरिति । भानुः = सूर्यः । सकृत् युक्तास्तुरङ्गा यस्य, येन वाऽसौ-सकृद्युक्ततुरङ्गः = युगादावेकवारमेव रथनियुक्ततुरङ्गमोऽद्य यावद्भ्रमत्येव लोकरक्षार्थं सूर्यः । न तदश्वाः कदापि रथाद्वियुज्यन्ते । तदेवं सूर्यो न विश्राम्यतीति भावः । गन्धं वहतीति —गन्धवहः = पवनः । रात्रौ च दिवा च—रात्रिन्दिवम् = अहोरात्रम् । प्रवाति = प्रवहति । किञ्च—शेषः = नागराजः शेषोऽपि । सदैव = सर्वदैव । आहितो भूमेर्भारो येनासौ-आहितभूमिभारः = शिरोधृतधरित्रीमण्डलस्तिष्ठति । न कदापि स्वाधिकारात्क्षणमपि विश्राम्यति । षष्ठोंऽशो वृत्तिर्यस्यासौ, तस्य—षष्ठांशवृत्तेः = षष्ठांशाधिकारिणो राज्ञोऽपि । एषः = प्रजापालनेऽविश्रामः । धर्म एव = अवश्यकर्त्तव्यमेव । राजा कररूपेण प्रजाभ्यस्तदुपार्जितधनात्षष्ठं भागं गृह्णाति । [ मालाप्रतिवस्तूपमा । परिसङ्ख्या । अप्रस्तुतप्रशंसा । श्रुत्यनुप्रासः ।

अथवा— लोकपालों को (राजाओं को, तथा इन्द्र आदि लोकपालों को भी) विश्राम करने का अवकाश ही कहाँ होता है ?। क्यों कि, देखो –

जैसे—भगवान् सूर्य के रथ में घोड़े सदा जुते ही रहते हैं । अर्थात्-सूर्य के रथ के घोड़े कभी खुले ही नहीं हैं, एक बार जब से जुते हैं, बराबर चक्कर ही काट रहे हैं । क्योंकि भगवान् सूर्य दिन रात कहीं न कहीं उदित ही रहते हैं, अतः उनका रथ सदा चलता ही रहता है । और वायु भी दिन रात बहता ही रहता है, वह भी कभी विश्राम नहीं लेता है । भगवान् शेष नागजी भी सदा भूमि के भार को अपने शिर पर धारण ही किए रहते हैं । वेभी कभी उससे विश्राम नहीं लेते हैं । इसी प्रकार प्रजा से आय के छठे भाग के लेने के अधिकारी राजा का भी प्रजा पालन में सदा उद्यत रहना ही धर्म है ॥ ४ ॥

१ 'प्रयाति' इति पाठान्तरम् ।

( ततः प्रविशति राजा, विदूषको, विभवतश्च [1]परीवारः )।

**राजा**—( अधिकारखेदं निरूप्य— ) सर्वः प्रार्थितमधिगम्य सुखी सम्पद्यते जन्तुः। राज्ञान्तु चरितार्थता दुःखोत्तरैव। कुतः—

**औत्सुक्यमात्रमवसादयति**[2] **प्रतिष्ठा,**
**क्लिश्नाति लब्धपरिपालनवृत्तिरेनम्**[3]**।**

'इन्द्रवज्रा वृत्तम्'। ]॥ ४॥

परिक्रामति=किञ्चिदिव प्रचलति। विभवतः=यथाशक्ति। परिवारः=परिजनः। ( 'दर्बारीगण' )। अधिकारेण खेदस्तं=राज्यकार्यकरणात्परिश्रमं। निरूप्य= नाटयित्वा। सर्वः=सकलोऽपि। जन्तुः=लोकः। प्रार्थित=स्वाभिलषितम्। अधिगम्य=प्राप्य। सुखी सम्पद्यते=सुखी भवति। राज्ञान्तु=राज्ञां पुनः। चरितार्थता=अभीष्टसिद्धिः। दुःखमुत्तरं यस्याः सा—दुःखोत्तरैव=दुःखमात्र सारैव। कुतः=कस्मादेतत्। अत आह—

औत्सुक्यमात्रमिति। अस्य=राज्ञः। प्रतिष्ठा=राज्यलाभः। गौरवं वा। औत्सुक्यमेव—औत्सुक्यमात्रम्=तत्तत्पदार्थभोगेच्छामेव। राज्योत्कण्ठामेव वा। अवसादयति=नाशयति। तत्तत्पदार्थलाभे हि तत्तदिच्छाया निवृत्तेः। पाठान्तरे- अवसाययति=निश्चाययतीत्यर्थः। लब्धस्य=प्राप्तस्य राज्यादेः। परिपालनाय= रक्षणाय। वृत्तिः=व्यापारश्च। तदर्थं नानाक्लेशसहनं, महद्युद्धादिकं, रात्रिन्दिवं

( कुछ आगे बढ़ता है )।

[ राजा और विदूषक का, तथा विभवानुसार ( यथाशक्ति ) परिवार ( मुसाहब-दर्बारी गण तथा सिपाही आदि ) का प्रवेश ]।

राजा—( राज-काज करके आने से थकावट का सा अभिनय करता हुआ ) संसार में सभी प्राणी अपनी अभीष्ट वस्तु को पाकर सुखी होते हैं, परन्तु राजाओंकी तो अभीष्ट वस्तु ( राज्य ) की प्राप्ति भी दुखःप्रद ही होती है। क्योंकि—

राज्य की प्राप्ति से जो प्रतिष्ठा=मान मर्यादा प्राप्त होती है, वह तो केवल मनुष्य की उच्चाकाङ्क्षा मात्र को ही शान्त कर सकती है अर्थात् प्रतिष्ठाप्राप्ति

१ 'परिवारः'। २ 'अवसाययति' इति पाठान्तरम्। ३ 'रेव' पा०।

नाऽतिश्रमापनयनाय, यथा श्रमाय,
राज्यं स्वहस्तधृतदण्डमिवाऽऽतपत्त्रम् ॥ ५ ॥

( नेपथ्ये— )

वैतालिकौ—जयति जयति देवः ।

चिन्तावैक्लव्यादिकञ्च । एनं = राजानं । क्लिश्नाति = पीडयति । राज्यस्य फलमिच्छाविनोदमात्रं, परं तद्रक्षणवर्द्धनादौ भूरिप्रपञ्चो, महान् आयासोऽपि च भवतीति—यादृशं सुखं राज्ये नास्ति तादृशं तत्र राज्य-रक्षणे दुःखमेवेति भावः ।

अतश्च-स्वहस्तेन धृतो दण्डो यस्य तत्—स्वहस्तधृतदण्डं = स्वककलितदण्डम् । आतपात्त्रायते इत्यातपत्त्रमिव=छत्त्रमिव—राज्यं—यथा श्रमाय = यादृक् श्रमजनकं भवति । तथा नातिश्रमाऽपनयनाय = तथा न श्रमविगमाय, सुखाय च भवति । राज्ये यथा श्रमस्तथा न सुखं, नैव विश्रान्तिश्चेत्याशयः । [ परिसङ्ख्या । उपमा । काव्यलिङ्गम् । अनुप्रासः । 'वसन्ततिलका वृत्तम्'] ॥५॥

वैतालिकौ = वन्दिनौ । तल्लक्षणमुक्तं भावप्रकाशे—

'तत्तत्प्रहरकयोग्यै रागैस्तत्कालवाचिभिः श्लोकैः ।
सरभसमेव वितालं गायन्वैतालिको भवति ॥' इति ।

से तो केवल मन की इच्छा मात्र ही शान्त होती है, परन्तु मिले हुए राज्य की रक्षा करना तो बड़ा ही कठिन, एवं कष्टप्रद कार्य है । अतः जैसे मनुष्य को (छाते की डांडी हाथ में पकड़े रहने से-) छाते से जितना सुख नहीं पहुंचता है, उससे अधिक कहीं उसे छाते को पकड़े रहने से कष्ट ही होता है, उसी प्रकार राज्य भी जितना सुख नहीं देता है, उससे अधिक परिश्रम व कष्ट ही देता है । अर्थात् छाते के दण्डे ( डाँड़ी ) को पकडे रहने से परिश्रम ही ज्यादा होता है, उसकी अपेक्षा मनुष्य को छाते से सुख तो कम ही मिलता है । वैसे ही राज्य से जितना सुख नहीं मिलता है, उससे अधिक चिन्ता कष्ट व परिश्रम ही उससे होता है ॥ ५ ॥

[ नेपथ्य में— ]

स्तुतिपाठक दो वैतालिक—( बन्दी-चारण-भाट )—महाराज की जय जयकार हो ।

एकः—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः,
प्रतिदिनमथवा ते [1]सृष्टिरेवंविधैव।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं,
शमयति परितापं छायया संश्रितानाम् ॥ ६ ॥

स्वेति। प्रतिदिनं=निरन्तरं। प्रत्यहं। स्वस्य, स्वस्मिन्नात्मनि वा यत्सुखं तत्र निरभिलाषः = स्वसुखेच्छारहितः सन्। लोकहेतोः = लोकसुखार्थमेव केवलं। खिद्यसे = त्वं खेदमनुभवसि।

अथवा—ते=तव खलु। सृष्टिः = उत्पत्तिः। एवंविधैव = परोपकारार्थमेव। पाठान्तरे तु—वृत्तिः = नैसर्गिकं वर्त्तनम्। एवंविधैव = ईदृश्येव। स्वसुखनिरपेक्षं परसुखोत्पादनमेव तव वृत्तिः। हि=यतः—पादपः=वृक्षः। मूर्ध्ना= स्वशिरसा। तीव्रं=तीक्ष्णम्। उष्णं=निदाघं। 'निदाघ ऊष्णोपगम उष्ण उष्मागमस्तपः' इत्यमरः। अनुभवति = सहते। परन्तु — छायया=अनातपेन। संश्रितानाम् = आश्रितानान्तु। परितापं=खेदं। शमयति=दूरीकुरुते। [ काव्यलिङ्गं। दृष्टान्तः। आक्षेपः। अनुप्रासः। 'मालिनी वृत्तम्' ] ॥ ६ ॥

**एक चारण**—महाराज! आप तो अपने सुख की इच्छा किए बिना ही लोकोपकार (प्रजा के पालन) के लिए ही प्रति दिन (सदा) परिश्रम एवं कष्ट उठाते रहते हैं। अथवा—आप की सृष्टि (जन्म) या वृत्ति (स्वभाव) ही इसी कार्य के लिए है। क्योंकि-वृक्ष अपने शिर पर सूर्य के प्रखर सन्ताप को सहन करके भी अपने आश्रितों का सदा अपनी छाया से सन्ताप दूर करता रहता है। भावार्थ-जैसे वृक्ष का जन्म ही परोपकार के लिए है, वैसे ही आप का (राजा का) भी जन्म प्रजा पालन रूपी परोपकारी कार्यों के ही लिए है। अतः इस कार्य में आप को खेद (कष्ट और उद्वेग) नहीं मानना चाहिए। क्योंकि—इसी कार्य के लिए ही तो आप जन्मे हैं और यही आपकी स्वाभाविक वृत्ति भी है ॥ ६ ॥

१ 'वृत्तिरेवंविधैव' पा०।

द्वितीयः—

नियमयसि विमार्गप्रस्थितानात्तदण्डः,
प्रशमयसि विवादं, कल्पसे रक्षणाय।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम,
त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम् ॥७॥

नियमयसीति। त्वम्—आत्तो दण्डो येनासौ—आत्तदण्डः = गृहीतराजदण्डः सन्। विमार्गं—प्रस्थितान्—विमार्गप्रस्थितान् = भिन्नमर्यादान्। नियमयसि = निवारयसि। तेषां—विवादं = विरोधं च। प्रशमयसि = निवारयसि।

किञ्च—रक्षणाय = जगद्रक्षणाय। कल्पसे = त्वं समर्थो भवसि। अतनुषु = बहुलेषु। विभवेषु = धनादिषु—सत्सु। ज्ञातयः = बान्धवाः। 'अधिकारिण' इति शेषः। सन्तु = भवन्तु। नामेति संभावनायाम्। 'संविभक्ता' इति पाठान्तरे—संविभक्ताः = अधिकारिणो भवन्तु नाम इत्यर्थः। तु = परन्तु। प्रजानां=जनानां। बन्धुकृत्यं = रक्षणादिरूपं बन्धुकृत्यं तु। त्वयि=त्वय्येव। परिसमाप्तं=परिनिष्ठितं, निष्पन्नं च भवति। धनिनां धनस्य बान्धवा धनाधिकारिणो भवन्तु नाम, तासां प्रजानां बन्धुकृत्यं पालनावेक्षणादिकन्तु भवानेव करोतीति अहो! भवतो निष्का-

दूसरा वैतालिक (भाट)—महाराज! आप तो कुमार्ग (बुरे रास्ते) पर चलने वाले दुष्टों का राजदण्ड हाथ में धारण कर नियमन (शासन) करते हैं, प्रजा के झगड़ों को दूर करते हैं, उनका ठीक २ निर्णय करते हैं, प्रजा की रक्षा के लिए सदा सन्नद्ध रहते हैं। जिनके पास अधिक धन है, ऐसे धनियों के लिए तो उनके बन्धु-बान्धव कदाचित् उनके काम आते हों तो दूसरी बात है, (या धन के अधिकारी मात्र ही बान्धव होते हैं), परन्तु जनता के बन्धु-बान्धवों का कर्त्तव्य कार्य—रक्षा सहायता आदि तो केवल आप ही से होता है। अर्थात् भाई-बन्धु तो पैसे वाले के पैसे लेने के ही साथी होते हैं, पर जनता के सच्चे माता-

१ 'ज्ञातयः संविभक्ताः' पाठ।

**राजा**—( आकर्ण्य, साश्चर्यम्— ) एतेन कार्यानुशासनपरिश्रान्ताः पुनर्नवीकृताः स्मः।

**विदूषकः**—( विहस्य- ) 'भो ! गोविन्दारअ'त्ति भणिदस्स विसभस्स किं परिस्समो णस्सदि ? ।

[ भोः 'गोविन्दारक' इति भणितस्य वृषभस्य किं परिश्रमो नश्यति ? ]।

**राजा**—( सस्मितं— ) ननु क्रियतामासनपरिग्रहः।

( उभौ-उपविष्टौ, परिजनश्च यथास्थानं स्थितः )।

---

रणोपकारप्रवणतेति भावः। [ व्यतिरेकः। दीपकं। काव्यलिङ्गम्। अनुप्रासः। मालिनी वृत्तम् ] ॥ ७ ॥

कार्यानुशासनेन परिश्रान्ताः—कार्यानुशासनपरिश्रान्ताः—राजकार्यसञ्चालनपरिश्रान्ताः। एतेन=वृक्षादिव्यवहारबोधनेन। नवीकृताः=उत्साहिताः, व्यपगतखेदाश्च कृताः स्मः। गौश्चासौ वृन्दारकश्च—गोवृन्दारकः=वृषभश्रेष्ठः। इति भणितस्य=इत्येवं कृतप्रशंसस्य। वृषभस्य=वृषस्य। किं परिश्रमः नश्यति! किमु श्रमो नश्यति। न नश्यतीत्यर्थः।

---

पिता-भाई-बन्धु तो आप ही हैं, क्योंकि आप ही उनके भाई बन्धुओं के द्वारा किए जाने योग्य देख-रेख सहायता रक्षा आदि सब कार्यों को करते हैं ॥७॥

**राजा**—( सुन कर ) इनकी इस प्रकार की उक्ति से तो राजकार्य से परिश्रान्त भी हम पुनः नए उत्साह से युक्त ( तरो-ताजा ) से हो गए।

**विदूषक**—( हँस कर ) हे मित्र ! वृषभ ( बैल ) को यदि 'तुम तो भाई सब गाय-बैलों में श्रेष्ठ हो' ऐसा प्रशंसा वाक्य कहा भी जाए, तो भी क्या उसका श्रम ( थकावट ) इससे दूर हो सकता है ?। अर्थात् इस प्रशंसा वाक्य से ही तुम्हारा श्रम ( थकावट ) दूर कैसे हो गया ?।

**राजा**—( हँस कर ) आओ, आओ, अपनी जगह पर जाकर आसन पर बैठो। ( राजा और विदूषक बैठ जाते हैं, परिजन लोग यथा स्थान खड़े रहते हैं )।

( नेपथ्ये—वीणाशब्दः ) ।

**विदूषकः**—( कर्णं दत्त्वा- ) भो वअस्स ! सङ्गीदसालब्भन्तरे कण्णं देहि, [1]कलविशुद्धाए [2]गीताए सलसंजोओ सुणीअदि । जाणे तत्थभोदी हंसवदी वण्णपरिचअं करेदि त्ति ।

[ भो वयस्य ! सङ्गीतशालाभ्यन्तरे कर्णं देहि, कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसवती वर्णपरिचयं करोतीति ] ।

आसनस्य परिग्रहः = स्वीकारः । नेपथ्ये = जवनिकाभ्यन्तरम् ।

'गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते' इत्युक्तलक्षणं सङ्गीतं,—तद्यस्यां शालायां भवति सा-सङ्गीतशाला । तस्या अभ्यन्तरं, तस्मिन्-सङ्गीतशालाभ्यन्तरे=अन्तःपुरसङ्गीतविद्याशालायां । कर्णं देहि=सावधानतया श्रृणु । रागाद्याश्रयः सन्दर्भविशेषो गीतिः । तस्याश्च कलविशुद्धस्व विशेषणं । 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुराऽस्फुटे' इत्युक्ताऽव्यक्तमधुरस्वरात्मिका काकली—'कल' इत्युच्यते । विशुद्धा च पञ्चसु गीतिभेदेषु शुद्धा—भिन्ना—गौडी—वेसरा—साधारण्याख्येषु—प्रथमा गीतिः । तल्लक्षणञ्च—'विशुद्धा स्यादवक्रैर्ललितस्वरैः' इति सङ्गीतरत्नाकरे । इत्थञ्च-"कलायाः=अव्यक्तमधुरायाः । किञ्च विशुद्धायाः= अवक्रललितस्वरग्रथितायाः । गीतेः = गीतिविशेषस्य । स्वरसंयोगः = स्वरालाप"-इत्यर्थो बोध्यः । 'ताललयशुद्धाया वीणायाः' इति पाठान्तरे—तालेन = कालक्रियामानेन । लयेन=गीतवाद्यस्वरसाम्येन च । शुद्धायाः=निर्दोषायाः । वीणायाः= वल्लक्याः । स्वरसंयोगः = निषादादिभिः स्वरैः सम्यग्योजना—इत्यर्थो बोध्यः । जाने = अवगच्छामि । हंसवती = तन्नाम्नी राज्ञो भोगिनी कापि ललना । वर्णपरिचयं = स्थाय्यारोह्यावरोह्यसंचारिभेदभिन्नगानक्रियाया अभ्यासम् ।

गानक्रियोच्यते वर्णः, स चतुर्धा निरूपितः ।
स्थाय्यारोह्यावरोही च सञ्चारी चे'ति रत्नाकरोक्तेः ।

[ नेपथ्य में ( पर्दे के पीछे से )—वीणा एवं गीत का शब्द सुनाई देता है ] ।

**बिदूषक**—( कान लगाकर सुनता हुआ ) हे सखे ! सङ्गीत शाला के भीतर तो जरा आप कान लगाइए । देखो, मधुर और मीठी सुरीली तान से

१ 'तालअशुद्धाए' [ तालयशुद्धायाः ] । २ 'वीणाए' [ वीणायाः ] ।

**राजा**—तूष्णीम्भव, यावदाकर्णयामि ।

**कञ्चुकी**—( विलोक्य- ) अन्यासक्तो देवः, तदवसरं प्रतिपालयामि । ( —इत्येकान्ते स्थितः ) ।

( [1]आकाशे—गीयते ) ।

**अहिणवमहुलोलुबो[2] भवं, तह परिचुम्बिअ चूअमञ्जरिम् ।**
**कमलवसदिमेत्तणिव्वुदो महुअर ! विह्मरिदोसि णं कहं ? ॥ ८ ॥**

[ [3]अभिनवमधुलोलुपो[4] भवांस्तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर ! विस्मृतोऽसि एनां कथम् ] ॥ ८ ॥

गीत्यभ्यासे प्रथमतो वर्णपरिचयोहि—सा-रे-ग-म-प-ध नीत्यादिना क्रियते ।

अन्यासक्तः = कार्यान्तरासक्तचित्तः । गीतिश्रवणप्रवणः । अवसरं = मुन्यागमनिवेदनावसरं । प्रतिपालयामि = प्रतीक्षिष्ये । नाट्ये रङ्गमध्ये नेपथ्यभिन्नस्थानमाकाशमुच्यते ।

अभिनवेति । अभिनवे मधुनि, रसे वा लोलुपः = नूतनपुष्परसतृष्णः । 'समौ लोलुपलोलुभौ' इत्यमरः । भवान् = त्वम् । तथा = यथेच्छं । विविधलीलाविलसितैः । चूतमञ्जरीम् = आम्रवल्लरीं । माम् परि=सर्वतोभावेन । परिचुम्ब्य= चुम्बित्वा । समुपभुज्य । मधुकर ! = हे भ्रमर ! मधुप्रियोऽपि भवान् कमले वा

युक्त गीतिका (गानका) के तथा वीणा के सुर-ताल का शब्द सुनाई दे रहा है। मालूम होता है—हंसवती ( कोई एक रानी ) गाने का अभ्यास कर रही है।

राजा—अच्छा, थोड़ा चुप रहो, तो मैं भी सुनूँ ।

कञ्चुकी—इस समय महाराज दूसरे काम में ( गाना सुनने में ) लगे हुए हैं, अतः कुछ देर अवसर ( मौके ) की प्रतीक्षा करूँ।

[ एकान्त में = कोने में—खड़ा हो जाता है ] ।

[ आकाश में (नेपथ्य से अन्यत्र किसी स्थान में)—गीत गाया जारहा है— ]।

हे मधुकर ! ( हे भँवरजी ! ) आप तो नए २ मधु=फूलों के रस से ही

१ 'नेपथ्ये' पा० । २ 'लोहभाविदो' [ लोभभावितः ] । ३ 'अभिनवरस' पा० ।
२ 'अभिनवरसलोलुपः' पा० । ... मधुनः ।

राजा—अहो ! रागपरिवाहिणी गीतिः ! ।

वसतिस्तयैव निर्वृतः-कमलवसतिमात्रनिर्वृतः=कमलोदरनिवासेनैवात्मानं धन्यं मन्यमानः सन् । न तु तत्र मधुरसास्वादवार्त्तापीति, कथं स्वस्वभावमपि पर्यत्यजः-इति मधुकरेति साभिप्रायविशेषणेन लभ्यते । एनां=पूर्वमनुभूतां मधुरमधुरसाविलां चूतमञ्जरीम् । मामिति यावत् । कथं विस्मृतोऽसि ? । मां नवयौवनोद्भेदकाल एव तथा समुपभुज्येदानीं सर्वथा त्वदुपभोगयोग्यां कथं न स्मरसीति हंसवत्या उपालम्भो बोध्यः । कमलवसतिः-कमलानाम्नी काचन राज्ञो भोगिनी, वसुमती वा । तन्मात्रनिर्वृतः=तदासक्तो मां कथं विस्मृतवानसीति च गूढ उपालम्भः । अनेन शकुन्तलाविषयकोऽपि व्यवहारः—'तां शकुन्तलां तथोपभुज्येदानीं राजलक्ष्मीसुखितस्तां कथं न स्मरसी'ति—गम्यते । 'मधुव्रते मधुकरः कामुकेऽपी'ति विश्वः । [ 'रहस्यार्थस्य तूद्भेदः क्षितिः स्या'दित्युक्तेः क्षितिर्गर्भाङ्गम् । राज्ञः शकुन्तलाविस्मरणस्य प्रस्तुतस्य गम्यत्वात्—'गर्भबीजसमुद्भेदादाक्षेपः परिकीर्त्ततः' इति धनिकोक्तेराक्षेपनामकं गर्भसन्ध्यङ्गमिति केचित् ।

तृतीयं पताकास्थानकमेतत्—'अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् । श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते' इति राघवभट्टाः । केचित्प्रथमं पताकास्थानकमेतदित्याहुः । प्रच्छेदकाख्यं च लास्याङ्गम्—'अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना । वीणापुरस्सरं गानं स्त्रियाः प्रच्छेदको मतः' इति विश्वनाथोक्तेः । [ काव्यलिङ्गानुप्रासौ । अपरवक्त्रं वृत्तम्' ] ॥ ८ ॥

रागम्—अनुरागं च परिवहति तच्छीला—रागपरिवाहिणी=रागाऽनुरागबहुला ।

लोभी हो; आपने आम की नई मञ्जरीका (मेरा) नई जवानी में ही इस प्रकार प्रेम से रस-कस का उपभोग करके, उसके साथ ( मेरे साथ ) इस प्रकार आनन्द का उपभोग करके, अब कमल को पाकर ( दूसरी नई नवेली = कमला नामक दूसरी रानी नायिका को पाकर ) मस्त होकर, आनन्द में विभोर होकर, इस बेचारी आम की मञ्जरी को ( अर्थात्—मुझको ) अब कैसे भूल रहे हो ? । हे भँवरजी ! कभी तो इसकी भी ( मेरी भी ) कुछ सुध लिया करो ! ॥८ ॥

राजा—अहा ! राग-रागिनियों से युक्त ( तथा अनुराग से भरी हुई ) यह कैसी मधुर गीति ( गाना ) है ! ।

**विदूषकः**——भो वअस्स ! किं दाव से गीदिआए अत्थो गहीदो भअदा अक्खरत्थो ? ।

[ भो वयस्य ! किं तावदस्या गीतिकाया अपि गृहीतो भवताऽक्षरार्थः ? ] ।

**राजा**——( सस्मितं— ) 'सकृत्कृतप्रणयोऽयं जन' इत्यक्षरार्थः। तदहं देवीं [1]हंसवतीमन्तरेण उपालम्भनमागतोऽस्मि। सखे! माधव्य! मद्वचनादुच्यतां देवी हंसवती,-'सम्यगुपालब्धोऽस्मी'ति ।

---

अनुरागरसप्रस्यन्दिनी । गीतिः=गानभेदः । छन्दोभेदश्च । रागस्य-जलस्य सरसीव-गीतिराधारः । सरोवरे जलमधिकं सद्यथा ततः परवहति तथाऽस्यामपि गीतौ मातुमसमर्थो रागोऽनुरागश्च बहिरपि परिवहतीत्याशयः । अहो रसाऽऽविला गीतिरिति भावः ।

किं तावदिति । अपिगृहीतः=किमु ज्ञातो भवता । अस्या गीतेः कोऽभिप्राय इत्याशयः प्रश्नस्य । सकृत्=एकवारं । कृतः प्रणयो यस्मिन्नसौ—कृतप्रणयः=कृतस्नेहः । अयं जनः = हंसवतीलक्षणः । यद्वा—कृतः प्रणयो येनासौ तथा । अयं जनः = अयं दुष्यन्तः । अन्तरेण=विना 'अहं स्थित' इति शेषः । 'एकवारमुपभुज्य नवयौवनोद्भेदवतीं हंसवतीं साम्प्रतं त्यक्तवानस्मी'ति तस्या उपालम्भगोचरीभूतोऽस्मीति भावः । 'हंसपदी'ति क्वचिन्नाम दृश्यते ।

---

**विदूषक**—हे मित्र ! आपने इस गीति के अर्थ पर भी कुछ ध्यान दिया ?।

**राजा**—( हँस कर ) हमने कभी इससे प्रेम—अनुराग किया था, इसके नए यौवन का आनन्द हमने पहिले लूटा था, अब हम उसे भूल गए हैं—यही इसके अक्षरों का अर्थ है । अब हम इस हँसवती से दूर ही रहते हैं, इसी लिए हमको यह भ्रमर के नाम (व्याज) से उलहना दिया जा रहा है । अतः हे सखे माधव्य ! (मधुपुरी वास्तव्य चौबेजी !) मेरी ओर से तुम जाकर देवी (रानी) हंसवती से कहो, कि—वाह ! तुमने तो खूब (ठीक) ही उलहना हमें दिया !।

---

१ 'तदस्या देवीं वसुमतीमन्तरेण महदुपालम्भमवगतोऽस्मि' पा०। 'हंसपदीमन्तरेण' इति च पा०।

**विदूषकः**—जं भवं आणवेदि। ( उत्थाय— ) भो वअस्स! गहीदो तुए परकीएहिं हत्थेहिं सिहण्डए अच्छभल्लो. ता वीदराअस्स असरणस्स णत्थि मे मोक्खो।

[ यद्भवानाज्ञापयति । भो वयस्य ! गृहीतस्त्वा परकीयाभ्यां हस्ताभ्यां शिखण्डके अच्छभल्लः। तद्वीतरागस्य [1]अशरणस्य ([2]अप्सरसा गृहीतस्येव ) नास्ति मे मोक्षः ]।

---

'तदस्या देवीं वसुमतीमन्तरेण महदुपालम्भमवगतोऽस्मी'ति पाठे तत् = तस्मात् । अस्याः = हंसवत्याः । उपालम्भमवगतोऽस्मि = उपालम्भं तावत् प्राप्तवानस्मि । कुतः—देवीं वसुमतीमन्तरेण = महिषीं वसुमतीं बिना । तां विना न तिष्ठामि, हंसवतीं तु पुनरेकदाऽपि न स्मरामीति हेतोरित्यर्थो बोध्यः । अत्र अभिनवेत्यादिगीतिसारभ्यैतदन्तेन भ्रंशो नामालङ्कारो व्यज्यते ।

'वाच्यमर्थं परित्यज्य दृष्टान्ताद्यैरनेकधा ।
अन्यस्मिन्नेव पतनादिह भ्रंशः स उच्यते' ॥

इत्युक्तेः; प्रकृते भ्रमरवृत्तान्तं वाच्यं विहाय राजवृत्तान्तपरतया योजनात् । नालिका नाम वीथ्यङ्गं च, निगूढार्थभाषणात् । 'सोपहासनिगूढार्थप्रहेलिका नालिकेत्युक्ते'रित्याचार्याः ।

शिखण्डके = केशपाशे । अच्छभल्लः = ऋक्षः । 'ऋक्षाच्छभल्लभल्लूकाः' इत्यमरः । यथा कश्चन चतुरः परहस्ताभ्यामृक्षं केशेषु गृह्णन् परं जीवितसंशये

---

विदूषक— जैसी आपकी आज्ञा । ( उठकर ) हे मित्र !

तुमने तो दूसरे के हाथों से भालू के बाल अच्छे पकड़े हैं । अर्थात् तुमतो अपनी बला दूसरे के ( मेरे ) माथे पटक रहे हो । मेरे ऐसे वीतराग ( सब झञ्झटों से दूर रहने वाले ) गरीब का अब बचना कठिन है । अर्थात् हंसवती मेरी खूब खबर लेगी । अपनी यह विपत्ति तुम मेरे शिर पर डाल रहे हो ।

पाठान्तर में–जैसे वीतराग, वनवासी मुनि के पीछे अप्सरा कोई लग जाए तो उसकी समाधि में भङ्ग पड़कर उसके मोक्ष मार्ग में बाधा पड़ जाती है, वसे

---

१ 'वीतरागस्येवाऽप्सरसा गृहीतस्य नास्ति मे मोक्षः' इति पाठः शोभनः ।
२ क्वचिन्न ।

राजा—सखे ! गच्छ, नागरिकवृत्त्या सान्त्वयैनाम् ।

विदूषकः—का गई ? (—इति निष्क्रान्तः ) ।

[ का गतिः ? ] ।

राजा—(स्वगतम्-) किन्नु खलु गीतमेवंविधमाकर्ण्य इष्टजन-विरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि ? । अथवा—

---

पातयति, तथा राज्ञा कुपितहंसवतीप्रसादनकर्मणि विदूषको वराकः पातित इति भावः । 'परहस्ताभ्या' मित्यादिकं लौकिकमाभाणकम् । वीतरागस्य=मुनेः । त्यक्तानुरागस्य च । अशरणस्य=शरणान्तररहितस्य । न मोक्षः=न कैवल्यप्राप्तिः । न विपत्तिमोक्षश्च ।

नागरिकवृत्त्या=विदग्धव्यवहारेण । चातुर्येणेति यावत् । का गतिः=राजवचनमनुल्लङ्घनीयं, तद्गच्छामि । एवंविधं = प्रियाविस्मरणोपालम्भगर्भम् । इष्टजनस्य विरहस्तस्मात्=प्रियावियोगात् । ऋते=विनाऽपि । बलवत्=सुदृढम् । दुर्वासः-शापेन शकुन्तलामपि नैव स्मरतीति तत्त्वम् ।

---

ही वीतराग [ प्रेमरस शून्य ] अशरण ( अनाथ ) मेरे पीछे भी आपने हंसवती रूपी चुडैल—आफत लगा दी है । मेरा अब बचना कठिन ही है ] ।

राजा—हे मित्र ! तुम जाओ, और अपनी चतुराई से सान्त्वना (धीरज) देकर उसे किसी तरह प्रसन्न करो ।

विदूषक—क्या उपाय है ?, जाना ही पड़ेगा ।

( जाता है ) ।

राजा—( मन ही मन ) मैं क्यों इस प्रकार के गीत को सुनकर किसी अपने इष्ट जनके वियोग के बिना भी अत्यन्त उत्कण्ठितसा हो रहा हूँ ? । यह क्या बात है ? । मेरा तो कोई प्रियजन भी बाहर नहीं हैं, जिसके विरह से ही मुझे ऐसी उत्कण्ठा ( उद्वेग ) हो सके ? । यह बात क्या है ? । ( शकुन्तला के विरह के कारण ही राजा की यह दशा हो रही है, पर राजा को शकुन्तला तो दुर्वासाजी के शाप के कारण याद नहीं आ रही है, केवल उसे अपना मन ही विरही के मन की तरह उत्कण्ठित मालूम हो रहा है । पर किसके लिए ऐसा हो रहा है—यह उसे ज्ञात नहीं हो रहा है ) । अथवा—

रम्याणि वीक्ष्य, मधुरांश्च निशम्य शब्दा-
न्पर्य्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥९॥

( —इत्यस्मृतिनिमित्तमुन्मनस्कत्वं रूपयति ) ।

रम्याणीति । रम्याणि = मनोज्ञानि । ललनादीनि । वीक्ष्य = दृष्ट्वा । च = किञ्च । मधुरान् शब्दान् = कर्णमधुरान् गीतादीन् । निशम्य = श्रुत्वा । सुखितोऽपि = सुखान्वितोऽपि । विरहादिरहितोऽपि । जन्तुः=प्राणी मादृशः । यत्-पर्युत्सुकीभवति = उत्कण्ठितो भवति । तत्-नूनं = ध्रुवम् । अबोधपूर्वम् = अज्ञान-पुरस्सरं । भावैः स्थिराणि-भावस्थिराणि = वासनारूपेण—दृढानि । जनना-न्तरसौहृदानि=जन्मान्तरप्रणयान् । चेतसा=चित्तेन । स्मरति=भावयति । यथा-रम्यदर्शनादिना, प्रियमधुरशब्दश्रवणादिना चोद्भावितजन्मान्तरानुभूतस्नेह-संस्कारः पुमान्—इहजन्मनि सर्वतः सुखितोऽपि समुत्कण्ठां संमुग्धाकारां वहति, तथाऽहमपि निष्कारणमौत्कण्ठ्यं विरहीव वहामीति शापाच्छादितस्मृतेः शकुन्त-लाया अस्मरतोऽपि राज्ञस्तत्राऽनुरागोऽविच्छिन्नो बोधितः । [ अप्रस्तुतप्रशंसा । काव्यलिङ्गम् । अनुप्रासाश्च । वसन्ततिलका वृत्तम् ] ॥ ९ ॥

अस्मृतिनिमित्तमिति । उन्मनस्कत्वं = विस्मरणहेतुकामुत्कण्ठाम् । उद्वि-

---

अच्छी २ रमणीय वस्तुओं को देखकर, या श्रवण मधुर शब्दों को सुनकर, सुखी ( विरह रहित ) जन भी जो उत्कण्ठित सा हो जाता है, इससे निश्चित रूप से सिद्ध होता है, कि वह मनुष्य-बिना जाने हुए भी वासना रूप से दृढ़ जन्मान्तरीय सौहृद ( जन्मान्तरीय प्रेम, स्नेह, अनुराग ) का ही स्मरण करता है । अर्थात्—अपने जन्मान्तर के किसी प्रेमी जनको याद करके, अज्ञान दशा में ही, वह उत्कण्ठित हो जाता है । ( इस प्रकार शकुन्तला की याद न पड़ने के कारण राजा उत्कण्ठित-(अनमना-) सा होता है) ॥९॥

---

१ 'पर्युत्सुको' ।

**कञ्चुकी**—( उपसृत्य— ) जयति जयति देवः। एते खलु हिमगिरेरुपत्यकाऽरण्यवासिनः कण्वसन्देशमादाय सस्त्रीकास्तपस्विनः सम्प्राप्ताः। श्रुत्वा देवः प्रमाणम्।

**राजा**—( सविस्मयं- ) किं—'कण्वसन्देशहारिणः सस्त्रीकास्तपस्विनः'?।

**कञ्चुकी**—अथ किम्।

**राजा**—तेन हि विज्ञाप्यतां मद्वचनादुपाध्यायः सोमरातः,

---

मताम्। अस्मृतिनिमित्तं=शकुन्तलाविस्मरणहेतुकम्। रूपयति=नाटयति। यथा कश्चन किमपि विस्मृत्य चिन्तयति तथा रङ्गेऽभिनयति। नाटयतीत्यर्थः।

उपत्यकायां=पर्वतसन्निहितप्रदेशे, यदरण्यं तत्र वसन्ति तच्छीलाः। एते खलु=बहिर्द्वारप्रदेशे स्थिताः। श्रुत्वा देवः प्रमाणम्=एतदाकर्ण्य भवानुचितं चिन्तयतु। कण्वस्य सन्देशं हरन्ति तच्छीलाः-कण्वसन्देशहारिणः=महर्षिकण्ववाचिकसन्देशप्रापकाः।

विज्ञाप्यतां=सूच्यताम्। सोमरातः=तन्नामा। उपाध्यायः=राजपुरोहितः।

---

**कञ्चुकी**—महाराज की जय हो, जय हो। महाराज! ये हिमालय के तराई में रहने वाले, वन के निवसी, तपस्वी लोग भगवान् कण्व मुनि का कुछ सन्देश लेकर दो स्त्रियों के साथ आए हैं। यह सुन कर आगे आप मालिक हैं। अर्थात—आप जैसा उचित समझें वैसा करें।

**राजा**—क्या कहा—कण्व का सन्देश लेकर स्त्रियोंके सहित तपस्वी आए हैं?।

**कञ्चुकी**—जी हाँ पृथ्वीनाथ! यही बात है।

**राजा**—तो फिर तुम मेरी ओर से उपाध्याय ( वैदिक विद्वान् ) राजपुरोहित सोमरातजी से जाकर कहो, कि—इन आश्रमवासी तपस्वियों का श्रौत (वैदिक) विधि से यथोचित अतिथि सत्कार ( अर्घ्य पाद्य मधुपर्क आदि से पूजन ) करके वे स्वयं इन्हें मेरे पास लावें। और मैं भी तपस्वियों से मिलने योग्य स्थान पर ( अग्निहोत्र शाला में ) जाकर उनकी प्रतीक्षा करता हूँ।

"[1]अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति'ति। अहमप्येतांस्तपस्विदर्शनोचितप्रदेशे प्रतिपालयामि।

कञ्चुकी---यथाऽऽज्ञापयति देवः। ( -इति निष्क्रान्तः )।

राजा---( उत्थाय- ) वेत्रवति! अग्निशरणमार्गमादेशय।

प्रतीहारी---इदो इदो एदु देवो। ( परिक्रम्य- ) एसो अहिणवसम्मज्जणरमणीओ सण्णिहिदहोमधेणु अग्गिसरणालिन्दो, ता आरोहदु देवो।

[ इत इत एतु देवः। एषोऽभिनवसंमार्जनरमणीयः संनिहितहोमधेनुरग्निशरणाऽलिन्दः। तदारोहतु देवः ]।

---

श्रौतेन = श्रुतिविहितेन अतिथिसत्कारेण। सत्कृत्य = अर्घ्यादिना पूजयित्वा। अमून् = एतान्—आश्रमवासिनः। तपस्विनां दर्शनस्य उचिते=मुनिदर्शनयोग्ये। प्रदेशे=अग्न्यगारे। प्रतिपालयामि=प्रतीक्षिष्ये।

वेत्रवती = प्रतिहारी। प्रतिहारी च-सन्धिविग्रहादिकार्य-निर्देशकारिणी स्त्री। तल्लक्षणं यथा—

'सन्धिविग्रहसम्बद्धं नानाकार्यं समुत्थितम्।
निवेदयन्ति या राज्ञः प्रतीहार्यस्तु ताः स्मृताः॥

—इति मातृगुप्ताचार्यैराख्यातम्। अग्निशरणस्य = होमाग्निशालायाः। 'शरणं गृहरक्षित्रो'रित्यमरः। मार्गं = पन्थानम्। आदेशय=प्रदर्शय।

इत इतः = अमुना पथा। अभिनवेन-संमार्जनेन-रमणीयः = प्रत्यग्रसंमार्जनादिपरिष्कारेण सुरुचिरः। संनिहिता होमस्योपकारिका धेनवो यत्राऽसौ संनिहित-

---

कञ्चुकी—जैसी महाराज की आज्ञा। ( जाता है )।

राजा—( उठकर ) हे वेत्रवति! ( छड़ी धारी महल की स्त्रीसिपाही ) मुझे अग्निहोत्र शाला का मार्ग दिखाओ।

प्रतीहारी—( वेत्रवती )-महाराज! इधर से पधारें, इधर से। ( कुछ चलकर ) यह अभी २ तत्काल झाड़ू-भारी देने से सुपरिष्कृत, और होम धेनु से सुशोभित, अग्निशाला का अलिन्द ( द्वार के पास का चबूतरा या बरामदा- ) है, महाराज इस पर चढ़ें।

---

१ 'एतान्' पा०।

राजा—( आरुह्य, परिजनांऽसावलम्बी, तिष्ठन्— ) वेत्रवति ! किमुद्दिश्य तत्रभवता कण्वेन मत्सकाशमृषयः प्रेषिताः ? ।

'किन्तावद् व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं ?,
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ? ।
आहोस्वित्प्रसवो ममाऽपरिचितैर्विष्टम्भितो वीरुधा-'
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ १० ॥

होमधेनुः=होमोपकारकगोयूथसनाथः । अग्निशरणस्याऽलिन्दः—अग्निशरणालिन्दः=होमाग्निशालाबहिर्द्वारप्रकोष्ठकः । 'प्रघाणप्रघणाऽलिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः । आरोहतु=निःश्रेणिमधिरोहतु ।

परिजनस्यांऽसमवलम्बते तच्छीलः—परिजनांसावलम्बी=अनुचरस्कन्धमवलम्बमानः । तिष्ठन्=समुत्तिष्ठन्नेव ऋषीणामागमनं परिपालयन् ।

किन्तावदिति । उपोढं तपो येषां तेषाम्—उपोढतपसाम्=अतिविवृद्धतपसाम् । 'उपोढः कथितोऽत्यूढे समासन्ने विवाहिते' इति धरणिः । व्रतिनां=यज्ञादिषु दीक्षितानां मुनीनां । विघ्नैः=अन्तरायैः । तपः=तपोव्रतादिकं कर्म । दूषितं=विघ्नितं । किं तावत् ?=किमु । उत=अथवा । धर्मारण्येषु चरन्ति तेषु-धर्मारण्यचरेषु=तपोवनविहारिषु । प्राणिषु=मृगादिजन्तुषु । केनचित्-असत्=अनुचितम् । चेष्टितम्=आचरितं-किम् ? । आहो स्वित्=किं स्वित् । अथवा । मम अपरिचितैः=मयाऽज्ञातैः । पूर्वोपार्जितैः पापैः । अथवा ममाऽपरिचितैः=ममाऽपरिचितैर्वृक्षादिरोगैः, वीरुधां=व्रततीनाम् । प्रसवः=प्रजननसम्पत् । फलोत्पादनशक्तिः । पत्त्रपुष्पफलादिसमुत्पत्तिश्च । ( प्रसव=फसल ) । विष्टम्भितः=

राजा—( चौतरे पर चढ़कर, दर्बारी मुसाहिब या अफसर के कन्धे पर हाथ धर कर खड़े होकर ) हे वेत्रवति ! बता तो पूज्य कण्व ने मेरे पास इन तपस्वियों को क्यों भेजा है ? ।

क्या अत्यन्त तपस्या से युक्त इन व्रतियों की ( संयमी ऋषियों की ) तपस्या ही किसी प्रकार के विघ्नों से दूषित हो गई है ? । अर्थात् इनकी तपस्या में क्या कोई विघ्न उपस्थित हो गया है ? । अथवा—धर्मारण्य ( आश्रम )

प्रतिहारी—देवस्स भुअदण्डणिव्वुदे अस्समपदे कुदो एवं ?। किन्तु 'सुचरिताहिणन्दिणो इसीओ देवं सभाजइदुं आअदे' त्ति तक्केमि।
[ देवस्य भुजदण्डनिर्वृते आश्रमपदे कुत [1]एवम्। किन्तु 'सुचरिताऽभिनन्दिन ऋषयो देवं सभाजयितुमागता' इति तर्कयामि ]।
( ततः प्रविशतो गौतमीसहितौ शकुन्तलामादाय कण्वशिष्यौ, पुरतश्चैषां पुरोहित-कञ्चुकिनौ )।

---

अवरुद्धः ?। 'विष्टम्भः प्रतिबन्धे स्या'दिति मेदिनी। इति = इत्येवम्। आरूढः बहुः प्रतर्को यस्मिंस्तत्—आरूढबहुप्रतर्कं = नानातर्काकुलितम्। मे = मम। मनः = मानसम्। अपरिच्छेदेनाऽऽकुलम् = अनिर्णयादुत्कलिकाकुलितम्। वर्त्तते इति शेषः। [ काव्यलिङ्गम्। शार्दूलविक्रीडितं वृत्तम् ]॥ १०॥

भुजदण्डेन = बाहुदण्डेन। निर्वृते=सुखिते। आश्रमपदे=तपोवने। एवम्= इत्थम्। अनिष्टम्। कुतः = कथं सम्भाव्यते। सुचरितमभिनन्दन्ति तच्छीलाः— सुचरिताभिनन्दिनः = धर्माचरणशीलसद्वृत्तभवादृशनृपानुरागिणः। धर्मप्रवण-जनप्रियाः। सभाजयितुं = पूजयितुम्। आशीर्भिरभिनन्दयितुम्। श्लाघितुम्। पुरतः = अग्रे। पुरोहितः = सोमरातोपाध्यायः। कञ्चुकी=सौविदल्लः।

---

वासी हरिण मयूर आदि किन्हीं प्राणियों के प्रति किसी ने कुछ अनुचित आचरण किया है ?। अथवा—मेरे को नहीं मालूम ऐसे किसी कारण से वनस्पति एवं लता गुल्मों की ( अन्न फल मूल आदि की ) फसल ही क्या खराब हो गई है ?। इस प्रकार मनमें आनेवाले नाना प्रकार के तर्कों से, तथा अनिश्चय से, मेरा मन व्याकुल हो रहा है॥१०॥

प्रतीहारी—महाराज की भुजाओं से रक्षित होन से सब प्रकार से सुखी आश्रमों में इस प्रकार के विघ्न हो ही कैसे सकते हैं। परन्तु महाराज के सुन्दर चरित ( सुरक्षा करने के गुणों ) का अभिनन्दन ( श्लाघा ) करने के लिए ही ये ऋषि लोग ( महाराज की प्रशंसा एवं सत्कार करने के लिए ) आए होंगे— तो ऐसा ही सोचती हूं।

[ शकुन्तला को साथ लेकर गौतमी सहित कण्व शिष्यों का प्रवेश। इनके आगे आगे पुरोहित और कञ्चुकी चल रहे हैं ]।

---

१ 'कुत एतत्' पा०।

कञ्चुकी—इत इतो भवन्तः ! ।

शार्ङ्गरवः—सखे ! शारद्वत !—

महाभागः कामं नरपतिरभिन्नस्थितिरसौ[1],
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाऽऽकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ ११ ॥

महाभाग इति । यद्यपि—अभिन्ना स्थितिर्येनासौ—अभिन्न स्थतिः= मर्यादारक्षकः । असौ—नरपतिः=महाराजो दुष्यन्तः । कामं=प्रकामं । नितराम् । यथेष्टं । सत्यं । महाभागः=महानुभावः । किञ्च—यद्यपि एतद्राज्ये खलु—अहो !=आश्चर्यं । वर्णानां=ब्रह्माणादीनां चतुर्णां वर्णानां मध्ये । अपकृष्टोऽपि= नीचोऽपि । शूद्रादिरपि वर्णः । पञ्चमोऽसच्छूद्रादिरपि कश्चित् । अपथं=कुमार्गं । धर्ममर्यादोल्लङ्घनं तावत् । न भजते=नैव सेवते । तथापि=किन्तु । शश्वत्—परिचितं विविक्तं येन, तेन-शश्वत्परिचितविविक्तेन=निरन्तरैकान्तवासप्रवणेन । मनसा=चित्तेन उपलक्षितोऽहं,—जनैराकीर्णं जनाकीर्णम् = लोकसङ्कुलम् । जनसम्बाधम् । इदं=राजगृहं । हुतवहेन परीतं=पावकज्वालाक्रान्तं । गृहमिव= निकेतनमिव । परित्यागार्हमेव । मन्ये=तर्कयामि । अस्मादुद्वेगं भजामि । अग्नि-

कञ्चुकी—आप लोग इधर से पधारिये, इधर से ।

शार्ङ्गरव—सखे शारद्वत !

यद्यपि यहाँ ( इस नगर में ) यह महानुभाव राजा दुष्यन्त बड़ी तत्परता से धर्म की मर्यादा पालने वाला, एवं प्रजा की पिता के तरह रक्षा करने वाला है, और यहाँ कोई भी—वर्णों ( ब्राह्मण, क्षत्रिय, वैश्य, शूद्र-इन चार वर्णों ) में जो नीच भी जन हैं, वे भी ( चाण्डाल भी ) कुमार्ग का सेवन करने वाले नहीं हैं, और यहाँ तो सभी प्रजा धर्ममर्यादा, लोक मर्यादा से ही चलने वाली हैं, तथा मुझे तो सदा से एकान्त सेवन करने का ही अभ्यास रहने से, यह

१ 'रभिन्नस्थितिरहो' पा० ।

शारद्वतः—शार्ङ्गरव ! स्थाने खलु पुरप्रवेशात्तवेदृशः संवेगः ।

[1]अहमपि—

**अभ्यक्तमिव स्नातः, शुचिरशुचिमिव, प्रबुद्ध इव सुप्तम् ।**
**बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥ १२ ॥**

परीतगृहमिव दूरतः परिहर्त्तव्यमेवेद राजगृहमिति जानामीत्याशयः । [ अत्र दुष्टनृपादिसंनिधानादेः कारणस्याऽभावेपि त्याज्यत्वरूपकार्योक्तेर्विभावना । उपादेयत्वसम्पादककारणकलापसत्त्वेऽपि कार्यस्योपादेयत्वस्याऽभावाद्विशेषोक्तिश्च । अनयोः सन्देहसाङ्कर्यम् । उपमा । अनुप्रासः । 'शिखरिणी वृत्तम्' ] ॥ ११ ॥

स्थाने = युक्तं । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । पुरप्रवेशात्-जनसङ्कुले नगरेऽत्र प्रवेशात् । संवेगः=सम्भ्रमः । समौ संवेगसम्भ्रमौ' इत्यमरः ।

'अहमपी'ति । अहमपीत्थमेव तर्कयामि । इदं श्लोकेनाऽग्रिमेण सहैव व्याख्येयम् ।

अभ्यक्तेति । इह = राजधान्यां । स्नातः=कृतस्नानः । कृताचारपरिग्रहः । अभ्यक्तमिव=तैलाभ्यक्तमशुचिमिव । किञ्च-शुचिः=पवित्रः । अशुचिमिव=अपवित्रमिव । किञ्च—प्रबुद्धः = जागरितः । सुप्तमिव = निद्रितमिव । स्वैरा गतिर्यस्याऽसौ स्वैरगतिः = स्वतन्त्रः । बद्धमिव = निगडितमिव । सुखे सङ्गोऽस्त्यस्य तं—

जनाकीर्ण स्थान—यह नगर एवं यह राजगृह भी—अग्नि से जलते हुए घर की ही तरह अप्रिय और कष्टकर मालूम हो रहा है । अर्थात्-हमारे आश्रमों में जो शान्ति विराजती है, वह तो यहाँ बिलकुल नहीं है ॥ ११ ॥

शारद्वत--हे सखे शार्ङ्गरव ! तुम्हारे शान्त आश्रम के वासी होने के कारण नगर प्रवेश से तुम्हारे चित्त में उद्वेग होना उचित ही है । मैं भी—

विषय सुखों में फँसे हुए यहाँ के नगरवासी लोगों को—इसी प्रकार समझता हूं, जैसे स्नान किया हुआ पुरुष—तैल आदि लगाए हुए अशुद्ध पुरुष को समझता है । और शुद्ध पुरुष-अशुद्ध ( मलिन ) व्यक्ति को जैसे देखता है, और प्रबुद्ध = ज्ञानी पुरुष अज्ञानी को जैसे समझता है, तथा--स्वतन्त्र व्यक्ति-

१ 'अहन्तु' पा० ।

**पुरोधाः**—अत एव भवद्विधा—महान्तः।

**शकुन्तला**—( दुर्निमित्तमभिनीय— ) अम्मो ! किं मे वामेदरं णअणं विप्फुरदि !।

[ [1]अम्महे ! किं मे वामेतरन्नयनं विस्फुरति ! ]।

**गौतमी**—जादे ! पडिहदं अमङ्गलं, सुहाइं दे [2]होन्तु।

(—इति परिक्रामन्ति)।

---

सुखसङ्गिनं = भोगासक्तं । जनम् = इमं पौरलोकम् । अवैमि = जानामि। [ मालोपमा । अनुप्रासः । 'आर्या जातिः' ] ॥ १२ ॥

अनिमित्तम्=अपशकुनम् । 'अम्महे' इति निर्वेदे देशी । 'अम्मो' इति क्वचित्पाठः। वामेतरत्=दक्षिणं । स्त्रीणां दक्षिणाङ्गस्फुरणस्याऽमङ्गलसूचकत्वात्।

---

कारागार में बन्धे हुए पुरुष को जैसे देखता है। अर्थात्—हम लोग पवित्र, ज्ञानी और स्वतन्त्र हैं, ये अशुद्ध, अज्ञानी, और बद्ध हैं। [ तैल आदि लगाया हुआ मनुष्य तब तक अशुद्ध रहता है, जब तक वह स्नान नहीं कर लेता है ] ॥१२॥

पुरोहित—इसी लिए तो आप लोग—'महात्मा' कहलाते हैं।

शकुन्तला—( अशकुन का अभिनय करती हुई ) अरी मैया री ! मेरा यह दहिना नेत्र आज क्यों फड़क रहा है ? ( स्त्रियों का दहिने नेत्रका फड़कना अशुभ सूचक होता है, और पुरुषों के बाएँ नेत्र का फड़कना अशुभसूचक होता है )।

गौतमी—हे पुत्रि ! यह अमंगल दूर हो। तेरे को सुख प्राप्त हो। [ तेरे पति के कुल देवता तेरा मङ्गल करें ]।

( चलते हैं )

---

१ 'अम्मो'। २ 'सुहाइं दे भत्तुकुलदेवदाओ वितरन्तु'। [ सुखानि ते भर्तृकुलदेवता वितरन्तु ] पा०।

[ जाते ! प्रतिहतममङ्गलं, सुखानि ते [1]भवन्तु ]।

पुरोधाः—( राजानं निर्दिश्य- ) भो भोस्तपस्विनः ! असावत्र-भवान्वर्णाश्रमाणां रक्षिता—प्रागेव मुक्तासनः—प्रतिपालयति वः। पश्यतैनम् ।

शार्ङ्गरवः—भो [2]महात्मन् ! काममेतदभिनन्दनीयं, तथापि वयमत्र मध्यस्थाः ।

---

जाते ! = हे पुत्रि ! । प्रतिहतं=ध्वस्तम् । दूरीभवतु । [ पाठान्तरे—भर्तृकुलाधिष्ठात्र्यो देवताः = पतिकुलदेवताः । दुष्यन्तकुलदेवता इत्यर्थः ] । रक्षिता = पालकः । प्रागेव=भवदागमनात्पूर्वमेव । भक्त्यतिशयात् । आदराच्च । मुक्तमासनं येनासौ-मुक्तासनः=परिमुक्तसिंहासनः । प्रतिपालयति=प्रतीक्षते । पाठान्तरे-'महाब्राह्मणे'ति प्रशस्तब्राह्मणार्थकमत्र, न निन्दायाम् । 'महात्म'न्निति वा पाठः।

कामम् = यथेच्छम् । अतिशयेन । एतत् = राज्ञो विनयश्रद्धाद्यतिशयत्वादिकम् । अभिनन्दनीयं = स्तुत्यं । तथापि=किन्तु । अत्र = राजप्रशंसायाम् । मध्यस्थाः = निःस्पृहाः । न प्रशंसावाचमुच्चारयामः ।

---

पुरोहित—( राजा की ओर इशारा करके—) हे तपस्वियों ! यह देखिए परम माननीय, वर्ण ( ब्राह्मण क्षत्रिय आदि ४ वर्णों ), और आश्रमों ( ब्रह्मचर्य गृहस्थ, वानप्रस्थ, संन्यास इन ४ आश्रमों ) की रक्षा करने वाले. महाराज दुष्यन्त, पहिले से ही सिंहासन से उठकर, आप लोगों की प्रतीक्षा में यहाँ खड़े हैं । इनको देखिए ।

शार्ङ्गरव—हे महात्मन् ! राजाकी ये ( ऋषियों का आदर सत्कार करना प्रजा का पालन करना आदि ) बातें यद्यपि अभिनन्दनीय ( प्रशंसनीय ) हैं, परन्तु हम तो इस विषय में मध्यस्थ ( उदासीन ) ही हैं । हम तो इन बात के लिए राजा की प्रशंसा नहीं करते हैं । क्योंकि—

---

१ 'सुखानि ते भर्तृकुलदेवता वितरन्तु' पा० । २ 'महाब्राह्मण' ! पा० ।

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभिः,
स्वभाव एवैष परोपकारिणाम् ॥ १३॥

प्रतीहारी—देव ! [२]पसण्णमुहा इसीओ दीसन्ति।

---

कुत एतदत आह—भवन्तीति। फलानामागमैः—फलागमैः=फलानां समन्तात्प्राप्तिभिः। पाठान्तरे—फलोद्गमैः=फलोद्भवैः। एतेन फलप्रसवसमृद्धि पराकाष्ठा सूचिता। नम्राः=अधोमुखाः, विनीताश्च—भवन्ति। किञ्च–घनाः= मेघाः। नवैरम्बुभिः = अभिनवैर्जलैः। जलसम्पदतिरेकेऽपि। दूरं विलम्बन्ते तच्छीलाः–दूरविलम्बिनः = नितरां वर्षणशीलाः, नम्राश्च—भवन्ति। किञ्च- सत्पुरुषाः = साधवः। समृद्धिभिः=सम्पदतिशयेन। अनुद्धताः=विनीता भवन्ति। एषः = नम्रत्वानुद्धतत्वादिरूपः। परोपकारिणां = परोपकारपरायणानां दुष्यन्त- सदृशानां। स्वभाव एव = निसर्ग एव। किन्तत्र प्रशंसापरम्पराभिरित्याशयः। [ अर्थान्तरन्यास-मालाप्रतिवस्तूपमा-ऽप्रस्तुतप्रशंसा-ऽतिशयोक्ति-काव्यलिङ्गा-ऽनु- प्रासालङ्काराणां सङ्करः। 'वंशस्थं वृत्तम्' ]॥ १३॥

---

फल आने से वृक्ष स्वभाव से ही नम्र हो जाते हैं। नवीन जल से भरे रहने पर मेघ भी स्वतः बहुत नीचे झुक ( लटक ) जाते हैं। समृद्धि ( राज्य वैभव एवं धन-सम्पत्ति ) प्राप्त कर सज्जन भी—अनुद्धत नम्र और विनीत हो जाते हैं, यह परोपकारियों का स्वभाव ही है। अतः यह परोपकारी राजा यदि इस प्रकार नम्र और विनयी है, तो इसमें आश्चर्य ही क्या है? यह तो इनका स्वाभाविक गुण है॥ १३॥

प्रतीहारी—महाराज ! ऋषि तो प्रसन्नमुख मालूम होते हैं। अतः किसी प्रकार की आशङ्का की बात तो नहीं मालूम होती है। अर्थात् किसी कष्ट की बात को कहने तो ये नहीं आए मालूम होते हैं।

---

१ 'फलागमैः' पा०।
२ 'प्रसन्नमुखवर्णा दृश्यन्ते। जाने विश्रब्धकार्या ऋषयः' पा०।

[ देव ! प्रसन्नमुखा ऋषयो दृश्यन्ते ]।

राजा—( शकुन्तलां निर्वर्ण्य- ) अये ! अत्र—

केयमवगुण्ठनवती नाऽतिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्त्राणाम् ॥ १४ ॥

प्रतीहारी—भट्टा ! कुदूहलगब्भो पडिहदो ण मे तक्को पसरदि । दंसणीआ उण से आकिदी लक्खीअदि ।

---

प्रसन्नमुखाः = प्रसन्नवदनाः । पाठान्तरे-प्रसन्नो मुखवर्णो येषान्ते प्रसन्नमुखवर्णाः = प्रसन्नाकृतिशोभिनः । विस्रब्धं कार्यं येषान्ते—विस्रब्धकार्याः=अनुद्भट-प्रशान्तकार्याः । उदारकार्याः । 'विस्रब्धस्तूद्भटे व्यर्थे शान्तविश्वस्तयोरपी'ति विश्वः ।

केयमिति । पाण्डूनि च तानि पत्त्राणि, तेषां पाण्डुपत्त्राणां = परिणाम-पाण्डुराणां जरठानां पत्त्राणां मध्ये । किसलयमिव = पल्लवमिव । कोमलपत्त्रमिव । तपोधनानां = तापसानामेषाम् । मध्ये-इयं = पुरो विलसन्ती । अवगुण्ठनवती= पटप्रावृताङ्गी । अत एव—न अतिपरिस्फुटं शरीरस्य लावण्यं यस्याः—सा = अनतिविभाव्यमानाऽङ्गलावण्यविभवा ललना । का = कास्वित् । का वा भवेत् ? [ उपमा । काव्यलिङ्गम् । आर्या ] ॥ १४ ॥

---

राजा—( शकुन्तला की ओर देखकर ) हैं ! यहाँ इन ऋषियों के साथ, अपरिस्फुट ( छिपी हुई ) शरीर कान्तिवाला, उमडते हुए सौन्दर्य, लावण्य और यौवन वाली, घूंघट निकाले हुए, वृद्ध ऋषियों के बीच में खड़ी हुई—पीले पुराने पत्तों के बीच में कोमल नवीन पल्लव ( कोंपल ) की तरह शोभायमान-यह सुन्दरी युवति स्त्री कौन है ? ॥ १४ ॥

प्रतीहारी—हे प्रभो ! इसके विषय में मुझे भी कौतूहल हो रहा है, मेरा भी तर्क ( मेरी भी बुद्धि ) यहाँ काम नहीं दे रहा है । हाँ, इसकी आकृति तो अवश्य दर्शनीय और आकर्षक मालूम होती है ।

[ भर्त्तः [1]कुतूहलगर्भः प्रतिहतो न मे तर्कः प्रसरति। दर्शनीया पुनरस्या आकृतिर्लक्ष्यते ]।

**राजा**—भवतु। अनिर्वर्ण्यं खलु परकलत्रम्।

**शकुन्तला**—( उरसि हस्तं दत्त्वा, स्वगतं- ) हिअअ ! किं एव्वं वेबसि। अज्जउत्तस्स तादिसभावाणुबन्धं सुमरिअ धीरत्तणं दाव अवलम्बस्स।

[ हृदय ! किमेवं वेपसे ?। आर्य्यपुत्रस्य तादृशभावानुबन्धं स्मृत्वा धीरत्वं तावदवलम्बस्व ]।

**पुरोहितः**—( पुरो गत्वा- ) स्वस्ति देवाय। देव ! एते खलु विधिवदर्चितास्तपस्विनः। कश्चिदेतेषु उपाध्यायसन्देशोऽस्ति, तं देवः श्रोतुमर्हति।

---

कुतूहलगर्भः = कौतुकाक्रान्तः। प्रतिहतः = अवरुद्धः। 'कुतूहलगर्भोपहित' इति पाठान्तरे कुतूहलेन=आश्चर्येण गर्भे = मध्ये—उपहितः = युक्तः। आश्चर्य-भराक्रान्तः। तर्कः = विचारः। दर्शनीया = स्पृहणीया।

भवतु=मा तावत्। 'अस्तु भवतु निषेधे' इत्यभियुक्ताः। अङ्गीकृतौ वाऽत्र 'भवतु'पदम्। अनिवर्णनीयम्=अनालोचनीयम्। परकलत्रं=परपरिग्रहः। परस्त्री।

उरसि = हृदये। हृदये हस्तारोपणं तावत्-एष स्वभावो नारीणामनिष्टाऽऽ-शङ्कादौ। वेपसे=कम्पसे। अनिष्टाशङ्कयाऽवधीरणाभयाद्वा हृदयस्य कम्पः। भावानुबन्धं=स्नेहप्रसरं। प्रेमबन्धं। धैर्यम्=अकातरत्वम्। उपाध्यायस्य=गुरोः।

---

**राजा**—दूसरे की स्त्री को इस प्रकार से ( अच्छी तरह आँख गड़ाकर, घूर कर ) देखना ठीक नहीं है। जाने दो।

**शकुन्तला**—( छाती पर हाथ रखकर, मनही मन ) हे हृदय ! इस प्रकार क्यों काँप ( धड़क ) रहा है ?। आर्यपुत्र ( प्राणनाथ इन दुष्यन्त ) के उस प्रकार के ( आश्रम में देखे गए ) प्रेम–एवं अनुराग को याद कर तू धीरज धर।

**पुरोहित**—( आगे जाकर ) महाराज का कल्याण हो। हे देव ! इन

---

१ 'कुतूहलगर्भोपहितः' पा०।

राजा—अवहितोऽस्मि ।

शिष्यौ—( हस्तमुद्यम्य- ) भो राजन् ! विजयतां भवान् ।

राजा—सर्वानभिवादये वः ।

शिष्यौ—स्वस्ति देवाय ।

राजा—अपि निर्विघ्नं तपः ? ।

शिष्यौ—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति धर्मांशौ कथमाविर्भविष्यति ? ॥ १५ ॥

---

सन्देशः=वाचिकम् । अवहितः=सावधानः । श्रोतुमवहितोऽस्मीत्यर्थः । विघ्नेभ्यो निर्गतं, निर्गता विघ्ना यस्मात्तदिति वा—निर्विघ्नम् = विघ्नरहितम् । अपिरत्र,प्रश्ने ।

कुत इति । सतां = साधूनाम् । सन्मार्गस्थानां । रक्षितरि = पालयितरि । त्वयि = त्वयि तिष्ठति सति । धर्मस्य क्रियाणां विघ्नः = धर्मानुष्ठानविघ्नः । कुतः= कथं भवेत् ? । नैव भवितुमर्हति । धर्मांशौ=तीक्ष्णकिरणे भगवति सूर्ये । तपति- सति । तमः = अन्धकारः । कथमाविर्भविष्यति = कथमुद्भविष्यति ? । नैवाविर्भ- विष्यति । हे राजन् ! त्वयि रक्षके जागरूके कथं धर्मक्रियासु विघ्नशङ्का ? । सति सूर्ये न खलु ध्वान्तवार्त्तापीति भावः । [ दृष्टान्तः । अर्थापत्तिश्च ] ॥ १५ ॥

---

तपस्वियों की शास्त्रोक्त विधि से पूजा कर दी गई है । और इनके पास इनके गुरु का कुछ सन्देश है, उसको आप इनसे सुनें ।

राजा—मैं सुनने के लिए सावधान हूं । कहिए ।

दोनों शिष्य—( हाथ उठाकर ) हे राजन् ! आपकी सदा विजय हो ।

राजा—मैं आप सबको प्रणाम करता हूं, और आशीर्वादकी याचना करता हूं ।

दोनों शिष्य—हेराजन् ! तुमारा कल्याण हो ।

राजा—आप लोगों की तपस्या में किसी प्रकार का कोई विघ्न तो नहीं है ? । अर्थात् आप लोगों की तपस्या तो ठीक चलती है न ? ।

दोनों शिष्य—हे राजन् ! सज्जनों के रक्षक आपके रहते, हमारी तपस्या में विघ्न हो ही कैसे सकता है ? । क्योंकि प्रचण्ड किरण भगवान् दिवाकर के रहते भला अन्धकार का आविर्भाव ही कैसे हो सकता है ॥ १५ ॥

राजा—( आत्मगतं— ) सर्वथाऽर्थवान् खलु मे राजशब्दः। ( प्रकाशम्– ) तत्रभवान् कुशली कण्वः ?।

शार्ङ्गरवः—राजन् ! स्वाधीनकुशलाः सिद्धिमन्तः। स भवन्तमनामयप्रश्नपूर्वमिदमाह—'।

राजा—किमाज्ञापयति भगवान् ?।

शार्ङ्गरवः—"यन्मिथः समयादिमां मदीयां दुहितरं भवानुपयेमे, तन्मया प्रीतिमता युवयोरनुज्ञातम्। कुतः ?—

---

अर्थवानिति। सार्थक इत्यर्थः। मुनीनां सन्तोषादिति भावः। सिद्धिमन्तः=स्वाधीनाऽणिमादिसिद्धयो मुनयः कण्वादयः। स्वाधीनं कुशलं येषान्ते स्वाधीनकुशलाः=स्वतन्त्रसुखाः। आत्मारामा वा। अनामयस्य प्रश्नः पूर्वं यस्मिन् कर्मणि तत्–अनामयप्रश्नपूर्व(क)म्=आरोग्यप्रश्नपुरस्सरम्। 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामय'मिति मनूक्तेः क्षत्रियस्यारोग्यप्रश्नार्हत्वात्। मिथः-समयात्=परस्परसङ्केतात्। परस्पराभिलाषेण। गान्धर्वेण विधानेनेति यावत्। 'गान्धर्वः समयान्मिथः' इत्युक्तेः। उपयेमे=परिणीतवान्। ( तत्=इदमनुचितमपि तव कार्यम्)। प्रीतिमता=प्रसन्नेन। मया=कण्वेन। अनुज्ञातं=स्वीकृतम्।

---

राजा—( मनही मन ) मेरा राजा कहलाना आज सर्वथा सार्थक हुआ, जब ये तपस्वी लोग इस प्रकार विघ्न बाधाओं से रहित हो तपश्चर्या कर रहे हैं। ( प्रकट में ) महातपा पूजनीय भगवान् कण्व प्रसन्न एवं कुशलपूर्वक तो हैं ?।

शार्ङ्गरव—हे राजन् ! सिद्धिशाली महात्मा लोग तो सदा ही स्वाधीनकुशल होते हैं। अर्थात्–कण्व ऐसे सिद्ध महात्माओं की कुलशता का क्या पूछना है, कुशलता तो उनके हाथ की बात है। तपस्या के प्रभाव से उनकी अकुशलता कभी सम्भव ही नहीं है। हाँ, हमारे गुरु भगवान् कण्वने पहिले आप से अनामय ( आरोग्यता ) का प्रश्न करके फिर यह सन्देश आपसे कहा है।

राजा—भगवान् कण्वकी मेरे को क्या आज्ञा है ?।

शार्ङ्गरव—भगवान् कण्वने आपसे कहा है, कि—"हे राजन् ! आपने परस्पर की इच्छा से ही ( गान्धर्व विधि से ही ) मेरी इस कन्या शकुन्तला

त्वमर्हताम्प्राग्रहरः स्मृतोऽसि नः,
शकुन्तला मूर्त्तिमतीव सत्क्रिया।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥१६॥

युवयोः=भवतोः। तत् = स्वेच्छाचरितमुपयमनम्। कुतो मयाऽनुज्ञातमत आह—

त्वमर्हतामिति। त्वम्=भवान् दुष्यन्तः। अर्हतां=पूज्यानां। प्राग्रहरः=मुख्यतमः। नः=अस्माकं। स्मृतोऽसि=मतोऽसि। 'परार्घ्याऽग्र्याः प्राग्रहराः' इत्यमरः। शकुन्तला च—मूर्तिमती=शरीरधारिणी। सत्क्रियेव=शोभना क्रियेव। सत्कारस्य साक्षान्मूर्त्तिरिव। सकलजनाऽभिनन्दनीयास्तीति यावत्। तुल्या गुणा यस्य तत्–तुल्यगुणं=समानगुणम्। वधूश्च वरश्चानयोः समाहारः–वधूवरं=वधूं वरञ्च। समानयन्=सम्यग् योजयन्। प्रजापतिः = धाता। चिरस्य=चिरकालेन। चिरप्ररूढं। 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः। वाच्यम्=अपवादम्। 'वाच्यं वक्तव्यमित्येतौ वर्त्तेते प्रतिपादने। वचोऽर्हे कुत्सिते हीने दूषणेऽभिधयोदिते' इति धरणिः। न गतः = न प्राप्तः। शकुन्तलादुष्यन्तलक्षणं योग्यं वधूवरं स्वयं

के साथ, मेरी अनुमति लिए बिना ही, जो विवाह किया है, तुम दोनों के स्वेच्छा से किए हुए उस विवाह को मैंने प्रसन्नता पूर्वक अब अनुमोदन ( स्वीकार ) ही किया है। क्यों कि—आपको भी राजा होने के कारण हम,–पूजनीयों और आदरणीयों में श्रेष्ठ समझते हैं, और यह शकुन्तला भी मूर्तिमती ( शरीर धारिणी, साक्षात् ) सत्क्रिया ( सत्कार, पूजा रूप ) ही है। अतः बहुत समय के बाद ऐसे तुल्यगुण वधू-वर का जोड़ा मिलाने से ब्रह्माजी ( विधाता ) भी चिरकाल के बाद ही संसार की प्रशंसा के पात्र हुए हैं। अर्थात्-ब्रह्माजी समान गुण शील वधू वर के जोड़े को बहुत कम मिलाते हैं। कन्या सुन्दर होती है, वो वर उसके अयोग्य रहता है, वर गुणी सुन्दर युवा है, तो कन्या कुरूपा, निर्गुण ( प्रायः ) होती हैं। पर दोनों ही तुल्य रूप वय गुण शील

१ 'त्वमर्हतामग्रसरः'।

—तदिदानीमापन्नसत्त्वेयं गृह्यतां सहधर्मचरणाय" इति।

**गौतमी**—भद्दमुह ! किम्पि वत्तुकामह्मि, ण मे वअणावसरो अत्थि।

[ भद्रमुख ! किमपि वक्तुकामाऽस्मि, न मे वचनावसरोऽस्ति ]।

**राजा**—आर्ये ! कथ्यताम्।

---

मिथो घटयन् विधिश्चिरप्ररूढमसमानशीलवधूवरमेलनव्यसनित्वरूपमपवादं मार्जितवानिति भावः। [ समालङ्कारः। काव्यलिङ्गम्। उत्प्रेक्षाऽनुप्रासौ। 'वंशस्थं वृत्तम्' ]॥ १६ ॥

सत्त्वमापन्ना-आपन्नसत्त्वा। यद्वा—आपन्नं सत्त्वं यां-सा-आपन्नसत्त्वा = गर्भिणी। 'आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः। सह=सहैव। धर्मस्य चरणाय = आश्रमधर्मपालनाय। सपत्नीकस्यैव धर्मेऽधिकारात्। भद्राणां मुखमिव मुखं यस्य तत्सम्बुद्धौ-भद्रमुख!=हे सुन्दर। हे कल्याणमूर्त्ते। हे सज्जनशिरोमणे ! भद्रं मुखं, मुखे वा यस्येति वा। वचनस्य = वक्तव्यस्य। अवसरः = प्रस्तावः। 'प्रस्तावः स्यादवसरः' इत्यमरः।

---

वाले वर-वधू कभी नहीं मिलते हैं। अत एव लोग विधाता की इसके लिए निन्दा ही किया करते हैं। परन्तु तुम यदि सत्कार के योग्य हो, तो मेरी यह शकुन्तला सत्काररूप है, अतः तुमारा दोनों का समान रूप गुणवालों का, जोड़ा बड़े भाग्य से विधाता ने बहुत दिनों बाद स्वयं ही मिला दिया है। अतः विधाता सदा की तरह निन्दा के पात्र न होकर, प्रशंसा के ही पात्र हुए हैं। अर्थात्—हमें भी तुमारा यह विवाह स्वीकार है, क्योंकि तुम मेरे मन के लायक ही वर हो ॥ १६ ॥

और अब यह आपकी पत्नी शकुन्तला गर्भिणी है, अतः इसको धर्माचरण के लिए अपने पास रखिए"।

**गौतमी**—हे भद्रमुख ( हे मधुरभाषी कल्याणमूर्ति राजन् ! ) मैं भी कुछ कहना चाहती हूँ, पर मुझे कहने का अवसर ही नहीं मिल रहा है।

**राजा**—हे आर्ये ! कहिए, आप क्या कहना चाहती हैं ?।

गौतमी—णावेक्खिदो गुरुअणो इमिए,
तुइ पुच्छिदो[1] ण बन्धुजणो।
एक्ककस्सअचरिए,
भणामि[2] किं एक्सेक्कस्स[3] ? ॥ १७ ॥

[ नापेक्षितो गुरुजनोऽनया, त्वयाऽपि न पृष्टो बन्धुजनः।
एकैकस्य (च) चरिते भणामि किमेकैकम् ? ॥ १७ ॥ ]

शकुन्तला—(आत्मगतम्-) किण्णु क्खु अज्जउत्तो भणिस्सदि ?।
[ किंनु खल्वार्य्यपुत्रो भणिष्यति ? ]।

राजा—( साऽऽशङ्कमाकर्ण्य- ) अये ! किमिदमुपन्यस्तम् ?।

---

नापेक्षित इति। अनया=शकुन्तलया। गुरुजनः=अस्मदादिलक्षणः। कण्वादिश्च। नापेक्षितः=न गणितः। न पृष्टः। त्वयाऽपि=राज्ञाऽपि। बन्धु-जनः=स्वबन्धुवर्गः। न पृष्टः। तदेवम्—एकैकस्य=युवयोः परस्परस्य। चरिते=आचरिते। एकैकं=परस्परं भवन्तौ। किं भणामि। उभयोरपराधे नैक उपा-लभ्यते इत्याशयः। अतो नोचितं त्वं कृतवानसीति ध्वन्यते। [ गाथा ] ॥१७॥

'अये' इत्याश्चर्ये। इदं=स्वेच्छापरिणयनादिकम्। किं=कुतः।

---

हे राजन् ! इस शकुन्तला ने तो अपने गुरुजनों से इस सम्बन्ध के विषय में नहीं पूछा। और आपने भी बन्धु-बान्धवोंसे इस विषय में नहीं पूछा। अतः तुम दोनों हीं एक ही प्रकार के दोषी हो, अतः किसको दोष दिया जाए। अर्थात् एक अपराधी हो तो उसको कहा-सुना जाए, पर जब दोनों ही दोषी हैं, तब किसको, किसके लिए दोष दिया जाए॥ १७॥

शकुन्तला—( मन ही मन ) देखें—अब इस पर आर्यपुत्र ( मेरे भर्त्ता दुष्यन्त ) क्या कहते हैं ?।

राजा—( बड़ी शङ्कापूर्वक सुनकर-) हैं ! हैं ! यह क्या कहा जा रहा है !। यह क्या बात आप लोग कह रहे हैं ?।

---

१ 'ण तुएवि पुच्छिदो बन्धु'। २ 'भणादु' [भणतु]। ३ 'एक एक्स्सिं'। [ एक एकस्मिन् ]।

शकुन्तला—( आत्मगतं- ) हद्दी हद्दी ! [1]सावलेवो से वअणोवण्णासो ! ।

[ हा धिक् हा धिक् ! [1]सावलेपोऽस्य वचनविन्यासः ! ]

शार्ङ्गरवः—किं नाम-'किमिदमुपन्यस्त'मिति ? । ननु भवन्त एव सुतरां लोकवृत्तान्तनिष्णान्ताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।

---

उपन्यस्तम् = उक्तम् । सावलेपः = सगर्वः । साहङ्कारः । 'पावक' इति पाठे—पावकः = अग्निसमः । वचसस्तथात्वं च दाहकत्वात् । वचनोपन्यासः= वाग्विन्यासः । 'सावलेप' इति पाठान्तरे-साभिमान इत्यर्थः । किं नामेति 'किमिदमुपन्यस्त'मित्येवं किमुच्यते त्वया । ननु = निश्चये । लोकानां वृत्तान्तेषु निष्णाताः = लोकव्यवहारपटवः । 'निष्णातो निपुणेऽपि चे'त्यमरः ।

लोकव्यवहारमेव निर्दिशति-सतीमपीति । यतः भर्तृमतीं = सभर्तृकां युवतिम् । सधवां । ज्ञातिकुलमेकः संश्रयो यस्याः सा, तां-ज्ञातिकुलैकसंश्रयां = पितृगृहमात्रवासशीलाम् । 'ज्ञातिः सगोत्रे पितरी'ति विश्वः । सतीमपि=पतिव्रतामपि । [ प्रमदां = युवतीम् ] । जनः = लोकः । अन्यथा = अन्यप्रकारेण । असतीत्वेनेति यावत् । विशङ्कते = शङ्कते । अतः = अस्मादेव खलु कारणात् । प्रिया =

---

शकुन्तला—( मन ही मन ) हा धिक्, हा धिक् ! यह तो इनका वचन बड़ा ही अहङ्कार युक्त ( तिरस्कारपूर्ण ) है । ( और अग्निकी तरह जलाने वाला है ) ।

शार्ङ्गरव—आप यह क्या कहते हैं, कि—'यह क्या बात है ?' । हे राजन् ! आप तो स्वयं ही लोकव्यवहार को अच्छी तरह से जानने वाले हैं ।

क्योंकि—जिसका पति विद्यमान है, ऐसी युवति स्त्री यदि बराबर पिता या बन्धु-बान्धवों के ही घरपर रहे तो, चाहे वह सती साध्वी ही क्यों न हो, परन्तु लोग तो उसके विषय में नाना प्रकार की विपरीत आशङ्काएं ( व्यभिचार आदि

---

१ 'पावकः' । 'वअणावक्खेवो' [ वचनाक्षेपः ] ।

अतः समीपे परिणेतुरिष्यते
प्रियाऽप्रिया च प्रमदा स्वबन्धुभिः ॥१८॥

राजा—किमत्रभवती मया परिणीतपूर्वा ?।

शकुन्तला—( सविषादमात्मगतं- ) हिअअ ! संपदं ( [2]संवुत्ता ) दे आसङ्का ।

[ हृदय ! साम्प्रतं ( [2]संवृत्ता ) ते आशङ्का[3] ]।

अनुमता । अप्रिया च=अप्रिया वा । अननुमता वा । 'भर्त्तु'रिति शेषः । प्रमदा=कामिनी । स्वबन्धुभिः = वधूबन्धुभिः । परिणेतुरेव—भर्त्तुरेव । समीपे=संनिधौ । इष्यते = वाञ्छयते । अतो युवत्याः खल्वस्याः शकुन्तलाया भवदन्तिके प्रापणमेव अस्माकं वधूबन्धूनां युक्तमिति भावः । [ अप्रस्तुतप्रशंसा । काव्यलिङ्गम् । अनुप्रासः । अर्थविशेषणं नाट्यालङ्कारः । 'उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा । उपालम्भस्वरूपेण तत्स्यादर्थविशेषणम्' इत्युक्तेः । 'वंशस्थं वृत्तम्' ] ॥ १८ ॥

अत्रभवती=मान्येयं तापसदुहिता शकुन्तला । पूर्वं परिणीता—परिणीतपूर्वा=कृतोद्वाहा । किम् ? = किमु इति प्रश्नः । न मया तथा स्मर्यत इत्याशयः ।

साम्प्रतं = युक्ता । ते आशङ्केत्यन्वयः । यदाशङ्कितममङ्गल मया तदिदमुपस्थितमिति भावः । 'आतङ्क' इति पाठान्तरे 'भय'मिति तदर्थः । 'संवृत्ते'ति च क्वचित्पाठः । तदा—तथ्या जातेत्यर्थः ।

दूषणों की शङ्काएं ) करने लगते हैं । इसलिए युवति स्त्री को, चाहे वह पति की प्रिया हो, चाहे पति उसे नहीं भी चाहता हो, तो भी—उसके स्वकीय बन्धु-बान्धव उसे पति के ही पास छोड़ना उत्तम समझते हैं ॥ १८ ॥

राजा—तो क्या मैंने इन श्रीमती जी ( शकुन्तला ) से कभी विवाह भी किया है ?।

शकुन्तला—( बड़े खेद के साथ, मनही मन ) हे हृदय ! तेरी अमङ्गल की आशङ्का सच्ची सिद्ध हुई ।

१ 'वा' । २ अयं पाठः क्वचिन्न । ३ 'आतङ्कः' पा० ।

**शार्ङ्गरवः—**

**किं कृतकार्य्यद्वेषो, धर्मं प्रति विमुखता, कृताऽवज्ञा ? ।**

**राजा—कुतोऽयमसत्कल्पनाप्रसङ्गः ? ।**

**शार्ङ्गरवः—**( सक्रोधं- )

**मूर्च्छन्त्यमी विकाराः, प्रायेणैश्वर्य्यमत्तानाम् ॥ १९ ॥**

---

किमिति । कृते = स्वेच्छया निष्पादिते । कार्ये = गान्धर्वविवाहे । द्वेषः = अरुचिः । किम् ? = किम् । धर्मं प्रति = धर्माचरणं प्रति । विमुखता=वैमुख्यं-किम् ?। धर्मसम्पादनार्थमिमां परिणीयेदानीं धर्मार्जनवैमुख्यं ते जातं किमित्याशयः। कृतस्य = कृतस्य कर्मणः, अवज्ञा=अनादरः किम् । अथवा-अवज्ञा=अवधीरणा । कृता किमस्माकम् ? । त्वया अवहेलनमस्माकं क्रियते किमित्याशयः ।

असत्याः कल्पनायाः प्रसङ्गः-असत्कल्पनाप्रसङ्गः = अनुचितोद्भावनावसरः। कुतः = कस्मात् । मयि भवतां कुतोऽयमुपालम्भ इत्याशयः ।

उत्तरार्द्धेन तदुत्तरमाह—मूर्च्छन्त्यमी इति । यतः-अमी=कृतकार्यद्वेषाऽवज्ञादयः । विकाराः=दोषाः । ऐश्वर्येण मत्तानाम् = प्रभुत्वमदोन्मत्तानां । प्रायेण= बहुलं । मूर्च्छन्ति = उद्भवन्ति । वर्द्धन्ते । ऐश्वर्येण मत्त एव भवान् कृतकार्यद्वेषं

---

**शार्ङ्गरव—**हे राजन् ! क्या तुम स्वयं अपने मनसे ही किए हुए गान्धर्व विवाह से अब द्वेष करते हो, अरुचि हो जाने से अब उससे हटना चाहते हो ? । अथवा-क्या धर्म से विमुख होना चाहते हो ? । अथवा-क्या अपने किए हुए का भी तिरस्कार करना चाहते हो, या हमारा ही अपमान करना चाहते हो ? ।

**राजा—**इन मिथ्या कल्पनाओं का अवसर ही कहाँ है ? । [ अर्थात्-मैंने तो इससे विवाह ही नहीं किया है ] ।

**शार्ङ्गरव—**( क्रोधपूर्वक ) क्योंकि-प्रायः ऐसे विकार ( किए हुए कार्य से द्वेष पूर्वक हटना, धर्म से विमुखता, स्वयं किए हुए काम से अरुचि और महात्माओं का तिरस्कार करना आदि दोष ) ऐश्वर्य ( राज्य सम्पत्ति, प्रभुत्व )

---

१ 'किं कृतकार्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः' पा० ।

राजा--विशेषेणाऽधिक्षिप्तोऽस्मि ।

गौतमी--( शकुन्तलां प्रति- ) जादे ! मुहुत्तअं मा लज्ज, अवणइस्सं दाव दे अवगुण्ठणं, तदो भट्टा तुमं अहिजाणिस्सदि ।

( -इति तथा करोति ) ।

[ जाते ! मुहूर्त्तकं मा लज्जस्व, अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततो भर्त्ता त्वामभिज्ञास्यति ] ।

राजा --( शकुन्तलां निर्वर्ण्य, स्वगतम्- )

---

कृतावज्ञादिकं वाऽस्मदवज्ञां वा किमु करोतीत्याशयः । [ अर्थान्तरन्यासः । 'संरम्भवचनप्रायं तोटकम्'—इत्युक्तेस्तोटकं नाम गर्भसन्ध्यङ्गम् । आर्या जातिः ] ॥ १६ ॥

विशेषेण = अत्यन्तम् । अधिक्षिप्तः = तिरस्कृतः । इत आरभ्य विमर्शसन्धिः षष्ठाङ्कसमाप्ति यावत् ।

मुहूर्त्तकं = किञ्चित्कालम् । आपत्कालेऽस्मिन्निति यावत् । अवगुण्ठनम् = मुखावरणम् । [ 'घूँघट' 'पर्दा' इति भाषायाम् ] । तावत् = प्रथमम् । अपनेष्यामि= दूरीकरिष्यामि । तथा करोति = अवगुण्ठनमपनयति । निर्वर्ण्य = नितरां विलोक्य ।

---

से उन्मत्त हुए लोगों में प्रायः होते ( बढ़ते ) हुए देखे जाते हैं ॥ १९ ॥

राजा—यह तो मेरे ऊपर स्पष्ट ही कलङ्क और मिथ्या दोषोंका आरोपण है।

गौतमी—( शकुन्तला के प्रति ) हे पुत्रि ! थोड़ी देर के लिए लज्जा को छोड़ । मैं तेरा घूंघट हटाती हूं । तब तेरा पति तुझको पहिचान लेगा ।

( शकुन्तला का घूंघट हटाती है ) ।

[ इससे सिद्ध होता है, कि—पर्दा प्रथा कालिदास के समय में, आज से २००० वर्ष पहिले भी थी । 'यवनों के समय से ही यह प्रथा हुई है' ऐसा कहने वाले इससे शिक्षा लें ] ।

राजा—( शकुन्तला को अच्छी तरह नीचे-ऊपर से देखकर, मनही मन ) इस उज्ज्वल कान्ति और लावण्य तथा सौन्दर्य से युक्त, स्वयं उपस्थित, ऐसे मनोहर सुकुमार अङ्गवाली हृदय हारिणी कान्ता को—'यह मेरे से कभी विवा-

इदमुपनतमेवंरूपमक्लिष्टकान्ति,
प्रथमपरिगृहीतं स्यान्नवेत्यध्यवस्यन् ।
भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं,
न खलु सपदि भोक्तुं, नापि शक्नोमि मोक्तुम् ॥२०॥

[—[1]इति विचारयन् स्थितः ] ।

इदमिति । अन्तस्तुषारो यस्य तत्-अन्तस्तुषारं=तुषाराऽऽसारजडीभूतम् । कुन्दं=माघ्यं पुष्पम् । निशान्ते=प्रभाते । भ्रमर इव=रोलम्ब इव । इदं=पुरोवर्त्ति । एवम्=इत्थम् । दैवात् । उपनत=प्राप्तम् । अक्लिष्टा कान्तिर्यस्य तत्-अक्लिष्टकान्ति=उज्ज्वलं । रूपम्=आकृतिः । प्रथमं परिगृहीतं=गान्धर्वेण विधिना स्वीकृतं, दृष्टं वा । स्यात्=भवेत् । न वा=न परिगृहीतं वा स्यात् । इति=इत्थम् । अध्यवस्यन्=अहं वितर्कयन् सन् । सपदि=सहसा । एकपदे एव । न भोक्तुं=न स्वीकर्त्तुम् । न च मोक्तुं= न च खलु त्यक्तुं । शक्नोमि । 'पूर्वं मयेयं कदाचिदुपभुक्ता नवेति विचारयन्—तुषारजडं कुन्दं भ्रमर इव परिभोक्तुं त्यक्तुं वा नाहं शक्नोमीत्याशयः । [ उपमा-सन्देहाऽलङ्कारौ । संशयाख्यं नाट्यलक्षणञ्च । 'मालिनी वृत्तम्' ] ॥ २० ॥

हित हुई है, या नहीं'-ऐसा संदेह करता हुआ मैं इसे उसी प्रकार न तो जल्दी से छोड़ ही सकता हूं, न इसका उपभोग ही कर सकता हूं, (न तो इसे स्वीकार ही कर सकता हूं ) जैसे माघ के महीने में होनेवाले, ओस से भरे हुए कुन्द पुष्प को-प्रातःकाल में भौंरा न तो छोड़ ही सकता है, और न उसके मकरन्द रस का पान ही कर सकता है ।

भावार्थ—जैसे ओस के कारण भीगे व ठण्डे रहने से भौंरा न तो प्रातः-काल में कुन्द पुष्प का रसास्वाद ही कर सकता है, न तो कुन्द के मधुर रस के लोभ से उसे छोड़कर अन्यत्र ही जा सकता है । वैसे ही धर्म भय के कारण मैं इसका स्वीकार और उपभोग भी नहीं कर सकता हूं, और न तो ऐसी स्वयं उपस्थित सुन्दरी युवति को छोड़ना ही चाहता हूं ॥ २० ॥

[ ऐसा विचार करता हुआ राजा चुपचाप ही बैठा रहता है ] ।

१ कश्चिन्न ।

प्रतिहारी—( स्वगतम्- ) [1]अम्मो ! धम्मावेक्खिदा भट्टिणो। ईदिसं णाम सुहोवणदं इत्थीरअणं पेक्खिअ को अण्णो विआरेदि ?।

[ [2]अम्महे ! [3]धर्मापेक्षिता भर्त्तुः। ईदृशं नाम सुखोपनतं स्त्रीरत्नं प्रेक्ष्य कोऽन्यो विचारयति ? ]।

शार्ङ्गरवः—भो राजन् ! किमिति जोषमास्यते ?

राजा—भोस्तपस्विनः ! चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि। तत्कथमिमामभिव्यक्तसत्त्वलक्षणामात्मानं[4] क्षेत्रिणं मन्यमानः प्रतिपत्स्ये ?

---

'अम्महे' इति हर्षे, आश्चर्ये वा। धर्ममपेक्षते तच्छीलस्तस्य भावो धर्मापेक्षिता=धर्मानुरागिता, धर्मप्रवणता। भर्त्तुः=स्वामिनो दुष्यन्तस्य। सुखेन। उपनतं=प्राप्तं। जोषमास्यते=तूर्णीं स्थीयते भवता। स्वीकरणं=गान्धर्वविधिनाऽङ्गीकारम्। अत्रभवत्याः=कण्वपुत्र्या अस्याः। किमिति=कुतो हेतोः। अभिव्यक्तं सत्त्वस्य लक्षणं यस्याः सा, तां [ प्रति ]=स्फुटगर्भचिह्नां [ प्रति आत्मानं क्षेत्रिणं मन्यमानः ], भार्यारूपं—क्षेत्रमस्यास्तीति क्षेत्री, तं क्षेत्रिणं। गर्भिण्या अस्या अद्य स्वीकारेऽस्यामुत्पन्नः पुत्रो मे क्षेत्रजः स्यान्नौरसः। यस्य

---

प्रतीहारी—( मन ही मन- ) अहो ! महाराज की धर्मपर कैसी दृढ़ आस्था है !। नहीं तो इस प्रकार स्वयं उपस्थित ऐसे सुंदर स्त्रीरत्न को देखकर, कौन दूसरा मनुष्य धर्म अधर्म का विचार कर सकता है ?।

शार्ङ्गरव—हे राजन् ! आप चुपचाप क्यों बैठे रह गए ?।

राजा—हे तपस्वियो ! मेरे बहुत विचार करने पर भी इस श्रीमती के साथ गान्धर्व विधि से अपने विवाह की बात तो मुझे स्मरण ही नहीं आ रही है। अतः मैं इस प्रकट गर्भ चिह्नवाली स्त्री को अपनी स्त्री कैसे कह सकता हूँ ?। क्योंकि—इसके गर्भसे जो पुत्र उत्पन्न होगा—वह मेरा औरस पुत्र न होकर क्षेत्रज ( अपनी स्त्री में दूसरे से उत्पादित ) पुत्र ही होगा। अतः मैं ऐसी स्त्री को कैसे रख सकता हूं ?। दूसरेकी सन्तानको मैं अपनी सन्तान कैसे बना सकता हूं ?।

---

१ 'अम्महे'। २ 'अहो'। ३ 'धर्मापेक्षिणो भर्त्तारः'। ४ 'मात्मानमक्षत्रियं'।

**शकुन्तला**—(स्वगतम्—) हद्धी हद्धी! कधं परिणए ज्जेव सन्देहो?। भग्गा दाणिं दूरारोहिणी आसालदा।

[ हा धिक् हा धिक्! कथं परिणय एव सन्देहः ?। भग्ना इदानीं दूरारोहिणी आशालता ]।

**शार्ङ्गरवः**—मा तावत्—

कृताऽवमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः।

---

पत्न्यामन्यो जनो गर्भं धत्ते स क्षेत्रीत्युच्यते। यथा पाण्डुः क्षेत्री। पाण्डवाश्च पाण्डोः क्षेत्रजाः पुत्राः। प्रतिपत्स्ये=ग्रहीष्यामि। परिणये=विवाहे। दूरमारोहते तच्छीला—दूरारोहिणी=अतिभूमिं गता। 'महिषी भूत्वा चक्रवर्त्तिनं तनयं प्रसोष्ये'—इत्यादिरूपा। आशैव लता=आशातन्तुः। भग्ना=छिन्ना।

मा तावत्=मैवं वादीः। मैवं कुरु। अस्याग्रिमेण श्लोकेन सहैवान्वयः।

कृतेति। मुष्टम्=अपहृतम्। स्वम्—अर्थम्=आत्मनो धनं। प्रतिग्राहयता=प्रत्यर्पयता। येन=मुनिना कण्वेन। दस्युरिव=चोर इव। पात्रीकृतोऽसि=पात्रतां नीतोऽसि। कृतोऽवमर्षो यस्याः सा—तां—कृतावमर्षां=कृतोपभोगां। विलोभ्य खण्डितामपि। सुतां=शकुन्तलाम्। अनुमन्यमानः=अनुमोदमानः।

---

शकुन्तला—( मन ही मन ) हा धिक्! हा धिक्! यहां तो ये विवाह में ही सन्देह कर रहे हैं! तब दूर तक बढ़ी हुई ( पति के प्रेम तथा पटरानी बनने की ) मेरी आशा तो-अब टूट ही गई समझना चाहिए।

शार्ङ्गरव—हे राजन्! तुमारे द्वारा अपनी भोली-भाली कन्या को लोभ लालच देकर, अपने में आसक्त कर, गान्धर्व विधि से ( स्वेच्छा से ) विवाह कर लेने पर भी, उसको भी स्वीकार करते हुए, महर्षि कण्व का इस प्रकार तुम अपमान मत करो। जिस—महर्षि ने तुमको उसी प्रकार अपनी कन्या का पति स्वीकार कर लिया है, जिस प्रकार चोरे हुए अपने धन का—चोरी करने वाले चोर को ही—दान पात्र मानकर उसे ही कोई—दान दे दे।

भावार्थ—जैसे कोई व्यक्ति चोरी करने वाले चोर को ही अपना चोरा गया

---

१ 'कृतावमर्षां'। २ 'नैव' पा०।

मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवाऽसि येन ॥२१॥

शारद्वतः—शार्ङ्गरव ! विरम त्वमिदानीम् । शकुन्तले ! वक्तव्य-मुक्तमस्माभिः । सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययप्रति-वचनम् ।

शकुन्तला—(स्वगतम्—) इमं अवत्थन्तरं गदे तादिसे अणुराए

---

नाम -प्रसिद्धौ । असौ मुनिः कण्वः । त्वया मा तावत् = नैव खलु । विमान्यः = अवमाननीयः। 'नैव मुनिर्विमान्यः' इति पाठे 'मा ताव'दिति नात्र श्लोके योज्यम् ।

स्वानुपस्थितौ सरलां स्वदुहितरं शकुन्तलां स्वेच्छयैव परिणीय तस्याः शीलस्य खण्डयितुस्ते दस्योरिवाऽशिष्टव्यवहारमविगणय्य—चौरायैव चोरितं वस्तु प्रयच्छन्निव-स्वदुहितरं तुभ्यमेव ददन्मुनिस्त्वया न तिरस्करणीयः । अन्यथा क्रुद्धः काल इव त्वां स विलयं नेष्यतीति भावः । [ समो, विषमश्चाऽलङ्कारः । उपमाऽनुप्रासौ । 'उपजातिः' ] ॥२१॥

एवमाह='न मया परिणीतेय'मित्याह । प्रत्यययुक्तं प्रतिवचनं-प्रत्ययप्रति-वचनं = साभिज्ञानमुत्तरम् ।

तादृशे = तादृशीं परां काष्ठां गते । अनुरागे = स्नेहे । इदमवस्थान्तरम् =

---

धन दान दे दे, उसी प्रकार चोरी से तुमारे द्वारा ऋषि की कन्या का विवाह कर लेने पर भी तुझ चोर को ही पात्र समझ कर अपनी कन्या को सौंप देने वाले महर्षि कण्व को तुम इस प्रकार अपमानित मत करो। नहीं तो तुमारा विनाश हो जाएगा ॥ २१ ॥

शारद्वत—हे शार्ङ्गरव ! अब तुम चुप रहो। हे शकुन्तले ! हमने जो कुछ राजा से कहना था, सो कह दिया। पर यह राजा ऐसी बात कह रहा है। ( विवाह करने से भी नाहीं कर रहा है )। अतः अब तूँ ही इसको विश्वासप्रद कोई बात कह, जिससे इसे विश्वास हो सके।

शकुन्तला—( मन ही मन ) जब उस प्रकार का ( आश्रम में दिखाया गया) इनका अनुराग ही इस दशा को पहुंच गया, (अर्थात् अनुराग तो दूर रहा,

किंवा सुमराविदेण ?। अथवा [1]अत्ता दाणिं मे सोधणीओ होदु त्ति किञ्चि वदिस्सं। ( प्रकाशम्—) अज्जउत्त !। (–इत्यर्द्धोक्ते—) अथवा-[2]संसइदे दाणिं परिणए ण एसो समुदाचारो !। पोरव ! ण जुत्तं णाम तुह पुरा अस्समपदे सब्भावुत्ताणहिअअं इमं जणं तधा समअपुव्वअं सम्भाविअ सम्पदं ईदिसेहिं अक्खरेहिं पच्चाक्खादुं ?।

[ इदमवस्थान्तरङ्गते तादृशेऽनुरागे किं वा स्मारितेन ?। अथवा आत्मेदानीं [3]शोधनीयो भवेदिति किञ्चिद्वदिष्यामि ( प्रकाशम्- ) 'आर्य्यपुत्र !—'( इत्यर्द्धोक्ते- अथवा संशयित इदानीं परिणये नैष

---

अभिज्ञानगम्यमवस्थाविशेषम्। गते = प्राप्ते सति। स्मारितेन = स्मरणोत्पादनायासेन। किंवा = किंनु फलम्। न किञ्चिदपि फलं पश्यामि। आत्मेदानीं मे शोचनीयः=शोच्यतां गतः। इत्येतद्व्यवसितं = मयाऽवधारितम्। 'शोधनीय' इति पाठे–निष्कलङ्कतां प्रापणीय इत्यर्थः।

संशयिते इति। आर्यपुत्रेति सम्बोधनं हि पत्यौ प्रयुज्यते। अयं च राजा मां सम्प्रति स्वभार्यात्वेनापि न स्वीकुरुते। अतः-संशयिते=संशयापन्ने। सन्दिग्धे। परिणये = विवाहे। एष = 'आर्यपुत्रे'ति सम्बोधनपदप्रयोगः। न समुदाचारः= न युक्तः। 'आर्यपुत्रे'ति चाभ्यासवशादुक्त्वाऽर्द्ध एव तन्निरुद्धय पौरवेति सम्बोधेन वक्तुमारभते इति भावः।

अर्द्धोक्त इति। आर्यपुत्रेति सम्बोधनमात्रमुक्त्वा मनसि विमृशति—अथवेति। संशयिते परिणये = विवाहेऽपि यदि संशयस्तदा। एष = आर्यपुत्रेति

---

पहिचानना भी जहाँ कठिन हो रहा है ) तब स्मरण दिलाने से भी क्या लाभ होगा ?।

अथवा—अपनी आत्मा की शुद्धि के लिए ( अपनी सचाई व निर्दोषिता, एवं निष्कलङ्कता सिद्ध करने के लिए ) ही मैं कुछ कहती हूं। ( प्रकट में—) हे आर्यपुत्र ! हे स्वामिन् ! ( इतना आधा ही वाक्य कहकर, बीच में ही रुक कर )

---

१ 'आत्मेदानीं मे शोचनीय इत्येतद्व्यवसितं' पा०।

२ 'संसइदो दाणिं एसो' [संशयित इदानीमेषः] पा०। ३ 'शोचनीयाः'।

**समुदाचारः। 'पौरव! [1]न युक्तं नाम तव पुरा आश्रमपदे सद्भावोत्तान-हृदयमिमं जनं तथा समयपूर्वकं [2]सम्भाव्य साम्प्रतमीदृशैरक्षरैः प्रत्याख्यातुम्' ! ]।**

---

सम्बोधनप्रयोगः। न समुदाचारः = ननु लोकरीतिविदनुमोदितो नैव भवति। परिणीतैव हि प्रमदा स्वपतिमार्यपुत्रेति भाषते। तद्यदि परिणयेऽपि नामाऽत्र सन्देहस्तदैव सम्बोधनं न कथमपि मम युज्यते-इति भावः।

आर्यपुत्रेति सम्बोधनमनुचितमिति—सम्बोधनान्तरं प्रयोजयन्ती वक्तव्यमारभते—**पौरवेति**। हे पुरुवंशसम्भवेति तदर्थः। तन्न युक्तमनार्यमार्गानुसारणं भवत ईदृशकुलोत्पन्नस्यैवमिति भावः। नामेति कुत्सायाम्। 'नाम प्राकाश्य-सम्भाव्यक्रोधोपगमकुत्सने' इत्यमरः। पुरा = पूर्वम्। आश्रमपदे = तपोवने। सद्भावेनोत्तानं हृदयं यस्य तं—सद्भावोत्तानहृदयं = प्रणयातिशयपेशलविमल-मानसम्। इमं जनं = मां बालां दीनां तपस्विनीं। समयपूर्वकं = शपथपूर्वकं। नानाविधाश्वासनप्रदानपूर्वकञ्च। 'परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य नः'—इत्यादिप्रतिज्ञापूर्वकमिति यावत्। सम्भाव्य = स्वीकृत्य। 'प्रतार्ये'ति पाठे-वञ्चयित्वेत्यर्थः। ईदृशैरक्षरैः=पूर्वोक्तैः-'किमत्र भवती मया परिणीतपूर्वे'त्यादिभिः। प्रत्याख्यातुं = निराकर्त्तुम्। न युक्तमिति सम्बन्धः। 'युक्तं नामे'ति पाठे-युक्तं नाम ?। नैव युक्तमिति च काका तदर्थो बोध्यः। शान्तं शान्तं=शिव! शिव!।

---

अथवा—जब विवाह में ही संशय हो रहा है, तब इन्हें 'आर्यपुत्र' यह सम्बोधन देना भी उचित नहीं है। क्योंकि—'आर्यपुत्र' यह सम्बोधन तो विवाहित पति के लिए ही हो सकता है। ( आर्यपुत्र=आर्य मेरे श्वसुरजी के,—पुत्र = अर्थात् हे स्वामी। यह पति को ही कहा जा सकता है )। हे पौरव! आश्रम में सद्भाव=सच्चे अनुराग—से उत्तान एवं स्निग्ध हृदय वाले इस जन को (मुझको) नाना प्रकार की आशाएँ दिला कर, मुझसे गान्धर्व रीति से विवाह करके, मेरे साथ रति क्रीडा, विहार आदि करके, अब इस प्रकार रूखे वचनों से प्रत्याख्यान ( नाहीं ) करना तुम्हारा कथमपि उचित नहीं है।

---

१ 'युक्तं नाम'। २ 'प्रतार्य' पा०।

राजा—( कर्णौ पिधाय—) [1]शान्तं पापम् ।

व्यपदेशमाविलयितुं
किमीहसे, माञ्च नाम पातयितुम् ।
कूलङ्कषेव सिन्धुः
प्रसन्नमोघं, तटतरुञ्च ? ॥ २२ ॥

---

मिथ्यैतत् । 'अलीके शान्तमव्यय'मिति विश्वः । 'शान्तं पाप'मिति पाठे-पापं = मिथ्या वचः । शान्तं भवतु । नैवं त्वया वाच्यम् । त्वया विरम्यतामिति यावत् ।

व्यपदेशमिति । कूलङ्कषतीति कूलङ्कषा=तटपाटनप्रवणा । सिन्धुः=नदी । प्रसन्नं = स्वच्छम् । ओघं=जलप्रवाहम् । 'ओघो वेगे जलस्य चे'ति मेदिनी । आविलयितुं = मलिनीकर्त्तुम् । तटतरुं = रोधोवृक्षञ्च । पातयितुम् = उन्मूलयितुं । यथा ईहते=चेष्टते । तथा—व्यपदिश्यतेऽनेनासौ व्यपदेशः, तं व्यपदेशं=कुलं, प्रतिष्ठां । पुरोः कुलम् । आविलयितुं=दूषयितुं । कलङ्कयितुम् । माञ्च=दुष्यन्तञ्च । पातयितुम् = विनिपातयितुम्, पतितं कर्त्तुम् । ईहसे किम् ?=त्वमिच्छसि किम् ? । अतो मैवं वद, नाहं पापं कर्त्तुमुत्सहे, पवित्रं हि नः कुलमिति भावः । कूल-संघर्षणप्रवणा नदी प्रसन्नं जलं यथा कलुषयति, तटतरुं च यथा पातयति—तथा त्वमित्युपमा । [ समुच्चयः । आर्या जातिः ] ॥ २२ ॥

---

राजा—[ कान पर हाथ रखकर ( कान बन्द करके ) ]—यह पापमय वाक्य शान्त हो, शान्त हो । अर्थात्—ऐसे पापमय वचन और अधिक मत कहो ।

अपने किनारे को ही काटने वाली नदी जैसे अपने स्वच्छ जल को मलिन कर देती है, और तट के वृक्षों को गिरा देती है, उसी तरह तूं भी मेरे वंश को, मेरे कुल की प्रतिष्ठा को क्या मलिन करना चाहती है, और मुझे भी क्या तूं नीचे गिराना चाहती है ? ॥ २२ ॥

---

१ 'शान्तं शान्तम्' पा० । २ 'समीहसे' ।

**शकुन्तला**—भोदु। जइ परमत्थदो परपरिग्गहसङ्किणा तुए एव्वं (¹वत्तुं) पउत्तं, ता अहिण्णाणेण केण वि तुह आसङ्कं अवणइस्सं।

[ भवतु। यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं (¹वक्तुं) प्रवृत्तं, तदभिज्ञानेन केनापि तवाऽऽशङ्कामपनेष्यामि ]।

**राजा**—²प्रथमः कल्पः।

**शकुन्तला**—( मुद्रास्थानं परामृश्य ) हद्दी हद्दी! अङ्गुलीअअसुण्णा मे अङ्गुली!। ( -इति सविषादं गौतमीमुखमीक्षते )!

[ हा धिक् हा धिक्! अङ्गुलीयकशून्या मे अङ्गुली! ]।

**गौतमी**— णं दे सक्कावदारे सचीतीत्थोदअं वन्दमाणाए पब्भट्ठं अङ्गुलीअअं।

---

भवतु = आस्तां तावदियं कथा, अलं च निन्दया। यदि-परमार्थतः = वस्तुतः। परस्य परिग्रहं शङ्कते, तेन—परपरिग्रहशङ्किना = 'परस्य पत्नीय'मिति शङ्काकुलेन त्वया। एवं वक्तुं प्रवृत्तम्=एवमभिहितं। तदा अन्येन अभिज्ञानेन= विश्वासोत्पादकेनानेनाङ्गुलीयकेन,—तवाऽऽशङ्कामपनेष्यामीति सम्बन्धः।

प्रथमः = श्रेष्ठः। उत्तमः। पाठान्तरे-उदारः = उचितः। कल्पः = मार्गः। मुद्रास्थानम् = अङ्गुलीयकनिवेशस्थानमङ्गुलिम्। परामृश्य = प्रेक्ष्य। शक्रावतारा-

---

शकुन्तला—अच्छा। यदि सचमुच मुझे दूसरे की स्त्री समझ कर ही यह सब कह रहे हो तो किसी चिन्ह को दिखाकर मैं तुम्हारी शङ्का को दूरकर देती हूं।

राजा—हाँ, यह सबसे उत्तम उपाय है। कोई ऐसा चिन्ह दिखाओ, जिससे मेरा तुमसे विवाह करना सिद्ध हो सके।

शकुन्तला—( अंगूठी पहिरने की जगह को टटोल कर ) हाय! हाय! मेरी अंगुली में तो वह अंगूठी नहीं है!।

( बड़े विषाद एवं शोक से गौतमी का मुख देखती है )।

गौतमी—मालूम होता है,—शक्रावतार तीर्थ में शची तीर्थ के जल की वन्दना करते समय जरूर तेरे हाथ से वह अंगूठी गिर गई है।

---

१ क्वाचित्कोऽयं पाठः। २ 'उदारः कल्पः'।

[नूनं [1]शक्रावतारे शचीतीर्थोदकं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ]।

**राजा**—( सस्मितम् ) इदं [2]तत्,—'प्रत्युत्पन्नमति स्त्रैणम्' इति यदुच्यते !।

**शकुन्तला**—एत्थ दाव विहिणा दंसिदं पहुत्तणम्। अवरं दे कधइस्सं।

[ अत्र तावद्विधिना दर्शितं प्रभुत्वम्। अपरं ते कथयिष्यामि ]।

**राजा**—श्रोतव्यमिदानीं संवृत्तम्।

**शकुन्तला**—णं एक्क दिअहे वेदसलदामण्डवे णलिणीवत्तभाअणगदं उदअं तुह हत्थे सण्णिहिदं आसी।

---

भ्यन्तरे = तस्मिन्प्रदेशे। शचीतीर्थं = गङ्गातीरे सरोवरविशेषः। तस्य-उदकं= जलम्। वन्दमानायाः = नमस्कुर्वाणायाः। प्रभ्रष्टं = गलितम्।

स्त्रैण = स्त्रीणां समूहः। प्रत्युत्पन्नमति = तात्कालिकप्रतिभाशालि-भवति। इति यदुच्यते = लोके जनैरुच्यते। इत्थं यल्लोकप्रसिद्धम्। इदं तत् = प्रत्युत्पन्नमतित्वं तदिदम्। ( 'हाजिरजवाबी' )। अत्र = अङ्गुलीयकदर्शने। विधिना = अदृष्टेन। प्रभुत्वं = स्वसामर्थ्यम्। 'अङ्गुलीयकन्तु मे भाग्यवैपरीत्यात्पतित'मिति भावः। अपरं=प्रत्यभिज्ञानान्तरम्। संवृत्तं=जातं। श्रोतुमनिच्छन्नपि श्रोष्याम्येव

---

**राजा**—( मुसकुराकर ) 'स्त्रियां प्रत्युत्पन्नमति ( हाजिरजवाब ) हुआ करती हैं' यह जो कहावत लोक में प्रसिद्ध है, वही बात यह है !। अर्थात्—यह सब 'त्रिया चरित्र' है। और कुछ भी इस बात में सार नहीं है।

**शकुन्तला**—अच्छा, यहाँ तो ( अंगूठी के विषय में तो ) दैव ( दुर्भाग्य ) ने अपना प्रभुत्व दिखा दिया। ( मुझसे अंगूठी छीन ली )। परन्तु मैं दूसरी बात कहती हूं।

**राजा**—कहो, अब उसे भी हमें सुनना हीं पड़ेगा।

**शकुन्तला**—आश्रम में एक दिन की बात है, वेतसलता के मण्डप में तुमारे हाथ में कमलिनी के पत्ते के बने दोने में जल भरा हुआ था।

---

१ 'शक्रावताराभ्यन्तरे' पा०। २ 'इदं तावत्प्रत्युत्पन्नमतित्वं स्त्रीणां'।

[ नन्वेकदिवसे वेतसलतामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् ]।

राजा--शृणुमस्तावत्।

शकुन्तला—तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअपोदओ उवट्ठिदो। तदो तुए 'अअं दाव पढमं पिअदु' त्ति अणुकम्पिणा उवच्छन्दिदो उदएण। ण उण सो अपरिचिदस्स दे हत्थादो उदअं उवगतो पादुं। पच्चा तस्सिं ज्जेव उदए मए गहिदे किदो तेण पणओ। एत्थन्तरे विहसिअ तुए भणिदं—'सव्वो सगणे वीससदि, जदो दुवे वि तुम्हे आरण्णआओ' त्ति।

[ तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः। ततस्त्वयाऽयं तावत् प्रथमं पिबत्विति अनुकम्पिना उपच्छन्दित उदकेन। न पुनः सोऽपरिचितस्य ते [1]हस्तादुदकमुपगतः पातुम। ततस्तस्मिन्नेवोदके मया गृहीते कृतस्तेन प्रणयः। [2]तदा अत्रान्तरे विहस्य त्वया

---

गत्यन्तराऽभावादित्युद्वेगसूचकं वच इदम्। नन्विति—सम्बोधने। नलिनीपत्रभाजनं=नलिनीपलाशपुटकं। पुत्रकृतकः=पुत्रीकृतः। मया पुत्रवत्प्रतिपालितः। मृगपोतकः=हरिणशिशुः। अयं=हरिणशिशुः। प्रथमं=मत्तोऽपि पूर्वम्। अनुकम्पिना=दयालुना। उपच्छन्दितः=अभ्यर्थितः। जलं दर्शयित्वा पातुमाहूत इति यावत्। पातुमुपगतः=जलपानायाऽऽगतः। तस्मिन्नेव=पुटकपात्रस्थिते। उदके=जले। प्रणयः=पानादरः। 'हस्ताभ्यास'मिति पाठे-त्वद्धस्तसंनिधावित्यर्थः। पाठान्तरे-तदा त्वमित्थं प्रहसितः=तदा त्वं ममापि

---

राजा—मैं सुन रहा हूं, कहती चलो।

शकुन्तला—उसी समय मेरे द्वारा पुत्र की तरह पाला हुआ 'दीर्घापाङ्ग' नामक मृग का बच्चा वहाँ आ गया। तब तुमने दया पूर्वक—'यही पहिले पानी पीए' इस विचार से उसे पानी पीने के लिए बुलाया। परन्तु वह तुमारे अपरिचित के हाथ से जल पीने को तुमारे पास नहीं आया। परन्तु उसी जल

---

१ 'न पुनस्तेऽपरिचयाद् हस्ताभ्यासमुपगतः' पा०।

२ 'तदा त्वमित्थं प्रहसितोऽसि' पा०।

भणितं-'सर्वः[1]सगन्धेषु विश्वसिति, यतो द्वावेव युवामारण्यकौ'-इति]।

**राजा**—आभिस्तावदात्मकार्य्यप्रवर्त्तिनीभिर्मधुराभिरनृतवाग्भिराकृष्यन्ते विषयिणः।

**गौतमी**—महाभाअ ! णारिहसि एव्वं मन्तिदुं। तवोवणसंवड्ढिदा क्खु अअं जणो अणभिण्णो कइतवस्स।

[ महाभाग ! नाऽर्हसि एवं मन्त्रयितुम् । तपोवनसंवर्द्धितः खल्वयं जनोऽनभिज्ञः कैतवस्य ]।

---

इत्थम् उपहासमकार्षीः। यत्—समानो गन्धो येषान्ते सगन्धास्तेषु–सगन्धेषु = स्ववर्गेषु। 'गन्धो गन्धक अमोदे लेशे सम्बन्धगर्वयोः'रिति विश्वः। द्वावेव युवां = शकुन्तलाहरिणौ। अरण्ये भवौ–आरण्यकौ = वनवासिनौ। 'स्त्रीपुंवच्चे'त्येकशेषः। [ अत्र आदानं नाम विमर्शसन्ध्यङ्गं, 'कार्यसङ्ग्रह आदान'मिति दर्पणोक्तेः। 'भूतकार्याख्यानमुत्कीर्त्तन'मित्युक्तेरुत्कीर्त्तनं नाट्याङ्गञ्च ]।

आभिः=एवंविधाभिः। आत्मकार्यप्रवर्त्तिनीभिः = स्वकार्यसाधिकाभिः। अनृताभिः = असत्याभिः। मिथ्योक्ताभिः। वाग्भिः = गीर्भिः। मिथ्यावाग्भिः। विषयिणः = कामिनः। आकृष्यन्ते = वशीक्रियन्ते। न तु वयन्तथाविधा इति भावः। एवं मन्त्रयितुम् = इत्थं कटु भाषितुम्। तपोवने = आश्रमे। संवर्द्धितः = प्रतिपालितः—तपोवनसंवर्द्धितः। अयं जनः = शकुन्तलेयम्। अन-

---

मरे दोने को जब मैंने हाथ में लिया तब उसने जल पी लिया। तब इस प्रसङ्ग में तुमने हँसकर कहा, कि—सभी अपने ही गण में ( अपने ही समान लोगों ) विश्वास करते हैं। क्योंकि तुम दोनों ही (मृग और शकुन्तला) वन के रहनेवाले हो। अतः इस मृग ने तुमारे ही हाथसे जल पीया, मेरे हाथ से नहीं पीया।

**राजा**—स्त्रियों द्वारा अपने मतलब के लिए गढ़ी गई इसी प्रकार की मीठी २ बातों से ही विषयी लोग आकृष्ट किए जाते हैं।

**गौतमी**—हे महाभाग ! आपको ऐसा नहीं कहना चाहिए। तपोवन में पाला-पोसा हुआ यह जन ( यह शकुन्तला ) किसी प्रकार के भी छल-प्रपञ्चों से बिलकुल अनभिज्ञ है।

---

१ 'स्वगणे' पा०।

राजा—अयि तापसवृद्धे !

स्त्रीणामशिक्षितपटुत्वममानुषीणां[1]
संदृश्यते, किमुत याः परिबोधवत्यः ।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः[2] परभृताः किल पोषयन्ति ! ॥२३॥

भिज्ञः = अविदितः । कैतवस्य = कपटस्य । मिथ्या कल्पनारूपस्य । तापसी चासौ वृद्धा च तत्सम्बुद्धौ-तापसवृद्धे ! = हे वृद्धतापसिके ! ।

स्त्रीणामिति । अमानुषीणामपि स्त्रीणां = तिर्यग्जातीयानामपि स्त्रीणाम् । पाठान्तरे स्त्रीणां मध्ये—अमानुषीषु = मनुष्यजातिव्यतिरिक्तास्वपि । अशिक्षितञ्च तत्पटुत्वञ्च—अशिक्षितपटुत्वम् = उपदेशं विनाऽपि गूढवञ्चनाचातुर्यम् । संदृश्यते = विलोक्यते । किमुत याः प्रति बोधवत्यः । याः–प्रतिबोधोऽस्त्यासां ताः—प्रतिबोधवत्यः = वागादिव्यवहारकुशलाः । ताः किमुत ? = तासां कौशलं तु पुनः किं वक्तव्यम् ? । खलु = यतः । अन्तरिक्षगमनात् = आकाशगमनशक्तिलाभात् । प्राक् = पूर्वं यावत् । स्वम् = आत्मीयम् । अपत्यजातम् = अपत्यसमूहम् । 'जातं जात्योघजन्मसु' इति विश्वः । अन्यैः द्विजैः = अन्यैः पक्षिभिः । काकैः । किल = खलु । परभृताः = कोकिलाः । पोषयन्ति = पालयन्ति । कोकिलाः स्वान्यपत्यानि काककुलायेषु निक्षिपन्ति, काकाश्च तानि स्वापत्यबुध्या पालयन्तीति कविप्रसिद्धिः । तदेवं तिर्यग्जातिष्वपि वाग्बुद्धिव्यवहारशून्या अपि स्त्रियो यदि कपटकुशलाः स्युः–किं वक्तव्यं–तदा बुद्धिमतीषु मानुषीषु कामिनीषु कपटकौशलमिति–राज्ञा शकुन्तलाऽधिक्षिप्ता । [ व्यतिरेकाऽप्रस्तुतप्रशंसाऽर्थान्तरन्या-

राजा—हे तापस वृद्धे ! ज्ञानवती मानुषी स्त्रियों की तो बात ही क्या है, पशु-पक्षी जाति की अज्ञान स्त्रियाँ भी, सिखाए बिना स्वभाव से ही चतुर और चालाक देखी जाती हैं । देखो, कोकिलाएं (कोयल) जब तक उनका बच्चा आकाश में उड़ने लायक नहीं हो जाता है, तब तक उसका पालन-पोषण अन्य पक्षियों से ( कौवों से ) ही कराती हैं । ( कोयल-अपने बच्चे को कौवे के

१ 'मममानुषीषु' पा० । २ 'अन्यद्विजैः' पा० ।

**शकुन्तला**—( सरोषम्- ) अणज्ज ! अत्तणो हिअआणुमाणेण किल सव्वं पेक्खसि ! । को णाम अण्णो धम्मकञ्चुअव्ववदेसिणो[1] तिणच्छण्णकूवोवमस्स तुह अणुआरी भविस्सदि ? ।

[ अनार्य ! आत्मनो हृदयाऽनुमानेन किल सर्वं प्रेक्षसे ! । को नामाऽन्यो [2]धर्मकञ्चुकव्यपदेशिनस्तृणच्छन्नकूपोपमस्य तवाऽनुकारी भविष्यति ? ] ।

---

सानुप्रासाः । हेत्ववधारणं, विमर्शसन्ध्यङ्गञ्च, 'निश्चयो हेतुनाऽर्थस्य मतं हेत्ववधारणम्' इति सुधाकरोक्तेः । 'वसन्ततिलका वृत्तम्' ] ॥ २३ ॥

सरोषं = सक्रोधम् । अनार्य != हे पापबुद्धे ! । आत्मनो हृदयादनुमानन्तेन= स्वहृदयं दृष्टान्तीकृत्य ततोऽनुमानेन । 'सर्वस्यैव स्वान्तं मलिनं, हृदयत्वात्, मद्धृदयव'दित्यनुमानेन । सर्वोऽपि कुटिलाशयः सर्वमपि जनं कुटिलमेव पश्यतीति प्रसिद्धमेव । सर्वं—लोकं वञ्चकमेव । प्रेक्षसे = पश्यसि । इदानीं=सम्प्रति । स्वकार्ये निर्वृत्ते सति । धर्मकञ्चुकव्यपदेशिनः=धर्मकञ्चुकच्छन्नव्यवहारपरस्य । दाम्भिकस्य । पाठान्तरे-धर्म एव कञ्चुकस्तं प्रविशति तच्छीलस्य धर्मकञ्चुकप्रवेशिनः= बहिर्धार्मिकस्य । 'मया परभार्या नाङ्गीक्रियते' इति दम्भपरायणस्य तृणैश्छन्नेन कूपेनोपमा यस्य तस्य—तृणच्छन्नकूपोपमस्य = तृणावृतकूपसदृशस्य । तव = कपटाचारस्य तव । अनुकृतिम् = अनुकरणं । कोऽन्यः = त्वदतिरिक्तः कः । प्रतिपत्स्यते = विधास्यति । त्वमेव वञ्चको, नाऽहं त्वदनुकारिणीति भावः ।

**धर्मकञ्चुकव्यपदेशिनस्तृणच्छन्नकूपोपमस्य तव अनुकारी भविष्यति**"

---

घोंसले में छोड़ देती हैं, कौवा उसे अपना ही बच्चा समझ, उड़ने लायक होने तक, पालता है । उड़ने लायक होते ही बच्चे उड़ जाते हैं । कौवा देखता ही रह जाता है ) ॥ २३ ॥

शकुन्तला—( क्रोध पूर्वक ) हे अनार्य = हे पापबुद्धे ! तेरा अपना जैसे छल—प्रपञ्च से भरा हुआ हृदय है उसी प्रकार ही तूं सब को समझता है । इस संसार में धर्म के ढोंग का जामा पहिन ढोंग बनाए हुए, तृण से ढके हुए

---

१ 'प्पवेशिणो' [प्रवेशिनः] । २ 'इदानीं तवानुकृतिं कोऽन्यः प्रतिपत्स्यते' ।

राजा—( आत्मगतं- ) वनवासादविभ्रमः पुनरत्रभवत्याः कोपो लक्ष्यते । तथाहि—

न तिर्यगवलोकितं, भवति चक्षुरालोहितं,
वचोऽतिपरुषाक्षरं, न च पदेषु सङ्गच्छते ।
हिमार्त्त इव वेपते सकल एव बिम्बाधरः,
प्रकामविनते भ्रुवौ युगपदेव भेदङ्गते ॥ २४ ॥

ति पाठे—धर्मकञ्चुकेन व्यपदेष्टुं शीलस्य तृणावृतकूपसदृशस्य दाम्भिकशिरोमणेस्तव अनुकारी = सदृशः कोऽन्यो भवेत् ? । न कोऽपि भवेदित्यर्थः ।

वनवासात् = तपोवननिवासाद्धेतोः । अविभ्रमः = विभ्रमशून्यः । सत्यवत् । अव्याकुलः । अविक्लवः । अकृतकः । सत्य इव । वास्तव इव इति यावत् ।

नेति । तिर्यक्-अवलोकितं न = कुटिलं निरीक्षणमस्या नैव । परं चक्षुरालोहितं = समन्ताद्रक्तवर्णं च—भवति = जायते । वर्त्तते । परुषाण्यक्षराणि यत्र तत्—परुषाक्षरं = क्रूरमपि । वचः = वाक्यम् । पदेषु = स्वावयवेषु पदेषु । न सङ्गच्छते = न व्यासक्तं भवति । किञ्च-बिम्बमिवाधरः-बिम्बाधरः = अधरोष्ठः । हिमार्त्त इव = तुषारपीडित इव । सकल एव = समग्र एव । वेपते = कम्पते । किञ्च-प्रकामं=यथेष्टं । विनते=नम्रे । अत्यन्तनम्रे धनुस्तुल्ये । भ्रुवौ-युगपदेव=

कूप की तरह दूसरों को फँसा कर गड़हे में गिराने वाले, तेरे समान और कौन दुष्ट और पापबुद्धि मनुष्य संसार में होगा ! ।

राजा—( मन ही मन ) वनवासिनी होने के कारण इसका कोप—निर्भय, अव्याकुल, तथा बिना बनावट का—सच्चा सा ही मालूम होता है ।

क्योंकि—

यह टेढ़ा नहीं देख रही है परन्तु इसके नेत्र लाल हो रहे हैं, इसके वचन भी अति कठिन अक्षर वाले ( कठोर ) और बिना रुके हुए निकल रहे हैं, इसका लाल २ ओठ भी शीत से पीडित मनुष्य के ओठ की तरह पूरा २ कांप रहा है, और अत्यन्त टेढ़ी दोनों भौंहें भी इसकी एक साथ चढ़ गई हैं । जिसका

१ 'धर्मकञ्चुकप्रवेशिनः' पा० ।

अपि च—[1]'सन्दिग्धबुद्धिं मामधिकृत्याऽकैतव इवाऽस्याः कोपः सम्भाव्यते। तथा ह्यनया:—

**मय्येवम[2]स्मरणदारुणचित्तवृत्तौ**
**वृत्तं रहःप्रणयमप्रतिपद्यमाने।**

---

एककालमेव। सहसैव वा। भेदं = भङ्गं। वक्रताम्। गते = प्राप्ते।

यश्च कृत्रिमेण क्रोधेन व्यवहरति तस्य लोचनं तिर्यग् वलति। वचो गद्गदं भवति। अधरश्च कञ्चिदेव कम्पते। भ्रुकुटिश्च नात्यन्तं विच्छिन्ना भवति। अर्थात् मिथ्याऽभिनीय प्रदर्श्यमानः क्रोधो न यथावद्विजृम्भते। अस्यास्तु वनवास-निर्भयवृत्तेस्तपस्विन्याः क्रोधो निरर्गल इव प्रकामं समुल्लसतीत्याशयः। राजानं-मामाक्रोशन्त्या अप्यस्या न मनाक् सम्भ्रमलेश इति गूढोऽर्थः। [ उत्प्रेक्षोपमे। स्वभावोक्तिरनुप्रासश्च। पृथ्वी वृत्तम् ] ॥ २४ ॥

अपि च = किञ्च। सन्दिग्धा बुद्धिर्यस्य तं—सन्दिग्धबुद्धिं=संशयाकुलमतिं। माम्-अधिकृत्य = मां विषयीकृत्य। अकैतवः = अकृत्रिम इव। सत्य इव। अस्याः कोपः-सम्भाव्यते=उत्प्रेक्ष्यते। **तथा ह्यनयेति**। अग्रिमेण श्लोकेनाऽयं सम्बध्यते।

**मय्येवमिति**। एवम्=इत्थम्। अस्मरणेन दारुणा चित्तवृत्तिर्यस्य तस्मिन् अस्मरणदारुणचित्तवृत्तौ = विस्मरणदारुणमनसि। अत एव—रहः = एकान्ते।

---

बनावटी व झूठा क्रोध होता है, वह इधर-उधर देखता है, उसके नेत्र भी लाल नहीं होते हैं, वाणी भी कठोर नहीं होती है, ओठ भी अधिक नहीं कम्पित होते हैं, भौंहे भी ज्यादा नहीं तनती हैं। परन्तु इसका क्रोध तो बनावटी व दबा हुआ नहीं है, किन्तु सच्चा और बे पर्वाह क्रोध है। अर्थात् इसको मेरा कुछ भी भय नहीं है, और इसके क्रोध की मात्रा भी पूरी २ बढ़ी हुई है ॥ २४ ॥

और भी—इसका कोप तो मुझे सन्देह में डाल रहा है, और सच्चा ही मालूम होता है। जैसे—

विवाह की बात याद नहीं आने से इस प्रकार मेरे कठोर चित्त होने पर,

---

१ 'सन्दिग्धबुद्धिं मां कुर्वन्' पा०।

२ 'मय्येव विस्मरण' पा०। 'एवमस्मरणे…' पदं वा।

भेदाद् भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवाऽतिरुषा स्मरस्य ॥२५॥
( प्रकाशम्— )
भद्र ! प्रथितं दुष्यन्तस्य चरितं, प्रजास्वपीदं न दृश्यते ।

---

वृत्तं=सम्पन्नं । प्रणयं = स्नेहम् । [ रहःप्रणयम् = एकान्ते वृत्तं प्रणयं, परिणयं= विवाहं वा ]। अप्रतिपद्यमाने = अस्वीकुर्वाणे । मयि-सति । मयि—विषये वा । अत्यन्तं रुड् अतिरुट् , तया-[1]अतिरुषा = अतिक्रोधेन । अत एव अतिलोहिते अक्षिणी यस्याः सा अतिलोहिताक्षी, तया-अतिलोहिताक्ष्या=अत्यारक्तनयनया । कुटिलयोः = स्वभावादतिवक्रयोः । भ्रुवोर्भेदात् = भ्रूभङ्गच्छलेन । स्मरस्य = कामस्य । शरासनं = कार्मुकं । भग्नमिव । अत्र सहजकुटिलयोर्भ्रुवोः स्मरधनूरूपयोर्भ्रु-कुटिबन्धे उत्क्षेपणात्स्मरधनुर्भङ्ग उत्प्रेक्षितः । आरक्तनयनादिकं हि अकृत्रिमे क्रोध एव भवति । [उत्प्रेक्षा । काव्यलिङ्गम् । अनुप्रासः । 'शकुन्तला—सरोष'-मित्यारभ्य-संफेटो नाम विमर्शसन्ध्यङ्गम् , 'संफेटो रोषभाषण'मिति विश्वनाथोक्तं च-- दर्शितम् । वसन्ततिलका वृत्तम् ] ॥२५॥

चरितं = शीलं । प्रथितं=प्रसिद्धम् । इदं=वञ्चकत्वं तु । प्रजास्वपि = साधा-रणेषु जनेष्वपि-इदं न संभाव्यते । किं नाम पुना राजनि मयि ।

---

और एकान्त में होने वाली प्रणय की बातों को स्वीकार नहीं करने पर, इसने लाल २ नेत्र करके, अति कुटिल अपनी दोनों भौंहों को टेढ़ा करके, मानों क्रोध से कामदेव का धनुष ही तोड़ दिया है। अर्थात्-मैंने विवाह सम्बन्ध आदि की बात जब नहीं स्वीकार की तो इसने क्रोध से लाल २ नेत्र करके, अपनी टेढ़ी भ्रुकुटियों को और भी टेढ़ा करके, मानों कामदेव का धनुष ही तोड़ दिया है। [ इसकी-भ्रुकुटी मानों कामदेव का धनुष ही है ]॥ २५ ॥

[ प्रकट में—] हे सुभगे ! दुष्यन्त का विशुद्ध पवित्र चरित तो जगद्विदित है। मेरी तो बात ही क्या है, मेरी साधारण प्रजा में भी ऐसा छल-कपट-अन्याय देखने को नहीं मिलेगा।

---

१ यद्वा—अत्यन्तं रुड् यस्याः सा तया—अतिरुषा=अतिक्रोधया तया भग्नमित्यर्थः ।

शकुन्तला—

तुह्मे ज्जेव पमाणं जाणध धम्मत्थिदिञ्च लोअस्स ।
लज्जाविणिज्जिदाओ जाणन्ति ण किम्पि महिलाओ ॥२६॥

सुट्ठु दाव अत्तच्छन्दाणुचारिणी गणिआ समुवत्थिदा ।

[ यूयमेव प्रमाणं जानीथ, धर्म्मस्थितिञ्च लोकस्य ।
लज्जाविनिर्जिता जानन्ति न किमपि महिलाः ॥२६॥

---

यूयमेवेति । यूयमेव=भवन्त एव । प्रमाणं=शास्त्रतत्वं । जानीथ=वेत्थ । लोकस्य = जगतः । धर्मस्य स्थितिं=धर्मस्य पालनं, मर्यादां वा । वेत्थ=जानीथ । लज्जया विनिर्जिताः = लज्जापरवशाः । महिलाः = माद्दश्यः कुलाङ्गनाः । किमपि न जानन्ति । भवादृशा वञ्चकाः पण्डितंमन्या एव धर्मनिर्णेतारो, लोकव्यवहार-विदश्च । याश्च लज्जाधनाः कुलमर्यादारक्षिकाः सरलाः स्त्रियस्ता न किमपि जानन्तीति-अहो तवेयं धारणेति उपालम्भकुटिलं शकुन्तलावचः । [ अप्रस्तुतप्रशंसा । व्याजस्तुतिः । 'आर्या' ] ॥२६॥

सुष्ठु=युक्तम् । आत्मनश्छन्देनानुचरति-तच्छीला-आत्मच्छन्दानुचारिणी = स्वेच्छाचारिणी । गणिका = वेश्या । समुपस्थिता ? = भवदन्तिकं प्राप्ता किमु ?। किमहं गणिका, यदेवं मां प्रति अनार्यं भाषसे ! इत्याशयः । 'सुष्ठु तावदत्र स्वच्छन्दचारिणी कृताऽस्मि, याऽहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थित-

---

शकुन्तला—आप ऐसे लोग ही तो अब शास्त्रों के तत्त्व के जानकार बने हुए हैं। आप ही तो एक लोगों की धर्म स्थिति ( धर्म की मर्यादा ) के जानकार हैं। लज्जा से परवश, स्वभाव से लज्जालु प्रकृतिवाली बेचारी स्त्रियाँ धर्म की स्थिति और उचित-अनुचित थोड़ा ही जानती हैं ?। अर्थात्-मैं लज्जा परायणा महिला तो झूठी हो गई, और तुम सच्चे बन गए। अपने मन में बड़ा कौन नहीं बनता है ?। अपने मनमें तो सभी बड़े हैं। भाव—तुम नितान्त झूठे हो, और अन्याय करने पर उतारू हो रहे हो, जो इस प्रकार लज्जावती स्त्री की प्रतिष्ठा और इज्जत भङ्ग कर रहे हो ॥ २६ ॥

मुझे भी क्या तुमने अपने मनसे चलने वाली स्वेच्छाचारिणी वेश्या ही

—सुष्ठु 'तावदात्मच्छन्दानुचारिणी गणिका समुपस्थिता ! ]

गौतमी—जादे ! इमस्स पुरुवंशपच्चएण मुहमहुणो हिअअविसस्स हत्थं समुवगदासि ।

[ जाते ! अस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयविषस्य हस्तं समुपगताऽसि ] ।

( शकुन्तला—पटान्तेन मुखमाच्छाद्य रोदिति ) ।

शार्ङ्गरवः—इत्थमप्रतिहतं चापल्यं दहति ।

**अतः परीक्ष्य कर्त्तव्यं विशेषात्सङ्गतं रहः ।**
**अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २७ ॥**

---

विषस्य हस्ताभ्यासमुपगता' इति पाठे—स्वच्छन्दचारिणी=वेश्या । पुरुवंशे यः प्रत्ययो=विश्वासः—'पौरवाः सत्यनिष्ठा भवन्ती'ति विश्वासः—तेन । मुखे मधु यस्य तस्य=मिष्टभाषिणोऽपि—हृदये स्थितं विषं यस्य तस्य—दुष्यन्तस्य । हस्ताभ्यासं=हस्तसमीपम् । उपगता=प्राप्ता—इत्यर्थः । जाते = हे पुत्रि ! ।

पटान्तेन=पटाञ्चलेन । इत्थम् = ईदृशम् । अप्रतिहतं = निरर्गलम् उच्छृङ्खलं । चापल्यं = चाञ्चल्यं । दहति=परिणामे सन्तापयतीति—शकुन्तलां प्रत्युपालम्भः ।

अत इति । अस्माद्धेतोः—सङ्गतं = सख्यं । मैत्रीति यावत् । परीक्ष्य कर्त्तव्यम् । विशेषात्=विशेषतः । रहःसङ्गतम्=गूढमैत्री तु । विवाहादिसम्बन्धस्तु । नितरां परीक्ष्य विवाहः ( विशेषतो गान्धर्वविवाहः ) कर्तव्य इत्याशयः । यद्वा—अतः—अस्मात्कारणात् । कर्त्तव्यं=करणीयं कार्यं, परीक्ष्य=इष्टैः सहालोच्य

---

समझ लिया है जो ऐसी बातें कह रहे हो ? ।

गौतमी—हे पुत्रि ! पुरुवंश के धोखे में, ऊपर से मीठे, पर हृदय में हलाहल विष से भरे हुए इस वञ्चक ( ठग ) के हाथ में ही तू पड़ गई है ! ।

[ शकुन्तला—कपड़े से मुख को ढक कर रोती है ] ।

शार्ङ्गरव—बढ़ी हुई चञ्चलता इसी प्रकार अन्त में कष्ट देती है । अर्थात्-

---

१ सुष्ठु तावदत्र स्वच्छन्दचारिणी कृताऽस्मि । याऽहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्याशमुपगता' इति पा० ।

राजा—अयि भोः ! किमत्रभवतीप्रत्ययादेवाऽस्मानसम्भृत-[1] दोषैरधिक्षिपन्तिभवन्तः ? ।

कर्त्तव्यम् । रहःसङ्गतम् = एकान्तसख्यं—विवाहादि तु, विशेषात् = विशेषतः परीक्ष्य कर्त्तव्यमित्याशयः ।

अज्ञातं हृदयं येषान्तेषु—अज्ञातहृदयेषु=अपरिज्ञातशीलेषु जनेषु । सौहृदम्= सख्यम् । एवम् = इत्थं । शकुन्तलादुष्यन्तवत् । वैरीभवति = परिणामे वैरायैव कल्पते । [ अर्थान्तरन्यासः । अप्रस्तुतप्रशंसा च ] ॥ २७ ॥

अत्रभवतीप्रत्ययात्=शकुन्तलावचनमात्रविश्वासात् । अस्मान् = जगद्विदित-माहात्म्यान् । 'असम्भृतदोषै'रिति पाठे—सम्पर्कलेशशून्यैरपराधैः । अकृतैरप-राधैः । अधिक्षिपन्ति = तिरस्कुर्वन्तीत्यर्थो बोध्यः । 'संयुतदोषाक्षरै'रित्यादि-पाठान्तरे तु—सम्यक् युतो दोषो येषु तानि अक्षराणि येषु तैः = दोषाधायकैः क्रूराक्षरैर्वचोभिः । क्षिणुथ=दूषयथ । [ ओजो नाम विमर्शसन्ध्यङ्गं दर्शितमेतेन, 'अधिक्षेपाद्यसहनमोजः' इत्युक्तेः राज्ञा शाङ्गरवाधिक्षेपाऽसहनस्य 'अयि भोः' इत्याद्युक्त्या प्रकटनात् ] ।

शकुन्तला ने जो अपने मन से, चञ्चलता के वश हो, गुप्त रूप से यह विवाह कर लिया उसका ही फल यह कष्ट अब इसे मिल रहा है ।

इसी लिए सम्बन्ध, विशेष कर गुप्त सम्बन्ध-( गुरू–विवाह सम्बन्ध )–तो बहुत सोच समझकर, खूब परख कर तब करना चाहिए । क्योंकि–अपरिचित हृदय वाले व्यक्ति के साथ हुआ सम्बन्ध अन्त में वैर के रूप में ही परिणत हो जाता है । जैसे शकुन्तला और इस राजा का गुप्त रूप से किया हुआ विवाह सम्बन्ध अब इस प्रकार विरोध का ही कारण हो रहा है ॥ २७ ॥

राजा—हे तपस्वियों ! क्या इस शकुन्तला के कहने पर विश्वास करके ही आप लोग असम्भावित दोषों ( जिन दोषों का मेरे में लेश मात्र भी सम्भव नहीं है, उन्हीं ठग, क्रूर हृदय, आदि दोषों ) से मुझे लाञ्छित कर रहे हैं ? ।

१ 'संयुतदोषाक्षरैरस्मान् क्षिणुथ' पा० ।

शार्ङ्गरवः—( साऽसूयं- ) श्रुतं भवद्भिरधरोत्तरम् ?।
आ जन्मनः शाठ्यमशिक्षितो य-
स्तस्याऽप्रमाणं वचनं जनस्य ! ।
'पराऽतिसन्धानमधीयते[1] यै-
र्विद्ये'ति ते सन्तु किलाऽऽप्तवाचः ! ॥ २८ ॥

साऽसूयं = सेर्ष्यम् । 'असूया, दोषारोपो गुणेष्वपि'—इत्यमरः । भवद्भिः = सभ्यैः । विदूषक-पुरोहितादिभिः । अधरञ्चोत्तरञ्चाऽनयोः समाहारः-अधरोत्तरम्= उत्तरप्रत्युत्तरम् । द्वयोरालाप इति यावत् । अधरञ्च तदुत्तरञ्चेति विगृह्य— 'क्षुद्रमुत्तर'मिति च केचनार्थं—वर्णयन्ति ।

असूयामेव विवृणोति—आ जन्मन इति । यो जनः—आ जन्मनः = जन्मप्रभृति । शाठ्यं=परवञ्चनाचातुर्यम् । अशिक्षितः=अबोधितः । अनध्यापितः । दुष्टादिसंसर्गाऽभावादनुपदिष्टः । तस्य जनस्य = प्रकृते शकुन्तलायाः । वचनं = वाक्यन्तु । अप्रमाणम्=अप्रामाणिकम् । यैः पुनः–यैः = राजादिभिः । प्रकृते दुष्यन्तेन । परातिसन्धानं = परवञ्चनमेव । विद्येति = विद्यारूपत्वेन । राजनीति-तया । कलाभावेन । अधीयते = पठ्यते । ते–आप्ता वाग् येषान्ते—आप्तवाचः= सत्यभाषिणः । प्रामाणिकाः । सन्तु किल = भवन्तु नाम ! । अत्र 'शकुन्तला-वचोऽप्रमाणं, दुष्यन्तोक्तं तु सत्य'मित्ति—अहो ! प्रमाणप्रमेयभावव्यवस्था— इत्यसूया प्रकटीकृता । [ अप्रस्तुतप्रशंसा । रूपकानुप्रासौ । 'शकुन्तला —सुष्ठु

शार्ङ्गरव—( असूया-पूर्वक राजा को हेय दृष्टि से देखता हुआ सबसे ) आप लोगों ने इस राजा की ऊँची-नीची ( चलती-फिरती सब ) बातें सुनी ! । जो लोग जन्म से ही छल-कपट से बिलकुल अपरिचित हैं, उनकी ( हम तपस्वियों की, एवं इस भोली-भाली शकुन्तला की ) बात तो अप्रामाणिक है, झूठी है, और जो दूसरों को ठगने को, छल और कपट को–एक कला, एक विद्या (राजनीति) समझकर रात दिन उसका ही अभ्यास किया करते हैं, रात-दिन छल

१ 'अभिसन्धानं' ।

राजा—अहो सत्यवादिन् ! अभ्युपगतं तावदस्माभिः—'एवं-विधा एव वयम्'। 'किं पुनरिमामतिसन्धाय [1]लभ्यते' ?।

शार्ङ्गरवः—'विनिपातः'।

राजा—'विनिपातः पौरवैः [2]प्रार्थ्यते'—इत्यश्रद्धेयमेतत्।

शार्ङ्गरवः—भो राजन् ! किमत्रोत्तरेण ?। अनुष्ठितो गुरु-नियोगः। सम्प्रति प्रतिनिवर्त्तामहे वयम्।

---

तावग्दित्यादिना द्रवो नाम सन्ध्यङ्गम्, 'द्रवो गुरुव्यतिक्रान्तिः शोकावेगादि-सम्भवा' इत्युक्तेः। 'उपजातिः' ]॥ २८॥

'सत्यवादिन्' इति सोल्लुण्ठनं वचः। अभ्युपगतं = स्वीकृतम्। एवं-विधाः = मायाविनोऽप्रामाणिकाः। अतिसन्धाय = वञ्चयित्वा। विनिपातः = निरयगमनम्। अधोगतिरिति यावत्। प्राप्यते = इष्यते। अश्रद्धेयम् = अमा-ननीयम्। [ 'भोः सत्यवादि'न्नित्यत आरभ्य 'अश्रद्धेय'मित्यन्तेनाऽक्षमा नाम नाट्यालङ्कारः प्रदर्शितः, 'अक्षमा सा परिभवः स्वल्पोऽपि न विषह्यते' इत्युक्तेः]।

उत्तरेण किम् = उत्तरेण नास्ति प्रयोजनं। गुरुनियोगः = गुरोः कण्व-स्याज्ञा। अनुष्ठिता = कृता। प्रतिनिवर्त्तामहे=तपोवनं गच्छामः।

---

कपट ही किया करते हैं, (सांसारिक लोग, या यह राजा) वे ही लोग आप्त वाक्य (विश्वासी, सच्चे, प्रामाणिक) बन रहे हैं !। वाह ! क्या अच्छा न्याय है ! ॥२८॥

राजा—हे सत्य बोलने वाले ! अच्छा हम यह मान लेते हैं, कि–हम ऐसे ही ( झूठे, ठग, वञ्चक ही ) हैं। परन्तु यह तो बताओ कि–इस स्त्री को ठगने से भला हमें लाभ ही क्या है ?।

शार्ङ्गरव—लाभ ?। तुमारा अधः पतन ही लाभ है।

राजा—हम पुरुवंशी राजा अपना अधः पतन अपने आप चाहेंगे–यह बात तो किसी के भी विश्वास में नहीं आ सकती है।

शार्ङ्गरव—हे राजन् ! अब ज्यादा कहने-सुनने से, तथा तुमारी बातों का उत्तर देने से लाभ ही क्या है ?। हमने अपने गुरुकी आज्ञाका पालन कर दिया।

---

१ 'आ सन्धाय लभ्यते'। २ 'लभ्यते'।

तदेषा भवतः पत्नी, त्यज वैनां गृहाण वा ।
उपयन्तुर्हि दारेषु प्रभुता सर्वतोमुखी ॥२६॥

—गौतमि ! गच्छाऽग्रतः ।

( —इति सर्वे प्रस्थिताः ) ।

शकुन्तला—अहं दाणिं इमिणा किदवेण विप्पलद्धा । तुह्मे वि मं परिच्चअध ! ।

[ अहमिदानीमनेन कितवेन विप्रलब्धा । यूयमपि मां [1]परित्यजथ ! ] (—इत्यनुप्रस्थिता ) ।

---

तदेषेति । तत् = तस्मात् । प्रसङ्गं सम्प्रति वयमेव उपसंहराम इत्यर्थः । एषा = शकुन्तला । भवतः = तव । कान्ता = स्त्री । एनां त्यज = परित्यज । गृहाण वा = स्वीकुरु वा । हि = यतः । दारेषु = आत्मकलत्रे । स्वभार्याविषये । स्वामिनः = पत्युः । प्रभुता = स्वाम्यं । स्वातन्त्र्यम् । सर्वतोमुखी=सर्वविधा । त्यागस्वीकारादिरूपा प्रभुता युज्यत एवेत्यर्थः । [ अर्थान्तरन्यासः ] ॥ २६ ॥

अनेन कितवेन = धूर्तेन दुष्यन्तेन । विप्रलब्धा = वञ्चिताऽस्मि । यूयमपि कथं मां परित्यजथेति योजना । अनुप्रस्थिता = शार्ङ्गरवादिकमनुयातुं प्रवृत्ता ।

---

तुमारी स्त्री को तुमारे पास पहुँचा दिया । अब हम तो आश्रम को जाते हैं । तुम जानो और यह तुमारी पत्नी जाने ।

यह तुमारी स्त्री है, इसे चाहे छोड़ो, चाहे ग्रहण करो । क्योंकि विवाह करने वाले का अपनी स्त्री पर सब प्रकार का पूरा २ अधिकार होता है ॥२९॥

हे गौतमि ! आगे २ चलो । [ सब—जाते हैं ] ।

शकुन्तला—मैं अब इस छलिया ठग से तो ठगी ही गई हूं । इसने तो मुझे छोड़ ही दिया है । पर आप लोग भी मुझे इसप्रकार छोड़कर कैसे जा रहे हैं ? ।

( उनके पीछे २ जाती है ) ।

---

१ 'कथं परित्यजथ' पा० ।

**गौतमी**— ( स्थित्वा, परिवृत्याऽवलोक्य च- ) वच्छ ! सङ्गरव ! अणुगच्छदि णो करुणपरिदेविणी सउन्तला, पच्चादेसपरुषे भत्तरि किं करेदु तवस्सिणी ? ।

[ वत्स ! शार्ङ्गरव ! अनुगच्छति नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्त्तरि किं करोतु तपस्विनी ? ] ।

**शार्ङ्गरवः**—( सरोषं प्रतिनिवृत्य- ) आः पुरोभागिनि ! किमिदं स्वातन्त्र्यमवलम्बसे ? ।

( **शकुन्तला**—भीता वेपते ) ।

**शार्ङ्गरवः**—शकुन्तले ! शृणोतु भवती ।

---

अनु = पश्चात् । नः = अस्मान् । अनुगच्छति । करुणं परिदेविनी—करुणपरिदेविनी = करुणं विलपन्ती । प्रत्यादेशेन परुषे प्रत्यादेशपरुषे=प्रत्याख्यानकठोरे । अस्वीकुर्वाणे इति यावत् । तपस्विनी=अनुकम्पनीया वराकी । 'आः-'इति क्रोधे। पुरोभागिनि = हे दोषैकप्रवणे ! । हे उच्छृङ्खलाचारे ! । 'दोषैकदृक् पुरोभागी' त्यमरः । वेपते = कम्पते ।

इदं स्वातन्त्र्यमिति । किं कुलाङ्गनाऽनुचितां स्वतन्त्रतामाश्रयसे । किं स्वेच्छयैवाऽऽगच्छसि, स्वं भर्तारं विहायेत्यर्थः ।

---

**गौतमी**—( ठहर कर, तथा घूम कर पीछे देखकर ) वत्स ! शार्ङ्गरव ! यह शकुन्तला तो करुणस्वर से विलाप करती हुई हमारे पीछे ही पीछे आ रही है । जब पति ने ही इसका इस प्रकार प्रत्याख्यान करके इसके साथ कठोरता का व्यवहार किया है, तब यह बेचारी अब और कर ही क्या सकती है ? ।

**शार्ङ्गरव**—( क्रोध पूर्वक लौट कर ) आः पापिनि ! ऐसी स्वतन्त्रता का अवलम्बन क्यों कर रही है ? । अपने पति को छोड़कर हम लोगों के साथ क्यों आ रही है ? ।

[ **शकुन्तला**—डर से थर थर कांपती है ] ।

**शार्ङ्गरव**—हे शकुन्तले ! अब तूं ध्यान देकर सुन ले—

यदि यथा वदति क्षितिपस्तथा
त्वमसि, किं पुनरुत्कुलया त्वया।
अथ तु वेत्सि शुचि व्रतमात्मनः,
पतिगृहे तव दास्यमपि क्षमम् ॥ ३० ॥

—तिष्ठ। साधयामो वयम्।

---

यदीति। यदि—क्षितिपः=राजा—यथा वदति='नास्माभिः परिणीतेय'-मित्यादि यथा भाषते। तथा त्वमसि=तथैव त्वं स्वैरिणी संवृत्ताऽसि। तदा कुलादुद्गता—उत्कुला, तया—उत्कुलया=कुलटया। त्वया किं=नास्माकं प्रयोजनम्। अथ तु=यदि तु। आत्मनो व्रतं=स्वशीलं। शुचि=अखण्डितं। वेत्सि=जानासि। 'अयमेव मे दुष्यन्तः पति'रिति जानासि चेदित्याशयः। तर्हि—पतिगृहे=अत्र राजकुले। तव=भवत्याः। दास्यमपि=दासभावेना-वस्थानमपि। क्षमम्=उचितम्। अतो माऽस्माननुगच्छ, इहैव ते वास उचित इति भावः। [ काव्यलिङ्गम्। अनुप्रासः। 'द्रुतविलम्बितम्' ] ॥ ३० ॥

अतः—तिष्ठ=माऽस्माननुसर। साधयामः=गच्छामः। 'प्रायेण ण्यन्तकः साधिर्गमनेऽर्थे प्रयुज्यते' इत्युक्तेः।

---

यदि जैसा यह राजा कहता है, कि—"मैंने इससे विवाह नहीं किया, न यह मेरी स्त्री है, न मेरा इसके गर्भ है" यदि वैसी ही तूं कुल कलङ्किनी और भ्रष्टा है, तो कुल की मर्यादा को भङ्ग करने वाली तुझ स्वैरिणी से हमारा अब सम्बन्ध ही क्या है ?। और यदि तूं अपने पातिव्रत्यधर्मको, पवित्रता को ठीक और परिशुद्ध समझती है, और यही तेरा पति है, तो फिर पति के घर में दासी बनकर रहना भी तेरे लिए उचित है। अर्थात्—तू यदि इसकी स्त्री नहीं है, तैने कहीं और ही पुरुष से सम्बन्ध कर यह गर्भ धारण किया है, तो तेरी ऐसी कुलटा को हम सग ले जाकर ही क्या करेंगे, तेरी इच्छा हो जहां जा। और यदि तूं सच्ची सती साध्वी है, और यही तेरा पति है, तो फिर पति के घर में दासी बन कर भी तुझे यहीं रहना चाहिए ॥ ३० ॥

अतः तूं यहीं रह, हम लोग जाते हैं।

राजा—भोस्तपस्विन् ! किमत्रभवतीं विप्रलभसे ? । कुतः-

कुमुदान्येव शशाङ्कः, सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ ३१ ॥

शार्ङ्गरवः—राजन् ! अथ पूर्ववृत्तं [1]व्यासङ्गाद्विस्मृतं [2]भवेत्तदा कथमधर्मभीरोर्दारपरित्यागः ? ।

---

किं विप्रलभसे—किं वाक्चातुर्येण एवं वञ्चयसि । एनां बालां प्रतार्य इहैव कुतः परित्यजसि ।

कुमुदान्येवेति । शशाङ्कः = चन्द्रः । कुमुदान्येव = कैरवकुलान्येव । बोधयति=विकाशयति । न पङ्कजानि = न कमलानि । सविता=सूर्यस्तु । पङ्कजान्येव=कमलान्येव । बोधयति । न कुमुदानि । हि=यतः । वशिनाम्=इन्द्रियसंयमिनाम् । परेषां परिग्रहाणां संश्लेषे पराङ्मुखी-परपरिग्रहसंश्लेषपराङ्मुखी=परकलत्रादिसंपर्कपराङ्मुखी । वृत्तिः=व्यवहारः । 'स्वाभाविकी नाम भवती'ति शेषः । [ अप्रस्तुतप्रशंसा । मालादृष्टान्तालङ्कारः ] ॥ ३१ ॥

पूर्ववृत्तं=पूर्वाचरितं । व्यासङ्गात्=कार्यान्तरव्यासङ्गात् । शापाद्वा । चित्तविक्षे-

---

राजा—हे तपस्विन् ! माननीया इस बेचारी को ( शकुन्तला को ) आप क्यों धोखा देकर यहां छोड़कर जा रहे हो ? ।

क्योंकि—चन्द्रमा कुमुद को ही विकसित करता ( खिलाता ) है, कमलों को नहीं । और सूर्य भी कमलों को ही विकसित करता है, कुमुदों को नहीं । हमारे ऐसे इन्द्रिय निग्रही लोगों की वृत्ति सदा ही परपरिग्रह (पराई वस्तु, पराई स्त्री) से पराङ्मुख ही रहती है । कुमुद–चन्द्रमा का परिग्रह, चन्द्रमा की प्यारी स्त्री है । कमल—सूर्य का परिग्रह ( स्त्री ) है । अतः चन्द्रमा कमल से प्रेम नहीं करता है । सूर्य कुमुद से नेह नहीं करता है । इसी प्रकार मैं भी पराई स्त्री से पराङ्मुख ही हूं । इस पर मैं कभी नजर भी नहीं डाल सकता हूं ॥ ३१ ॥

शार्ङ्गरव—हे राजन् ! यदि अपना पूर्व वृत्तान्त ( विवाह सम्बन्ध ) किसी

---

१ 'अन्यासङ्गात्' पा० । २ 'विस्मृतो भवान्' पा० ।

राजा—( पुरोधसं प्रति- ) भवन्तमेवाऽत्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो ! परस्त्रीस्पर्शपांसुलः ॥ ३२ ॥

पाद्वा । 'अन्यासङ्गा'दिति पाठे-अन्यस्य-कार्यस्य, शापस्य वा । आसङ्गात्=संपर्कात् । सम्बन्धात्-इत्याद्यर्थो बोध्यः । 'विस्मृतो भवा'निति पाठे,-विस्मृतमस्त्यस्येत्यर्थे अर्शआदित्वादच् । विस्मृतः=विस्मृतवान् । अधर्मभीरोः=पापाद्भीतस्य तव । दारपरित्यागः=स्वपरिणीतापरित्यागः । कथं = कथमुचितो भवेत् । नोचितो भवेदित्याशयः । अधर्मभीरोस्तवाऽधर्मानुष्ठानमेतदनुचितमिति भावः । [ 'उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनी'त्युक्तेरुत्प्रासो नाम नाट्यालङ्कारः ]। गुरुलाघवं = गौरवलाघवम् । किमत्र मया कर्त्तव्यमिति यावत् ।

मूढ इति । अहम्=अहमेव । मूढः=केनापि हेतुना-विस्मरणशीलः । स्यां = भवेयम् । वा = अथवा । एषा = शकुन्तला वा । मिथ्या=मुधा । वदेत्=कथयेदिति संशये = इत्थं सन्देहे । 'अहं वा मूढः, इयं वा मिथ्या भाषते' इति सन्देहे सति-इति यावत् । दारत्यागी=स्वस्त्रीत्यागपापयुतः । आहो !=अथवा । परस्य स्त्रियाः स्पर्शेन पांसुलः=परदारसंसर्गदूषितः । 'पांसुलः पुंश्चले' इति विश्वः । यद्यहं मूढस्तदाऽस्यास्त्यागात् पापी स्यां, यदीयं मिथ्या भाषते तर्हि परकलत्रसङ्ग्रहाच्चाऽहं पापीयानिति यथासङ्ख्यमन्वयः । [ विरोधो नाम सन्ध्यङ्गम्,

कारण से तुम भूल गए हो तो तुम्हें अपनी स्त्री का इस प्रकार अधर्म के भय से ( पराई स्त्री की शङ्का से ) छोड़ना क्या उचित होगा ?।

राजा—( पुरोहित से ) मैं आपसे ही—यह पूछता हूं कि-'इस प्रसङ्ग में क्या करना है' 'क्या अनुचित है' 'ऐसे समय में मेरा क्या कर्त्तव्य है' ? ऐसे धर्म सङ्कट में मुझे क्या करना चाहिए ?।

कहिए,-'मैं ही भूल रहा हूं' या—'यही (शकुन्तला ही) झूठ बोल रही है' इस संशय में मैं अपनी स्त्री को छोड़ दूँ, या पर स्त्री के स्पर्श से दूषित बनूं ?।

अर्थात्-यदि मैं ही भूल रहा हूं, और यह मेरी ही स्त्री है, तो अपनी स्त्री का छोड़ना घोर पाप है । यदि यह झूठ बोल रही है, तो इसके कहने से इसको

राजा—किमिव ?।

पुरोहितः—देव ! परावृत्तेषु कण्वशिष्येषु—

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं रोदितुञ्च प्रवृत्ता।

राजा—ततः किम् ?।

पुरोहितः—

स्त्रीसंस्थानञ्चाऽप्सरस्तीर्थमारा-
दुत्क्षिप्याऽङ्के ज्योतिरेनां तिरोऽभूत् ॥३३॥

( सर्वे—विस्मयं रूपयन्ति )।

---

जातं। परावृत्तेषु = गतेषु। सेति। स्वानि भाग्यानि = स्वमदृष्टं। निन्दन्ती = अधिक्षिपन्ती। सा बाला=सा शकुन्तला। बाहू उत्क्षिप्येति-बाहूत्क्षेपं = बाहू उत्क्षिप्य। सोरस्ताडम्। रोदितुं प्रवृत्ता=रोदितुमारेभे। किञ्च- स्त्रिया इव संस्थान यस्य तत्–स्त्रीसंस्थानं=योषाऽऽकृति। अप्सरस्तीर्थमारात् = अप्सरोनामकसरोवर समीपे। एनां = शकुन्तलाम्। अङ्के = उत्सङ्गे। निक्षिप्य=आधाय। संस्थाप्य। तामादाय। तिरोऽभूत् = अन्तरधात्। [ उपमा। क्रियासमुच्चयः। शक्तिर्नाम सन्ध्यङ्गं,—'शक्तिः पुनर्भवेत्। विरोधस्य प्रशमनमित्युक्तं दर्शितम्। 'शालिनी वृत्तम' ] ॥३३॥

---

राजा—वह क्या ?।

पुरोहित—हे देव ! जब कण्व के शिष्य वापिस चले गए, तब—

वह बाला—अपने भाग्य की निन्दा करती हुई छाती पीट २ कर रोने लगी।

राजा—तब फिर क्या हुआ ?।

पुरोहित—उसी समय अप्सरातीर्थ के पास से एक स्त्री की सी आकृति की प्रचण्डज्योति ( स्त्री की तरह की आकृति वाली बिजली सी चमक ) निकल कर, उसे गोदी में लेकर, अन्तर्धान हो गई !।

[ सब—आश्चर्य का अभिनय करते हैं अर्थात् सब आश्चर्य चकित हो जाते हैं ]।

राजा—भगवन् ! प्रागेवाऽस्माभिरेषोऽर्थः प्रत्यादिष्टः । किं मृषा तर्केणाऽन्विष्यते । विश्राम्यतु भवान् ।

पुरोधाः—विजयस्व । ( -इति निष्क्रान्तः ) ।

राजा—वेत्रवति ! पर्य्याकुलोऽस्मि । शयनीयगृहमार्गमादेशय ।

प्रतीहारी—इदो इदो देवो ।

[ इत इतो देवः ] ।

राजा—( परिक्रम्य, स्वगतं- )

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मे[1] हृदयम् ॥ ३४ ॥

---

एषोऽर्थः=एष शकुन्तलाप्रसङ्गः । 'नेयमस्मत्परिणीते'ति रीत्या । अस्माभिः= मया । प्रागेव=पूर्वमेव । प्रत्यादिष्टः=प्रत्याख्यातः । मृषा = मुधैव काकरदना-परीक्षणवत् । तर्केण = ऊहेन । अन्विष्यते=गवेष्यते । किं वितर्केणेत्याशयः ।

पर्याकुलः=श्रान्तः । आदर्शय=निर्दिश । सूचय ।

काममिति । यद्यपि-प्रत्यादिष्टां=निराकृतां । भार्यात्वेनाऽनङ्गीकृताम् ।

---

राजा—हे भगवन् ! मैंने इस बात का ( यह मेरी स्त्री नहीं है इस प्रकार ) पहिले ही खण्डन कर दिया है । अतः अब आप इस पर ( शकुन्तला के विषय में ) झूठा तर्क लगा कर, इसकी वृथा गवेषणा चिन्ता न करें । शान्ति से बैठिए । जाइए विश्राम करिए ।

पुरोहित—महाराज विजयी हों । ( जाता है ) ।

राजा—हे वेत्रवति ! मैं बहुत व्याकुल और क्लान्त हो गया हूं । अतः शयनकक्ष का ही मार्ग मुझे दिखला ।

प्रतीहारी—महाराज ! इधर से पधारिए, इधर से ।

राजा—( कुछ चलकर मन ही मन )

यद्यपि उस मुनि की पुत्री के साथ—जिसका मैंने प्रत्याख्यान एवं त्यागकर

---

१ 'मां'—इति पा० ।

तुए एशे महामणिभाशुले उक्किण्णणामक्खले लाअकीए अङ्गुलीअए शमाशादिदे' ? ।

[ अरे कुम्भिलक ! कथय—'कुत्र त्वयैतन्महामणिभासुरमुत्कीर्णनामाक्षरं राजकीयमङ्गुलीयकं समासादितम्' ? ] ।

**पुरुषः**—( भीतिनाटितकेन— ) पशीदन्तु पशीदन्तु मे भावमिश्शे । ण हग्गे इदिशश्श अकज्जश्श कालके ।

[ प्रसीदन्तु प्रसीदन्तु मे भावमिश्राः ! । नाऽहमीदृशस्याऽकार्यस्य कारकः ] ।

**एकः**—किण्णु क्खु शोहणे बह्मणेशि त्ति कदुअ लण्णा दे [1]पलिग्गहे दिण्णे ? ।

[ किन्तु खलु 'शोभनो ब्राह्मणोऽसी'ति कृत्वा राज्ञा ते [2]परिग्रहो दत्तः ? ] ।

---

महता मणिना भासुरं—महामणिभासुरं = महार्हरत्नोज्ज्वलम् । उत्कीर्णानि नामाऽक्षराणि यत्र तत्—उत्कीर्णनामाक्षरम् = उट्टङ्कितराजनामाक्षरम् । राज्ञ इदं—राजकीयं = राज्ञो दुष्यन्तस्य सम्बन्धि । समासादितं = प्राप्तं ।

भीतिनाटितकेन = भयं नाटयित्वा । भावाश्च ते मिश्राश्च भावमिश्राः = श्रेष्ठतमाः । 'मान्यो भावस्तु वक्तव्यः' इत्युक्तेः । मिश्रशब्दोऽत्र प्रशंसायाम् । अकार्यस्य=स्तेयस्य । नेदमङ्गुलीयकं मया चौर्येणाऽऽसादितमित्याशयः । शोभनः= श्रेष्ठः । विद्यातपोनिष्ठः । परिग्रहः= दानम् । 'प्रतिग्रह' इति पाठेऽपि एष एवार्थः ।

---

मूल्य देदीप्यमान मणि ( हीरे ) से जड़ी हुई, और जिसमें राजा के नाम के अक्षर खुदे हुए हैं, ऐसी यह राजा की अंगूठी कहाँ से पाई ? ।

पुरुष—( भय का अभिनय करता हुआ ) हे मालिक ! मेरे ऊपर दया करिए, दया करिए । मैं ऐसा अनुचित कार्य ( चोरी ) का करने वाला नहीं हूं ।

एक सिपाही—यदि तूने चोरी नहीं की है, तो फिर क्या 'यह सत्पात्र ब्राह्मण है' ऐसा समझ कर राजा ने तेरे को यह दान में दी है ? ।

---

१ 'पडिग्गहे' पा० । २ 'प्रतिग्रहः' ।

पुरुषः—शुणुध दाव, हग्गे क्खु शक्कवदालवाशी धीवले।

[ शृणुत तावत । अहं खलु शक्रावतारवासी धीवरः ]।

द्वितीयः—अले पाअच्चले ! किं तुमं अह्मेहिं वशदिं, जादिं च पुच्छीअसि ?।

[ अरे पाटच्चर ! किं त्वमस्माभिर्वसतिं, जातिञ्च पृच्छ्यसे ? ]।

नागरकः श्यालः—सूअअ ! कदेधु सव्वं अणुक्कमेण, मा अन्तरा पडिबन्धेअ[१]।

[ सूचक ! कथयतु सर्वमनुक्रमेण । माऽन्तरा प्रतिबधान[१] ]।

उभौ—जं आवुत्ते आणवेदि । लवेहि ले।

[ यदावुत्त आज्ञापयति । लप रे ।

---

उपहासवाक्यमेतत् । शक्रावतारः=तीर्थविशेषः । तच्च 'हापुड'-('मेरठ' प्रदेशे) इति प्रसिद्धं स्यात् । धीवरः=कैवर्त्तः । 'कैवर्त्ते दाशधीवरौ' इत्यमरः । पाटच्चरः= दस्युः । 'दस्युः पाटच्चरः स्तेनः' इत्यमरः । वसतिं=निवासस्थानम् । अतस्तव जात्यादिशंसनं न प्रासङ्गिकं, कथय कुतोऽङ्गुलीयकमासादितमिति भावः । नागरकः=नगररक्षाधिकृतः कोट्टपालः ।

सूचकेति । प्रहरिनामेदम् । अनुक्रमेण=आनुपूर्व्येण । अन्तरा = मध्ये । मा प्रतिबधान = तर्जनेन विघ्नं मा कुरु । आवुत्तः = भगिनीपतिः । 'भगिनीपतिरावुत्तः' इत्यमरः । लप = सर्वं विशदं व्यावृणु ।

---

पुरुष—नहीं, नहीं सुनिए तो, मैं शक्रावतार ( हस्तिनापुर के निकट का तीर्थ विशेष-हापुर ) का रहने वाला धीवर ( मल्लाह ) हूँ ।

दूसरा सिपाही—अरे चोर ! हम क्या तेरे से तेरी जाति और तेरा गाँव पूछ रहे हैं ?।

नागरक श्याल—( कोतवाल )—अरे सूचक ! ( यह सिपाही का नाम है ), इसको प्रारम्भ से ( सिलसिले से ) ही सब बातें कहने दो । बीच में इसे मत टोको । ( अर्थात् तुम बीचमें दखल मत दो ) ।

दोनों सिपाही—जो हुक्म सरकार का । अच्छा तो कह रे कह ।

---

१ प्रतिबध्नीथाः । 'प्रतिबन्धय' पा० ।

राजा—किमिव ?।

पुरोहितः—देव ! परावृत्तेषु कण्वशिष्येषु—

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं रोदितुञ्च प्रवृत्ता।

राजा—ततः किम् ?।

पुरोहितः—

स्त्रीसंस्थानञ्चाऽप्सरस्तीर्थमारा-
दुत्क्षिप्याऽङ्के ज्योतिरेनां तिरोऽभूत् ॥३३॥

( सर्वे—विस्मयं रूपयन्ति )।

---

जातं। परावृत्तेषु = गतेषु । सेति। स्वानि भाग्यानि = स्वमदृष्टं। निन्दन्ती = अधिक्षिपन्ती। सा बाला=सा शकुन्तला। बाहू उत्क्षिप्येति-बाहूत्क्षेपं = बाहू-उत्क्षिप्य। सोरस्ताडम्। रोदितुं प्रवृत्ता=रोदितुमारेभे। किञ्च-स्त्रिया इव संस्थान यस्य तत्-स्त्रीसंस्थानं=योषाऽऽकृति। अप्सरस्तीर्थमारात् = अप्सरोनामकसरोवर समीपे। एनां = शकुन्तलाम्। अङ्के = उत्सङ्गे। निक्षिप्य=आधाय। संस्थाप्य। तामादाय। तिरोऽभूत् = अन्तरधात्। [ उपमा। क्रियासमुच्चयः। शक्तिर्नाम सन्ध्यङ्गं,—'शक्तिः पुनर्भवेत्। विरोधस्य प्रशमन'मित्युक्तं दर्शितम्। 'शालिनी वृत्तम' ] ॥३३॥

---

राजा—वह क्या ?।

पुरोहित—हे देव ! जब कण्व के शिष्य वापिस चले गए, तब—

वह बाला—अपने भाग्य की निन्दा करती हुई छाती पीट २ कर रोने लगी।

राजा—तब फिर क्या हुआ ?।

पुरोहित—उसी समय अप्सरातीर्थ के पास से एक स्त्री की सी आकृति की प्रचण्डज्योति ( स्त्री की तरह की आकृति वाली बिजली सी चमक ) निकल कर, उसे गोदी में लेकर, अन्तर्धान हो गई !।

[ सब—आश्चर्य का अभिनय करते हैं। अर्थात् आश्चर्य चकित हो जाते हैं ]।

राजा—( पुरोधसं प्रति-) भवन्तमेवाऽत्र गुरुलाघवं पृच्छामि।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये।
दारत्यागी भवाम्याहो ! परस्त्रीस्पर्शपांसुलः ॥ ३२ ॥

---

पाद्वा। 'अन्यासङ्गा'दिति पाठे-अन्यस्य-कार्यस्य, शापस्य वा। आसङ्गात्=संपर्कात्। सम्बन्धात्-इत्याद्यर्थो बोध्यः। 'विस्मृतो भवा'निति पाठे,-विस्मृतमस्त्यस्येत्यर्थे अर्शआदित्वादच्। विस्मृतः=विस्मृतवान्। अधर्मभीरोः=पापाद्भीतस्य तव। दारपरित्यागः=स्वपरिणीतापरित्यागः। कथं=कथमुचितो भवेत्। नोचितो भवेदित्याशयः। अधर्मभीरोस्तवाऽधर्मानुष्ठानमेतदनुचितमिति भावः। [ 'उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनी'त्युक्तेरुत्प्रासो नाम नाट्यालङ्कारः ]। गुरुलाघवं=गौरवलाघवम्। किमत्र मया कर्त्तव्यमिति यावत्।

मूढ इति। अहम्=अहमेव। मूढः=केनापि हेतुना-विस्मरणशीलः। स्यां=भवेयम्। वा=अथवा। एषा=शकुन्तला वा। मिथ्या=मुधा। वदेत्=कथयेदिति संशये=इत्थं सन्देहे। 'अहं वा मूढः, इयं वा मिथ्या भाषते' इति सन्देहे सति-इति यावत्। दारत्यागी=स्वस्त्रीत्यागपापयुतः। आहो !=अथवा। परस्य स्त्रियाः स्पर्शेन पांसुलः=परदारसंसर्गदूषितः। 'पांसुलः पुंश्चले' इति विश्वः। यद्यहं मूढस्तदाऽस्यास्त्यागात् पापी स्यां, यदीयं मिथ्या भाषते तर्हि परकलत्रसङ्ग्रहाच्चाऽहं पापीयानिति यथासङ्ख्यमन्वयः। [ विरोधो नाम सन्ध्यङ्गम्,

---

कारण से तुम भूल गए हो तो तुम्हें अपनी स्त्री को इस प्रकार अधर्म के भय से ( पराई स्त्री की शङ्का से ) छोड़ना क्या उचित होगा ?।

राजा—( पुरोहित से ) मैं आपसे ही—यह पूछता हूं कि—'इस प्रसङ्ग में क्या करना है' 'क्या अनुचित है' 'ऐसे समय में मेरा क्या कर्त्तव्य है' ? ऐसे धर्म सङ्कट में मुझे क्या करना चाहिए ?।

कहिए,-'मैं ही भूल रहा हूं' या—'यही (शकुन्तला ही) झूठ बोल रही है' इस संशय में मैं अपनी स्त्री को छोड़ दूँ, या पर स्त्री के स्पर्श से दूषित बनूं ?।

अर्थात्-यदि मैं ही भूल रहा हूं, और यह मेरी ही स्त्री है, तो अपनी स्त्री का छोड़ना घोर पाप है। यदि यह झूठ बोल रही है, तो इसके कहने से इसको

राजा—किमिव ? ।

पुरोहितः—देव ! परावृत्तेषु कण्वशिष्येषु—

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं रोदितुञ्च प्रवृत्ता ।

राजा—ततः किम् ? ।

पुरोहितः—

स्त्रीसंस्थानञ्चाऽप्सरस्तीर्थमारा-
दुत्क्षिप्याऽङ्के ज्योतिरेनां तिरोऽभूत् ॥३३॥

( सर्वे—विस्मयं रूपयन्ति ) ।

---

जातं । परावृत्तेषु = गतेषु । सेति । स्वानि भाग्यानि = स्वमदृष्टं । निन्दन्ती = अधिक्षिपन्ती । सा बाला=सा शकुन्तला । बाहू उत्क्षिप्येति-बाहूत्क्षेपं = बाहू उत्क्षिप्य । सोरस्ताडम् । रोदितुं प्रवृत्ता=रोदितुमारेभे । किञ्च-स्त्रिया इव संस्थान यस्य तत्-स्त्रीसंस्थानं=योषाऽऽकृति । अप्सरस्तीर्थमारात् = अप्सरोनामकसरोवर समीपे । एनां = शकुन्तलाम् । अङ्के = उत्सङ्गे । निक्षिप्य=आधाय । संस्थाप्य । तामादाय । तिरोऽभूत् = अन्तरधात् । [ उपमा । क्रियासमुच्चयः । शक्तिर्नाम सन्ध्यङ्गं,—'शक्तिः पुनर्भवेत् । विरोधस्य प्रशमनम्' इत्युक्तं दर्शितम् । 'शालिनी वृत्तम' ] ॥३३॥

---

राजा—वह क्या ? ।

पुरोहित—हे देव ! जब कण्व के शिष्य वापिस चले गए, तब—

वह बाला—अपने भाग्य की निन्दा करती हुई छाती पीट २ कर रोने लगी ।

राजा—तब फिर क्या हुआ ? ।

पुरोहित—उसी समय अप्सरातीर्थ के पास से एक स्त्री की सी आकृति की प्रचण्डज्योति ( स्त्री की तरह की आकृति वाली बिजली सी चमक ) निकल कर, उसे गोदी में लेकर, अन्तर्धान हो गई ! ।

[ सब—आश्चर्य का अभिनय करते हैं । अर्थात् आश्चर्य चकित हो जाते हैं ] ।

राजा—भगवन् ! प्रागेवाऽस्माभिरेषोऽर्थः प्रत्यादिष्टः । किं मृषा तर्केणाऽन्विष्यते । विश्राम्यतु भवान् ।

पुरोधाः—विजयस्व । ( -इति निष्क्रान्तः ) ।

राजा—वेत्रवति ! पर्य्याकुलोऽस्मि । शयनीयगृहमार्गमादेशय ।

प्रतीहारी—इदो इदो देवो ।

[ इत इतो देवः ] ।

राजा—( परिक्रम्य, स्वगतं- )

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम् ॥ ३४ ॥

---

एषोऽर्थः=एष शकुन्तलाप्रसङ्गः । 'नेयमस्मत्परिणीते'ति रीत्या । अस्माभिः= मया । प्रागेव=पूर्वमेव । प्रत्यादिष्टः=प्रत्याख्यातः । मृषा = मुधैव काकरदना-परीक्षणवत् । तर्केण = ऊहेन । अन्विष्यते=गवेष्यते । किं वितर्केणेत्याशयः ।

पर्याकुलः=श्रान्तः । आदर्शय=निर्दिश । सूचय ।

काममिति । यद्यपि-प्रत्यादिष्टां=निराकृतां । भार्यात्वेनाऽनङ्गीकृताम् ।

---

राजा—हे भगवन् ! मैंने इस बात का ( यह मेरी स्त्री नहीं है इस प्रकार ) पहिले ही खण्डन कर दिया है । अतः अब आप इस पर ( शकुन्तला के विषय में ) झूठा तर्क लगा कर, इसकी वृथा गवेषणा चिन्ता न करें । शान्ति से बैठिए । जाइए विश्राम करिए ।

पुरोहित—महाराज विजयी हों । ( जाता है ) ।

राजा—हे वेत्रवति ! मैं बहुत व्याकुल और क्लान्त हो गया हूं । अतः शयनकक्ष का ही मार्ग मुझे दिखला ।

प्रतीहारी—महाराज ! इधर से पधारिए, इधर से ।

राजा—( कुछ चलकर मन ही मन )

यद्यपि उस मुनि की पुत्री के साथ—जिसका मैंने प्रत्याख्यान एवं त्यागकर

---

१ 'मां'—इति पा० ।

तुए एशे महामणिभाशुले उक्किण्णणामाक्खले लाअकीए अङ्गुलीअए शमाशादिदे' ? ।

[ अरे कुम्भिलक ! कथय—'कुत्र त्वयैतन्महामणिभासुरमुत्कीर्ण-नामाक्षरं राजकीयमङ्गुलीयकं समासादितम्' ? ] ।

**पुरुषः**—( भीतिनाटितकेन— ) पशीदन्तु पशीदन्तु मे भावमिश्शे । ण हग्गे इदिशश्श अकज्जश्श कालके ।

[ प्रसीदन्तु प्रसीदन्तु मे भावमिश्राः ! । नाऽहमीदृशस्याऽकार्यस्य कारकः ] ।

**एकः**—किण्णु क्खु शोहणे बह्मणेशि त्ति कदुअ लण्णा दे [1]पलिग्गहे दिण्णे ? ।

[ किन्नु खलु 'शोभनो ब्राह्मणोऽसी'ति कृत्वा राज्ञा ते [2]परिग्रहो दत्तः ? ] ।

---

महता मणिना भासुरं—महामणिभासुरं = महार्हरत्नोज्ज्वलम् । उत्कीर्णानि नामाऽक्षराणि यत्र तत्—उत्कीर्णनामाक्षरम् = उट्टङ्कितराजनामाक्षरम् । राज्ञ इदं—राजकीयं = राज्ञो दुष्यन्तस्य सम्बन्धि । समासादितं = प्राप्तं ।

भीतिनाटितकेन = भयं नाटयित्वा । भावाश्च ते मिश्राश्च भावमिश्राः = श्रेष्ठतमाः । 'मान्यो भावस्तु वक्तव्यः' इत्युक्तेः । मिश्रशब्दोऽत्र प्रशंसायाम् । अकार्यस्य=स्तेयस्य । नेदमङ्गुलीयकं मया चौर्येणाऽऽसादितमित्याशयः । शोभनः= श्रेष्ठः । विद्यातपोनिष्ठः । परिग्रहः= दानम् । 'प्रतिग्रह' इति पाठेऽपि स एवार्थः ।

---

मूल्य देदीप्यमान मणि ( हीरे ) से जड़ी हुई, और जिसमें राजा के नाम के अक्षर खुदे हुए हैं, ऐसी यह राजा की अंगूठी कहाँ से पाई ? ।

पुरुष—( भय का अभिनय करता हुआ ) हे मालिक ! मेरे ऊपर दया करिए, दया करिए । मैं ऐसा अनुचित काय ( चोरी ) का करने वाला नहीं हूँ ।

एक सिपाही—यदि तूने चोरी नहीं की है, तो फिर क्या 'यह सत्पात्र ब्राह्मण है' ऐसा समझ कर राजा ने तुझे यह दान में दी है ? ।



---

१ 'पडिग्गहे' पा० । २ 'प्रतिग्रहः' ।

राजा—भगवन् ! प्रागेवाऽस्माभिरेषोऽर्थः प्रत्यादिष्टः । किं मृषा तर्केणाऽन्विष्यते । विश्राम्यतु भवान् ।

पुरोधाः—विजयस्व । ( -इति निष्क्रान्तः ) ।

राजा—वेत्रवति ! पर्य्याकुलोऽस्मि । शयनीयगृहमार्गमादेशय ।

प्रतीहारी—इदो इदो देवो ।

[ इत इतो देवः ] ।

राजा—( परिक्रम्य, स्वगतं- )

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मे[1] हृदयम् ॥ ३४ ॥

---

एषोऽर्थः=एष शकुन्तलाप्रसङ्गः । 'नेयमस्मत्परिणीते'ति रीत्या । अस्माभिः= मया । प्रागेव = पूर्वमेव । प्रत्यादिष्टः = प्रत्याख्यातः । मृषा = मुधैव काकरदना-परीक्षणवत् । तर्केण = ऊहेन । अन्विष्यते=गवेष्यते । किं वितर्केणेत्याशयः ।

पर्याकुलः = श्रान्तः । आदर्शय=निर्दिश । सूचय ।

काममिति । यद्यपि-प्रत्यादिष्टां = निराकृतां । भार्यात्वेनाऽनङ्गीकृताम् ।

---

राजा—हे भगवन् ! मैंने इस बात का ( यह मेरी स्त्री नहीं है इस प्रकार ) पहिले ही खण्डन कर दिया है । अतः अब आप इस पर ( शकुन्तला के विषय में ) झूठा तर्क लगा कर, इसकी वृथा गवेषणा चिन्ता न करें । शान्ति से बैठिए । जाइए विश्राम करिए ।

पुरोहित—महाराज विजयी हों । ( जाता है ) ।

राजा—हे वेत्रवति ! मैं बहुत व्याकुल और क्लान्त हो गया हूं । अतः शयनकक्ष का ही मार्ग मुझे दिखला ।

प्रतीहारी—महाराज ! इधर से पधारिए, इधर से ।

राजा—( कुछ चलकर मन ही मन )

यद्यपि उस मुनि की पुत्री के साथ—जिसका मैंने प्रत्याख्यान एवं त्यागकर

---

१ 'मां'— इति पा० ।

तुए एशे महामणिभाशुळे उक्किण्णणामाक्खले लाअकीए अङ्गुलीअए शमाशादिदे' ?।

[ अरे कुम्भिलक! कथय—'कुत्र त्वयैतन्महामणिभासुरमुत्कीर्ण-नामाक्षरं राजकीयमङ्गुलीयकं समासादितम्' ? ]।

**पुरुषः**—( भीतिनाटितकेन- ) पशीदन्तु पशीदन्तु मे भावमिश्शे। ण हग्गे इदिशश्श अकज्जश्श कालके।

[ प्रसीदन्तु प्रसीदन्तु मे भावमिश्राः!। नाऽहमीदृशस्याऽकार्यस्य कारकः ]।

**एकः**—किण्णु क्खु शोहणे बह्मणेशि त्ति कदुअ रण्णा दे [1]परिग्गहे दिण्णे ?।

[ किन्नु खलु 'शोभनो ब्राह्मणोऽसी'ति कृत्वा राज्ञा ते [2]परिग्रहो दत्तः ? ]।

---

महता मणिना भासुरं—महामणिभासुरं = महार्हरत्नोज्ज्वलम्। उत्कीर्णानि नामाऽक्षराणि यत्र तत्—उत्कीर्णनामाक्षरम् = उट्टङ्कितराजनामाक्षरम्। राज्ञ इदं–राजकीयं = राज्ञो दुष्यन्तस्य सम्बन्धि। समासादितं = प्राप्तं।

भीतिनाटितकेन = भयं नाटयित्वा। भावाश्च ते मिश्राश्च भावमिश्राः = श्रेष्ठतमाः। 'मान्यो भावस्तु वक्तव्यः' इत्युक्तेः। मिश्रशब्दोऽत्र प्रशंसायाम्। अकार्यस्य=स्तेयस्य। नेदमङ्गुलीयकं मया चौर्येणाऽऽसादितमित्याशयः। शोभनः= श्रेष्ठः। विद्यातपोनिष्ठः। परिग्रहः= दानम्। 'प्रतिग्रह' इति पाठेऽपि एष एवार्थः।

---

मूल्य देदीप्यमान मणि ( हीरे ) से जड़ी हुई, और जिसमें राजा के नाम के अक्षर खुदे हुए हैं, ऐसी यह राजा की अंगूठी कहाँ से पाई ?।

पुरुष—( भय का अभिनय करता हुआ ) हे मालिक! मेरे ऊपर दया करिए, दया करिए। मैं ऐसा अनुचित कार्य ( चोरी ) का करने वाला नहीं हूं।

एक सिपाही—यदि तूने चोरी नहीं की है, तो फिर क्या 'यह सत्पात्र ब्राह्मण है' ऐसा समझ कर राजा ने तेरे को यह दान में दी है ?।

---

१ 'पडिग्गहे' पा०। २ 'प्रतिग्रहः' पा०।

पुरुषः—शुणुध दाव, हग्गे क्खु शक्कवदालवाशी धीवले।

[ शृणुत तावत। अहं खलु शक्रावतारवासी धीवरः ]।

द्वितीयः—अले पाअच्चले! किं तुमं अह्मेहिं वशदिं, जादिं च पुच्छीअसि ?।

[ अरे पाटच्चर! किं त्वमस्माभिर्वसतिं, जातिञ्च पृच्छ्यसे ? ]।

नागरकः श्यालः—सूअअ! कदेधु सव्वं अणुक्कमेण, मा अन्तरा पडिबन्धेअ[1]।

[ सूचक! कथयतु सर्वमनुक्रमेण। माऽन्तरा प्रतिबधान[1] ]।

उभौ—जं आवुत्ते आणवेदि। लवेहि ले।

[ यदावुत्त आज्ञापयति। लप रे।

---

उपहासवाक्यमेतत्। शक्रावतारः=तीर्थविशेषः। तच्च 'हापुड'-('मेरठ' प्रदेशे) इति प्रसिद्धं स्यात्। धीवरः=कैवर्त्तः। 'कैवर्त्ते दाशधीवरौ' इत्यमरः। पाटच्चरः= दस्युः। 'दस्युः पाटच्चरः स्तेनः' इत्यमरः। वसतिं=निवासस्थानम्। अतस्तव जात्यादिशंसनं न प्रासङ्गिकं, कथय कुतोऽङ्गुलीयकमासादितमिति भावः। नागरकः=नगररक्षाधिकृतः कोट्टपालः।

सूचकेति। प्रहरिनामेदम्। अनुक्रमेण=आनुपूर्व्येण। अन्तरा =मध्ये। मा प्रतिबधान =तर्जनेन विघ्नं मा कुरु। आवुत्तः =भगिनीपतिः। 'भगिनी-पतिरावुत्तः' इत्यमरः। लप =सर्वं विशदं व्याव्रृणु।

---

पुरुष—नहीं, नहीं सुनिए तो, मैं शक्रावतार ( हस्तिनापुर के निकट का तीर्थ विशेष-हापुर ) का रहने वाला धीवर ( मल्लाह ) हूँ।

दूसरा सिपाही—अरे चोर! हम क्या तेरे से तेरी जाति और तेरा गाँव पूछ रहे हैं ?।

नागरक श्याल—( कोतवाल )—अरे सूचक! ( यह सिपाही का नाम है ), इसको प्रारम्भ से ( सिलसिले से ) ही सब बातें कहने दो। बीच में इसे मत टोको। ( अर्थात् तुम बीचमें दखल मत दो )।

दोनों सिपाही—जो हुक्म सरकार का। अच्छा तो कह रे कह।

---

१ प्रतिबध्नीथाः। 'प्रतिबन्धय' पा०।

एतावान् तावदेतस्याऽऽगमः। अथ मां मारयत, कुट्टयत वा ]।

**नागरकः**—( अङ्गुलीयकमाघ्राय- ) जालुअ ! मच्छोदलब्भन्तलग- दोत्ति णत्थि सन्देहो, जदो अअं [1]आमिसगन्धो वाअदि। आगमो दाणिं एदस्स एशो विमरिसिदव्वो, ता एध, लाअउलं ज्जेव गच्छह्म।

[ जालुक ! मत्स्योदराभ्यन्तरगतमिति नास्ति सन्देहः, यतोऽयमामिषगन्धो वाति। आगम इदानीमेतस्यैष [2]विमष्टव्यः। तदेतम्। राजकुलमेव गच्छामः।

**रक्षिणौ**—( धीवरं प्रति— ) गच्छ ले गण्ठिच्छेदअ ! गच्छ।

( इति सर्वे परिक्रामन्ति )।

[ गच्छ रे ग्रन्थिच्छेदक ! गच्छ ]।

---

पणिकेभ्यो दर्शयन्नेव अहं भवद्भिः। गृहीतः = बद्धः। एतावान् = इत्थमेतावत्परिमितः। आगमः = प्राप्तिवृत्तान्तः। अथ=श्रुत्वैतदिदानीं। कुट्टयत = चूर्णयत मां।

मत्स्योदरस्याभ्यन्तरे गतं = रोहितोदरकुहरं गतमिदम्। इति = इत्यत्र। आमिषगन्धः = मत्स्यमांसगन्धः। वाति = निस्सरति। आगमः=प्राप्तिवृत्तान्तः। विमर्ष्टव्यः=विमर्शनीयः। विचारणीयः। एत(म्)=आगच्छत(म्)। राजकुलं=राज-

---

इस प्रकार मुझे मिली है। अब चाहे आप लोग मुझे मारो, या पीटो। बात इतनी ही है।

नागरक—( अंगूठी को सूंघ कर ) अरे जालुक ( यह दूसरे सिपाही का नाम है )—यह अंगूठी—मछली के पेट में से निकली है, इस बात में तो कुछ भी सन्देह नहीं है। क्योंकि—इसमें से मछली की गन्ध ( बदबू ) आ रही है। ( और यह भी मछुवारा है, क्योंकि इसके शरीर से भी मछली की बुरी गन्ध आ रही है )। अब इसमें विचारना यही है, कि-यह अंगूठी मछली के पेट में पहुंची कैसे ?। अतः-आओ, हम लोग राजकुल ( महल, दर्बार ) में ही चलें। वहां इसका पता लगेगा।

दोनों सिपाही—(धीवर से) चल रे गिरहकट्ट ! चल। (सब चलते हैं)।

---

१ 'विस्रगन्धी गोधादी मत्स्यबन्ध एव निस्संशयम्। अङ्गुलीयकदर्शनमेव विमर्शनीयम्' इति पाठे—विस्रगन्धी= आमगन्धवान्। गोधादी = गोधाशनः। मत्स्यबन्धः=धीवर इत्यर्थः। २ 'विमर्शनीयः' पा०।

पुरुषः—शुणुध दाव, हग्गे क्खु शक्कवदालवाशी धीवले।

[ शृणुत तावत । अहं खलु शक्रावतारवासी धीवरः ]।

द्वितीयः—अले पाअचले! किं तुमं अह्मेहिं वशदिं, जादिं च पुच्छीअसि ?।

[ अरे पाटच्चर! किं त्वमस्माभिर्वसतिं, जातिञ्च पृच्छ्यसे ? ]।

नागरकः श्यालः—सूअअ! कदेधु सव्वं अणुक्कमेण, मा अन्तरा पडिबन्धेअ[1]।

[ सूचक! कथयतु सर्वमनुक्रमेण। माऽन्तरा प्रतिबधान[1] ]।

उभौ—जं आवुत्ते आणवेदि। लवेहि ले।

[ यदावुत्त आज्ञापयति। लप रे।

---

उपहासवाक्यमेतत्। शक्रावतारः=तीर्थविशेषः। तच्च 'हापुड'-('मेरठ' प्रदेशे) इति प्रसिद्धं स्यात्। धीवरः=कैवर्त्तः। 'कैवर्त्ते दाशधीवरौ' इत्यमरः। पाटच्चरः= दस्युः। 'दस्युः पाटच्चरः स्तेनः' इत्यमरः। वसतिं=निवासस्थानम्। अतस्तव जात्यादिशंसनं न प्रासङ्गिकं, कथय कुतोऽङ्गुलीयकमासादितमिति भावः। नागरकः=नगररक्षाधिकृतः कोट्टपालः।

सूचकेति। प्रहरिनामेदम्। अनुक्रमेण=आनुपूर्व्येण। अन्तरा=मध्ये। मा प्रतिबधान=तर्जनेन विघ्नं मा कुरु। आवुत्तः=भगिनीपतिः। 'भगिनी-पतिरावुत्तः' इत्यमरः। लप=सर्वं विशदं व्याहृणु।

---

पुरुष—नहीं, नहीं सुनिए तो, मैं शक्रावतार ( हस्तिनापुर के निकट का तीर्थ विशेष-हापुर ) का रहने वाला धीवर ( मल्लाह ) हूँ।

दूसरा सिपाही—अरे चोर! हम क्या तेरे से तेरी जाति और तेरा गाँव पूछ रहे हैं ?।

नागरक श्याल—( कोतवाल )—अरे सूचक! ( यह सिपाही का नाम है ), इसको प्रारम्भ से ( सिलसिले से ) ही सब बातें कहने दो। बीच में इसे मत टोको। ( अर्थात् तुम बीचमें दखल मत दो )।

दोनों सिपाही—जो हुकम सरकार का। अच्छा तो कह रे कह।

---

१ 'प्रतिबध्नीथाः। प्रतिबन्धय' पा०।

एतावान् तावदेतस्याऽऽगमः। अथ मां मारयत, कुट्टयत वा ]।

**नागरकः**—( अङ्गुलीयकमाघ्राय- ) जालुअ ! मच्छोदलब्भन्तलगदोत्ति णत्थि सन्देहो, जदो अअं [1]आमिसगन्धो वाअदि। आगमो दाणिं एदस्स एशो विमरिसिदव्वो, ता एध, लाअउलं ज्जेव गच्छह्म।

[ जालुक ! मत्स्योदराभ्यन्तरगतमिति नास्ति सन्देहः, यतोऽयमामिषगन्धो' वाति। आगम इदानीमेतस्यैष [2]विमर्ष्टव्यः। तदेतम्। राजकुलमेव गच्छामः।

**रक्षिणौ**—( धीवरं प्रति— ) गच्छ ले गण्ठिच्छेदअ ! गच्छ।

( इति सर्वे परिक्रामन्ति )।

[ गच्छ रे ग्रन्थिच्छेदक ! गच्छ ]।

---

पणिकेभ्यो दर्शयन्नेव अहं भवद्भिः। गृहीतः = बद्धः। एतावान् = इत्थमेतावत्परिमितः। आगमः = प्राप्तिवृत्तान्तः। अथ=श्रुत्वैतदिदानीं। कुट्टयत = चूर्णयत मां।

मत्स्योदरस्याभ्यन्तरे गतं = रोहितोदरकुहरं गतमिदम्। इति = इत्यत्र। आमिषगन्धः = मत्स्यमांसगन्धः। वाति = निस्सरति। आगमः=प्राप्तिवृत्तान्तः। विमर्ष्टव्यः=विमर्शनीयः। विचारणीयः। एत(म)=आगच्छत(म)। राजकुलं=राज-

---

इस प्रकार मुझे मिली है। अब चाहे आप लोग मुझे मारो, या पीटो। बात इतनी ही है।

नागरक—( अंगूठी को सूंघ कर ) अरे जालुक ( यह दूसरे सिपाही का नाम है )—यह अंगूठी—मछली के पेट में से निकली है, इस बात में तो कुछ भी सन्देह नहीं है। क्योंकि—इसमें से मछली की गन्ध ( बदबू ) आ रही है। ( और यह भी मछुवाहा है, क्योंकि इसके शरीर से भी मछली की बुरी गन्ध आ रही है )। अब इसमें विचारना यही है, कि-यह अंगूठी मछली के पेट में पहुंची कैसे ?। अतः-आओ, हम लोग राजकुल ( महल, दर्बार ) में ही चलें। वहां इसका पता लगेगा।

दोनों सिपाही—(धीवर से) चल रे गिरहकट्ट ! चल। (सब चलते हैं)।

---

१ 'विस्रगन्धी गोधादी मत्स्यबन्ध एव निस्संशयम्। अङ्गुलीयकदर्शनमेव विमर्शनीयम्' इति पाठे—विस्रगन्धी = आममांसगन्धवान्। गोधादी = गोधाशनः। मत्स्यबन्धः=धीवर इत्यर्थः। २ 'विम नीयः' पा०।

नागरकः—सूअअ ! इध गोउलदुआले अप्पमत्ता पडिपालेध मं, जाव लाअउलं पवेशिअ णिक्कमामि ।

[ सूचक ! इह गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं माम् , यावदिद[1]मङ्गुलीयकं यथागमं भर्त्तुर्निवेद्य,ततः शासनं प्रतीक्ष्य[2] निष्क्रामामि ]।

उभौ—पविशदु आवुत्तो शामिप्पशादत्थं ।

[ प्रविशतु आवुत्तः स्वामिप्रसादार्थम् ]।

( नागरकः—परिक्रम्य निष्क्रान्तः )।

सूचकः—जालुअ ! चिलाअदि क्खु आवुत्ते ।

[ जालुक ! चिरयति खल्वावुत्तः ]।

---

सभाम् । ग्रन्थिच्छेद कः = चौरः । गो पुरस्य द्वारे—गोपुरद्वारे = नगरद्वारे । 'पुरमात्रेऽपि गोपुर'मिति रत्नकोशः । अप्रमत्तौ = सावधानौ । भर्त्तुर्निवेद्य = भर्त्रे राज्ञे निवेद्य । शासनम = आज्ञां । राजाज्ञाम् । प्रतीक्ष्य = गृहीत्वा । निष्क्रामामि = निस्सरामि । आगच्छामि । स्वामिनो = राज्ञः । प्रसादायेति-प्रसादार्थं = प्रसन्नतार्थम् । अङ्गुलीयकस्य लाभाद्राजा नूनं त्वयि प्रसीदेदिति भावः । प्राकृत भाषायां च चतुर्थ्यर्थे षष्ठी बोध्या ।

---

नागरक—(कोतवाल)-अरे सूचक ! तुम लोग यहीं नगर ( राजदर्बार ) के दरवाजे पर ठहरो । और सावधानी से मेरी प्रतीक्षा करो । तब तक मैं महाराज के सामने इस अंगूठी को उपस्थित कर, इसके पाने का पूरा पूरा हाल भी उनसे कह कर, उनकी आज्ञा लेकर शीघ्र ही आता हूं ।

दोनों सिपाही—जाइए, महाराज से इनाम और तरक्की पाने को जाइए ।

[ नागरक—कुछ दूर चल कर, बाहर निकल जाता है ]।

सूचक—अरे जालुक ! सर्कार को ( कोतवाल साहब को ) आने में बहुत देर हो रही है, क्या बात है ? ।

---

१ 'प्रतिपालयत माम् ! यावद्राजकुलं प्रविश्य निष्क्रामामि' । २ 'प्रतीष्य' ।

[ यथाऽऽज्ञापयति आवुत्तः । [1]यमसदनं प्रविश्य प्रतिनिवृत्तः खल्वेषः ।

**धीवरः**— भट्टके ! शम्पदं तुह कीलके मे जीवदे ।

( —इति पादयोः पतति ) ।

[ भर्त्तः ! साम्प्रतं तव क्रीतकं मे जीवितम् ] ।

**नागरकः**—उट्ठेहिं ! एसे भट्टिणा अङ्गुलीअ-मुल्ल-सम्मिदे पारिदोशिए दे प्पसादीकिदे । ता गेह्ण एदं । (—इति धीवराय कटकं ददाति ) ।

[ उत्तिष्ठ । एतद्भर्त्राऽङ्गुलीयमूल्यसंमितं पारितोषिकन्ते प्रसादीकृतं, तद् गृहाणेदम् ] ।

**धीवरः**—( सहर्षं, सप्रणामञ्च प्रतिगृह्य— ) अणुग्गहीदोह्मि ।

[ अनुगृहीतोऽस्मि ] ।

---

क्रीतकं=क्रीतमिव । अयमहं भवतो दासः संवृत्तोऽस्मीति भावः । भवत्कृपयैव अहं मुक्तोऽस्मीति यावत् । अङ्गुलीयकस्य मूल्येन संमितं=तुल्यम्–अङ्गुलीयकमूल्यसंमितं । प्रसादीकृतं = कृपया दत्तं । कटकं = हस्ताभरणम् ।

---

अर्थात्—चोरी के अपराध में इसको मृत्यु दण्ड होना निश्चित था । पर आप से ही यह मृत्यु के मुख से बच गया है ।

( धीवर की हथकड़ी बेड़ी ( बन्धन ) खोलता है ) ।

धीवर—हे मालिक ! अब तो मेरा जीवन ही आप का खरीदा हुआ हो गया है । अर्थात्—मैं तो अब आपका खरीदा हुआ गुलाम ( हो गया ) हूं ।

( पैरों में गिरता है ) ।

नागरक—उठ, उठ, महाराज ने प्रसन्न हो अंगूठी के मूल्य के बराबर यह सोने का कड़ा भी तुझको इनाम के रूप में दिया है ।

( धीवर को रत्नजड़ित सोने का कड़ा देता है ) ।

धीवर—( हर्ष पूर्वक प्रणाम करके, कड़े को लेकर ) अहा ! मैं अनुगृहीत ( कृतार्थ ) हो गया ।

---

[1] 'यमवसतिं' पा० ।

नागरकः—सूअअ ! इध गोउलदुआले अप्पमत्ता पडिपालेध मं, जाव लाअउलं पवेशिअ णिक्कमामि ।

[ सूचक ! इह गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं माम, यावदिद-[1]मङ्गुलीयकं यथागमं भर्त्तुर्निवेद्य,ततः शासनं प्रतीक्ष्य[2] निष्क्रामामि ]।

उभौ—पविशदु आवुत्तो शामिप्पशादत्थं ।

[ प्रविशतु आवुत्तः स्वामिप्रसादार्थम् ]।

( नागरकः—परिक्रम्य निष्क्रान्तः )।

सूचक—जालुअ ! चिलाअदि क्खु आवुत्ते ।

[ जालुक ! चिरयति खल्वावुत्तः ]।

---

सभाम् । ग्रन्थिच्छेद कः = चौरः । गोपुरस्य द्वारे—गोपुरद्वारे = नगरद्वारे । 'पुरमात्रेऽपि गोपुर'मिति रत्नकोशः । अप्रमत्तौ = सावधानौ । भर्त्तुर्निवेद्य = भर्त्रे राज्ञे निवेद्य । शासनम = आज्ञां । राजाज्ञाम् । प्रतीक्ष्य = गृहीत्वा । निष्क्रामामि = निस्सरामि । आगच्छामि । स्वामिनो = राज्ञः । प्रसादायेति-प्रसादार्थं = प्रसन्नतार्थम् । अङ्गुलीयकस्य लाभाद्राजा नूनं त्वयि प्रसीदेदिति भावः । प्राकृत-भाषायां च चतुर्थ्यर्थे षष्ठी बोध्या ।

---

नागरक—(कोतवाल)-अरे सूचक ! तुम लोग यहीं नगर ( राजदर्बार ) के दरवाजे पर ठहरो । और सावधानी से मेरी प्रतीक्षा करो । तब तक मैं महाराज के सामने इस अंगूठी को उपस्थित कर, इसके पाने का पूरा पूरा हाल भी उनसे कह कर, उनकी आज्ञा लेकर शीघ्र ही आता हूं ।

दोनों सिपाही—जाइए, महाराज से इनाम और तरक्की पाने को जाइए ।

[ नागरक—कुछ दूर चल कर, बाहर निकल जाता है ]।

सूचक—अरे जालुक ! सर्कार को ( कोतवाल साहब को ) आने में बहुत देर हो रही है, क्या बात है ?।

---

१ 'प्रतिपालयत माम् ! यावद्राजकुलं प्रविश्य निष्क्रामामि' । २ 'प्रतीष्य' ।

[ यथाऽऽज्ञापयति आवुत्तः । [1]यमसदनं प्रविश्य प्रतिनिवृत्तः खल्वेषः ।

धीवरः—भट्टके ! शम्पदं तुह् कीलके मे जीवदे ।

( —इति पादयोः पतति ) ।

[ भर्त्तः ! साम्प्रतं तव क्रीतकं मे जीवितम् ] ।

नागरकः—उट्ठेहिं ! एसे भट्टिणा अङ्गुलीअ-मुल्ल-सम्मिदे पारितोशिए दे प्पसादीकिदे । ता गेह्ण एदं । ( –इति धीवराय कटकं ददाति ) ।

[ उत्तिष्ठ । एतद्भर्त्राऽङ्गुलीयमूल्यसंमितं पारितोषिकन्ते प्रसादीकृतं, तद् गृहाणेदम् ] ।

धीवरः—( सहर्षं, सप्रणामञ्च प्रतिगृह्य- ) अणुग्गहीदोह्मि ।

[ अनुगृहीतोऽस्मि ] ।

क्रीतकं=क्रीतमिव । अयमहं भवतो दासः संवृत्तोऽस्मीति भावः । भवत्कृपयैव अहं मुक्तोऽस्मीति यावत् । अङ्गुलीयकस्य मूल्येन संमितं=तुल्यम्–अङ्गुलीयकमूल्यसंमितं । प्रसादीकृतं = कृपया दत्तं । कटकं = हस्ताभरणम् ।

अर्थात्—चोरी के अपराध में इसको मृत्यु दण्ड होना निश्चित था । पर भाग्य से ही यह मृत्यु के मुख से बच गया है ।

( धीवर की हथकड़ी बेड़ी ( बन्धन ) खोलता है ) ।

धीवर—हे मालिक ! अब तो मेरा जीवन ही आप का खरीदा हुआ हो गया है । अर्थात्—मैं तो अब आपका खरीदा हुआ गुलाम ( हो गया ) हूं ।

( पैरों में गिरता है ) ।

नागरक—उठ, उठ, महाराज ने प्रसन्न हो अंगूठी के मूल्य के बराबर यह सोने का कड़ा भी तुझको इनाम के रूप में दिया है ।

( धीवर को रत्नजड़ित सोने का कड़ा देता है ) ।

धीवर—( हर्ष पूर्वक प्रणाम करके, कड़े को लेकर ) अहा ! मैं अनुगृहीत ( कृतार्थ ) हो गया ।

१ 'यमवसतिं' पा० ।

जालुकः—एशे क्खु रण्णा तधा अणुग्गहीदे जधा शुलादो ओदालिअ हत्थिक्खन्धे शमालोविदे।

[ एषु खलु राज्ञा तथाऽनुगृहीतो,-यथा शूलादवतार्य्य हस्तिस्कन्धे समारोपितः ]।

सूचकः—आवुत्त ! पालितोशिएण जाणामि—'महालिहलदणेण अङ्गुलीअएण इशामिणो बहुमदेण होदव्वं'।

[ आवुत्त ! पारितोषिकेण जानामि—'महार्हरत्नेनाऽङ्गुलीयकेन स्वामिनो बहुमतेन भवितव्यम्' ]।

नागरकः—ण तस्सिं भट्टिणो महालिहलदणं त्ति कदुअ परिदोशो। एत्ति उण तक्केमि—।

[ न तस्मिन् भर्त्तुर्महार्हरत्नमिति कृत्वा परितोषः। एतत् पुनस्तर्कयामि—' ]।

---

हस्तिस्कन्ध इति। शूलादवतार्य = शूलाख्यान्मारणसाधनाल्लौहदण्डादवरोप्य। हस्तिस्कन्धे = गजस्कन्धे। महति संमानपदे। शूलेन वध्यो राजसंमितं सत्कारं प्रापित इति यावत्।

पारितोषिकेण = धीवरस्य सत्कारेण। महार्हं रत्नं यत्र तेन = बहुमूल्यमणिखचितेन। अत एव राज्ञो-बहुमतेन = अतिप्रियेण। तस्मिन् = अङ्गुलीयके। महार्हं रत्नं यत्र तत्-महार्हरत्नम् = अनर्घरत्नघटितम्। इति कृत्वा = इति हेतोः।

---

जालुक—इसके ऊपर तो महाराज ने ऐसी कृपा दिखाई है, मानों—इसे शूली पर से ( फाँसी के तख्ते पर से ) उतार कर हाथी के ऊपर ही बैठा दिया है। अर्थात्—कहाँ तो इसको चोरी के अपराध में शूली ( शूली से वध ) होने वाली थी, और कहाँ उलटा इसे इनाम मिल रहा है !।

सूचक—सर्कार ! इसको महाराज ने यह जो इनाम दिया है, इससे मैं समझता हूं, कि—बहुमूल्य रत्न से जड़ी हुई वह अंगूठी महाराज को बहुत ही प्रिय थी।

नागरक—उस अंगूठी में बहुमूल्य रत्न जडे हैं, इसी लिए वह अंगूठी महाराज को ज्यादा प्यारी है-यह बात नहीं है। पर मैं तो ऐसा समझता हूं, कि—'

उभौ—किं उण ? ।

[ किं पुनः ? ] ।

नागरकः—'तस्स दंसणेण भट्टिणा कोवि अहिमदो जनो सुमरिदोत्ति । जदो मुहूत्तअं पइदिगम्भीरो वि पज्जुम्सुअमणा आसी ।

[ तस्य दर्शनेन भर्त्रा कोऽप्यभिमतो जनः स्मृत इति । यतो मुहूर्त्तं प्रकृतिगम्भीरोऽपि पर्य्युत्सुकमना आसीत् ] ।

सूचकः—दोसिदे शोइदे अ दाणिं भट्टा आवुत्तेण ।

[ तोषितः, शोचितश्चेदानीं भर्त्ता आवुत्तेन ] ।

जालुकः—णं [1]भणेमि–इमइश मच्छशत्तुणो किदे ।

(—इति धीवरमसूयया पश्यति ) ।

परितोषः = सन्तोषः । स्नेहः । तर्कयामि = सम्भावयामि । तस्य=अङ्गुलीयकस्य । अभिमतः = प्रणयी । इति = इत्थं । तर्कयामीति पूर्वेण सम्बन्धः । यतः = अत एवाऽयं मम तर्को यदयं प्रकृत्या गम्भीरोऽपि = गम्भीरप्रकृतिरपि राजा । मुहूर्तं= क्षणमात्रं । पर्युत्सुकं मनो यस्यासौ–पर्युत्सुकमनाः=उत्कण्ठितः । चेतसोत्कण्ठितेन क्षणं स्मरन्निव प्रणयपेशलं कञ्चन जनं राजा खिन्नोऽभूदिति भावः । तोषितः— अङ्गुलीयकदानात् । शोचितः = उत्कण्ठाकुलीकृतः । प्रियजनस्मारकतयाऽङ्गुलीयकस्य तथात्वम् ।

दोनों सिपाही—हाँ आप क्या समझते हैं ? ।

नागरक—उस अंगूठी को देखकर महाराज को किसी भूले हुए अपने प्यारे बन्धु ( शकुन्तला ) का स्मरण हो गया । क्योंकि—उस अंगूठी को देखते ही, स्वभाव से ही गंभीर प्रकृति होने पर भी, महाराज घड़ी भर तो उत्कण्ठित एवं व्याकुल और उत्सुक मन हो गए थे ।

सूचक—तब तो आपने महाराज को सन्तोष देने के साथ ही साथ शोक में भी डाल दिया ।

जालुक—यों कहो, कि—इस मछली मारनेवाले धीवर के लाभ के लिए

१ 'माच्छिअभत्तुणो' [ मात्स्यिकभर्तुः ] ।

[ ननु [1]भण—'अस्य मत्स्यशत्रोः कृते' ]।

धीवरः—भट्टालके ! इदो अद्धं तुह्माणम्पि शुलामुल्लं होदु।

[ भट्टारक ! इतोऽर्द्धं युष्माकमपि [2]सुरामूल्यं भवतु ]।

जालुकः—एत्तके जुज्जई।

[ एतावद्युज्यते ]।

नागरकः—धीवल ! महत्तले शम्पदं अह्माणं पिअ-वअस्शके शंवुत्तेशि। कदबालीशक्खिके क्खु पढमं शोहिदे इच्छीअदि। ता एहि। शुण्डिआलअं ज्जेव गच्छह्म।

[ धीवर ! महत्तरः साम्प्रतमस्माकं प्रियवयस्यः संवृत्तोऽसि।

ननु—इति रोषे। पाठान्तरे-मत्स्यैर्जीवन्ति मात्स्यिकाः, तेषां भर्ता, तस्य-मात्यिस्कभर्तुः—कृते = धीवराधिराजस्यैव लाभाय। अनेन निवेदनेन धीवरस्यैव लाभो जातो, नास्माकमित्यस्माभिर्वृथैव राजा खेदितः। वयमपि च मुधैव श्रान्ता इति—साऽसूयमिव, साधिक्षेपमिव च लुब्धस्य सूचकस्य नागरकराजपुरुषस्य वचनम्।

इत्थं नागरकराजपुरुषस्य भावं बुद्ध्वा मात्स्यिकोऽर्द्धं पारितोषिकाद्दातुं प्रवर्तते—इतोऽर्द्धमिति। इतः = कटकात्। सुरामूल्यं = सुरापानोपकल्पनम्। 'सुमनोमूल्य'मिति पाठे—पुष्पमालामूल्यमिति तदर्थः। 'पुष्पमूल्य'मिति च विनयदर्शनाय। एतद्युज्यते = युक्तमेतत्तवेति उत्कोचप्रीतस्योक्तिः। महत्तरः = अति-

ही, महाराज को आपने इतना कष्ट दिया। क्योंकि—लाभ तो इसी का हुआ, जो इसे इनाम में रत्नाभरण प्राप्त हो गया, और कष्ट हम लोगों ने उठाया।

धीवर—हे मालिक ! इसमें से आधा हिस्सा आप लोगों को भी फूलमाला, पान-पत्ता शराब आदि के—खर्च के लिए रहेगा !

जालुक—यह बात बहुत ही ठीक इसने कही है।

नागरक—अरे धीवर ! अब तो तूँ हमारा बड़ा भारी मित्र ( दोस्त )

१ 'भणामि'। २ 'सुमानमूल्यम्'।

[1]कादम्बरीसाक्षिकं खलु प्रथमसौहार्दमिष्यते । तदेहि । [2]शौण्डिकालयमेव गच्छामः ] ।

॥ ( इति ) प्रवेशकः[3] ॥

[ इति [4]पञ्चमोऽङ्कः ] ॥

---

महान् । संवृत्तोऽसि = जातोऽसि । कादम्बरीसाक्षिकं = सुरासाक्षिकं । प्रथमसौहृदं=मैत्री । मैत्रीप्रारम्भः । सुरासाक्षिकं हि मद्यपानां सौहृदं भवति । तवापि चाऽस्माभिः सह तथैव सुरासाक्षिका मैत्री भवत्विति भावः ।

'कादम्बरीसखित्वं प्रथमशोभित'—मिति पाठान्तरे—एकत्र पानेन जाता मद्यमैत्री—प्रथमशोभितम् = आदावुचितम् । अद्य यावन्न जातेति मैत्र्यां प्राथम्यम् । शौण्डिकनिलयं = शौण्डिकालयं । मद्यविक्रेतृगृहम् । 'शौण्डिको मद्यविक्रयी'त्यमरः ।

प्रवेशक इति । नीचपात्रप्रयोजितत्वाच्च प्रवेशकोऽयम् । 'समाप्त' इति शेषः ।

---

ही हो गया है । और हम लोगों की नई मित्रता तो मद्य की साक्षी में ही हुआ करती है, अतः आ, मद्य पीने के लिए मद्य बनाने वाले की दूकान (कलवरिया) में ही चलें ।

[ प्रवेशक(=भावी और भूत बातों की नीच पात्रों द्वारा सूचना-)समाप्त ] ।

---

१ 'कादम्बरीसखित्वमस्माकं प्रथमशोभितं' ।
२ 'शौण्डिकापणं' 'शौण्डिकनिलयं' ।
३ इमम् 'अङ्कावतार' इति, पञ्चमाऽङ्कशेष इति च केचिन्मन्यन्ते ।
४ 'अत्रैव पञ्चमाङ्कसमाप्तिं केचन मन्यन्ते' ।

# [ अथ षष्ठोऽङ्कः ]।

( ततः प्रविशत्याकाशयानेन [2]सानुमती )।

सानुमती—णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरात्तित्थसन्दिट्ठं[3]। ता जाव सहुजणस्स अहिसेअकालो भवे, दाव सम्पदं इमस्स राएसिणो वुत्तन्तं पच्चक्खीकरिस्सं। णं मेनआसंबन्धेण सरीरभूता दाणिं मे सउन्तला। तए अ दुहिदुणिमित्तं सन्दिट्ठपुव्वह्मि। ( समन्तादवलोक्य—) किण्णु क्खु उवत्थिदुच्छवेवि दिअहे णिरुच्छवारम्भं विअ एदं राअउलं दीसदि ?। अत्थि मे सिहवा सव्वं पणिधाणेण जाणिदुं। किन्तु सहीए मए आदरो माणइदव्वो। भोदु। इमाणं ज्जेव उज्जाणबालआण पास्सपरिवत्तिणी भविअ तिरक्करणीए विज्जाए पच्छण्णा उवलहिस्सं।

(—इति नाट्येनाऽवतीर्य्य स्थिता )।

[ निवर्त्तितं मया पर्य्यायनिर्वर्त्तनीयमप्सरस्तीर्थसंदिष्टम्[4]। तद्याव-

---

आकाशयानेन = विमानेन। सानुमतीति ( मिश्रकेशीति वा ) अप्सरोनामधेयम्। निर्वर्त्तितं = सम्पादितं। पर्यायेण निवर्त्तनीयं — पर्यायवर्त्तनीयम् = क्रमशः सम्पादनीयं। वारक्रमेणानुष्ठेयम्। अप्सरस्तीर्थे सांनिध्यम् = अप्सरस्तीर्थे

---

[ आकाशयान ( वायुयान ) से सानुमती नामक अप्सरा का प्रवेश ]।

सानुमती—मैंने पारी-पारी से प्रत्येक अप्सरा के लिए कर्त्तव्यभूत अप्सरातीर्थ में सान्निध्य = अप्सरा तीर्थ में उपस्थिति-रूपी अपने कार्य को कर ही लिया है। अब उससे मैं खाली हूं। अब तो जब तक धर्मात्माओं ( साधु-सन्त, सद्गृहस्थ आदि ) का स्नान का पुनः समय हो, तब तक इस राजर्षि दुष्यन्त के हाल-चाल को अपनी आखों से देखूंगी। क्योंकि—मेनका ( अप्सरा ) के

---

१ कैश्चिदित एव षष्ठाङ्कारम्भो मन्यते। २ 'मिश्रकेशी'ति क्वचित्पाठः।
३ 'संनिद्धं' [ सांनिध्यं ]। ४ 'सांनिध्यम्'।

त्साधुजनस्याऽभिषेककालो भवेत्तावत्साम्प्रतमस्य राजर्षेर्वृत्तान्तं प्रत्यक्षीकरिष्यामि। ननु मेनकासम्बन्धेन शरीरभूतेदानीं मे शकुन्तला। तया च दुहितृनिमित्तं सन्दिष्टपूर्वाऽस्मि। किन्तु खलु उपस्थितोत्सवेऽपि दिवसे निरुत्सवारम्भमिव इदं राजकुलं दृश्यते ?। अस्ति मे विभवः सर्वं प्रणिधानेन ज्ञातुम्। किन्तु सख्या मयाऽऽदरो मानयितव्यः।

---

निवासः। 'सन्दिष्ट'मिति पाठे–कर्त्तव्यमित्यर्थः। यावत् = यावत्कालं। साधुजनस्य = धार्मिकलोकस्य। अभिषेककालः = स्नानसमयः। 'भवती'ति शेषः। मज्जन(स्नान)कालं ( प्रभातं ) यावत्–एकैकस्मिन् दिवसे एकैकयाऽप्सरसा संनिहितया तत्र तीर्थे स्थातव्यमिति हि नियमः। तत्राद्य मम पर्याय आसीत्। स मयाऽनुष्ठितो यथावत्। इदानीं ततो लब्धोऽवकाश इति भावः। साम्प्रतम्= इदानीम्। वृत्तान्तं=समाचारं। प्रत्यक्षीकरिष्यामि = अनुभविष्यामि।

ननु–इति निश्चये। मेनकायाः सम्बन्धात् = मेनकाऽपत्यतया। शरीरभूता= नितरां प्रिया। तया च = मेनकया च। दुहितृनिमित्तं = स्वतनयार्थम्— ( शकुन्तलार्थम्, ) पूर्वं सन्दिष्टा —सन्दिष्टपूर्वा=दत्तसन्देशाऽस्मि। 'शकुन्तला-मनोविनोदार्थं राज्ञो दुष्यन्तस्य वृत्तान्तस्त्वया विलोक्य तस्यै कथनीय' इति मेनकया स्वपुत्रीप्रेम्णा निवेदिताऽस्मीति भावः। समन्ताद्विलोक्याह–किं न्विति।

उपस्थित उत्सवो यस्मिन्, तस्मिन्—उपस्थितोत्सवे=सन्निहितवसन्तमहोत्सवेऽपि। दिवसे=समये। उत्सवान्निर्गतः—निरुत्सवः, तथा आरम्भो यस्य तत्—निरुत्सवारम्भम् = उत्सवशून्यव्यापारं। राजकुलं=राजगृहं। प्रणिधानेन= समाधिना। योगशक्त्या। ज्ञातुं विभवः = सामर्थ्यम्। मे यद्यप्यस्ति। तथापि सख्याः = मेनकायाः। आदरः = आग्रहः। 'स्वचक्षुषा सर्वं विलोक्य राजकुल-

---

सम्बन्ध के कारण शकुन्तला तो मुझे मेरे प्राणों से भी बढ़कर प्यारी हो रही है। मेनका ने भी अपनी पुत्री की देख-रेख रखने के लिए मुझे पहिले से ही कह रखा है। ( चारों ओर देखकर–) इस समय वसन्तोत्सव के उपस्थित होने पर भी यह राजकुल उत्सव के आरम्भ ( तैयारी ) से विमुख क्यों हो रहा है ? अर्थात्—उत्सव मनाने की तैयारियाँ यहाँ क्यों नहीं दिखाई दे रही हैं ?।

भवतु। अनयोरेवोद्यानपालिकयोः पार्श्वपरिवर्त्तिनी भूत्वा तिरस्करिण्या विद्यया प्रच्छन्ना उपलप्स्ये ]।

( ततः प्रविशति चूताङ्कुरमालोकयन्ती चेटी, तत्पृष्ठेऽपरा च )।

**प्रथमा**—कधं उवत्थिदो महुमासो ?।

[ कथमुपस्थितो मधुमासः ! ]।

---

वृत्तान्तो वर्णनीयस्त्वये'ति तन्निबन्धः। पालयितव्यः = परिपालनीयः। अतो न समाधिना विभावयामि, किन्तु लोचनाभ्यामेव पश्यामीत्याशयः। उद्यानपालिकयोः = उपवनरक्षिकयोः। पार्श्ववर्त्तिनी = निकटस्थिता। तिरस्करिण्या विद्यया= अन्तर्धानविद्यया। उपलप्स्ये = ज्ञास्यामि।

अवतीर्य = गगनतलादवतीर्य। स्थिता = निकटे—निगूढं स्थिता। चूताङ्कुरम्=आम्राङ्कुरं। चेटी=दासी। तत्पृष्ठे=दासीपृष्ठे। अपरा = द्वितीयापि चेटी।

कथमुपस्थित इति। स्वहृदयामन्त्रणमेतत्। मधुमासः = वसन्तमासः। चैत्र इति यावत्। कुत एतज्जातमत आह—

---

यद्यपि मैं समाधि एवं ध्यान आदि के बल से आगे-पीछे की सभी बातें जानने की शक्ति रखती हूं, परन्तु मेरी सखी मेनका का ( सब हाल आंखों से देखने का ) आग्रह भी मुझे मानना उचित है। अच्छा ! इन उद्यानपालिकाओं के पास में ही उपस्थित रह कर तिरस्करिणी ( अन्तर्धान ) विद्या के बल से, इनको दिखलाई न पड़कर, गुप्तरूप से इनकी सब बातें मैं सुनती हूँ।

[ आकाश से वायुयान से उतरने का अभिनय करती हुई उद्यानपालिकाओं के पास ही आकर खड़ी हो जाती है ]।

[ आम की मञ्जरी को देखती हुई एक चेटी ( दासी ) का, तथा उसके पीछे ही पीछे दूसरी चेटी का भी प्रवेश ]।

पहिली दासी—( आम के मौर ( मञ्जरी ) को देखकर ) हैं ! क्या मधुमास ( वसन्त मास। वसन्त ऋतु का पहिला महीना। चैत का महीना ) आ गया !। ( वसन्त ऋतु में चैत के प्रारम्भ में ही आम के मञ्जरी आती हैं। और चैत में ही वसन्तोत्सव और होली-धुरड्डी का मेला ) भी होता है ]।

¹आतम्म हरिअपण्डुर ! जीविअ ! सत्तं वसन्तमासस्स ।
दिट्ठोऽसि चूदओरअ ! उदुमङ्गल ! तुमं पसाएमि ।
[ आताम्र-हरित-पाण्डुर ! जीवित ! सत्यं वसन्तमासस्य² ।
दृष्टोऽसि चूतकोरक ! ऋतुमङ्गल ! त्वां प्रसादयामि ॥२॥ ]

आताम्रेति । आताम्रश्चासौ हरितश्च, पाण्डुरश्च तत्सम्बुद्धौ—हे आताम्र-हरितपाण्डुर ! । आम्रो हि मुखे ईषद्रक्तः, अन्यत्र च किञ्चिद्धरितः, पाण्डुर-वर्णश्च भवत्येव । वसन्तमासस्य—( पाठान्तरे—वसन्तमासयोश्च ) । सत्यं जीवित !=वस्तुतः प्राणभूत ! । आम्राङ्कुरो हि सर्वातिशायिसौरभ्यो वसन्तमासस्य सर्वस्वायते । हे चूतकोरक=हे आम्रकोरक ! । 'कलिका कोरकः पुमान्' इत्यमरः । [ आम्रकोरकः=लक्षणया—चूतमञ्जरी । दृष्टोऽसि=त्वमस्माभिः प्रथममेव दृष्टोऽसि । अतः—ऋतुमङ्गल ! । ऋतोर्वसन्तस्य मङ्गलमिव मङ्गलं, तत्सम्बुद्धौ रूपम् ] । हे वसन्तर्तुसौभाग्य । आदावुद्भवान्मङ्गलत्वारोप आम्र-कोरके । त्वां प्रसादयामि=त्वां प्रणमामि । अनुकूलयामि वा । [ उत्प्रेक्षा । 'गाथा' ] ॥ २ ॥

कुछ लाल रंग लिए हुए हरे व पीले ( जर्द ) रंग से शोभित, वसन्त मास के सच्चे जीवन स्वरूप, वसन्त ऋतु के मङ्गल रूप ( वसन्तऋतु के मङ्गलमय आगमन की सूचना देने वाले ) हे आम्र के कोरक ! ( हे आम की मञ्जरि ! या आम की कलि ! ) तुमने आज हमें पहिले पहल दर्शन दिया है, अतः तुमको प्रसन्न करने के लिए, मैं तुमको प्रणाम करती हूँ ॥ २ ॥

१ 'आतम्महरिअवेण्टं उस्ससिअ विअ वसन्तमासस्स ।
दिट्ठं चूअङ्कुरअं छणमङ्गल्लं णिअच्छामि' ॥ २ ॥
[ 'आताम्रहरितवृन्तमुच्छ्वसितमिव वसन्तमासस्य' ।
दृष्टं चूताङ्कुरकं क्षणमङ्गल्यं नियच्छामि' ] ।
—इति पाठान्तरे—

वृन्तं—फलाग्रभागः, तद्बन्धनं च । उच्छ्वसितं—प्राणाः । क्षणे—उत्सवे । मङ्गल्यं—मङ्गलाशंसि । नियच्छामि—निश्चिनोमि । प्रणमामि । गृह्णामि वा —इत्यर्थः ।

२ 'वसन्तमासयोः' पा० ।

द्वितीया—परहुदिए ! किं एदं एआइणी मन्तेसि ?।

[ परभृतिके ! किमेतदेकाकिनी मन्त्रयसे ? ]।

प्रथमा—महुअरिए ! चूअकलिअं पेक्खिअ उम्मत्तिआ क्खु परहुदिआ होदि।

[ मधुकरिके ! चूतकलिकां प्रेक्ष्य उन्मत्ता खलु परभृतिका भवति ]।

द्वितीया—( सहर्षं त्वरयोपगम्य- ) कधं उवत्थिदो महुमासो !।

[ कथमुपस्थितो मधुमासः ! ]।

प्रथमा—महुअरिए ! तवावि एसो कालो मदविब्भमुग्गीदाणं।

---

परभृतिकेति। प्रथमचेटीनामधेयम्। एकाकिनी = स्वयमेव। मन्त्रयसे = आलपसि। मधुकरिकेति। द्वितीयस्याश्चेटया नामधेयम्। चूतस्य = आम्रस्य। कलिकां = कोरकं। परभृता एव—परभृतिका = कोकिला। चेटी च। वसन्ते कोकिला चूताङ्कुरं दृष्ट्वा यथा हृष्यति, तथा—अहमपि परभृतिका नामसाम्यात्कोकिलेव—आम्रं दृष्ट्वा प्रहृष्यामि। उन्मत्ता = हर्षतरला। कथं = किम् ?।

---

दूसरी चेटी—अरी परिभृतिके ! तूं अकेली ही अकेली क्या बड़-बड़ा रही है ?। ( क्या बातें कर रही है ? )।

पहिली दासी—हे मधुकरिके ! चूत कलिका ( आम की कली, या आम की मञ्जरी ) को देखकर परभृतिका उन्मत्त हो ही जाती है। ( परिभृतिका = कोयल। और पहिली चेटी का यह नाम भी है )। अर्थात्-मैं आमकी कली को देखकर कोयल की तरह मस्त होकर स्वयं ही चहचहा ( बोल ) रही हूं।

दूसरी चेटी—( सहर्ष, जल्दी से पास में जाकर के ) क्या मधुमास = वसन्त ऋतु का महीना—( चैत्रमास ) आ गया ?। अथवा—अब तो मधुमास आ ही गया ! )।

पहिली चेटी—हे मधुकरिके ! तेरे मदभरे व उमङ्ग भरे गीतों का भी तो

[ मधुकरिके ! तवाऽप्येष कालो [1]मदविभ्रमोद्गीतानाम् ]।

**द्वितीया**—सहि ! अवलम्बस्स मं जाव अग्गपदे परिट्ठिदा भविअ चूअप्पसअं गेह्णिअ सम्पादेमि कामदेवस्स अच्चणं।

[ सखि ! अवलम्बस्व माम्। यावदग्रपदे परिस्थिता भूत्वा चूतप्रसवं गृहीत्वा सम्पादयामि कामदेवस्याऽर्चनम् ]।

**प्रथमा**—जइ एव्वं ता ममावि अद्धं अच्चणफलस्स।

[ यद्येवं तन्ममाप्यर्द्धमर्चनफलस्य ]।

---

कथं = कथं सहसैवेति वार्थः। मधुकरिका नाम चेटी। किञ्च—मधुकर्येव मधुकरिकेति व्युत्पत्तेर्मधुकरिका भ्रमर्यपि, नामसादृश्यात्, अत आह—तवेति। तव = मधुकरिकायाः। भ्रमर्याश्च। एषः = वसन्तसमयः। मदेन यो विभ्रमस्तेन—उद्गीतानां—मदविभ्रमोद्गीतानाम् = उन्मदसविलाससविभ्रमतारतरगीतानां। कालः = उचितः समयः। भ्रमरी किल वसन्ते सहकारकोरकेषु मञ्जरीषु च भ्राम्यन्ती सविभ्रमं कलं गायति। अवलम्बस्व = कराग्रेणाऽवलम्बनं देहि। पदयोरग्रे- इत्यग्रपदे = पादाङ्गुलीसमाश्रयेण। परिस्थिता = उन्नता। चूतस्य प्रसवम्=चूतमञ्जरीम्। आम्रस्य प्रांशुलभ्यत्वाद्बालायास्तह्याभायाऽग्रपदावस्थितिरुचितैव। अभिनवचूतमञ्जरीभिः कामार्चनं मदनोत्सवे भवतीति लोकसमयः। यदि चूतप्रसवं कामार्चनायाऽवचिनोषि तर्हि अर्चनफलस्य = कामपूजाफलस्य। अर्द्धम् = अर्द्धं फलं, मह्यं देहि, तदा तव साहाय्यमाचरामीति भावः।

---

यही समय है। (मधुकरिका = भ्रमरी—भी वसन्त में मस्त हो फूलों पर गूंजती फिरती है)।

**दूसरी चेटी**—हे सखि ! मुझे तो तू यदि थोड़ा सहारा दे मैं पैरों के अग्रभाग पर ( पञ्जों के सहारे ) खड़ी होकर, आमकी कली को तोड़कर, उससे भगवान् कामदेव की पूजा करूं।

**पहिली चेटी**—यह तो ठीक है, पर कामदेव के पूजन के फल में से आधा फल मेरा भी हिस्सा रहेगा।

---

१ 'विभ्रमभोद्गीतानां' पाठः।

**द्वितीया**--सहि! अभणिदे वि एवं सम्पज्जइ एव्व। जदो एक्कं ज्जेव णो इदं सरीरं द्विधा भिण्णं पजावइणा। ( सखीमवलम्ब्य चूतप्रसवं गृहीत्वा- ) अम्महे! अप्पबुद्धोवि चूअप्पसवो बन्धणभङ्गसुरही राअदि। ( कपोतहस्तं कृत्वा- ) णमो भअवदे मअरद्धजाअ।

[ सखि अभणितेऽप्येतत्सम्पद्यत एव। [1]यत [2]एकमेव नौ एतच्छरीरं द्विधा भिन्नं प्रजापतिना। [3]अम्महे! अप्रबुद्धोऽपि चूतप्रसवो बन्धनभङ्गसुरभी राजते। नमो भगवते मकरध्वजाय ]।

**अरिहसि मे चूअङ्कुर! दिण्णो कामस्स गहिदचावस्स।**
**पहिअजणजुअइलक्खो पञ्चन्तरिओ सरो होदुं॥ ३॥**

---

अभणितेऽपि = अनाख्यानेऽपि। इदं = कामदेवपूजायाः फलार्द्धम्। द्विधा भिन्नं=द्विधाकृतमिव। आवयोः स्नेहातिशयदर्शनादेवमित्याशयः। अवलम्ब्य= पतनभयात्तामवलम्ब्य। पादाग्रेणोन्नता भूत्वा। 'अम्महे' इति हर्षे देशी। अप्रबुद्धः=अस्फुटितः। कोमलः। अभिनवः। बन्धनस्य वृन्तस्य-भङ्गेन=त्रोटनेन। सुरभिः=सौरभितः। राजते = शोभते। प्रसवबन्धनभङ्गस्थानात्सौरभमुद्वमन्निव शोभतेतमामित्याशयः। कपोतहस्तं बद्ध्वा=हस्तयोरञ्जलिं बद्ध्वा। 'उभाभ्यामपि हस्ताभ्यामन्योऽन्यं पार्श्वसङ्ग्रहात्। हस्तः कपोतको नाम'इति तल्लक्षणम्। 'एष विनयाभ्युपगमे, प्रणामकरणे, गुरोश्च सम्भाषे'—इति च भरतः। भगवते = सर्वशक्तिमते। मकरो ध्वजे यस्य, तस्मै—मकरध्वजाय=मीनकेतनाय। कामाय।

---

**दूसरी चेटी**—हे सखि! यह बात तो तेरे बिना कहे भी हो ही जाएगी। क्योंकि—हमारा तुम्हारा तो एक ही शरीर है, परन्तु विधाता ने ( भूल से ही ) इसके दो भाग बना दिए हैं। ( सखी का सहारा लेकर आम की कली तोड़ कर-) अहो! यह आम की कलि ( मञ्जरी ) अभी खिली नहीं है, तो भी इसके तोड़ने से इसके वृन्त ( पीछे के ) भाग से सुगन्धि की लपट निकलने से यह कैसी शोभित हो रही है!। ( अञ्जलि बनाकर-) भगवान् कामदेव को हमारा नमस्कार हो।

---

१ 'यदेक'। २ 'एकमेव नो जीवितं, द्विधाभूतं शरीरम्'-पा०। ३ 'अहो'।

[ [1]त्वमसि मया चूताङ्कुर ! दत्तः कामस्य गृहीतचापस्य ।
[2]पथिकजनयुवतिलक्ष्यः पञ्चान्तरितः शरो भवितुम् ] ॥ ३ ॥

त्वमसीति । चूताङ्कुर = हे आम्रप्रसव ! । हे चूतमञ्जरि ! । गृहीतश्चापो येन तस्मै—गृहीतचापाय = धनुर्द्धराय । मानिनीमानभञ्जनसन्नाहशालिने । कामाय = मदनाय । मे = मया । प्राकृते प्रायो विभक्तिव्यत्ययो भवति । दत्तः = अर्पितः । त्वं–परि=सर्वतोभावेन कुपिता युवतयो लक्ष्यं यस्यासौ–परिकुपितयुवतिलक्ष्यः = मानिनीजनमानभेदनः सन् । पाठान्तरे–पथिकजनयुवतिलक्ष्यः = पान्थस्त्रीहृदयकर्त्तनः । पञ्चभ्योऽधिकः—पञ्चाभ्यधिकः = पञ्चशरव्यतिरिक्तः । कार्यस्य अमोघः साधकः—सायको—भव । कामस्य सर्वशरश्रेष्ठो बाणो भव । श्रेष्ठत्वं च आशुकार्यकारित्वादिति भावः ।

'पथिकजनयुवतिलक्ष्यः'-इति पाठे–पथिकजनानां युवतयो लक्ष्यं यस्यासौ तथा । विरहिणीहृदय-( मर्मस्थल ) विदारक इति च तदर्थो बोध्यः । 'अर्हसि मे चूताङ्कुर' इति पाठे—भवितुमर्हसीति योजना बोध्या । 'गृहीतधनुष' इत्यनेन कामस्य सर्वेषां शराणां मानिनीमानभङ्गकर्मणि कुण्ठततया अमोघं त्वां प्रतीक्षमाणः स्मरोऽत्र तिष्ठति, तत्कुरु मानिनीमानखण्डनकर्मणि स्मरस्य साहाय्यमिति व्यज्यते । कामस्य—

'अरविन्दमशोकञ्च शिरीषं चूतमुत्पलम् ।
पञ्चैतानि प्रकीर्त्यन्ते पञ्चबाणस्य सायकाः' ॥

—इति पञ्च बाणाः । 'गृहीतधनुषे' इत्यनेन कामस्य सज्जत्वं ध्वन्यते । चूताङ्कुरं दृष्ट्वा मानिन्यो मानं रक्षितुं न शक्नुवन्तीति वसन्तसमयस्योद्दीपकतातिशयो ध्वन्यते ॥ ३ ॥

**हे कामदेव के अर्पण किए गये आम के अङ्कुर ! धनुष को धारण किए हुए भगवान् कामदेव का तू पांच बाणों से भी अधिक श्रेष्ठ छठा बाण बन, और पथिक ( परदेशी ) लोगों की युवति स्त्रियों के हृदयों को जाकर बेधन कर ॥३॥**

१ 'अर्हसि मे' पा० । २ 'परिकुपितयुवतिलक्ष्यः' पा० ।

कञ्चुकी—( अपटीक्षेपेण प्रविश्य सक्रोधम्- ) मा तावत्। अनात्मज्ञे! देवेन प्रतिषिद्धेऽपि मधूत्सवे चूतकलिकाभङ्गमारभसे!।

उभे—( भीते— ) पसीददु पसीददु अज्जो, अगहिदत्था अह्मे।

[ प्रसीदतु प्रसीदत्वार्य्यः। अगृहीतार्थे आवाम्।

कञ्चुकी—हुँ! न किल श्रुतं भवतीभ्यां-यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं, तदाश्रयिभिः[1]पत्त्रिभिश्च!। तथाहि—

---

अपटीक्षेपेण = जवनिकां तिरस्कृत्य। 'नाऽसूचितस्य पात्रस्य प्रवेशो, निर्गमोऽपि चे'त्युक्तावपि क्रोधसूचनायाऽत्र जवनिकाऽपसारणपूर्वकं कञ्चुकी प्रवेशितः।

'मा ताव'दिति निषेधे भिन्नं वाक्यम्। अनात्मज्ञे = स्वस्वरूपाऽनभिज्ञे। राजचित्तानभिज्ञे! जडे! इति वाऽर्थः। 'आत्मा चित्ते धृतौ यत्ने' इत्यजयः। देवेन = राज्ञा। मधूत्सवे = वसन्तोत्सवे। चूतस्य कलिकाया—भङ्गं = त्रोटनम्। आचरसि = कुरुषे।

भीते इति। भयतरले भूत्वा। उभे इत्यस्य—'ऊचतु'रिति शेषः। अगृहीतोऽर्थो याभ्यां ते-अगृहीतार्थे = अज्ञातराजशासने। 'हुम्'-इति वितर्के, प्रश्ने वा। 'हुं वितर्के, परिप्रश्ने' इत्यमरः। वसन्ते भवैर्वासन्तिकैः। तरुभिरपि = पादपैरपि। अपिशब्दाल्लोकैरिति लभ्यते। देवस्य=राज्ञो दुष्यन्तस्य। शासनम्= आज्ञा। उत्सवनिषेधरूपा। प्रमाणीकृतं = स्वीकृतमिव। तदाश्रयिभिः =

---

कञ्चुकी—( पर्दा हटाकर, सहसा प्रविष्ट हो, क्रोध से-) अरी नासमझो! यह क्या कर रही हो?। महाराजने तो मधूत्सव मनाने की नाहीं कर रखी है, और तुम आम की कलि तोड़ कर कामदेव की पूजा कर मधूत्सव मना रही हो?।

दोनों चेटियाँ—( डरती हुईं ) आर्य! क्षमा करिए, क्षमा करिए। हम दोनों को यह बात बिलकुल ही मालूम नहीं थी।

कञ्चुकी—हुं! क्या यह बात तुम दोनों ने नहीं सुनी?। महाराज की इस उत्सव निषेध की आज्ञा को (मधूत्सव नहीं मनाने की आज्ञा को) तो वसन्त

---

१ कचिन्न।

**चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः,**
**संनद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया।**
**कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं,**
**शङ्के संहरति स्मरोऽपि चकितस्तूणार्द्धकृष्टं शरम् ॥४॥**

---

वासन्तिकतरूपजीविभिः। पत्रिभिः=पक्षिभिः, कोकिलादिभिश्च। 'आज्ञा प्रमाणीकृता' इति शेषः।

**तथाहीति।** तरुभिः, पक्षिभिश्च यथा शासनं प्रमाणीकृतं तथा निर्दिशति। **चूतानामिति।** चूतानाम्=आम्राणां। चिरान्निर्गता-चिरनिर्गताऽपि=चिरादुद्भिन्नाऽपि। कलिका=(लक्षणयाऽत्र-) मञ्जरी। (नतु कोरको, बाधात्)। स्वं रजः=परागं। न बध्नाति=न प्रकटयति। यथा कापि बाला प्रौढावस्थां गताऽपि रजोदर्शनं न धत्ते, तद्वदाम्रमञ्जरीयं बहोः कालादपि रजो न प्रकटयतीत्यर्थः। संनद्धं=वृन्ताद्बहिर्निर्गतमपि। यत् कुरबकं=शोणकुरण्टकपुष्पम्। तत् कोरकावस्थया=कलिकावस्थया। स्थितं सन्न विकसतीत्यर्थः। शिशिरे=शिशिरर्तौ-गतेऽपि। वसन्तप्रारम्भे जातेऽपि। पुमांसश्च ते कोकिलाश्च, तेषां-पुंस्कोकिलानां=कोकिलयूनां। रुतं=शब्दः। कण्ठेषु=तेषां गलबिलेष्वेव। स्खलितं=रुद्धप्रसरं सत् तिष्ठति। कोकिलानां ध्वनिरपि न प्रपञ्चमञ्चतीति भावः। अत एव-स्मरः=कामोऽपि। चकितः=भीत-भीत इव। तूणादर्द्धं कृष्टं=

---

ऋतु में फलने फूलने वाले वृक्षों ने भी मानी है, और उन वृक्षों पर बैठने वाले पक्षियों तक ने भी मान ली है। जैसे—

आमों की बहुत पहिले से ही निकली हुई कलियाँ भी अपने पराग को धारण नहीं कर रही हैं। कुरबक (कुरण्टक पुष्प) भी अपने वृन्त से निकल कर अभी तक कलि की अवस्था में ही है, पर वह फूल नहीं रहा हैं। शिशिर ऋतु (जाड़ा) बीत जाने पर भी (बसन्त के प्रारम्भ हो जाने पर भी) कोयलों की कूक उनके कण्ठ के भीतर ही रुकी हुई है। (कोयल भी अपने पञ्चम स्वर से गान नहीं कर रही हैं)। और मैं समझता हूँ कि-भगवान् कामदेव भी चकित और शङ्कित हो अपने तरकस से आधे खींचे हुए अपने बाण को भी वापिस

सानुमती—णत्थि एत्थ सन्देहो, महाप्पहावो क्खु राएसी।

[ नास्त्यत्र सन्देहः, महाप्रभावः खलु राजर्षिः ]।

प्रथमा—अज्ज! कदिचिदिअसाइं (एव्व[१]) मित्तावसुणा रट्टिएण भट्टिणो पादमूलं पेसिदे अह्मे इध पमदवणे चित्तकम्प अप्पिदुं। ता आगन्तुअदाए ण सुदपुव्वो अह्मेहिं एसो वुत्तन्तो।

[ आर्य्य ! कतिचिद्दिवसानि (एव[१]) मित्रावसुना राष्ट्रियेण

---

निषङ्गादर्द्धमाकृष्टमपि। शरं = बाणं। मन्ये = शङ्के। संहरति = स्वतूणीर इव स्थापयतीव। कामशरस्थानीयानि पुष्पाणि—अर्द्धमुद्गियैव स्थितानि, न प्रसरप्रपञ्चमारचयन्ति। अतो ज्ञायते–काम एव–किञ्चिदुद्भिन्नतयाऽर्धाकृष्टान् पुष्पाण्येव स्वबाणान्–प्रतिसंहरति, राजभयादिति भावः। पुष्पाणां रजोबन्धाद्य-भावात्कामशरोपसंहारोऽत्र सम्भावित इति तत्त्वम्। [ कारणस्य चिरनिर्गतत्वादेः सत्त्वेऽपि, कार्यस्य रजोबन्धस्याऽभावान्मालाविशेषोक्तिः। कामस्य भीतत्वादेः सम्भावनादुत्प्रेक्षा। काव्यलिङ्गञ्च। कामस्य पुष्पशरतया, तेषाञ्चार्धमुद्भेदान्मदन-शरसंहारे पादत्रयवाक्यार्थानां हेतुत्वात्। शार्दूलविक्रीडितम् ] ॥ ३ ॥

अत्र = अचेतनैरपि राजाज्ञायाः परिपालने। 'खलु'—निश्चये। महान् प्रभावो यस्यासौ—महाप्रभावः = दिव्यशक्तिर्देवराजस्यापि बहुमतश्च। राजर्षिः= दुष्यन्तः। आर्येति कञ्चुकिसम्बोधनम्। कतिचिद्दिवसानि = कियन्त्येवाहानि

---

तरकस में ही रख रहे हैं। अर्थात्–राजा की आज्ञा को मानकर वृक्षों ने, पक्षियों ने, तथा कामदेव ने भी वसन्तोत्सव मनाना रोक दिया है। मनुष्यों की तो बात ही क्या है?। और तुम लोग इस प्रकार वसन्तोत्सव मना रही हो, यह बड़ी अनुचित बात है ॥ ४ ॥

सानुमती—इसमें कुछ भी सन्देह नहीं है, कि–राजर्षि दुष्यन्त बड़े ही प्रभावशाली हैं।

पहिली चेटी—हे आर्य ! कुछ ही दिन हुए महाराज के श्यालक मित्रा-वसुजी ने हम दोनों को महारानीजी के चरणों में, इस प्रमदवन में चित्र लिखने

---

१ कश्चिन्न।

[1]भट्टिनीपादमूलं प्रेषितयोरावयोरिह प्रमदवने चित्रकर्म अर्पयितुम्। तदागन्तुकतया[2] न श्रुतपूर्व आवाभ्यामेष वृत्तान्तः ]।

कञ्चुकी--भवतु। तेन हि न पुनरेवं प्रवर्त्तितव्यम्।

उभे--( सकौतूहलम्- ) अज्ज! जइ इमिणा जणेव सोदव्वं ता कधेदु अज्जो—'किं णिमित्तं भट्टिणा वसन्तुच्छवो पडिसिद्धो'त्ति ?।

---

जातानि। आवयोः = मधुकरिका-परभृतिकयोः। राष्ट्रियेण = राजश्यालकेन। 'राजश्यालस्तु राष्ट्रियः' इत्यमरः। भट्टिन्याः = स्वामिन्या वसुमत्याः। कस्याश्चिद्राजवल्लभाया वा। 'देवी कृताभिषेकायामितरासु तु भट्टिनी'त्यमरः। 'भर्त्तु'रिति वा पाठः। भर्त्तुः = राज्ञो दुष्यन्तस्य। पादयोर्मूलं पादमूलं = चरणान्तिकं। प्रेषितयोः = प्रहितयोः। अत्र राजधान्यामागतयोरावयोरल्पीयानेव समयो जात इत्याशयः। प्रमदवनस्य = अन्तःपुरोद्यानस्य। पालनकर्म = रक्षणकार्यम्। 'चित्रकर्मे'ति पाठे नानाभङ्गिभेदेन तरूणां श्रेणिबन्ध इत्यर्थः। नौ = आवाभ्यां। समर्पितं=दत्तम्। 'चित्रकर्म अर्पयितुम्' इति पाठान्तरम्। तत्=तस्मात्—आगन्तुकतया = सद्य एव इह सम्प्राप्ततया च। न श्रुतपूर्वः अश्रुतपूर्वः = इतः पूर्वमश्रुतः। एषः = मधूत्सवनिषेधानुबन्धी। वृत्तान्तः = कथाप्रसङ्गः। भवतु=यज्जातं तज्जातम्। न पुनरेवम् = मधूत्सवकामपूजनादौ। प्रवर्त्तितव्यं = तत्र नाऽऽदरो विधेयः।

सकौतूहलं = साश्चर्यम्। महोत्सवनिषेधादाश्चर्यमुभयोर्ज्ञेयम्। आर्य=कञ्चु-

---

के लिए भेज दिया है। इस लिए हम दोनों ने ( बाहर से नई ही आई हुई होने के कारण ) यह वृत्तान्त अभी तक नहीं सुना था।

कञ्चुकी—अच्छा, अब आगे ऐसा काम मत करना।

दोनों दासियाँ—( कौतूहलपूर्वक ) हे आर्य! यदि हमारे सुनने लायक

---

१ 'भर्त्तुः पादमूलं प्रेषिते आवामिह'।

२ 'इत्थं च नौ प्रमदवनस्य पालनकर्म समर्पितम्' पा०।

[ आर्य्य ! यद्यनेन जनेन श्रोतव्यं, तत्कथयत्वार्य्यः—'किं निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्ध' इति ]।

सानुमती—उच्छवप्पिआ क्खु राजाणो होन्ति, ता एत्थ गुरुणा कारणेन होदव्वं।

[ उत्सवप्रियाः खलु राजानो भवन्ति। तदत्र गुरुणा कारणेन भवितव्यम् ]।

कञ्चुकी—(स्वगतम्-) बहुलीभूतोऽयमर्थः, तत्किं न कथ्यते। (प्रकाशम्-) अस्ति भवत्योः कर्णपथमायात शकुन्तलाप्रत्यादेश-कौलीनम् ?।

---

किन् !। यदि—अनेन जनेन = अस्मल्लक्षणेन। श्रोतव्यं = श्रवणमर्हति। यदि-अस्मच्छ्रवणयोग्यमित्यर्थः। किंनिमित्तं=केन हेतुना ?। उत्सवाः प्रिया येषान्ते—उत्सवप्रियाः = आमोदप्रियाः। उत्सवप्रवणाः। अत्र=उत्सवनिषेधे। गुरुणा=महता। कारणेन=हेतुना।

अयमर्थः = शकुन्तलावृत्तान्तः। उत्सवनिषेधवृत्तान्तः। बहुलीभूतः = सर्वजन-विदित एव। नेदानीं-गोपनीय इति यावत्। 'अदभ्रं बहुलं बहु'-इत्यमरः। किं न कथ्यत इति। कथने न दोषं पश्यामीति भावः। कर्णयोः पन्थाः—कर्णपथस्तं=श्रवण-गोचरताम्-आयातम्। शकुन्तलायाः प्रत्यादेशात् कौलीनं—शकुन्तलाप्रत्यादेश-

---

बात हो तो कृपया कहिए—महाराज ने किस कारण से वसन्तोत्सव रोक दिया है ?।

सानुमती—राजा लोग तो उत्सवप्रिय हुआ करते हैं, पर इस राजा ने तो वसन्तोत्सव की मनाही कर दी है। अतः इसमें जरूर कोई गुरुतर ही कारण होना चाहिए।

कञ्चुकी—( मन ही मन ) यह बात तो—बहुत लोगों को मालूम हो जाने से—प्रसिद्ध ही हो चुकी है, अतः अब इनसे इस बात के कहने में कोई हानि नहीं मालूम होती है। ( प्रकट में ) तुम दोनों ने महाराज के द्वारा शकुन्तला के परित्याग का लोकापवाद ( निन्दा-कोलाहल ) तो सुना ही होगा ?

उभे—अज्ज ! सुदं रट्टिअमुहादो अंगुलीअदंसणं याव ।
[ आर्य ! श्रुतं राष्ट्रियमुखादङ्गुलीयकदर्शनं यावत् ]।

कञ्चुकी—([1]स्वगतम्-) तेन हि स्वल्पं कथयितव्यम् । ([1]प्रकाशम्) यदैवाऽङ्गुलीयदर्शनादनुस्मृतं देवेन-'सत्यमूढपूर्वा रहसि मया तत्रभवती शकुन्तला, मोहात्प्रत्यादिष्टे'ति तदा प्रभृत्येव पश्चात्तापमुपागतो[2] देवः। तथाहि—

रम्यं द्वेष्टि, यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते,
शय्योपान्तविवर्त्तनैर्विगमयत्युन्निद्र एव क्षपाः ।

---

कौलीनं = शकुन्तलाप्रत्याख्यानादुत्थितो लोकापवादः । 'स्यात्कौलीनं लोकवादः' इत्यमरः । राष्ट्रियमुखात्=राजश्यालकमुखात् । अङ्गुलीयकदर्शनं यावत् श्रुतं = तत्पर्यन्तो वृत्तान्तः श्रुत' इति योजना । तेन = प्रभूतस्य वृत्तान्तस्य श्रुतत्वात् । अल्पम् = अल्पोंऽशः । मे = मया । 'ते-मे शब्दौ निपातौ तयामयेत्यर्थे' इति वामनः । रहसि = विजने । सत्यम् = वस्तुतः । पूर्वमूढा-ऊढपूर्वा = पूर्वं विवाहिता । तत्र भवती = तपस्विनी शकुन्तला । मोहात् = अज्ञानादेव । प्रत्यादिष्टा= 'न मे त्वं पत्नी'ति मया निराकृता । इति यदैव स्वाङ्गुलीयकदर्शनादनुस्मृतं = स्मृतं । देवेन=राज्ञा दुष्यन्तेन । तदा प्रभृत्येव=तत आरभ्यैव । देवः = राजा । पश्चात्तापम्=अनुशयम् । उपागतः=प्राप्त इति-योजना ।

रम्यमिति । रम्यं=मनोहारि स्रक्चन्दनगीतवादित्रादिकं । द्वेष्टि=न रोचयति।

---

दोनों दासियाँ—हाँ, राजश्यालक ( मित्रावसुजी ) के मुख से ही अंगूठी मिलने तक का हाल तो हम लोग सुन चुकी हैं ।

कञ्चुकी—( मन ही मन ) तब तो अब थोड़ा ही हाल कहना अवशिष्ट रहा है । ( प्रकट में ) जब से अंगूठी को देखकर महाराज को यह बात याद आई, कि-मैंने गुप्तरूप से श्रीमती शकुन्तलाजी से सचमुच ही विवाह किया था, तो तब से ही उसके प्रत्याख्यान के लिए महाराज बहुत ही पश्चात्ताप कर रहे हैं । जैसे—

किसी भी रमणीय वस्तु को देखकर उससे द्वेष करते हैं, अर्थात्—कोई भी

---

१ क्वचिन्न । २ 'उपगतः' पाठः ।

दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम्॥ ५॥

द्रष्टुमपि नेच्छति, दुःखाऽनुभवात् । दुःखिते हि मनसि सर्वमसह्यं भवतीति प्रसिद्धेः । एतेनोद्वेगाख्यावस्था सूचिता । किञ्च-पुरा यथा = पूर्ववत् । प्रकृतिभिः = अमात्यपौरश्रेण्यादिभिः । 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतयः, पौराणां श्रेणयोऽपि चे'त्यमरः । प्रत्यहं = प्रतिदिनं । न सेव्यते=नाऽन्वास्यते । चित्तस्य पारवश्यात्प्रकृतिभिर्मन्त्रणादिकं राजकार्यं राजा न यथावदनुतिष्ठतीति भावः । किञ्च—उन्निद्रः = अरत्या निद्राशून्यः सन् । अत एव शय्यायाः प्रान्तेषु विवर्त्तनैः=शयनीयपर्यन्तभागलोठनपार्श्वपरिवर्त्तनादिभिः । क्षपाः = रात्रीः । विगमयति = अतिवाहयति । न तु–अन्तःपुरगतविदग्धकामिनीसेवनादिभिरिति-सन्तापोऽनेन सूचितः ।

किञ्च—अन्तःपुरेभ्यः=अवरोधललनाभ्यः । आकारगोपनार्थ–दाक्षिण्येन= चातुर्येण । उचितां = तत्तत्कालयोग्यां । वाचं = वचनं । ददाति = प्रयच्छति । अन्यासक्तमना अपि दाक्षिण्येन स्वाकारं निह्नुवानोऽन्तःपुरकान्ताभ्यो वाचमुचितामेव प्रयच्छति । परं यदा गोत्रेषु=नामसु । 'गोत्रं तु नाम्नि चे'त्यमरः । स्खलितः= विपर्यस्तः । यदा–वसुमतीनामोच्चारणावसरे शकुन्तलानामोच्चारयति । तदा चिरं व्रीडाविलक्षः = लज्जाविस्मयान्वितो भवति । 'विलक्षो विस्मयान्वितः' इत्यमरः । गूढस्य स्वाशयस्य शकुन्तलागतस्य प्रकाशनादपत्रपान्वितो भवतीत्याशयः । 'व्रीडाविनम्रः' इति पाठान्तरम् । उन्मादाख्याऽवस्थाऽनेन सूचिता । दाक्षिण्येन

अच्छी वस्तु उन्हें अच्छी ही नहीं लगती है। और न तो प्रतिदिन मन्त्री आदि से भी मिलते जुलते हैं। केवल पलङ्ग पर पड़े २, करवट बदलते ही बदलते, जागकर सारी रात बिताते हैं। अपनी पुरानी रानियों को, बड़ी कुशलता व सावधानी से अन्यमनस्क होते हुए भी उचित उत्तर देते हैं, परन्तु जब कभी भूल से उनसे बात करते समय इनके मुख से शकुन्तला का नाम निकल जाता है, तब अपनी भूल पर लज्जित हो जाते हैं। अर्थात्—वे शकुन्तला में ही तल्लीन

१ 'व्रीडाविनम्राश्चिरम्' पा० ।

**सानुमती**—पिअं मे पिअं।
[ प्रियं मे प्रियम् ]।

**कञ्चुकी**—अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः।

**उभे**—जुज्जदि।
[ युज्यते ]।

( नेपथ्ये— )
एदु एदु भवं।
[ एतु एतु भवान् ]।

---

यदा वाचं ददाति, तदा गोत्रेषु स्खलितः सन् व्रीडाहतबुद्धिर्भवतीति वा-योजना [ 'गोत्रस्खलितं' नाम सन्ध्यङ्गम्। पश्चात्तापादिके कारणे वक्तव्ये रम्यद्वेषादिकं कार्यमुक्तमतः पर्यायोक्तम्। काव्यलिङ्गम्। अनुप्रासः। शार्दूलविक्रीडितम्। ] ॥५॥

प्रियं मे प्रियम्=अत्यन्तं मे अभीष्टम्। शकुन्तलाऽनुरागवानयमिति निश्चयात्। अस्मात् शकुन्तलाविरहात् कारणात्। प्रभवतः = प्रवर्द्धमानात्। वैमनस्यात् = विषादात्। अरतेः। उद्वेगात्। उत्सवः प्रत्याख्यातः=वसन्तोत्सवो राज्ञा निराकृतः। [ 'द्युति'र्नाम विमर्शसन्ध्यङ्गं कञ्चुकीप्रवेशादारभ्यैतदन्तेन प्रदर्शितम्। 'तर्जनोद्वेजने द्युतिः' इति धनिकोक्तेः। छलनं च सन्ध्यङ्गं, छलनं चावमानन'मित्युक्तेः। अवमाननम्=उत्सवादिप्रत्याख्यानम् ]। युज्यते = उत्सवप्रत्याख्यानं युज्यते।

---

हो रहे हैं। और अपनी रानियों से भी ऊपरी मन से वही बातचीत करते हैं, जिससे वे भी अप्रसन्न न हो जाएँ, पर ध्यान तो इनका शकुन्तला में ही रात-दिन लगा रहता है ॥ ५ ॥

**सानुमती**—राजा के शकुन्तला के प्रति प्रेम की ये बातें मुझे अत्यन्त प्रिय मालूम हो रही हैं।

**कञ्चुकी**—शकुन्तला के विरह से बढ़ते हुए इसी उद्वेग और दुःख से महाराज ने बसन्त का उत्सव करने की मनाही कर दी है।

**दोनों चेटियाँ**—ठीक बात है, ऐसे दुःख और उद्वेग के समय में भला वसन्तोत्सव कैसा ?।

[ नेपथ्य में— ]

**महाराज** ! [illegible] इधर से पधारिए, इधर से।

**कञ्चुकी**—( कर्णं दत्वा— ) अये ! इत एवाऽभिवर्त्तते देवः। तद्गच्छतं [1]स्वकर्म्मानुष्ठानाय।

**उभे**—तह। (—इति निष्क्रान्ते )।

[ तथा ]।

( ततः प्रविशति [2]पश्चात्तापसदृशवेषो राजा, विदूषकः, प्रतीहारी च )।

**कञ्चुकी**—( राजानं विलोक्य— ) अहो ! सर्वास्ववस्थासु रामणीयकमाकृतिविशेषाणाम्। तथा ह्येवं वैमनस्यपरीतोऽपि प्रियदर्शनो देवः। य एषः—

---

इत एव = अमुमेव वनोद्देशम्। अभिवर्त्तते = आगच्छति। द्वितीयान्तात्सार्वविभक्तिकस्तसिल्। स्वस्य कर्मण अनुष्ठानाय = स्वस्वोचितकार्यसम्पादानाय।

पश्चात्तापस्य सदृशो वेषो यस्यासौ-पश्चात्तापसदृशवेषः = पश्चात्तापानुरूपवेषधारी। पश्चात्तापं नाटयन्निति यावत्। सर्वास्ववस्थासु = दुःखसुखादिशालिष्ववस्थान्तरेष्वपि। रमणीयस्य भावो रामणीयकं = रम्यत्वम्। आकृतिविशेषाणाम् = आकृतिविशेषशालिनां महात्मनाम्। सुन्दराणाम्। अहो ! इति विस्मये। एवं वैमनस्येन परीतोऽपि—वैमनस्यपरीतोऽपि=विरहोत्कण्ठितोऽपि। उद्वेगाकुलोऽपि। प्रियं दर्शनं यस्यासौ प्रियदर्शनः = मनोहराकृतिः।

'य एष' इति वक्ष्यमाणश्लोकान्वयि।

---

**कञ्चुकी**—( कान लगाकर, सुनकर ) ओह ! महाराज इधर ही आ रहे हैं। अतः तुम लोग अपने २ काम पर जाओ। ( अर्थात् यहां से जल्दी हटो )।

**दोनों चेटियाँ**—ठीक है, हम जाती हैं। ( दोनों जाती हैं )।

[ पश्चात्ताप के अनुरूप ही वेष धारण किए हुए राजा का, विदूषक का, और प्रतीहारी ( छड़ी लिए हुए द्वारपाल स्त्री ) का प्रवेश ]।

**कञ्चुकी**—( राजा को देखकर— ) अहो ! सुन्दर आकृति वाले लोग सभी अवस्थाओं में रमणीय ही मालूम होते हैं। जैसे—इस प्रकार वैमनस्य ( उद्वेग, शोक, अन्यमनस्कता ) से व्याकुल भी ये महाराज कैसे अच्छे मालूम होते हैं !। क्योंकि—

---

१ 'स्वस्वकर्मानुष्ठानाय' पा०। २ 'वेशो'।

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं
बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताऽधरः ।
चिन्ताजागरणप्रताम्र[1]नयनस्तेजोगुणैरात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नाऽऽलक्ष्यते ॥६॥

प्रत्यादिष्टेति । प्रत्यादिष्टो विशेषस्य मण्डनस्य विधिर्येनासौ, तथा= निरस्तविशेषप्रसाधनविधिः । त्यक्तालङ्कार इति यावत् । वामश्चासौ प्रकोष्ठश्च, तस्मिन्—वामप्रकोष्ठे=सव्यकूर्परमणिबन्धमध्ये । श्लथं=कार्श्याद्धि-श्लथं । काञ्चनं= कनकमयम् । एकमेव = एकमेव केवलं । वलयं = हस्तकटकं । बिभ्रत् = दधत् । धारयन् सन् । वामहस्ते पुंसः कटकधारणस्य व्यवहारविरुद्धतया तथाचरणा- दुन्मादावस्था राज्ञः सूचिता । श्वासेनोपरक्तमधरं यस्यासौ—श्वासोपरक्ताधरः = उष्णोष्णदीर्घश्वासपाटलिताधरोष्ठः । चिन्तया यज्जागरणं तेन प्रकर्षेण ताम्रे नयने यस्यासौ चिन्ताजागरणप्रताम्रनयनः = शकुन्तलाचिन्ताप्रसक्तजागरणरक्तलोचनः। 'तान्ते'ति पाठे-म्लानेत्यर्थः । एषः = दुष्यन्तः । क्षीणोऽपि = कृशोऽपि सन् । आत्मनः=स्वस्य—तेजोगुणैः=सहजशरीरप्रभाजालैः । प्रभावैः । संस्कारायोल्लिखितः- संस्कारोल्लिखितः = शाणोल्लीढः । महामणिरिव = महारत्नमिव । न आलक्ष्यते = कृशतया ज्ञातुं न शक्यते । प्रभाविद्योतितदिगन्तरालस्य महामणेरिव (—सूर्यस्येव

यद्यपि इन्होंने—विशेष रूप से आभूषणों का धारण करना, एवं अपना श्रृङ्गार आदि करना बन्द कर दिया है, और इन्होंने इस समय केवल बाएँ हाथ में सोने का एक ढीला-सा केवल एक कड़ा ही पहिन रखा है, बारबार दीर्घ व ऊर्ध्व श्वास लेने से ओठ भी इनके लाल हो गए हैं, चिन्ता से और रात २ भर जागते रहने से इनके नेत्र भी लाल हो रहे हैं, और ये बहुत दुर्बल भी हो गए हैं। परन्तु इस प्रकार क्षीण होने पर भी, अपने विशेष तेज रूप गुण से ही, पालिस के लिए तराशे ( काटे ) गये तेजो युक्त महामणि ( बढ़िया हीरे ) की तरह ही—ये बिलकुल क्षीण मालूम नहीं होते हैं। अर्थात् बढ़िया प्रकाशमान हीरे को पालिस व

१ 'प्रतान्तनयनः' पा० ।

सानुमती—( राजानं विलोक्य- ) ठाणे क्खु पच्चादेसविमाणिदावि इमस्स किदे सउन्तला किलिस्सदि ।

[स्थाने खलु प्रत्यादेशविमानिताऽप्यस्य कृते शकुन्तला क्लिश्यति[1]]।

---

वा-). कृशाङ्गयष्टे राज्ञोऽस्य वपुषः कार्श्यं हि तेजोमण्डलाच्छादितं सत् सहसा न लक्ष्यत इति भावः।

[ चिन्तेति—सङ्कल्पः । जागरणान्निद्राच्छेदः । कृशता । प्रत्यादिष्टेति—विषयनिवृत्तिरिति-नाना कामदशा अपि सूचिताः । अनेन माधुर्यं नाम नायकगुणोऽपि दर्शितः, 'तन्माधुर्यं यत्र गात्रदृष्ट्यादेः स्पृहणीयता । सर्वावस्थासु सर्वत्रे'ति सुधाकराद्युक्तेः । प्रवासविप्रलम्भे दशाऽन्या अपि कामदशाः । तदुक्तम्—

'अङ्गेष्वसौष्ठवं चैव, पाण्डुता, कृशताऽरुचिः ।
अधृतिः, स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः ।
मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह ॥' इति ।

तन्मतेऽङ्गाऽसौष्ठवं—'प्रत्यादिष्टे'त्यनेन । 'क्षीण' इति कृशता । रम्यं 'द्वेष्टी'-त्यादिनाऽरुचिः । गोत्रस्खलनादिना—तन्मयीभावः । 'दाक्षिण्येने'ति—अधृतिश्च दर्शिता इति ध्येयम् । उपमा । स्वभावोक्तिः । परिकरः । अनुप्रासाः । शार्दूलविक्रीडितं वृत्तम् ] ॥ ६ ॥

प्रत्यादेशेन विमानिता—प्रत्यादेशविमानिता = अस्वीकाराऽपमानिताऽपि । अस्य कृते = अस्य राज्ञो दुष्यन्तस्य निमित्त । शकुन्तला—क्लिश्यति = विषाद-

---

पहल के लिए काट कर छोटा कर देने पर भी, उसके तेज में कमी नहीं आती है, और वह और भी देदीप्यमान हो जाता है, वैसे ही विरह, शोक और उद्वेग आदि से ये महाराज कृश और दुर्बल अवश्य हो गए हैं, परन्तु इनका तेज और प्रभाव एवं सुन्दरता इतनी बढ़ी चढ़ी है कि—ये दुर्बल होने पर भी, अतीव सुन्दर मालूम पड़ रहे हैं, और इनकी कृशता सहसा ( जल्दी ) दृष्टिगोचर ही नहीं होती है ॥ ६ ॥

सानुमती—( राजा को देखकर ) इसके द्वारा प्रत्याख्यान (त्याग) कर देने पर भी इसकी चिन्ता में जो शकुन्तला अब भी दुःखी रहती है, यह उचित ही

---

१ 'क्लाम्यति' पा० ।

**राजा**—( ध्यानमन्दं परिक्रम्य— )—

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं सम्प्रति विबुद्धम् ! ॥७॥

**सानुमती**—णं ईदिसाइं तवस्सिणीए भागधेयाइं ।
[ नन्वीदृशानि तपस्विन्या भागधेयानि ] ।

---

मनुभवतीति । स्थाने खलु = युक्तमेवैतत् । अस्यापि तद्विरहे नितरां विधुरत्वात् । ध्यानेन मन्दं–ध्यानमन्दं = शकुन्तलाचिन्तया मन्दमन्दम् । शनैःशनैः । एतेनाऽनालम्बनताख्या प्रवासकामदशा प्रदर्शिता । परिक्रम्य = किञ्चिच्चलित्वा ।

प्रथममिति । सारङ्गस्येक्षणे इवेक्षणे यस्यास्तया–सारङ्गाक्ष्या = हरिणलोचनया । प्रियया = शकुन्तलया । प्रतिबोध्यमानमपि = बहुशो ज्ञाप्यमानमपि । प्रथमम् = आदौ । सुप्तम् = सुप्तमिव मोहमुपगतम् । सम्प्रति = प्रियावियोगे जाते तु इदानीम् । अनुशय एव दुःखं तस्मै–अनुशयदुःखाय = पश्चात्तापरूपं क्लेशं मह्यं दातुमिव । इदं = मम । हतहृदयं = दग्धहृदयम् । हृदयहतकं । विबुद्धं = जागरितम् । [पूर्वार्द्धे विशेषोक्तिः । विमाननोत्तरार्द्धे । उपमानुप्रासौ ] ॥७॥

ननु = निश्चये । ईदृशानि = क्लेशदायकानि । भागधेयानि = भाग्यान्येव ।

---

है । यह राजा इतना सुन्दर और दर्शनीय है, कि—इसके लिए शकुन्तला का आतुर और दुःखी रहना उचित ही है ।

**राजा**—( ध्यान करते हो करते, धीरे २ चलकर ) यह मेरा पापी हृदय पहिले तो उस हरिणी के समान लम्बे और मनोहर नेत्रों वाली शकुन्तला से वार वार समझाए ( याद दिलाए ) जाने पर भी सुता रहा, समझा नहीं, और उसे स्मरण ( याद ) नहीं कर सका । परन्तु अब–जब वह दुःखित हो यहां से चली गईं, तब मुझे पश्चात्ताप के दुःख में जलाने के लिए ही इस पापी हृदय को अब ज्ञान ( उसका स्मरण ) हुआ है ! । यह अब चेता है ! । अब तो केवल पश्चात्ताप करने के सिवाय दूसरा कोई उपाय भी उसकी प्राप्ति का नहीं रह गया है ॥ ७ ॥

**सानुमती**—क्या किया जाए, उस बिचारी शकुन्तला का भाग्य ही ऐसा खोटा था । उसके भाग्य का ही यह सब दोष है । नहीं तो वह ऐसे कष्ट क्यों पाती ! ।

विदूषकः—( अपवार्य्य— ) हुं ! भूओवि लङ्घिदो एसो सउन्तला-वादेण । ण आणे कधं चिकिच्छितव्वो भविस्सदि ? ।

[ हुं ! भूयोऽपि लङ्घित एष [1]शकुन्तलावातेन । न जाने कथं चिकित्सितव्यो भविष्यति ? ] ।

कञ्चुकी—( [2]उपसृत्य— ) जयति जयति देवः । देव ! प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि [3]देवः ।

---

तस्या भाग्यविपर्ययादेव राज्ञोऽस्य-स्मृतिभ्रंशो तादृक् जात इत्याशयः ।

तपस्विन्याः=वराक्याः । अनुकम्पार्हायाः ।

एषः = राजा । भूयोऽपि = पुनरपि । 'शकुन्तलाव्याधिना' इति पाठे—शकुन्तला एव व्याधिस्तेन-शकुन्तलारूपेण रोगेण । 'वातेने'ति-पाठे-तद्रूप-वातरोगेणेत्यर्थः । उद्वेगजनकत्वात्स्मृतिभ्रंशोन्मादादिकारकत्वाच्च-शकुन्तलाया व्याधितया, वातव्याधितया वा कथनं हास्यचतुरस्य विदूषकस्य युक्तमेव । चिकित्सितव्यः = उपचरणीयः ।

उपसृत्य = समीपमागत्य । प्रत्यवेक्षिताः = सम्यगवलोकिताः । प्रमदवनस्य भूमयः = अन्तःपुरविहाराऽऽरामप्रदेशभूमयः । 'तदेव प्रमदवनमन्तःपुरोचित'-मित्यमरः । यथाकामं=यथेच्छम् । विनोदस्थानानि=क्रीडास्थलीः । अध्यास्ताम्= अधितिष्ठतु । राज्ञो निश्शङ्कविहारार्थमारामादेः प्रत्यवेक्षणं हि राजनीतिः ।

---

विदूषक—( अलग से ) ऊँह ! अब फिर इसके शिर पर शकुन्तला का भूत चढ़ा है । ( शकुन्तलानामकी बाई ( वायुरोग ) इसको चढ़ी है ) । न जाने इसका इलाज अब कैसे होगा ? ।

कञ्चुकी—( पास जाकर ) महाराज का जय जयकार हो । महाराज ! इस अन्त.पुर के बगीचे की सभी जमीन अच्छी तरह परीक्षा कर ली गई है । अतः अब इसके मनोविनोद के सभी स्थानों में आप यथेच्छ विहार कर सकते हैं । [ राजाओं के लिए किसी भी स्थान में–विना उसकी ठीक २ परीक्षा किए, भीतर जाने की शास्त्रकारों की आज्ञा नहीं है ] ।

---

१ 'शकुन्तलाव्याधिना' पा० । २ 'उपगम्य' पा० । ३ 'महाराजः'–पा० ।

**राजा**——वेत्रवति ! मद्वचनादमात्यपिशुनं ब्रूहि—'अद्य चिरप्रबोधान्न सम्भावितस्माभिर्धर्म्मासनमध्यासितुम् । यत्प्रत्यवेक्षितं पौरकार्य्यमार्य्येण, तत्पत्त्रमारोप्य [1]प्रस्थाप्यताम्—' इति ।

**प्रतिहारी**——जं देवो आणवेदि । ( -इति निष्क्रान्ता ) ।

[ यद्देव आज्ञापयति ] ।

**राजा**——पार्वतायन ! त्वमपि स्वनियोगमशून्यं कुरु ।

**कञ्चुकी**——यदाज्ञापयति देवः । ( -इति निष्क्रान्तः ) ।

---

अमात्यश्चासौ पिशुनश्च तम्–अमात्यपिशुनम् = पिशुनाख्यं महामन्त्रिणं । चिरं प्रबोधस्तस्मात = चिरं जागरणात् । विलम्बेन शय्याया उत्थानाद्वा । धर्मासनं = सिंहासनम् । अध्यासितुम् = अधिष्ठातुं । न सम्भावितमस्माभिः = न शक्यमस्माभिः । न सम्भाव्यतेऽलङ्कर्तुमस्माभिः । यत् = यत्तु । पौराणां कार्यम् = पौरजानपदलोककार्यमवश्यमाचरणीयं । प्रत्यवेक्षितम् = दृष्टम् । अनुष्ठितं वा । आर्येण = भवता । तत् = कार्यम् । पत्रमारोप्य = पत्रारूढं कृत्वा । प्रस्थाप्यतां = प्रेष्यताम् । इति–मद्वचनात् = मदाज्ञया ब्रूहीति–सम्बन्धः ।

निष्क्रान्ता = निर्गता वेत्रवती प्रतीहारी । 'वातायन'इति कञ्चुकिनामधेयम् । स्वं नियोगं = स्वाधिकारम् । अशून्यं=यथावत्पर्यवेक्षितम् । इतो बहि-

---

राजा —हे वेत्रवति ! मेरी आज्ञा से प्रधान मन्त्री पिशुनस्वामी से जाकर कह–आज देर तक जागते रहने के कारण ( या देर से उठने के कारण ) धर्मासन पर ( राजसिंहासन पर, दर्बार में ) आकर बैठ सकना—हमारे लिए असम्भव है, अतः आपने जो पौर ( पुरवासी ) लोगों का कार्य (कचहरी में, दर्बार में बैठकर ) देखा हो, उसे हमारे पास पत्र पर लिखकर भेज दीजिए ।

प्रतीहारी—जो आज्ञा महाराज की । ( जाती है ) ।

राजा—हे पार्वतायन ! तुम भी अपने कार्य पर जाओ ।

कञ्चुकी—जो आज्ञा महाराज की । ( कञ्चुकी जाता है ) ।

---

१ 'दीयताम्' पा० ।

विदूषकः——किदं भअदा णिम्मक्खिअं। सम्पदं सिसिरविच्छेअ-रमणीए इमस्सिं पमदवणुद्देसे अत्ताणं [1]रमइस्ससि।

[ कृतं भवता निर्मक्षिकम्। साम्प्रतं शिशिराऽऽतपच्छेदरमणीयेऽस्मिन् प्रमदवनोद्देशे आत्मानं रमयिष्यसि ]।

राजा——( निःश्वस्य—) वयस्य ! यदुच्यते—'रन्ध्रोपपातिनोऽनर्थाः' इति, तदव्यभिचारि वचः। पश्य—

मुनिसुताप्रणयस्मृतिरोधिना

मम च मुक्तमिदं तमसा मनः।

---

याहीति यावत्। निर्मक्षिकं=मक्षिकोपमविघ्नकारिजनसम्बाधरहितं। शिशिरस्यातपस्य च च्छेदेन=भङ्गेन। रमणीये=अनतिशीतोष्णमनोहरे। यद्वा शिशिरर्त्तुसुखदघर्मलेशरमणीये इत्यर्थः। रमयिष्यसि=विनोदयिष्यसि। रन्ध्रेषूरनिपतन्ति तच्छीलाः—रन्ध्रोपनिपातिनः = छिद्रोपसर्पिणः।

उच्यत इति। 'नीतिकुशलै'रिति शेषः। अव्यभिचारि=सत्यमेव। 'छिद्रेष्वनर्था बहुलीभवन्ती'ति हि नीतिः।

तदेवोपपादयति–मुनीति। मुनेः सुतायाः प्रणयस्य स्मृतिं रुणद्धि तच्छीलेन = शकुन्तलास्नेहस्मृतिविलोपिना। तमसा = अज्ञानेन च। यदैव = यस्मिन्नेव क्षणे। मम मनो मुक्तं = यदैव मोहेन मच्चित्तं मुक्तं। च=पुनः। तदैव—प्रह-

---

विदूषक—आपनें सब को हटाकर अब निर्मक्षिक ( = मक्खियों से रहित, अर्थात्—जनशून्य, एकान्त ) कर दिया। अब आप इस प्रमदवन ( महल से सटे हुए उद्यान ) के रमणीय स्थानों में (कुञ्जों में) अपनें मन को बहला सकेगें।

राजा—( दीर्घ श्वास लेकर ) हे मित्र ! लोग जो कहा करते हैं, कि—'अनर्थ ( विपत्तियाँ ) भी रन्ध्र ( छिद्र, मौका ) देखकर ही आते हैं'–यह बात बिलकुल ठीक है, सच है। क्योंकि—देखो,—

हे मित्र ! उस कण्व मुनि की पुत्री शकुन्तला की स्मृति ( याद ) को

---

१ 'विणोदेहि'। [ 'विनोदय' ]—पा०।

मनसिजेन सखे ! प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ! ॥८॥

[ किञ्च[1] ]—

उपहितस्मृतिरङ्गुलिमुद्रया
प्रियतमामनिमित्तनिराकृताम् ।
अनुशयादनुरोदिमि चोत्सुकः,
सुरभिमाससुखं समुपैति च ! ॥९॥

रिष्यता = प्रहर्त्तुमुद्यतेन । मनसिजेन = कामेन । धनुषि = स्वकार्मुके । चूत एव शरः = आम्रमञ्जरीशरः । निवेशितः = आरोपितः । ममहि प्रियावियोगो जातः, इतो वसन्तकालश्च प्रादुर्भूत इत्यहो ! अनर्थपरम्परा–इत्याशयः । [ समुच्चयः । अनुप्रासः । द्रुतविलम्बितम् ] ॥ ८ ॥

उपहितेति । अङ्गुलिमुद्रया = अङ्गुलीयकेन । उपहितस्मृतिः = आनीतस्मृतिः । च = किञ्च । अनुशयात्=पश्चात्तापात् । अनिमित्तं निराकृताम्–अनिमित्तनिराकृताम् = अकारणावमानितां । प्रियतमामनु = प्रेयसीं लक्ष्यीकृत्य । उत्सुकः = उत्कण्ठितः सन् । रोदिमि = आक्रन्दामि । च=किञ्च । तदैव । सुरभिमाससुखं =

रोकने वाले अज्ञान से मेरा मन जब मुक्त हुआ, और मुझे उसकी जब याद आई, तभी कामदेव ने भी मेरे ऊपर प्रहार करने को अपने धनुष पर चूत (आम्र की मञ्जरी) का बाण चढा दिया ! । अर्थात्—वसन्तऋतु आकर उपस्थित हो गई और आमों के मञ्जरी आ गईं, जिनको देखकर मेरा विरहानल, मेरी कामाग्नि और भी धधक उठी है ॥ ८ ॥

और हे मित्र ! अंगूठी को देखकर उसका स्मरण हो आने से मैं जब उस वृथा अपमानित, तिरस्कृत, एवं छोडी हुई अपनी प्रियतमा को याद कर करके उत्कण्ठित होकर, रो, रो, कर पश्चात्ताप कर रहा हूं, उसी समय, देखो—यह वसन्त मास के सुख = उत्सव (पुष्प समृद्धि, कोकिल कूजन आदि ) के आनन्द मेरे सामने उपस्थित हो रहे हैं । अतः ठीक ही लोग कहते हैं, एक विपत्ति के आते

१ कचिन्न ।

विदूषकः—भो वअस्स ! चिट्ठ दाव इमिणा दण्डकट्ठेण कन्दप्पबाणं णासेमि । (-इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं ताडयितुमच्छति )।

[ भो वयस्य ! तिष्ठ तावत् । अनेन दण्डकाष्ठेन [1]कन्दर्पबाणं नाशयामि ] ।

राजा—( सस्मितं- ) भवतु । दृष्टं ब्रह्मवर्चसम् । सखे ! क्वेदानीमुपविष्टः प्रियायाः किञ्चिदनुकारिणीषु लतासु दृष्टिं विनोदयामि ? ।

---

वसन्तमासोत्सवादिसुखं । समुपैति = समागच्छति । [ समुच्चयः । काव्यलिङ्गं । 'द्रुतविलम्बितम्' ] ॥ ९ ॥

तिष्ठ तावत् = मा चिन्तां कुरु । दण्डकाष्ठेन = अनेन लगुडेन । कन्दर्पबाणं = कामशरं चूताङ्कुरं । नाशयामि = पातयामि । सस्मितं = सहासं । ब्रह्मणो वर्चः—ब्रह्मवर्चसम् = ब्राह्मं तेजः । दृष्टं ते बलं, विरमाऽस्माद्व्यापारादिति यावत् । 'कन्दर्पव्याधि'मिति पाठान्तरे—कन्दर्परूपो व्याधिर्यस्मादिति कन्दर्पव्याधिश्चूताङ्कुर उच्यते ।

सखे ! माधव्य । क्वोपविष्टः ! = क्व स्थित्वा । प्रियायाः = शकुन्तलायाः । किञ्चित्=स्वल्पम् । अनुकारिणीषु = सादृश्यशालिनीषु लतासु । दृष्टिं = लोचनं ।

---

ही, उसके साथ ही साथ, अनेक प्रकार की और विपत्तियाँ भी, मौका पाजाने से आ जाती हैं ॥ ९ ॥

विदूषक—हे मित्र ! आप ठहरिए । देखिए—मैं अपनी इस लाठी से कामदेव के इन बाणों—चूतमञ्जरियों—को नाश कर देता हूं, तोडकर फेंक देता हूं । फिर देखूंगा-कामदेव आप पर कैसे बाण चलायेगा ?

( डण्डा उठाकर आम की मञ्जरियों को तोडना चाहता है ) ।

राजा—(मुसकुराता हुआ-)-जाने दो जाने दो । तुमारा ब्रह्मतेज देख लिया । हे सखे ! कहो मैं कहाँ बैठ कर, अपनी प्रिया के कुछ सदृश इन लताओं को देख देख कर अपने मन को बहलाऊँ ? ।

---

१ 'कन्दर्पव्याधिं' ।

**विदूषकः**——णं भअदा आसण्णपरिचारिआ[1] लिबिअरी मेहाविणी आदिट्ठा—'माहवीलदाघरए[2] इमं वेलं अदिवाहिस्सं। तहिं चित्तफलए मे सहत्थलिहिदं तत्थभोदीए सउन्तलाए पडिकिदिं आणेहि' त्ति।

[ ननु भवता आसन्नपरिचारिका [1]लिपिकरी मेधाविनी आदिष्टा—'माधवीलतागृहे[2] इमां वेलामतिवाहयिष्यामि[3]। तस्मिन्-चित्रफलके मे स्वहस्तलिखितां तत्र भवत्याः शकुन्तलायाः प्रतिकृतिमानय—'इति ]।

**राजा**——ईदृशमेव [4]हृदयविनोदस्थानं, तत्तदेवाऽऽदेशय माधवीलतागृहम्।

---

विलोभयामि = विनोदयामि। आसन्ना चासौ परिचारिका च = त्वन्निकटचरी परिचारिकाप्रधानभूता। पाठान्तरे—चतुरकेति परिचारिका नाम। संदिष्टा = आदिष्टा। इमां वेलाम् = मध्याह्नसमयं। माधवीमण्डपे = वासन्तीलतामण्डपे। अतिवाहयिष्ये ( 'अतिवाहयिष्यामि' ) = गमयिष्ये।

तत्र = मण्डपे। चित्रफलके—गतां=चित्रपटलिखितां। स्वहस्तेन लिखितां= मयैव लिखिताम्। अनेनादरातिशयः, नितरां सादृश्यं च प्रतिकृतेः सूचितम्। प्रतिकृतिं = प्रतिमाम्। 'आनयेति चतुरिका सन्दिष्टे'ति-योजना। एवञ्च तत्रैव भवता गन्तव्यमिति भावः।

ईदृशं = माधवीमण्डपादिसदृशमेव। हृदयस्य विनोदस्य स्थानं = मनोविनोददायकं-मे भविष्यति। तत् = तस्मात्। तदेव = माधवीलतागृहमेव।

---

**विदूषक**—अभी तो आपने आपने पास रहने वाली चित्रकर्म निपुणा चतुरिका या मेधाविनी नामक दासी को आज्ञा दी थी कि—'मैं माधवी लता के कुञ्ज में ही इस समय (मध्याह्न) को बिताऊँगा। अतः वहीं पर तूं मेरे अपने ही हाथ से लिखी हुई शकुन्तला की तसवीर को लेकर आ'। अर्थात्—आपका तो माधवीलतागृह में ही बैठने का विचार पहिले से ही हो चुका है।

**राजा**—ठीक है, ऐसा ही स्थान तो मेरे हृदय को कुछ बहला सकेगा। अतः मुझे माधवीलता ( वासन्ती लता ) के कुञ्ज का ही रास्ता दिखाइए।

---

१ 'आसन्नपरिचारिका चतुरिका संदिष्टा'। २ 'माधवीमण्डपे'
३ 'अतिवाहयिष्ये'। ४ 'हृदयाश्वासनं, तत्तमेव मार्गमादेशय'-पा०।

विदूषकः—इदो इदो एदु भवं। (—इत्युभौ परिक्रामतः)।
[ इत इत एतु भवान् ]।

( [1]सानुमती—अनुगच्छति )।

विदूषकः—एसो मणिसिलावट्टसणाहो माहवीलदामण्डवो विवित्तदाए उवहाररमणीज्जदाए णिसग्गमारुदेण अ साअदेण विअ पडिच्छिदि तुमं। ता पविसिअ निसीददु भवं।

[ एष मणिशिलापट्टसनाथो माधवीलतामण्डपो विविक्ततया, उपहाररमणीयतया, निसर्गमारुतेन च स्वागतेनेव प्रतीच्छति त्वाम्। तत् प्रविश्य निषीदतु भवान् ]।

( उभौ-प्रविश्योपविष्टौ )।

सानुमती—लदासंस्सिदा पेक्खिस्सं दाव पिअसहीए पडिकिदिं

---

आदेशय=दर्शय।[ईदृशं—शकुन्तलाचित्रमिति वाऽर्थः]। परिक्रामतः=गच्छतः।

मणिशिलायाः पट्टेन सनाथः=मणिशिलाफलकशोभितः। विविक्ततया=एकान्ततया। उपहारेण रमणीयस्तस्य भावस्तया=पुष्पाद्युपहाररमणीयतया। निसर्गमारुतेन=सहजेन मन्दमन्दपवनेन च। निस्संशयं=ध्रुवं। स्वागतेनेव=स्वागतशब्दमुच्चरन्निव। प्रतीच्छति=सत्कारमाचरन् त्वां प्रवेशयति। प्रतिगृह्णाति च। निषीदतु=उपविशतु।

---

विदूषक—इधर से आप आइए, इधर से। ( दोनों चलते हैं )।

[ सानुमती—इनके पीछे पीछे चलती है ]।

विदूषक—देखिए! यह माधवीलता का मण्डप है, इसमें यह मणिशिला (सङ्गमर्मर) का पट्ट ( चौकी ) भी पडा हुआ है। यह माधवीलता का मण्डप—एकान्त है, और फल फूल आदि रमणीय वस्तुओं से मन को हरण करने वाला है, और सुन्दर सुहावनी मन्द मन्द पवन से युक्त है। इन सब बातों से मानों यह आपका स्वागत कर रहा है, और आपकी अगवानी कर रहा है। अतः आइए, इसमें प्रवेश कर, यहाँ मणिशिला की चौकी पर विराजिए।

[ राजा और विदूषक—बैठते हैं ]।

सानुमती—मैं इसी लता में छिपकर बैठकर अपनी प्रियसखी शकुन्तला

---

१ 'मिश्रकेशी' इत्युभयत्र पाठान्तरम्।

तदो स भत्तुणो [1]बहुमुहं अणुराअं णिवेदइस्सं। (–इति तथा कृत्वा स्थिता)।

[ लतासंश्रिता प्रेक्षिष्ये तावत् प्रियसख्याः प्रतिकृतिम्। ततोऽस्या भर्त्तुर्बहुमुखमनुरागं निवेदयिष्यामि ]।

**राजा**—( निःश्वस्य— ) सखे ! सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमदर्शनवृत्तान्तम्। यं किल कथितवानस्मि भवते। स भवान् प्रत्यादेशसमये मत्समीपगतो नाऽऽसीत्। किन्तु पूर्वमपि न त्वया कदाचित् सङ्कीर्त्तितं तत्रभवत्या नामादिकम् !। कच्चिदहमिव विस्मृतवांस्त्वमपि ?।

**सानुमती**[2]—अदोज्जेव महीवदिहिं खणम्पि सहिअआओ सहाआओ ण विरहिदव्वाओ।

---

लतासंश्रिता = लतानिविष्टा। सख्याः = शकुन्तलायाः। प्रतिकृतिं = प्रतिमाम्। अस्याः = अस्यै। बहुमुखं=अनेकप्रकारम्। प्रवृद्धश्च। प्रथमवृत्तान्तम्= प्रारम्भिकं वृत्तान्तं। भवते = विदूषकाय। प्रत्यादेशवेलायां = शकुन्तलानिरास-समये। पूर्वमपि = आश्रमात्–प्रतिनिवृत्तेनेतः पूर्वं त्वया कदाचिदपि। तत्र भवत्याः = शकुन्तलायाः। नाम = नामधेयादिकम्। सङ्कीर्त्तितम् = उच्चारितम्।

---

की तसवीर को देखूंगी। फिर जाकर अपनी प्रिय सखी शकुन्तला को—उसके पति का उसमें जो बहुमुख (खूब बढा हुआ, सभी प्रकार का) अनुराग है; उसको जाकर सुनाऊंगी।

राजा—(दीर्घ श्वास लेकर) हे सखे ! अब मुझे शकुन्तला के पहिले पहल देखने से लेकर आज तक का सब वृत्तान्त स्मरण आ रहा है। उस वृत्तान्त को मैंने तुमसे आश्रम में भी कहा था। परन्तु तुम तो उस समय—जब कि मैंने शकुन्तला का प्रत्याख्यान ( उससे विवाह करने का निषेध ) किया था, मेरे पास नहीं थे। परन्तु इससे पूर्व भी तो कभी तुमने शकुन्तला का नाम तक भी मेरे सामने नहीं लिया !। क्या मेरे ही तरह तुम भी उसको भूल गए थे ?।

सानुमती—इसीलिए तो बड़े लोग कहते हैं, कि—राजाओं को सहृदय

---

१ 'बहुमदं अणुराअं' [ 'बहुमतमनुरागं' ]—पा०। २ 'मिश्रकेशी' पा०

[अत एव महीपतिभिः क्षणमपि सहृदयाः सहाया न विरहितव्याः]।

विदूषकः——ण विसुसरामि, किन्तु सव्वं कहिअ अवसाणे उण तुए भणिदं-परिहासविजप्पिओएसो ण भूदत्थोत्ति। मएवि मन्दबुद्धिणा तधा ज्जेव गहिदं। अधवा भविदव्वदा क्खु एत्थ बलवदी।

[ न विस्मरामि। किन्तु सर्वं कथयित्वाऽवसाने पुनस्त्वया भणितम्-'परिहासविजल्प [1]एषः, न भूतार्थ' इति। मयापि [2]मन्दबुद्धिना तथैव गृहीतम्। अथवा भवितव्यता खल्वत्र बलवती ]।

सानुमती——एवं ण्णेदं।

[ एवं [3]न्वेतत् ]।

---

'अहमिव त्वमपि शकुन्तलां विस्मृतवानसि कच्चि'दिति-योजना। सहृदयाः=हितैषिणः सन्तः। सहायाः=सखायः। परिचारकाश्च न विरहितव्याः=न दूरीकरणीयाः। अवसाने=परिसमाप्तौ। परिहासविजल्पः=हास्येनोक्तम्। न भूतार्थः=न तथ्यं वचः। आख्यातं=कथितं। मन्दबुद्धिना=जडबुद्धिना मया। तथैव=परिहासविजल्पतया। गृहीतं=स्वीकृतम्। ज्ञातम्। अथवा = पक्षान्तरे। भवितव्यता = अवश्यम्भाविता हि भावानां। बलवती=प्रबला भवति। एवं ( नु ) एतत्=सत्यमेवैतत्।

---

अपने सहायकों को प्रतिक्षण ( हर समय ) अपने पास ही रखना चाहिए। यदि विदूषक उस समय राजा के पास रहता तो राजा से ऐसी भूल नहीं होने पाती।

विदूषक—नहीं, नहीं, मैं उस बात को भूल नहीं गया था। परन्तु सब बातें कहकर आप ने अन्त में मुझसे कह दिया था कि—'हे मित्र ! यह सब जो मैंने तुमसे कहा था, केवल उपहास ( हंसी, मजाक ) ही था, इसमें सच्ची बात कुछ भी नहीं है'। मैंने भी अपनी मन्द बुद्धि के कारण आपके उस कहने पर विश्वास कर लिया। इसीलिए मैंने आपके सामने उसकी कभी चर्चा नहीं की। अथवा—इसमें केवल भवितव्यता (भावी = होनहार)ही प्रबल थी—यही कहना पड़ता है, नहीं तो ऐसी भारी भूल कभी किसी से संभव हो सकती है ?।

सानुमती—यही बात है, भवितव्यता बड़ी प्रबल होती है। होनहार होकर ही रहती हैं। इसमें इस राजा का कुछ भी दोष नहीं है।

---

१ 'विजल्पित एषः' पा०। २ 'मृत्पिण्डबुद्धिना'। ३ 'एवमेतत्' पा०।

**राजा**—( क्षणं ध्यात्वा- ) सखे ! परित्रायस्व माम् ।

**विदूषकः**—भो वअस्स ! किं एदं तुह उववण्णं ? । ण कदावि सप्पुरिसा सोअचित्ता होन्ति । णं पवादेवि णिक्कम्पा ज्जेव गिरिओ ।

[ भो वयस्य ! किमेतत्तवोपपन्नम् ? । न कदापि सत्पुरुषाः [1]शोकचित्ता भवन्ति । ननु प्रवातेऽपि निष्कम्पा एव गिरयः ] ।

**राजा**—वयस्य ! निराकरणविक्लवायाः [2]प्रियायास्तामवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि—

इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता,
स्थिता 'तिष्ठे'त्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।

---

क्षणं ध्यात्वा = शकुन्तलायाः शोचनीयां दशां क्षणं ध्यात्वा=विचिन्त्य । परित्रायस्व = रक्ष । एतत्=शोकाकुलत्वं । किमुपपन्नम् = किमुचितम् ? । नैवेत्यर्थः । शोकचित्ताः = शोकातुरमनसः । 'शोकवक्तव्याः' इति पाठे—शोके सान्त्वनीया इत्यर्थः । प्रवाते = झञ्झावातेऽपि । निष्कम्पा एव = अचला एव । एवं विरहदशायामपि त्वं निष्कम्पो भवेति भावः । निराकरणेन = परित्यागेन । विक्लवायाः = व्याकुलायाः । तां=प्रत्याख्यानसमयजां । प्रियायाः=शकुन्तलायाः । बलवदशरणः = दृढं व्याकुलः ।

इत इति । इतः=अस्मात् प्रदेशात् । राजभवनात् । प्रत्यादिष्टा=निराकृता

---

राजा—( कुछ देर सोचकर ) हे मित्र ! मुझे बचाओ । मेरी रक्षा करो ।

विदूषक—हे मित्र ! इस प्रकार अधीर होना क्या आपको उचित है ? । इस प्रकार व्याकुल होना तो आपको शोभा नहीं देता है । क्योंकि सत्पुरुष कभी शोकाकुल नहीं होते हैं । देखो, कैसी भी प्रचण्ड पवन चले, पर पर्वत कभी हिलते नहीं हैं । ( चलायमान नहीं होते हैं ) ।

राजा—हे मित्र ! मेरे द्वारा प्रत्याख्यान करने से विह्वल और व्याकुल हुई अपनी प्रिया शकुन्तला की उस दीन अवस्था को याद करके तो मैं अत्यन्त ही कातर हो रहा हूं । क्योंकि—

जब मैंने उसे स्वीकार करने से इन्कार कर दिया, तो वह अपने स्वजन

---

१ 'शोकवक्तव्याः' पा० । २ 'विक्लवायास्ते सख्यास्तामव' ।

पुनर्दृष्टिं बाष्पप्रकरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥१०॥

सानुमती——अम्महे ! ईदिसी परवसदा इमस्स मम्पि सन्दावेदि ।

[ अहो ! ईदृशी [2]परवशताऽस्य मामपि सन्तापयति ] ।

विदूषकः——भो ! अत्थि मे तक्को—केन उण तत्थभोदी आआससञ्चारिणा णीदे त्ति ।

[ भोः ! अस्ति मे तर्कः-'केन पुनस्तत्रभवती आकाशसञ्चारिणा नीते'ति ? ] ।

---

सती । स्वजनम् = स्वबान्धववर्गं शाङ्गरवगौतम्यादिलक्षणम् । अनुगन्तुम्=अनुसर्तुम् । व्यवसिता=प्रवृत्ता । गुरुसमे=गुरोः शिष्ये- शाङ्गरवे । तिष्ठेत्युच्चैर्वदति सति स्थिता । पुनः-मयि क्रूरे = दुष्यन्ते । बाष्पकरैः कलुषां = बाष्पभाराविलां । 'प्रसर' इति पाठेऽपि-प्रसरः=व्याप्तिः । प्रवृद्धिः । आधिक्यम् । दृष्टिं=लोचनं । यत्- अर्पितवती = पातितवती । तत्-सविषं —विषदिग्धं-शल्यमिव=बाण इव । 'शल्यं शक्तौ शरे' इति विश्वः । मां दहति = मां सन्तापयति ।

मयाऽस्वीकृतायाः, शाङ्गरवभर्त्सितायाश्च कातरां तां दृष्टिं स्मृत्वा नितरां खलु व्यथते मे मन इत्याशयः । [ उपमा । शिखरिणी ] ॥ १० ॥

अस्य = राज्ञः । परवशता = कातरता । तर्कः = विचारः । आकाशसञ्चा-

---

ऋषि कुमारों के पीछे २ जाने लगी । जब गुरुतुल्य मान्य, गुरुकण्व के शिष्य शाङ्गरव ने उसे जोर से डपट कर, 'कहां आती है, यहीं रह' ऐसा कहा, तब वह भय से ठिठक कर वहीं खड़ी रह गई, और क्रूर हृदय मेरे ऊपर उसने आसुओं से डबडबाई हुई अपनी करुण दृष्टि डाला-वह दृश्य मुझे हृदय में लगे जहर से बुझे हुए बाण के शल्य ( अग्रभाग ) की तरह जला रहा है ! ॥ १० ॥

सानुमती—आह ! इस राजा की इस प्रकार यह कातरता और करुणाजनक दशा तो मुझे भी सन्ताप पहुँचा रहा है !

विदूषक—हे मित्र ! मुझे यह शङ्का हो रही है, कि—श्रीमती शकुन्तला

---

१ 'बाष्पप्रसर' । २ 'ईदृशी स्वकार्यपरता । अस्य सन्तापे नाहं रमे' पा० ।

**राजा**——वयस्य ! कः पतिव्रतां तामन्यः परामर्ष्टुमुत्सहते। 'मेनका किल सख्यास्ते जन्मप्रतिष्ठे'ति तत्सखीजनादस्मि श्रुतवान्। तत्सहचरीभिस्तया वा [1]हृतेति हृदयमाशङ्कते।

**सानुमती**——[2]सम्मोहे वि विह्मअणीओ क्खु इमस्स पडिबोधो!।

[ संमोहेऽपि विस्मयनीयः खल्वस्य प्रतिबोधः ! ]।

**विदूषकः**——भो ! जइ एव्वं, ता समस्ससदु भवं। अत्थि क्खु समागमो कालेण तत्थभोदिए।

[ भो ! यद्येवं, तत्समाश्वसितु भवान्। अस्ति खलु समागमः कालेन तत्रभवत्याः ]।

---

रिणा=गगनचारिणा केनापहृतेति मे विचारो भवतीत्याशयः। परामर्ष्टुं=स्प्रष्टुमपि। उत्सहते=शक्नोति। जन्मप्रतिष्ठा=उद्भवस्थानं। मातेत्यर्थः। तत्सहचरीभिः=मेनकासखीभिः। तया वा=मेनकया वा। संमोहे=स्मृतिविभ्रमेऽपि। प्रतिबोधः=विचारशक्तिः। चैतन्यं। प्रतिभा। आश्चर्यजनकोऽस्य बुद्धिप्रसर इति भावः। एवं=तत्सम्बन्धिभिर्नीतेति। समागमः=पुनरपि मेलनं।

---

को इस प्रकार अकस्मात् कौन आकाशचारी उठाकर ले गया ?।

राजा—मित्र ! उस पतिव्रता को और दूसरा कौन छू सकता है। किन्तु 'मेनका अप्सरा से यह उत्पन्न हुई है' यह बात उसकी सखियों से मैंने सुनी थी। अतः या तो उस मेनका की कोई सहचरी अप्सरा ही उसे ले गई है, या वह मेनका ही स्वयं उसे इस प्रकार ले गई है। यही बात मेरे हृदय में आती है। और कोई तो उस पतिव्रता को ले नहीं जा सकता है।

सानुमती—वाह ! इस प्रकार मोह की दशा में भी इसका ऐसा ज्ञान तो बड़ा ही विस्मयजनक है। ( अर्थात्–शकुन्तला को उसकी माता मेनका नामकी अप्सरा ही उठाकर ले गई थी। और इस बात को राजा ने अपनी कुशाग्रबुद्धि से जान लिया—अतः इसकी बुद्धि की प्रशंसा सानुमती कर रही है )।

विदूषक—हे मित्र ! यदि ऐसी बात है, तो फिर धैर्य धरिए। कुछ काल के बाद उसके साथ आपका समागम अवश्य ही होगा।

---

१ 'नीतेति'। २ 'संमोहः खलु विस्मयनीयो, प्रतिबोधः' पा०।

राजा——कथमिव ?।

विदूषकः——ण क्खु मादापिदरा भत्तिविओअदुक्खिदं दुहिदरं चिरं पेक्खिदुं पारेन्ति ।

[ न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं चिरं प्रेक्षितुं पारयतः ]।

राजा——वयस्य !—

स्वप्नो नु, माया नु, मतिभ्रमो नु ?,
क्लृप्तं[1] नु तावत्फलमेव पुण्यैः ?।
असंनिवृत्त्यै तदतीतमेवं[2],
मनोरथानामतटप्रपातः ॥ ११ ॥

---

माता च पिता च——मातापितरौ = पितरौ । भर्त्तुर्वियोगेन दुःखितां = पतिवियोग-पीडिताम् । दुहितरं = पुत्रीं । चिरं = बहुकालं यावत् । अतस्तस्या माता त्वया सह तां पुनर्योजयिष्यतीति भावः ।

स्वप्न इति । हे वयस्य=सखे । तत्=शकुन्तलासम्भाषणादिकं मया पूर्वं कृतं । स्वप्नो नु = स्वप्ने मयाऽनुभूत किम् ? । माया नु = इन्द्रजालकल्पिता मिथ्या-घटना किम् ?। ममैव मतिभ्रमो नु = बुद्धिविपर्ययो वा मम किंस्वित् ?। शुक्ति-रजतभ्रमवदन्यवस्तुनि तत्त्वाऽध्यासो नु मया कृत इत्याशयः । पुण्यैः = सौभाग्यैः । तावत् = तावत्कालमात्रभोग्यं । फलं——क्लृप्तम् = उपस्थापितं,

---

राजा—यह बात तुम कैसे जानते हो ?।

विदूषक—क्योंकि माता-पिता अपनी पुत्री को पतिवियोग से दुःखित दशा में ज्यादा दिन नहीं देख सकते हैं।

राजा—हे मित्र ! शकुन्तला के समागम का वह सुखद समय-क्या स्वप्न था ?, या-कोई इन्द्रजाल की माया थी, या किसी मेरे विशेष पुण्य का उतने ही दिन तक का मधुर फल था । और वह आनन्द सदा के लिए ही अब चला गया,

---

१ 'क्लिष्टं तु तावत्फलमेव पुण्यम्' पा० । २ 'एते मनोरथा नाम तटप्रपाताः' ।

**विदूषकः**—भो ! मा एव्वं । णं अङ्गुलीअअं ज्जेव एत्थ णिदंसण । अवस्संभाविणो अचिन्तणीअसमागमा होन्ति ।

[ भोः, मैवम् । नन्वङ्गुलीयकमेवाऽत्र निदर्शनम् । [1]अवश्यम्भाविनोऽचिन्तनीयसमागमा भवन्ति ] ।

---

किंस्वित् ? । तत्=तस्या दर्शनादिसुखं । असंनिवृत्त्यै=पुनरलाभाय । अतीतमेव=गतमेव । न तत्सुखं पुनर्लब्धुं मया शक्यमिति भावः । मनोरथानां=शकुन्तलागताभिलाषाणाम् । अतटात्=पर्वतादेरुच्चस्थानात् । 'प्रपातस्त्वतटो भृगुः' इत्यमरः । प्रकर्षेण पातो=नाशो जात एव । 'शकुन्तला पुनरागमिष्यती'ति वृथैव मनोरथमात्रमेवेत्याशयः । 'मनोरथा नाम तटप्रपाताः' इति पाठान्तरे, तटस्य-नद्यादितटस्य, पाता इव-मनोरथाः प्रतिक्षणं विलीयन्ते इत्यर्थः । स्वप्नादिसुखवत् शकुन्तलासङ्गमादिसुखं न मया पुनर्लब्धुं शक्यं, मनोरथास्तु मम मुधैव जायन्ते, विलीयन्ते चेति भावः । [ सन्देहालङ्कारः । काव्यलिङ्गम् । उपजातिः ] ॥ ११ ॥

मैव='स्वप्नोऽयं', 'मायेय'मित्यादि मा तर्कय । निदर्शनं=यथार्थत्वे प्रमाणम् । अचिन्तनीयः समागमो येषान्ते अचिन्तनीयसमागमाः=अतर्कितोपनताः । अवश्यम्भाविनः=अवश्यंभाविनो विषयाः । अवश्यम्भावी हि यथाऽकस्मादेव भवति, तथा

---

और मेरे मनोरथ सदा के लिए ही मानों पहाड़ पर से गिर कर चूर चूर हो गए। अर्थात्—वह शकुन्तला के समागम का मधुर स्पृहणीय सुख अब पुनः मिलना असम्भव ही है, क्योंकि—क्या तो वह स्वप्न था, या कोई माया थी, या उतने दिन के लिए ही प्राप्त हुआ किसी पुण्य विशेष का फल था। अब तो उसका पुनः प्राप्त होना सर्वथा दुर्लभ ही है ॥ ११ ॥

विदूषक—नहीं, नहीं, मित्र ! ऐसा मत कहो । देखो, यह अंगूठी ही इस बातका उदाहरण है, कि—अवश्यम्भावी बात अकस्मात् होकर ही रहती है । जल में गिरी हुई यह अंगूठी जब मिल गई, तब शकुन्तला का पुनः मिलना क्या कठिन है ? ।

---

१ 'अवश्यंभावी अचिन्तनीयः समागमो भवति' इति, 'अचिन्तनीयसमागमः' इति च पा० ।

राजा—( अङ्गुलीयकं विलोक्य—) अये ! इदं तावदसुलभस्थान-भ्रंशि शोचनीयम् ।

तव सुचरितमङ्गुलीय ! नूनं
प्रतनु कृशेन विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥१२॥

---

शकुन्तलासमागमोऽपि तव सहसैव भविष्यतीति भावः । [प्ररोचना सन्ध्यङ्गम् ] ।

असुलभस्थानभ्रंशि=दुर्लभस्थानाद्भ्रष्टं । शकुन्तलाहस्ताद्गलितमिति यावत् ।

तवेति । यत्—अरुणैः—नखैर्मनोहरासु=आरक्तनखमनोज्ञासु । तस्या अङ्गुलीषु—लब्धपदं=प्राप्तावस्थानं । सदपि त्वं । च्युतमसि=ततः पतितमसि । तत्—तस्मात्, हे अङ्गुलीयक ! तव सुचरितं=पुण्यं । प्रतनु=अत्यल्पम् । इति=इत्थं । कृशेन=अल्पेन । फलेन=अङ्गुलीवियोगात्मना । नूनं=ध्रुवं । विभाव्यते=निश्चीयते । शकुन्तलाहस्ताद्यत्पतितमसि, तन्नूनमङ्गुलीयक ! त्वं हतभाग्यमसीति भावः । [ अनुमानं । काव्यलिङ्गं । समासोक्तिः । 'पुष्पिताग्रा' ] ॥१२॥

---

राजा—( अंगूठी को देखकर ) अहो ! यह अंगूठी भी उस दुर्लभ स्थान ( शकुन्तला की कोमल सुन्दर अंगुलियों ) से गिरकर शोचनीय ही हो गई है । अर्थात्–इसका दुर्भाग्य ही समझना चाहिए–जो उस स्थान से यह च्युत हो गई ।

हे अंगुलीयक ! (हे अंगूठी !) तेरा पुण्य ही कम है, यह बात तो इस फल (उसकी अंगुली से गिरने) से ही हमारी समझ में आ रही है, जो तू उस शकुन्तला की लाल २ नखों से मनोहर, उन सुन्दर २ अंगुलियों में स्थान पाकर भी, फिर वहाँ से गिर पड़ी है ! । [ जिसका पुण्य कम होता है, वह स्वर्ग आदि ऊँचे पदको पाकर भी वहाँ से फिर गिर जाता है । जैसे कहा है–'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' । इसी प्रकार शकुन्तला की अंगुलियो में स्थान पाकर भी तू वहाँ से गिर पड़ी, इससे सिद्ध होता है, कि–तेरा पुण्य ही क्षीण हो गया है, अत एव तू वहाँ से गिर पड़ी है ॥ १२ ॥

---

१ 'सदङ्गुलीषु' पा० ।

**सानुमती**—जइ अण्णहत्थगदं भवे तदो सच्चं शोअणीअं भवे। सहि ! दूरे वट्टसि, एआइणी ज्जेव कण्णसुहाइं अणुभवेमि ।

[ यद्यन्यहस्तगतं भवेत्ततः सत्यं शोचनीयं भवेत् । सखि ! दूरे वर्त्तसे । एकाकिन्येव कर्णसुखान्यनुभवामि ] ।

**विदूषकः**—भो ! इअं णाममुद्दा केण उद्देसेण भवदा तत्थ भोदीए हत्थसंसग्गं पाविदा ? ।

[ भोः ! इयं नाममुद्रा केनोद्देशेन[1] भवता तत्रभवत्या हस्तसंसर्गं प्रापिता ? ] ।

**सानुमती**—मम वि[2] कोदूहलेण वावारिदो एसो ।

[ ममाऽपि[2] कौतूहलेन व्यापारित[3] एषः ] ।

---

अन्यहस्तगतं=दुष्यन्तेतरहस्तपतितं चेत् । सत्यम्=अवश्यं । सखि !=हे शकुन्तले ! कर्णसुखानि = श्रोत्रसुखानि इमानि राजवचनानि । व्यापारित इति । ममाप्यस्मिन् प्रश्नेऽभिलाष इत्याशयः । नाममुद्रा = अङ्गुलीयकम् । उद्देशेन =

---

सानुमती—यदि यह अंगूठी तुम्हारे सिवाय किसी दूसरे के हाथ में चली जाती, तब तो अवश्य शोचनीय होती । पर यह तो तुम्हारे ही हाथ में आ गई है, अतः यह अब शोचनीय नहीं रही । हे सखि ! शकुन्तले ! तूं दूर बैठी है। यहाँ मैं अकेली ही इन कर्णसुखप्रद बातों को सुन रही हूं । ( अर्थात् राजा की इन मधुर स्नेहमय बातों को यदि शकुन्तला अपने कानों से सुनती तो उसे कितना आनन्द आता ! ) ।

विदूषक—हे मित्र ! आपके नामाक्षरों से युक्त इस अंगूठीको आपने किस उद्देश्य से श्रीमती शकुन्तला के हाथ में दिया था ?। (अंगुली में पहिराई थी ?) ।

सानुमती—हाँ, यही कौतूहल तो मुझे भी हो रहा था । अतः यह तो मेरे मनकी ही बात मानों पूछ रहा है ।

---

१ 'उद्घातेन' इति पाठे—उद्घातेन=उपक्रमेण, उद्देशेन । मनीषितेनेत्यर्थः । 'उद्घातः—कथ्यते धीरैः स्खलिते समुपक्रमे' इति धरणिः ।

२ अपिः क्वचिन्न । ३ 'आकारितः' पा० ।

राजा—वयस्य! श्रूयताम् ,—तदा स्वनगराय तपोवनात् प्रस्थितं मां प्रिया सबाष्पमाह—'कियच्चिरेणाऽऽर्यपुत्रः[1] पुनरस्माकं स्मरिष्यती'ति ।

विदूषकः—तदो तदो ? ।

[ ततस्ततः ] ।

राजा—अथैनां मुद्रामङ्गुल्यां निवेशयता मया प्रत्यभिहिता ।

विदूषकः—किं त्ति ? ।

[ किमिति ? ] ।

राजा—

'एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय, गच्छसि यावदन्तम्[2] ।
तावत्प्रिये ! मदवरोधनिदेशवर्त्ती[3]
नेता जनस्तव समीपमुपैष्यती'ति ॥१३॥

---

अभिप्रायेण । हस्तसंसर्गं=शकुन्तलाकरसंयोगम् । अस्माकं स्मरिष्यति=कदा मम शकुन्तलायाः पुनः स्मरिष्यति । 'अधीगर्थे'ति कर्मणि षष्ठी । प्रत्यभिहिता=उक्ता ।

एकैकमिति । प्रिये ! मदीयनाम्नोऽक्षरम् एकमेकं प्रतिदिनं गणय। यावदेव त्वम्—अन्तं=मन्नामाऽक्षराणामन्त्यं तकारं । गमिष्यसि = प्राप्स्यसि । तावत्=

---

राजा—हे मित्र ! सुनो, जब मैं आश्रम से नगर को वापिस आने लगा, तब मेरी प्रिया शकुन्तला ने मुझ से कहा कि–हे प्राणनाथ ! अब आप मेरा स्मरण कब तक ( कितने दिन में ) करेंगे ? ।

विदूषक—हाँ, तब ? । तब फिर क्या हुआ ? ।

राजा—तब मैंने इस अंगूठा को उसकी अंगुली में पहिराते हुए कहा, कि– ।

विदूषक—आपने क्या कहा ? ।

राजा—हे प्रिये ! इस अंगूठी में मेरे नाम के जो अक्षर हैं, उनको तुम

---

१ 'प्रतिपत्तिं दास्यती'ति पाठे–प्रतिपत्तिः–वार्त्ता । 'प्रतिपत्तिः प्रवृत्तौ स्या'दिति धरणिः । २ 'दन्त्यम्' पा० । ३ 'मदवरोधगृहप्रवेशं नेता' पा० ।

-तच्च दारुणात्मना मया मोहान्नाऽनुष्ठितम् ।

**सानुमती**--रमणीओ क्खु अवही विहिणा विसंवादिदो ।

[ रमणीयः खल्ववधिर्विधिना विसंवादितः ] ।

**विदूषकः**--भो ! कथं लोहिदमच्छस्स वडिसं विअ मुहप्पविट्टं एदं आसी ? ।

[ भोः ! कथं रोहितमत्स्यस्य बडिशमिव मुखप्रविष्टमेतदासीत् ? ]।

---

तावदेव । मम अवरोधस्य = अन्तःपुरस्य । निदेशे—आज्ञायां वर्त्तते तच्छीलः-अन्तःपुरचरः । नेता = प्रधानभूतः । ( -तव नेता = त्वां नेतुमित्यर्थो वा )। जनः = राजपुरुषः । तव समीपम् । उपैष्यति = आगमिष्यतीति—मया प्रत्यभिहितेति—योजना । दु-ष्-य-न्—तेति नामाक्षरसमितेष्वेव [ पञ्चसु , दिवसेषु कञ्चुक्यादिकं भवतीमानेतुं प्रेषयिष्यामीति मयोक्तमित्याशयः । 'मदवरोधगृहप्रवेशं नेते'ति पाठान्तरे-मदन्तःपुरे प्रवेशस्य प्रापयितेति तदर्थः । [ अनुप्रासः। काव्यलिङ्गं । 'वसन्ततिलका' ] ॥ १३ ॥

तत् = स्वोक्तं । नानुष्ठितं = मया न कृतं । रमणीयः=सुन्दरः । अवधिः = त्रिचतुरादिदिनात्मकः । विधिना = दैवेन । विसंवादितः = मिथ्याकृतः ।

बडिशमिव = मत्स्यभेदनशल्यमिव । एतत् = अङ्गुलीयकम् ।

---

**रोज रोज एक-एक करके गिनती रहना । जब तुम मेरे नाम के अक्षरों की समाप्ति पर ( अन्तिम अक्षर पर ) पहुँचोगी, तभी मेरे अन्तःपुर के अधिकारी पुरुष ( अफसर ) तुमको लेने के लिए तुम्हारे पास पहुँच जाएँगे ॥ १३ ॥**

**और वही बात क्रूरहृदय मैंने (मूर्खने) यहाँ आकर मोह में पड़कर भुलादी ।**

**सानुमती—राजा ने तो उसे बुलाने की यह बहुत ही सुन्दर और रमणीय अवधि रक्खी थी । पर विधाता ( दुर्भाग्य ) ने ही सब काम बिगाड़ दिया । ( यह अवधि गड़बड़ा दी ) ।**

**विदूषक—हे मित्र ! रोहित ( रोहू ) मछली के पेट में काँटी की तरह यह अंगूठी कैसे पहुंच गई ? । [ काँटी = मछली पकड़ने की लोहे की टेढ़ी कांटी । जिसपर आटा लगाकर मछली पकड़ने वाले मछली के पेट में उसे पहुँचा कर मछली को फंसा लेते है ] ।**

राजा——शचीतीर्थे सलिलं वन्दमानायास्ते सख्या हस्ताद्गङ्गास्रोतसि परिभ्रष्टम् ।

विदूषकः——जुज्जदि ।

[ युज्यते ]।

सानुमती——अदो क्खु तवस्सिणीए सउन्तलाए अधम्मभीरुणो एदस्स राएसिणो परिणए सन्देहो जादो । अधवा ण ईदिसो अणुराओ अहिण्णाणं अवेक्खदि । ता कधं विअ एदं ? ।

[ अतः खलु तपस्विन्याः शकुन्तलाया अधर्मभीरोरेतस्य राजर्षेः परिणये सन्देहो जातः । अथवा नेदृशोऽनुरागोऽभिज्ञानमपेक्षते । तत्कथमिवैतत् ? ]।

राजा——उपालप्स्ये तावदिदमङ्गुलीयकम् ।

---

गङ्गास्रोतसि = गङ्गाप्रवाहे । तपस्विन्याः = दीनायाः । परिणये = विवाहे । अधर्मभीरोः = पापाशङ्किनः । ईदृशः = एवंदशां गतः । अनुरागः = स्नेहः । अभिज्ञानं = चिह्नादिदर्शनम् । एतत् = अभिज्ञानापेक्षित्वम् । उपालप्स्ये =

---

राजा—शचीतीर्थ में तीर्थ के जल को प्रणाम करते समय तुम्हारी सखी ( मित्र की पत्नी शकुन्तला ) के हाथ से गङ्गाजी के जल में यह गिर गई थी । [ शचीतीर्थ—गङ्गा के तटपर सूकर ताल ( शक्रावतार ) तीर्थ । सोरो-एटा के पास । या हापुड के पास कोई तीर्थस्थल विशेष ] ।

विदूषक—ठीक है, यह बात जचती है ।

सानुमती—इसी लिए ( अंगूठी के गिर जाने से ही ) पाप से डरने वाले इस राजा को, बेचारी दुःखिया शकुन्तला के साथ गुप्तरूप से हुए अपने विवाह में सन्देह हो गया । परन्तु ऐसा बढा हुआ अनुराग भी क्या अभिज्ञान (परिचय, अंगूठी के द्वारा परिचय) की अपेक्षा करता है ? । अर्थात्—जब राजा का उसमें इतना प्रेम था, तो फिर ऐसे बढे हुए प्रेम में भी अभिज्ञान की क्या आवश्यकता थी ? । यह बात समझ में नहीं आती है ।

राजा—हे मित्र ! मैं तो इस अंगूठी को उलाहना दूंगा ।

**विदूषकः**—(¹आत्मगतं-) गिहीदो णेण (¹पुणो) पन्था ¹उम्मत्ताणम् ?। (¹प्रकाशं सस्मितं–) भो ! अहं पि दाव एदं दण्डकट्ठं उवालहिस्सं- 'कधं उज्जुअस्स मे कुडिलं तुमंसि' त्ति ।

[ ¹गृहीतोऽनेन ( ¹पुनः ) पन्था उन्मत्तानाम् ! भोः । अहमपि तावदेतद् दण्डकाष्ठमुपालप्स्ये–'कथमृजुकस्य मे कुटिलं त्वमसी'ति ]।

**राजा**—( तदश्रृण्वन्नेव— ) ¹मुद्रिके !

**कथं नु तं कोमलबन्धुराङ्गुलिं**
**करं विहायाऽसि निमग्नमम्भसि ? ।**

**अथवा—**

**अचेतनं नाम गुणं न वीक्षते,**
**मयैव कस्मादवधीरिता प्रिया ? ॥ १४ ॥**

---

निन्दिष्यामि । कथं = कुतः । = ऋजुकस्य = सरलस्य । कुटिलं = वक्रम् । एवञ्च अङ्गुलीयकस्य सखे ! को दोषः, ननु भवानेवापराध्यति तस्या विस्मरणे-इति सूचितो भावः ।

**कथमिति** । कोमला बन्धुरा अङ्गुलयो यत्र तं = मृदुसुन्दराङ्गुलिललितं। 'बन्धुरं सुन्दरे रम्ये' इति विश्वः । करं=शकुन्तलाहस्तं । विहाय=त्यक्त्वा । अम्भसि= जले । निमग्नमसि ? = ब्रुडितमसि । नाम = प्रसिद्धौ । अचेतनं = जडमेतत् । गुणं न वीक्षते इति युक्तमेव । परन्तु–मयैव = चेतनेनापि मया । प्रिया कथमवधीरिता = कथं नाम अवमानिता ? । अचेतनस्याऽङ्गुलीयकस्य को दोषः,

---

**विदूषक**—(मनही मन) अब इस राजा ने पुनः पागलों का मार्ग पकड लिया । (प्रकट में हँसकर) हे मित्र ! मैं भी अपनी हाथकी इस लकडी (छडी) को उलहना दूंगा, कि–मेरे ऐसे सीधे मनुष्य की होकर भी तू टेढी क्यों है !।

**राजा**—( उसकी बात अनसुनी करके ) हे मुद्रिके ! ( हे अंगूठी )— उसके कोमल २ अंगुलियों से सुन्दर, कोमल हाथ को छोडकर तूं जल में क्यों गिर गई थी ? । अथवा—अचेतन वस्तु ( जड वस्तु–अंगूठी आदि ) यदि

---

१ क्वचिन्न ।

सानुमती—सअ ज्जेव पडिवण्णो जं अह्मि वत्तुकामा।
[ स्वयमेव प्रतिपन्नो यदस्मि वक्तुकामा ]।

विदूषकः—भो ! सव्वधा अहं बुभुक्खाए मारिदव्वो ?।
[ भोः ! सर्वथाऽहं बुभुक्षया[1] मारयितव्यः ? ]।

राजा—( अनादृत्य- ) प्रिये ! [2]अकारणपरित्यागादनुशयदग्ध-हृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन।

---

ममैवायमपराध इत्याशयः। [ विभावना-विशेषोक्ति समासोक्त्यर्थान्तरान्यासः। 'वंशस्थम्' ]॥ १४॥

प्रतिपन्नः = स्वीकृतवान्। यत् = 'तवैव दोष' इति। सर्वथा = सत्यमेव। सखे ! बुभुक्षितोऽहं, भोजनवेला जाता, तदुत्तिष्ठेत्याशयः। अनादृत्य = अश्रुत्वैवाह। अकारण-परित्यागात् = निष्कारणपरित्यागात्। अनुशयदग्धहृदयः= पश्चात्तापखिन्नमानसोऽहम्। पाठान्तरे-अकारणमेव त्वत्परित्यागेन दग्धं हृदयं यस्यासौ—अकारणत्यागदग्धहृदयः = वृथापरित्यागदुःखितमानसोऽहम्। जनः=

---

गुणों को न समझें, तो कथंचित् ठीक भी है, परन्तु चेतन ( ज्ञान युक्त ) होकर भी मैंने अपनी ऐसी गुणवती प्रिया को क्यों त्याग दिया ?॥ १४॥

सानुमती—मैं जो कहना चाहती थी, उसे इस राजाने स्वयं ही स्वीकार कर लिया। अर्थात्—समझदार होकर भी मैंने अपनी प्रिया को छोड़कर बहुत अन्याय किया है—इस बात को यह स्वयं ही स्वीकार कर रहा है।

विदूषक—हे मित्र ! क्या मुझको तुम भूख से सचमुच ही मार डालोगे ? अर्थात्-मुझे तो अब भूख लगी है, अतः चलो, भोजन करें। इस विरहगाथाको थोड़ी देर तो छोड़ो।

राजा—( उसकी बात का अनादर कर -उसकी बात को अनसुनी कर ) हे प्रिये ! अकारण ही तुम्हारा त्याग करने से, अब पश्चात्ताप से मेरा हृदय जल रहा है, अब तो मुझे अपना दर्शन पुनः देकर कृतार्थ करो। पुनः अपने दर्शन देने की मेरे पर दया करो।

---

१ 'खादयितव्यः' पा०। बुभुक्षा मामतिमात्रं बाधते इत्यर्थः।
२ 'अकारणपरित्यागदग्धहृदयः' पा०।

( [1]अपटीक्षेपेण प्रविश्य चित्रफलकहस्ता-चेटी[1] ) ।

चेटी—भट्टा ! इअं चित्तगदा भट्टिणी ।

(—इति चित्रफलकं दर्शयति ) ।

राजा—( विलोक्य- ) अहो रूपमालेख्यगताया अपि प्रियायाः।

तथाहि—

दीर्घापाङ्गविसारि नेत्रयुगलं, लीलाञ्चितभ्रूलतं,
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम् ।
कर्कन्धूद्युतिपाटलोष्ठरुचिरं, तस्यास्तदेतन्मुखं,
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम् ॥ १५ ॥

---

अर्ह । पुनर्दर्शनदानेन—अनुकम्प्यताम् = अनुगृह्यताम् । भट्टिनी = स्वामिनी शकुन्तला । विलोक्य = शकुन्तलाचित्रं विलोक्य । आलेख्यगताया अपि = चित्रपटगताया अपि । प्रियायाः = शकुन्तलायाः । अहो रूपं = मनोहरं धन्यं रूपम् । रूपमेव प्रशंसते—

दीर्घेति । तस्याः = प्रियायाः—तदेतत् = चित्रगतं,—दीर्घाभ्यामपाङ्गाभ्यां विसारि नेत्रयोर्युगलं यत्र, तत्तथा = विशाललोचनप्रान्तचुम्बिनयनयुगलं । लीलयाऽञ्चिते भ्रूलते यत्र तत्तथा = सविलासभ्रूलतायुगलं । दन्तानामन्तः परिकीर्णाभिः, हासस्य किरणानां ज्योत्स्नाभिर्विलिप्तमधरं यत्र तत्तथा = दन्तमध्य-विलसद्धासकिरणप्रभाविलिप्ताधरोष्ठम् । कर्कन्धूनां द्युतिरिव द्युतिर्यस्य, अत एव

---

[ पर्दा हटाकर सहसा चित्रपट हाथ में लिए हुए चेटी का प्रवेश ] ।

चेटी—हे प्रभो ! यह चित्रपट में लिखी हुई स्वामिनी शकुन्तला जी हैं ।

( शकुन्तला की तसवीर दिखाती है ) ।

राजा—( देखकर ) अहो ! मेरी इस प्रिया का चित्र में लिखी हुई का भी क्या ही सुन्दर रूप है ! । जैसे—इसके लम्बे लम्बे नेत्रों के प्रान्त भाग (कोने) तक फैले हुए ये विशाल दो नेत्र हैं, लीला एवं विलास व हाव-भाव से नाचती

---

१ क्वचिन्न ।

विदूषकः—( विलोक्य- ) साहु वअस्स ! साहु । जं—तुए महुरो भट्टिणीए दंसितो भावाणुप्पवेसो। खलदि विअ मे दिट्ठी णिहुदप्पदेसेसु। किं बहुना, सत्ताणुप्पवेससङ्काए आलवणकोदूहलं मे जणअदि ।

[ साधु वयस्य ! साधु । यत्त्वया [1]मधुरो भट्टिन्या दर्शितो भावानुप्रवेशः । स्खलतीव मे [2]दृष्टिर्निम्नोन्नतप्रदेशेषु । किं बहुना । सत्त्वाऽनु-

---

पाटलो य ओष्ठस्तेन रुचिरं = पक्वबदरीफलाऽऽरक्तवर्णाधरोष्ठसुन्दरं । 'श्वेतरक्तस्तु पाटलः' इत्यमरः । विभ्रमेण लसन्—प्रकर्षेण उद्भिन्नः कान्तिद्रवो यत्र तत्तथा = विलासोदञ्चत्प्रकृष्टलावण्यप्रभाप्रवाह । मुखं = वदनं । चित्रेऽपि आलपतीव = चित्रस्थमपि अस्मान् सम्भाषते इव । चित्रेऽपि यस्या एवंविधः सौन्दर्यातिशयो विभाव्यते, तस्या अनिन्द्यसौन्दर्यसारविलासविभ्रमाया हरिणाक्ष्या वास्तवं सौन्दर्यं मया कथं वर्णयितुं शक्यमिति भावः । अतिसुन्दरीयं मया भाग्यविपर्ययात्परित्यक्तेत्याशयः । [ उपमा । रूपकम् । उत्प्रेक्षा । 'शार्दूलविक्रीडितम्' ] ॥ १५ ॥

साधु = शोभनं । 'साधु वयस्य साधु' इत्यन्तं भिन्नं वाक्यम् । भट्टिन्याः = स्वामिन्याः । राजपत्न्याः शकुन्तलायाः । मधुरः = मनोहरः । भावानुप्रवेशः =

---

हुई यह इसकी भ्रूलता है, दांतों के भीतर ही फैले हुए मधुर मुसकान से निकली दन्त किरणों की (चन्द्रिका) चाँदनी से यह अधरोष्ठ भी व्याप्त (विलिप्त सा ) हो रहा है। अर्थात् प्रकाशमान व शोभायमान हो रहा है । और इसका लाल २ पके हुए बेरकी तरह पाटल ( कुछ श्वेत व लाल = गुलाबी ) ओष्ठसे रुचिर यह सुन्दर मनोहर मुख है, जो इस चित्र में भी,—हाव भाव कटाक्ष लीला आदि से चमचमाती हुई और बढ़ी हुई कान्ति से एवं लावण्य के प्रवाह से मानों बोलना ही चाहता है ॥ १५ ॥

विदूषक—( चित्र को देखकर ) वाह मित्र ! वाह ! अपने स्वामिनी शकुन्तला का मधुर और मनोहर भाव ( प्रेम अनुराग ) का उत्तम प्रदर्शन इस चित्र में किया है । मेरी भी दृष्टि इस चित्र में लिखे निम्नोन्नत ( स्तन, मुख

---

१ 'मधुरावस्थानदर्शनीयो भावानुप्रवेशः' पा० । २ 'निभृतप्रदेशेषु' ।

प्रवेशशङ्कया-आलपनकौतूहलं मे जनयति ]।

सानुमती--अम्मो ! एसा राएसिणो [1]वत्तिआलेहणिउणदा। जाणे पिअसही से अग्गदो वट्टदि त्ति।

[ अहो ! राजर्षेर्वर्त्तिकालेखनिपुणता। जाने प्रियसखी [2]ममाऽग्रतो वर्त्तते-इति ]।

राजा--

यद्यत्साधु न चित्रे स्यात् क्रियते तत्तदन्यथा।
तथापि तस्या लावण्यं रेखया किञ्चिदन्वितम्॥ १६॥

---

प्रणयादिभावभङ्गीविशेषो दर्शितः। चित्रे प्रकटितः। 'मधुरावस्थानदर्शनीयो भावानुप्रवेशः' इति पाठान्तरे-मधुरं यदवस्थानम्--आकृतिस्तया दर्शनीय इत्यर्थः। निम्नोन्नतप्रदेशेषु=उच्चावचप्रदेशेषु नितम्बादिषु। सत्त्वस्यानुप्रवेशस्य शङ्कया-सत्त्वानुप्रवेशशङ्कया=प्राणसम्बन्धशङ्कया। आलपने = भाषणे। कौतूहलं= कौतुकं—जनयति। भावभङ्गिललितेयं सजीवितेव चित्रप्रतिमा प्रतिभाति। तदहो! ते कौशलं चित्रलेखने इति भावः। राजर्षेः=दुष्यन्तस्य। वर्त्तिका-लेखनिपुणता = चित्रतूलिकाकर्मकौशलम्। जाने=मन्ये। प्रियसखी = शकुन्तला।

यद्यदिति। चित्रे यद्यत्—अङ्गं। न साधु=न सुन्दरम्। न मया स्वदोषा-देव साधु लिखितं। तत्—अन्यथा क्रियते=परावर्त्त्यापि लिख्यते मया। तथापि-तस्याः=शकुन्तलायाः। लावण्यं = कान्तिविशेषः। किञ्चित् = अनिर्वच-

---

एवं नाभि आदि नीचे ऊँचे ) स्थानों में अटक रही है। ज्यादा क्या कहूं—मुझे तो इस चित्र में प्राणसंचार की ही शङ्का हो रही है, और मालूम होता है, कि—यह चित्र अब बोलना ही चाहता है।

सानुमती—अहो! इस राजर्षि की चित्र लेखन की चतुरता भी प्रशंसनीय है। मुझे ऐसा मालूम होता है, कि—मेरी सखी शकुन्तला मानों मेरे सामनेही खड़ी है।

राजा—इस चित्र में मेरी प्रिया के जो-जो अङ्ग ठीक नहीं लिखे गये हैं, उनको मिटाकर पुनः ठीक तरह से बनाने पर भी, इसका लावण्य कम नहीं होता

---

१ 'लेहा' [ 'लेखा' ]। २ 'मेऽग्रतः' पा०।

तथाहि—

अस्यास्तुङ्गमिव स्तनद्वयमिदं, निम्नेव नाभिः स्थिता,
दृश्यन्ते विषमोन्नताश्च वलयो भित्तौ समायामपि ।
अङ्गे च प्रतिभाति मार्दवमिदं स्निग्धप्रभावाच्चिरं,
प्रेम्णा मन्मुखमीषदीक्षत इव, स्मेरा च वक्तीव माम् ॥ १७ ॥

नीयया । रेखया=शोभया । अन्वितं=युक्तमेव । संमार्ज्य संमार्ज्य भूयो-भूयो लिख्यमानमपि शोभां न जहातीति भावः । रेखालक्षणन्तु—

'शिरोनेत्रकरादीनामङ्गानां मेलने सति ।
कायस्थितिर्यतो नेत्रहरा 'रेखा' प्रकीर्त्तिता ॥' इति रत्नाकरे ॥१६॥

अस्या इति । अस्याः=चित्रफलकस्थायाः । समायामपि=अनुन्नताऽऽनतायामपि । भित्तौ = चित्रपटे । इदं स्तनद्वयं—तुङ्गमिव = उन्नतमिव । दृश्यते = विभाव्यते । नाभिः—निम्नेव = गम्भीरेव । न तु वस्तुतो निम्नैव । स्थिता—विभाव्यते । विषमाश्च ते उन्नताश्च—विषमोन्नताः = उन्नताऽऽनताः । वलयः = उदरभङ्गविशेषाः । दृश्यन्ते । अङ्गे च इदं = विभाव्यमानं । मार्दवं=सौकुमार्यम् । स्निग्धस्य प्रभावात् = वर्णलेपविशेषस्नेहानुषङ्गात् । चिरं = बहुलं । प्रतिभाति = भासते । प्रेम्णा मन्मुखम्-ईषत् = किञ्चिल्लज्जामन्थरम् । ईक्षते इव = विलोकय-

है, किन्तु इसके शरीर का लावण्य तो एक विशेष प्रकार की शोभा और कान्ति को धारण कर रहा है ॥ १६ ॥

जैसे—चित्र की भित्ति ( आधार ) समतल होने पर भी इस चित्र में ये दोनों स्तन ऊंचे व उभड़े हुए मालूम हो रहे हैं, नाभिभाग भी निम्न ( नीचा ) साफ मालूम हो रहा है । ये तीनों वलि ( पेट की तीनों लकीर ) नीची-ऊँची साफ २ मालूम हो रही हैं । और इसके अङ्गों की कोमलता एवं कान्ति ( लावण्य ) स्पष्ट प्रतीत हो रही है । प्रेम से मानों यह मेरा मुख देख रही है, और मुसकराती हुई, मानों मुझसे कुछ कह रही है, या मुझसे कुछ कहना ही चाहती है । अर्थात्—इस चित्र में उसके सभी अङ्ग प्रत्यङ्ग साफ साफ और उन्नत एवं निम्नरूप से दृष्टिगोचर हो रहे हैं, और यह चित्र मानों मुझसे बोलना ही

सानुमती—सरिसं एव्वं पच्छादावगुरुणो सिणेहस्स ।
[ सदृशमेवं पश्चात्तापगुरोः स्नेहस्य, ( अनवलेपस्य [1]च ) ]।
राजा—( निःश्वस्य— )

साक्षात्प्रियामुपगतामपहाय पूर्वं,
चित्रार्पितामहमिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य,
जातः सखे ! प्रणयवान्मृगतृष्णिकायाम् ॥ १८॥

---

तीव । किञ्च पुनः— स्मेरा = हासविकासिवदनकमला । मां—वक्तीव = माम् आभाषते इव । [ उत्प्रेक्षा । 'शार्दूलविक्रीडितम्' ] ॥ १७ ॥

पश्चात्तापेन गुरोः = प्रवृद्धस्य । स्नेहस्य = प्रेम्णः । सदृशम् = अनुरूपम् । एवम् = इत्थं चिन्तनं । विरहात्प्रवृद्धोऽस्य स्नेह इति भावः । ( पाठान्तरे- अनवलेपस्य = निर्दोषस्य, आर्जवस्य, अकृतकस्येत्यर्थः ) ।

साक्षादिति । हे सखे !—पूर्वं—साक्षात् = स्वयमेव । उपगतां = प्राप्तां। प्रियाम् = कान्ताम् । अपहाय = निरस्य । सम्प्रति—इमां चित्रार्पितां = चित्र-लिखितामपि । बहु मन्यमानः = महत्सुखसाधनं विभावयन् । पथि = मार्गे। निकाम जलं यस्यां–तां निकामजलाम् = प्रभूतजलां । स्रोतोवहां = निर्झरिणीम्। अतीत्य = उल्लङ्घ्य । विहाय । मृगतृष्णिकायां = मृगमरीचिकायां । प्रणयवान् = सतृष्णः।

---

चाहता है । समतल चित्रपट पर भी सभी कुच आदि अङ्गों का उभाड एवं निम्नता खूब सुन्दरता से दिखलाई पड़ रही है । अतः यह चित्र बड़ा ही सुन्दर बना है ॥ १७ ॥

सानुमती—पश्चात्ताप से गुरुतर ( महत्ता को प्राप्त ) इस स्नेह के सदृश ही राजा का यह व्यापार ( चित्रलेखन, अनुस्मरण आदि व्यापार ) है ।

राजा—( दीर्घ श्वास लेकर ) हे सखे ! साक्षात् ( स्वयमेव ) उप-स्थित ( घर में आई हुई ) प्रिया शकुन्तला को त्याग करके, अब चित्र लिखित

---

१ 'अनवलेपस्य च'—इति क्वचित् ।

विदूषकः—भो ! तिण्णिआ आइदिओ दीसन्ति, सव्वाओ ज्जेव दंसणीआओ, ता कदमा एत्थ तत्थभोदी सउन्तला ? ।

[ भोः ! तिस्र आकृतयो दृश्यन्ते । सर्वा एव दर्शनीयाः । तत्कतमाऽत्र तत्रभवती शकुन्तला ? ] ।

सानुमती—अणहिण्णो क्खु एसो सहीए रूवस्स मोहचक्खु, इअं क्खु ण से गदा पच्चक्खदं ? ।

[ [1]अनभिज्ञः खल्वेष सखीरूपस्य मोघचक्षुः । इयं खलु नाऽस्य गता प्रत्यक्षताम् ] ।

---

जातः = संवृत्तोऽस्मि । पूर्वं स्वयमुपस्थितामपि तां प्रियां विहाय सम्प्रति कृत्रिमे तच्चित्रे मनो योजयन्मूढ एवाऽहमिति भावः । [ निदर्शना । काव्यलिङ्गम् । 'वसन्ततिलका' ] ॥ १८ ॥

तिस्रः = शकुन्तला-ऽनसूया-प्रियंवदारूपाः । 'दृश्यन्ते' इत्यस्य 'चित्रे लिखिताः' इति शेषः । दर्शनीयाः = मनोहराः । कतमा = आसां मध्ये का ? । मोघे चक्षुषी यस्यासौ—मोघचक्षुः=निष्फलनेत्रः । ( पाठान्तरे—मोहदृष्टिः =

---

प्रिया के दर्शनों को ही मैं बहुत ( बड़े भाग्य से प्राप्त ) समझ रहा हूं ! । अतः हे मित्र ! मानों मैं मार्ग में प्राप्त प्रभूत जल से परिपूर्ण नदी को छोड़कर मृगतृष्णा में ही जलकी आशा कर रहा हूं ! ॥ १८ ॥

विदूषक—हे मित्र ! इस चित्र में तो ये तीन आकृति दीख रही हैं, जो तीनों ही सुन्दर और दर्शनीय हैं, इनमें श्रीमती शकुन्तलाजी कौन सी हैं ? ।

सानुमती—मालूम होता है—इसने सखी ( शकुन्तला ) के रूपको देखकर अपने नेत्र सफल नहीं किए हैं । अतः इसके ये नेत्र ही व्यर्थ हैं, जिसने शकुन्तला के ऐसे मनोहर रूप को अपनी आंखों से नहीं देखा है । [इसने सखी को देखा नहीं है, तभी तो यह पूछ रहा है ] ।

---

१ 'अनभिज्ञः खलु ईदृशस्य रूपस्य मोहदृष्टिरयं जनः'.पा० ।

राजा—त्वं तावत्कतमां तर्कयसि ? ।

विदूषकः—( निर्वर्ण्य- ) तक्केमि जा एसा सिढिलबन्धणुव्वन्तकुसुमेण केसहत्थेण, बद्धस्सेअविन्दुणा बअणेग, विसेसदो णमिदंसआहिं बाहुलदाहिं, [1]उच्चलिदणीविणा वसणेण अ इसीप्परिसन्ता विअ अहिसेअसिणिद्धदरपल्लवस्स बालचूअरुक्खस्स पास्से आलिहिदा एसा तत्थभोदी सउन्तला । इदराओ सहीओ त्ति ।

[ तर्कयामि-'यैषा शिथिलबन्धनोद्वान्तकुसुमेन केशहस्तेन, [2]बद्धस्वेदबिन्दुना वदनेन, विशेषतो [3]नमितांसकाभ्यां बाहुलताभ्यामुच्चलितनीविना[4] वसनेन च,-ईषत्परिश्रान्तेव-अभिषेकस्निग्धतरपल्लवस्य

मोहजडः । मूर्खः ) । तर्कयसि = विचारयसि । निर्वर्ण्य = नितरां दृष्ट्वा ।

शिथिलेन बन्धनेनोद्वान्तानि कुसुमानि यस्मात्-तेन = प्रश्लथबन्धननिर्गलितपुष्पेण । केशहस्तेन = केशपाशेन —उपलक्षिता । बद्धाः स्वेदस्य बिन्दवो यत्र, तेन = घर्मजलाञ्चितेन । मुखेन = वदनेन—उपलक्षिता । विशेषतः = विशेषेण । नामिता शाखा याभ्यां ताभ्यां-नामितशाखाभ्याम् = अवनामिताम्रशाखाभ्यां । बाहुलताभ्यां = भुजलताभ्याम्-उपलक्षिता । उच्चलितनीविना = स्रस्तनीविबन्धेन । पाठान्तरे-उच्छ्वसितनीविना = शिथिलाधोवस्त्रग्रन्थिना । वसनेन = वस्त्रेण-उपलक्षिता । ईषत्परिश्रान्तेव = जलसेचनादीषत्परिश्रान्तेव ।

राजा—अच्छा तुमही बताओ-तुम इनमें से किसको शकुन्तला समझ रहे हो ।

विदूषक—( चित्र को अच्छी तरह देखकर ) मैं तो यही समझता हूँ कि-इस चित्र में जिसके ढीले ढाले केश बन्धन ( जूड़े ) से फूल निकल रहे हैं, ( गिर रहे हैं, या उमड़ रहे हैं ), और जिसके मुख पर स्वेद के बिन्दु झलक रहे हैं, और झुके हुए कन्धों वाली भुजलताओं से, तथा अधखुली हुई ( ढीली ढाली ) नीवि ( धोती बाँधने की गाँठ ) वाली साड़ी से, जो कुछ श्रान्त और क्लान्त सी मालूम हो रही है, और जो जल देने से हरे भरे, लहलहाते हुए इस

१ 'उच्छसिद' पा० । २ 'बहुस्वेद' । ३ 'नामितशाखाभ्या'मिति, 'अपसृताभ्या'मिति च पाठान्तरम् । ४ 'उच्छ्वसितनीविना' पा० ।

बालचूतवृक्षस्य पार्श्वे आलिखिता, एषा तत्रभवती शकुन्तला। इतरे सख्यौ—' इति ]।

राजा—निपुणो भवान्!। अस्त्यत्र ममापि भावचिह्नम्,-

[१]स्विन्नाऽङ्गुलिविनिवेशाद्रेखा प्रान्तेषु दृश्यते मलिना।
अश्रु च कपोलपतितं लक्ष्यमिदं वर्णकोच्छ्वासात्॥ १६॥

अभिषेकेण स्निग्धतराः पल्लवा यस्य तस्य = जलसेकार्द्रकिसलयस्य। बालचूतवृक्षस्य = आम्रपादपस्य। पार्श्वे = निकटे। आलिखिता = उल्लिखिता।

अतोऽत्र यथैव प्रथमदर्शने शकुन्तला राज्ञा दृष्टा, तथैव तेन चित्रे लिखितेति ध्येयम्। निपुणः = पटुः। अस्त्यत्र = अस्या एव प्रतिकृतेरुपरि वर्त्तमानं। भावचिह्नं = मदीयाश्रुप्रस्वेदादिपतनाचिह्नम्। इत्थञ्च तैरेव चिह्नैर्ज्ञातुं शक्यते—एषा शकुन्तलेति।

मम = चित्रकारस्य मे। भावस्य = मद्गतस्य सात्त्विकभावस्य। चिह्नं = लक्ष्म—प्रस्वेदरेखादिकम्। अत्र = अस्मिन् चित्रफलके। यां प्रतिकृति—'शकुन्तलेय'मिति तर्कयसि, तस्यामेव अङ्गुलीस्पर्शादिना मत्सात्त्विकभावचिह्नं-प्रस्वेदरेखादिकं जातमित्याशयः।

चिह्नमेवाह—स्विन्नेति। प्रान्तेषु = चित्रफलकपर्यन्तभागेषु स्विन्नानाम-

बाल चूतवृक्ष ( आम के छोटे से वृक्ष ) के पार्श्व में ( बगल में ) लिखी हुई है, यही शकुन्तला है। बाकी ये दोनों सखियाँ हैं।

राजा—तुम बड़े बुद्धिमान् और निपुण हो। तुमने ठीक ही समझा है। यही शकुन्तला है। और देखो, इस शकुन्तला की प्रतिमा ( चित्र ) में मेरे भाव ( अनुराग ) के चिह्न भी दीख रहे हैं। जैसे-अपनी प्रिया को याद करने से मेरे

१ 'स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः।
अश्रु च कपोलपतितं दृश्यमिदं वर्त्तिकोच्छ्वासात्'॥

—इति पाठान्तरे,-मलिनः स्विन्नाङ्गुलिविनिवेशः, रेखाप्रान्तेषु-चित्रप्रान्तेषु-भाति। वर्त्तिका = चित्रपटे लेपविशेषः ( वार्निश )। उच्छ्वासः = उच्छूनता ('फूलना')। जलपतनान्मषी-पत्त्रादीनामुच्छूनता प्रसिद्धैवेत्याशयो बोध्यः।

( चेटीं प्रति- )

चतुरिके ! अर्द्धलिखितमेतद्विनोदस्थानमस्माभिः । तद्गच्छ । वर्त्तिकास्तावदानय ।

चेटी–अज्ज ! माहव्व ! अवलम्ब चित्तफलअं, जाव आअच्छामि। [ आर्य्य ! माधव्य ! अवलम्बस्व चित्रफलकं, यावदागच्छामि ]।

ङ्गुलीनां । विनिवेशात् = प्रस्वेदाविलाङ्गुलीसम्पर्कात् । मलिना = श्यामा । रेखा= अङ्गुल्यादिरेखा,–दृश्यते । च = पुनः । वर्णकस्य = रञ्जनवर्णस्य—( 'रंग' ) । उच्छ्वासात् = उच्छूनत्वात् । कपोलयोः पतितं = गण्डस्थलपतितम् —इदम्— अश्रु । लक्ष्यं = ज्ञातुं शक्यम् । अङ्गुलिरेखादिभिः स्वेदोऽनुमेयः, चित्रवर्णकोच्छूनत्वादिना चाऽश्रु लक्षणीयमिति भावः । [ अनुमानाऽनुप्रासौ ] ।। १६ ।।

एतद्विनोदस्थानं = मन्मनोमोदावहं चित्रम् । अर्द्धलिखितम् = अपूर्णमेवाऽद्य यावन्न समापितम् । वर्त्तिकाः = तूलिकाः, चित्रलेपद्रव्याणि च । ( रंग-कूँची ) ।

काम विकार जन्य प्रस्वेद से ( पसीने से ) गीली इन मेरी अंगुलियों के लगने से इस चित्र के प्रान्त ( अन्त के ) भाग में रेखाएँ मलिन हो रही हैं । और मेरे कपोलों से ढलक कर गिरे हुए अश्रु भी, रंग के फूल आने से स्पष्ट ही प्रतीत हो रहे हैं । अर्थात्–शकुन्तला के चित्र के लिखने के समय सात्त्विक भाव सूचक प्रस्वेद निकल आने से मेरी अङ्गुलियाँ गीली हो गईं, जिससे चित्र के प्रान्त भाग में जहाँ २ मेरी अङ्गुलियाँ लगी हैं, वहाँ २ चित्र की रेखाएँ मलिन हो गई हैं, और मेरे आँसु भी जहाँ २ गिरे हैं, वहाँ का रंग भी जल लगने से फूल गया है । इससे स्पष्ट सिद्ध होता है कि–यही उस शकुन्तला का चित्र है, जिसमें मेरा अनुराग है ॥ १९ ॥

[ चेटी से–]

अरी चतुरिके ! मेरे मन बहलाने का यह साधन–चित्रपट–अभी आधा ही लिखा गया है, अतः जा, और रंग की प्याली और कूची लेकर आ, जिससे मैं इस चित्रपट को पूरा करूँ ।

चेटी—आर्य माधव्य ! आप इस चित्रपट को थोड़ी देर पकड़ लीजिए जब तक मैं लौटकर आती हूँ । [ माधव्य = मथुरी = मथुरावासी चौबेजी ]।

राजा—अहमेवाऽऽलम्बे ( -इति यथोक्तं करोति )।

( चेटी—निष्क्रान्ता )।

विदूषकः—भो! किं एत्थ अवरं आलिहिदव्वं ?।

[ भोः! किमत्राऽपरमालिखितव्यम् ? ]।

सानुमती—'जो जो पिअसहीए अहिमदो पदेसो तं तं आलिहि-दुकामो'त्ति तक्केमि।

[ 'यो यः प्रियसख्या अभिमतः प्रदेशस्तं तमालेखितुकामः[1]'—इति तर्कयामि ]।

राजा—सखे! श्रूयताम्—

**कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी,**

**पादास्तामभितो निषण्णचमरा गौरीगुरोः पावनाः।**

---

'पटलेपे पक्षिभेदे तूलिकायाञ्च वर्तिका'-इत्यजयः। यथोक्तं करोति=आलम्बते।

अपरमिति। अन्यदपि किञ्चिदत्र चित्रपटेऽर्पणीयं वर्त्तते किमिति प्रश्नार्थः।

अभिमतः=प्रियः। आलेखितुकामः=लिलिखिषति।

कार्येति। सैकतलीनानि हंसमिथुनानि यस्याः सा तथा=बालुकानिविष्ट-हंसमिथुनमनोहरा। मालिनी स्रोतोवहा=मालिन्याख्या नदी। कार्या=आलेख्या। किञ्च—तां=मालिनीम्। अभितः=उभयतः। निषण्णा हरिणा येषु ते—निषण्ण-

---

राजा—मैं ही इसे पकड़ लेता हूं। ( राजा चित्रपट को हाथ में लेता है )।

[ चेटी—जाती है ]।

विदूषक—मित्र! इसमें अब और क्या लिखना बाकी रह गया ?।

सानुमती—जो २ प्रदेश ( स्थान ) मेरी सखी शकुन्तला को प्रिय थे, उन्हें ही यह इसमें लिखना चाहता है-मैं तो यही समझती हूं।

राजा—हे मित्र! सुनो—

इस चित्रपट में अभी-वालुकामय प्रदेश में हंस मिथुनों ( हंस के जोड़ों ) से शोभित मालिनी नदी लिखनी है। और उस नदी के दोनों तटों पर चमर

---

१ 'आलिखितुकामः' पा०। २ 'निषण्णहरिणाः' पा०।

शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः-
श्रृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥२०॥

विदूषकः—( स्वगतम् ) जधा मन्तेदि तधा तक्केमि पूरिदव्वं अणेण चित्तफलअं आकिदिहिं लम्बकुचाणं वक्कलपरिहाणाणं तावसाणं त्ति।
[ यथा मन्त्रयते[1] तथा तर्कयामि पूरयितव्यमनेन चित्रफलकमाकृतिभिर्लम्बकूर्चानां वल्कलपरिधानानां तापसानामिति ]।

---

हरिणाः=सुखोपविष्टहरिणयूथाः। 'निषण्णचमरा'इति पाठेऽपि स एवार्थः। चमरो हि मृगभेदः। गौरीगुरोः=हिमालयस्य। पावनाः=पवित्राः। पादाः=प्रत्यन्तपर्वतभागाः। 'कार्या' इति शेषः। च=किञ्च। शाखासु लम्बितानि वल्कलानि यस्य, तस्य=आतपशोषणाय शाखाप्रसारितवल्कलस्य। तरोः=वृक्षस्य-अधः,-कृष्णमृगस्य श्रृङ्गे स्वं वामनयनं कण्डूयमानां—मृगीं=हरिणीं,-निर्मातुं=चित्रे लेखितुम्। इच्छामि=वाञ्छामि। हिमालयप्रान्तवाहिन्या मालिन्यास्तटपरिसरे सैकतलीनहंसयुगलसनाथे, आश्रमाभोगतरुतलनिलीनकृष्णसारस्य श्रृङ्गकोणे स्ववामनयनं कण्डूयमानां हरिणीं लेखितुमिच्छामीति भावः। निपुणतरमुद्दीपनविभावोऽत्र महाकविना उपक्षिप्तः। [ स्वभावोक्तिः। अनुप्रासः। उदात्तम्। शार्दूलविक्रीडितम् ॥ २० ॥

मन्त्रयते, मन्त्रयति वा=कथयति। लम्बकूर्चानां=लम्बश्मश्रूणां। वल्कलं परिधानं येषां तेषां-तापसानाम्-आकृतिभिः=प्रतिकृतिभिः। चित्रफलकं=चित्रपटः। पूरयितव्यं भवेत्=संभरणीयं भवेत्। उपहासवाक्यमेतत्।

---

मृगों से युक्त गौरीगुरु हिमालय पर्वत के पाद ( पार्श्ववर्त्ती छोटे २ पाद पर्वत ) भी और लिखने हैं। और जिसकी शाखाओं पर वल्कल (भोज पत्र आदि के बने मुनियों के कपड़े) सूख रहे हैं, ऐसे वृक्ष के नीचे, काले हरिण के सींग के अग्रभाग से अपने बाएँ नेत्र को खुजलाती हुई, एक हरिणी भी लिखनी बाकी है ॥२०॥

विदूषक—(मन ही मन) जिस प्रकार यह कह रहा है, इससे तो मालूम होता है, यह तो लम्बी २ दाढ़ी वाले, वल्कलधारी तपस्वियों से ही इस चित्रपट को भर देगा।

---

१ 'मन्त्रयति'।

राजा—वयस्य ! अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतं लेखितुं विस्मृतमस्माभिः ।

विदूषकः—किं विअ ? ।

[ किमिव ? ] ।

सानुमती—वणवासस्स कण्णआभावस्स ( [1]सोउमारस्स विणअस्स [2] ) अ जं सरिसं भविस्सदि ।

[ वनवासस्य, कन्यकाभावस्य ( [1]सौकुमार्यस्य, विनयस्य [2] ) च यत्सदृशं भविष्यति ] ।

राजा—

कृतं न कर्णार्पितबन्धनं सखे !

शिरीषमागण्डविलम्बिकेसरम् ।

---

शकुन्तलाया अभिप्रेतं = प्रियं । प्रसाधनम् = अलङ्करणं । लेखितुं विस्मृतम् अत्र खल्वस्माभिः । किमिव = किन्तत् ?—इति प्रश्नः ।

बनवासोचितं—पुष्पधारणं, सौकुमार्यस्योचितं—कोमलतम-द्वित्रादिकुसुमधारणं, विनयस्य सदृशं च—वैजयन्तीमाला-शेखरादिव्यावर्त्तनमिति ध्येयम् ।

आलेख्यान्तरं निर्दिशति—कृतमिति । हे सखे ! कर्णे अर्पितं बन्धनं = वृन्तभागो यस्य तत्तथा = कर्णन्यस्तवृन्तम् । गण्डमभिव्याप्य विलम्बितुं शीलाः

---

राजा—हे मित्र ! और भी शकुन्तला के श्रृङ्गार के साधन, प्रिय आभूषणों को भी मैं लिखना भूल गया हूं । ( अतः उनको भी मैं इसमें लिखूँगा ) ।

विदूषक—कौन से प्रसाधनों को लिखना ( आभूषणों के लिखना ) आप भूल गये हैं ? ।

सानुमती—वनवास के, कन्या भाव के, सुकुमारता के और विनय के अनुरूप जो हों-उन साधनों को ही यह लिखना भूल गया है ।

राजा—हे सखे ! शकुन्तला के कानों में बन्धे हुए, कपोल तक लटकते

---

१ क्वचिन्न ।     २ 'अविणअस्स' [ अविनयस्य ] ।

न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ २१ ॥

विदूषकः—किण्णु क्खु तत्थभोदी रत्तकुवलअसोहिणा अग्गहत्थेण मुहं आवारिअ चकिदचकिदा विअ ट्ठिदा ?। ( सावधानं दृष्ट्वा- ) आः ! हीही भो ! एसो दासीएपुत्तो कुसुमरस-पाडच्चरो दुट्ठ-महुअरो तत्थभोदीए वअणकमलं अहिलसदि।

[ किंनु खलु तत्रभवती रक्तकुवलयशोभिनाऽग्रहस्तेन मुखमावार्य चकित-चकितेव स्थिता ?। आः ! हीही भोः ! एष दास्याः-पुत्रः

---

केसरा यस्य तत् = कपोलतलपर्यन्तलम्बमानकिञ्जल्कं । शिरीषं = शिरीषकुसुमं । न कृतं = नाऽत्र चित्रेऽर्पितं। शकुन्तलाप्रियत्वाच्च तदवश्यमत्राऽर्पणीयमित्याशयः।

वा=किञ्च । शरच्चन्द्रस्य मरीचिवत्-कोमलं=शरच्चन्द्रकिरणमृदुलं । ललितं । मृणालसूत्रं = बिसतन्तुपटलं । स्तनयोरन्तरे = पयोधरोत्सङ्गे । न रचितं = नार्पितं मया। तदप्यत्रालेख्यं विरहसन्तापसूचकत्वात्, तथा मया तत्राऽनुभूतत्वाच्चेत्याशयः। [ क्रियासमुच्चयः । उपमा । संसृष्टिश्चानयोः । वंशस्थं वृत्तम् ] ॥ २१ ॥

तत्र भवती = शकुन्तला । रक्तं यत्कुवलयं, तद्वच्छोभते तच्छीलेन = रक्त-कमलमनोहरेण । हस्तस्याग्रम्-तेन = करपल्लवेन । मुखं = वदनम् । आवार्य = पिधाय । चकितचकितेव = भीतभीतेव। किंनु खलु स्थिता? = कस्मात् स्थिता ?। सावधानं = सावहितं । 'ही ही' ति विस्मये । 'आः' ! 'भोः'—इति च कोपे।

---

हुए केसरों से युक्त, शिरीष (शिरिस) के पुष्पों का कर्णाभरण लिखना भी मैं भूल गया हूं। और शरद ऋतु के चन्द्रमा की किरणों की तरह श्वेत, मनोहर और मृदुल मृणालों ( कमल के श्वेत तन्तुओं ) का हार भी मैंने इसके कुचयुगल के बीच में लटकता हुआ नहीं लिखा है। अतः वह भी अभी इस चित्रपट में लिखना है ॥ २१ ॥

विदूषक—हे मित्र ! इस चित्रपट में यह श्रीमती शकुन्तला रक्त कमल की तरह शोभायमान अपने हस्तपल्लव ( हथेली ) से मुखको ढककर चकित और भीत की तरह क्यों खड़ी हैं ?। ( अच्छी तरह देखकर— ) ओह ! हो !

कुसुमरसपाटच्चरो दुष्टमधुकरस्तत्रभवत्या वदनकमलमभिलषति ! ]।

राजा--ननु वार्य्यतामेष धृष्टः ।

विदूषकः--भो ! तुमं ज्जेव अविणीदाणं सासिदा इमस्स वारणे पहवसि ।

[ भोः ! त्वमेवाऽविनीतानां शासिनाऽस्य वारणे प्रभवसि ]।

राजा--युज्यते । अयि भोः कुसुमलताप्रियाऽतिथे ! किमत्र परिपतनखेदमनुभवसि ? ।

---

'दास्याःपुत्र'इत्याक्रोशे । नीच इत्यर्थः । कुसुमरसानां पाटच्चरः=पुष्परसचौरः । दुष्टमधुकरः = नीचो, धृष्टो भ्रमरः वदनमेव कमलं=मुखपङ्कजम् । अभिलषति= इच्छत्याघ्रातुम । 'ननु' इत्यामन्त्रणेऽनयेऽनुज्ञायां वा । 'प्रश्नावधारणाऽनुज्ञाऽनुनयाऽऽमन्त्रणे ननु'-इत्यमरः । अविनीतानां = धृष्टानां शासिता = शासकः । प्रभवसि = समर्थोऽसि । युज्यते = युक्तियुक्तमुक्तं भवता । मयैव वारणीयोऽयं भ्रमर इत्याशयः ।

कुसुमयुक्तानां लतानां प्रियोऽतिथिस्तत्सम्बुद्धौ-हे कुसुमलताप्रियाऽतिथे = हे कुसुमलताप्रणयिन् ! । अत्र सम्बोधनपदे गूढो भावः । अत्र = वदनकमले । परिपतनात्खेदम = आक्रमणक्लेशम् किम् अनुभवसि = किमिति स्वीकुरुषे ।

---

हे मित्र ! देखो दासी का पुत्र रांड़का फूलों के रस का चोर, यह दुष्ट भ्रमर (भौंरा) श्रीमती शकुन्तला के मुख कमल के रस का पान करना ही चाहता है ! ।

राजा—तो तुम इस ढीठ और दुष्ट को रोको । इस भ्रमर को हटाओ ।

विदूषक—हे मित्र ! दुष्टों और अविनीतों ( कहा न मानने वाले, मर्यादा का उलङ्घन करने वाले, दुष्टों व बदमाशों, के शासन करने वाले (—दण्ड देने-वाले ) तो तुम ही हो । अतः इसको तुम ही रोक सकते हो ।

राजा—ठीक बात है । ( भ्रमर से—) हे फूलों से लदी हुई लताओं के प्रिय पाहुने ! भ्रमर ! इस शकुन्तला के मुखकमल पर बैठने के खेद को तुम क्यों स्वीकार कर रहे हो ? । तुम इस वृथा परिश्रम को क्यों (स्वीकार) कर रहे हो ? । देखो —

एषा कुसुमनिषण्णा

तृषिताऽपि सती भवन्तमनुरक्ता ।

प्रतिपालयति मधुकरी,

न खलु मधु त्वां विना पिबति ॥२२॥

सानुमती—अदिअत्थं क्खु वारिदो ।

[ अत्यर्थं खलु वारितः[1] ]।

विदूषकः—भो ! पडिसिद्धवामा क्खु एषा जादी ।

---

नाऽत्र तव कमलमधु सुलभमित्याशयः । सेवनोचितं स्थानं निर्दिशति-एषेति । एषा = चित्रलिखिता पुरोवर्त्तिनी । कुसुमे निषण्णा = कुसुमोपरि स्थिता । अनुरक्ता=अनुरागवती । मधुकरी=भ्रमरी । प्रतिपालयति=त्वां प्रतीक्षते । तृषिताऽपि सती-त्वां विना-मधु = पुष्परसं । न खलु = नैव-पिबति । अनेन स्नेहातिशयो व्यज्यते । तत्तामेवानुसर त्वम् । मा खलु मत्प्रियां क्लेशयेत्याशयो बोध्यः। [ अनुप्रासः । समासोक्तिः ] ॥२२॥

अत्यर्थं = नितान्तम् । सुन्दरतरया रीत्या । प्रियाह्वानसूचनेन इतो वारणमपि

---

यह फूलों पर बैठी हुई तुमारी प्रिया भ्रमरी, मकरन्द रस की प्यासी होती हुई भी, तुमारे में अनुरक्त होने के कारण, तुमारे बिना पुष्प रस का पान नहीं कर रही है, किन्तु तुमारी बाट देख रही है । अतः तुम तो उसको पास जाओ, और उसके साथ ही पुष्पों के मकरन्द रस का पान करो । और इस शकुन्तला के मुख कमल का पीछा छोड़ो ॥२२॥

सानुमती—वाह ! वाह !! क्या ही सुन्दर ढंग से राजा ने इस भ्रमर का निवारण ( निषेध ) किया है ।

विदूषक—हे मित्र ! यह जाति ( भ्रमर की जाति ) तो रोकने पर उलटा

---

१ 'अद्याऽभिजातं खल्वेष वारितः' इति पाठे—अभिजातं=न्यायानुमोदितेन पथा । समुचितम् । 'अभिजातः स्मृतो न्याय्ये' इति विश्वः ।

[ भोः ! प्रतिषिद्धवामा[1] खल्वेषा जातिः ] ।

राजा—( सकोपम्- ) भो ! न मे शासने तिष्ठसि ? । श्रूयतां तर्हि । सम्प्रति हि—

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं दशसि चेद् भ्रमर ! प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥२३॥

तस्य सुखदमेवेति भावः । प्रतिषिद्धा सती—वामा = विपरीताचरणप्रवणा । एषा जातिः = एषा भ्रमरजातिः । यतः प्रतिषिद्धोऽपि न निवर्त्तते इति भावः । शासने = आज्ञायाम् । 'प्रतिषिद्धाऽतिवामे'ति पाठान्तरम् ।

अक्लिष्टेति । हे भ्रमर ! अक्लिष्टः = न केनापि मर्दनादिनोपहतः । बालः = अभिनवः । तरोः, तरूणां वा—पल्लवाः = किसलयास्तद्वल्लोभनीयं = सुन्दरं । रतमेवोत्सवस्तेषु = सुरतमहोत्सवेष्वपि । मया—सदयं=सानुकम्पं । पीतम्=आस्वादितं । न निर्दयं मयोपभुक्तम् । प्रियायाः=मम प्रेयस्याः । बिम्बाधरं = बिम्बफलसदृशमधरं । स्पृशसि चेत् = दशसि चेत् । कमलस्योदरमेव बन्धनं तत्र तिष्ठति,

उसी काम को करने वाली है । अर्थात्—यह तो मना करने पर भी उसी काम को करने वाली जाति है । अर्थात्—तुमारे इस प्रकार मना करने पर भी यह शकुन्तला के मुखकमल का पीछा नहीं छोड़ रहा है । यह तो उसका पीछा अभी तक कर ही रहा है ।

राजा—(कुपित होकर—) हे भ्रमर ! क्या तू मेरी आज्ञा को नहीं मानता है ? । तो सुन । इस समय यदि—

हे भ्रमर ! मेरे द्वारा सुरतोत्सव के समय भी बड़ी दया से, धीरे२ (आहिस्ते२) उपभोग किया गया, आजतक मेरे सिवाय अन्य किसी से भी अभुक्तपूर्व, वृक्ष के कोमल पल्लव की समान मृदु, मेरी प्रिया के बिम्बाधरको तूं ( यदि ) काटना (पीना) चाहेगा, तो मैं तुझको कमल के उदर के भीतर बन्द कर दूगा । अर्थात्—

१ 'प्रतिषिद्धाऽतिवामा' पा० ।

विदूषकः—भो ! एव्वं तिक्खदण्डस्स दे कधं ण भइस्सदि ?। (विहस्याऽऽत्मगतम्—) एसो दाव उम्मत्तो, अहम्मि एदस्स सङ्गेण ईदिसो ज्जेव संवुत्तो।

[ भोः ! एव तीक्ष्णदण्डस्य ते कथं न भेष्यति !। एष तावदुन्मत्तः। अहमप्येतस्य सङ्गेन ईदृश एव संवृत्तः ! ]

---

तं = कमलोदरकुहरकारागारनिबद्धं। ·वां कारयामि एतेन कमलसङ्कोचकस्य सूर्यस्य निजाऽऽज्ञाकारित्वं ध्वन्यते। अन्योऽपि राजाऽऽज्ञामुल्लङ्घयन् कारागारे बध्यते। [ अतिशयोक्ति-समासोक्त्युपमा-रूपकानुप्रासाः। 'वसन्ततिलका'] ॥२३॥

एषः = भ्रमरः। तीक्ष्णदण्डस्य = उग्रदण्डस्य। ते = तव, त्वत्तः। पञ्चम्यर्थे षष्ठी। कथं न भेष्यति = कथं न भीतो भविष्यति, अवश्यमेव भीतो भविष्यति। एषः=राजा। उन्मत्तः = विक्षिप्तः। यदयं चित्रस्थं भ्रमरमपि दण्डयितुं व्यवस्यतीति भावः। ईदृशः = उन्मत्त इव। एतच्चित्तानुवर्तनस्याऽऽवश्यकत्वात्।

---

मेरी प्रिया के जिस कोमल पल्लव के समान अधरोष्ठ को मैंने सुरतोत्सव के समय भी बहुत धीरे २ पान किया है, उसी बिम्बाधरको तूं यदि पीएगा, उसका रसास्वाद लेगा, तो तुझको मैं कमलके भीतर कारागार में बन्द कर दूंगा। [ अन्य पुरुष भी परस्त्री के साथ यदि ऐसा अनुचित आचरण करता है, तो उसे राजाज्ञा से कारागार में ही बन्द किया जाता है। उसी प्रकार भ्रमर को भी कमल के भीतर बन्द करने की यह दण्डाज्ञा राजा ने सुनाई है ] ॥२३॥

विदूषक—हे मित्र ! तुम यदि इस भ्रमर को ऐसा कड़ा दण्ड दोगे, तो तुमसे यह अवश्य भय खाएगा !। अर्थात्—कमल के भीतर बन्द करना तो भ्रमर के लिए बहुत ही हल्का दण्ड हुआ, इससे यह क्यों डरेगा ? भ्रमर तो कमल के भीतर स्वयं ही रात्रिको बन्द होता है। यह तो इसके लिए दण्ड नहीं किन्तु अनुग्रह ही हुआ। अतः यह तुमसे क्यों डरेगा ? याने—यह दण्ड तो तुमने इसे बहुत ही हल्का दिया है।

( हंसकर मन ही मन—) यह राजा तो पागल हो ही रहा है, इसके संग से मैं भी पागल हो गया हूं। भला चित्र में सच्चा भ्रमर कहां है ?। अतः यह सब तो पागलपन की ही बातें हो रही हैं।

राजा—निवार्यमाणोऽपि कथं स्थित एव ! ।

सानुमती—अहो ! धीरम्पि जणं रसो विआरेदि ।

[ अहो ! धीरमपि जनं रसो विकारयति ] ।

विदूषकः—( प्रकाशम्—) भो ! चित्तं क्खु एदं ।

[ भो ! चित्रं खल्वेतत् ] ।

राजा—कथं चित्रम् ? ।

सानुमती—अहम्पि दाणिं अवगदत्था, किं उण जधाचिन्तिताणुसारी एसो ।

[अहमपि इदानीमवगताऽर्था, किं [1]पुनर्यथाचिन्तितानुसारी एषः] ।

निवार्यमाणः=निषिध्यमानः । स्थित एव=अवस्थित एव । न मत्प्रियानुवर्त्तनव्यापारान्निवर्त्तते इत्याशयः । रसः = अनुरागावेशः । विप्रलम्भो वा रसः । विकारयति = विक्लवयति । एतत् = भवद्धस्तस्थं । चित्रं = प्रतिमा । न वस्तुतः शकुन्तला । [ भ्रान्तिर्नाम सन्ध्यङ्गम् ] ।

सानुमत्या अपि राजवचनात्सत्यमियं शकुन्तलेति भ्रमस्तन्मयतया चित्रे जातः, स च विदूषकवचसा निरस्त इति स्थितिः । तदाह—अहमपीति । इदानीं = विदूषकवचनादवगतोऽर्थो यया सा = निश्चितार्था । यथाचिन्तितानु-

राजा—हैं ! मना करने पर भी यह तो अभी वहीं स्थित है, वहाँ से हटता ही नहीं है ! ।

सानुमती—अहो ! धीर गम्भीर पुरुष को भी प्रेम (या प्रेमी का विरह) पागल कर देता है । तभी तो यह राजा पागल की सी बातें कर रहा है ।

विदूषक—( प्रगट में ) हे मित्र ! यह शकुन्तला नहीं है, यह तो उसका चित्र है । इसमें सच्चा भ्रमर कहां से आया ? ।

राजा—हैं ! क्या यह चित्र है ? ।

सानुमती—मैं भी विदूषक के कहने से ही अभी समझ सकी हूँ, कि—यह सच्ची शकुन्तला नहीं है, किन्तु चित्र है। तो फिर अपनी भावना (वासना) के

१ 'किं पुनर्यथालिखितानुसार्येषः' पा० ।

राजा—किमिदमनुष्ठितं पौरोभाग्यम् ? ।

दर्शनसुखमनुभवतः
साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे
पुनरपि चित्रीकृता कान्ता ॥ २४ ॥

---

सारी = सङ्कल्पानुसारी । चित्रेऽपि प्रियां भावयन् । एषः = राजा । किं पुनः ! । अहं-सानुमत्यपि चित्रे—सत्यं शकुन्तलैवेयमिति भ्रान्ता, विदूषकवचनादेवे- दानीमेव प्रतिबुद्धा, तर्हि शकुन्तलागतमनोरथो राजा भ्रान्तश्चेत्तत्र किमु वक्तव्य- मित्याशयः । ममापि चित्रे यदि भ्रान्तिर्जाता, तर्हि राज्ञस्तु भ्रान्तिरुचितैव तद्रसाविष्टस्येति यावत् । पौरोभाग्यं = दोषैकदर्शित्वं । सूचकता । 'दोषैकदृक्पु- रोभागी'त्यमरः । अस्मिन्हि चित्रे—'नेयं वस्तुतः शकुन्तले'ति—दोषः कथमुद्भा- वितस्त्वयेत्युपालम्भः । नेदमुचितमाचरितं मत्सुखस्वप्नं विनाशयता त्वयेति यावत् ।

तदेवाह—दर्शनेति । तद्गतेन = प्रियागतेन । हृदयेन=मनसा । साक्षादिव- दर्शनसुखमनुभवतः = प्रियादर्शनानन्दं-भावयतः । मे = मम । स्मृतिकारिणा= 'चित्रमेत'दिति स्मरणं जनयता । त्वया=विदूषकेण । मम कान्ता—पुनरपि= भूयोऽपि । चित्रीकृता=चित्रतां प्रापिता । 'सत्यं मम प्रियैषे'ति भावनया प्रियाभूतं

---

पीछे उन्मत्त हुए इस राजा की तो बात ही क्या है ? । अर्थात्-इस चित्र को देखकर मुझे ही जब सच्ची शकुन्तला का इसमें भ्रम हो गया, तो शकुन्तला के पीछे ( उसके विरह ) विक्षिप्त हुए इस राजा को यदि भ्रम हुआ है, तो इसमें आश्चर्य ही क्या है ? ।

राजा—तुमने ऐसी दुष्टता ( चुगलखोरी ) क्यों की ? । अर्थात्—इसे चित्र बताकर मेरा सुख स्वप्न भङ्ग कर तुमने बहुत ही अनुचित कार्य किया है ।

साक्षात् प्रिया को ही सामने उपस्थित हुई समझकर तन्मय हृदय से उसके दर्शन का सुख अनुभव करते हुए मुझको-'यह तो चित्र है' ऐसा स्मरण दिलाते हुए तुमने मेरी प्रिया को फिर चित्र ही बना दिया है ! । अतः तुमने यह बड़ी ही दुष्टता, खलता एवं चुगलता का ही काम किया है । अर्थात्—अब तक जिसे

(—इति बाष्पं विसृजति )।

सानुमती—पुव्वापरविरुद्धो अपुव्वो एसो विरहिमग्गो।
[ पूर्वाऽपरविरुद्धोऽपूर्व [1]एष विरहिमार्गः ]।

राजा—वयस्य ! कथमेवमविश्रामं दुःखमनुभवामि ?।

प्रजागरात्खिलीभूतस्तस्याः स्वप्नसमागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ! ॥ २५ ॥

चित्रं-पुनस्त्वया स्मृतिमुपनयता चित्रतां नीतमिति भावः । [ उत्प्रेक्षा-ऽनुप्रासौ ] ॥ २४ ॥

पूर्वाऽपरविरुद्धः=असङ्गतः । भ्रान्तिनिराकरणेऽपि यत्रोपालम्भः, पूर्वं तां तथाऽनादृत्येदानीं मिथ्या परिदेवनमिति वा-पूर्वाऽपरविरोधो ज्ञेयः । विरहिमार्गः= वियोगिनां पन्थाः । विरहिदशा वा । न विश्रामो यस्य तत्तथा=अपारम् । अनवसितम् । अनन्तमिति यावत् ।

प्रजागरादिति । तस्याः=प्रियायाः। स्वप्नसमागमः=स्वप्ने दर्शन । प्रजागरात्= अनिद्रातः । खिलीभूतः=उपहतः । नष्टः । अनिद्रया विनाशितः । विघ्नितः । तु=पुनः ।

मैं अपनी प्रिया समझ कर प्रसन्न हो रहा था, उसे तुमने चित्र बनाकर, मेरा सुख स्वप्न ही भङ्ग कर दिया ॥ २४ ॥

[ आँसू बहाता है ]।

सानुमती—विरहियों का मार्ग भी पूर्वापर विरुद्ध एवं पागलपन से भरा हुआ होने से अपूर्व ( अद्भुत ) ही होता है। अर्थात्—चित्र को यदि चित्र कह दिया तो क्या अनुचित किया ?। पर स्वयं चित्र को लिखकर भी, उसे भ्रमवश सच्ची प्रिया समझने वाले इस राजा के कार्य तो पूर्वापर विरुद्ध, एवं पागलपन के ही हो रहे हैं।

राजा—हे मित्र ! मैं तो इस विरहजन्य दुःख को-जिसका अन्त मालूम ही नहीं पड़ रहा है-भोग रहा हूं । क्योंकि—

उस प्रिया का स्वप्न में भी कदाचित् समागम हो जाता, पर उसमें तो इस

१ 'एव विरहमार्गः' पाः ।

**सानुमती**—सव्वधा पमज्जिदं तुए पच्चादेसदुक्खं पिअसहीए पच्चक्खं ज्जेव सहिजणस्स।

[ सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः प्रत्यक्षमेव सखीजनस्य ]।

[ चतुरिका—प्रविश्य ]

**चतुरिका**—जेदु जेदु भट्टा। वत्तिआकरण्डअं गेह्निअ इदो अहं पत्थिदम्हि—'।

[जयतु जयतु भर्त्ता। वर्तिकाकरण्डकं गृहीत्वा इतोऽहं प्रस्थिताऽस्मि-']।

---

बाष्पः = नेत्राम्बु। एनां = प्रियां। चित्रगतामपि। द्रष्टुं न ददाति। एतेन अनवरतं मे बाष्पप्रसरः, अनिद्राऽरतिश्चेति सूचितम्। चित्रादिना मनोविनोदनमपि मे दैवं न सहते इति भावः। [ हेतुरनुप्रासाश्चालङ्काराः ]॥ २५॥

प्रत्यादेश एव दुःखं = निराकरणदुःखं। प्रमार्जितं=दूरीकृतं। प्रियसख्याः= शकुन्तलायाः। सखीजनस्य = मम सानुमत्याः। प्रत्यक्षमेव=समक्षमेव।

वर्त्तिकाकरण्डकं = वर्णकमञ्जूषाम्। ( रंग की पिटारी )। इतः=अस्यामेव

---

प्रजागर ने ( निद्रा के अभाव, रात-दिन के जागरण ने ) विघ्न कर रखा है। अर्थात्-निद्रा आवे तब तो स्वप्न में प्रिया का कदाचित् दर्शन हो, पर मुझे तो निद्रा ही नहीं आती है. मैं तो रातभर जागता ही रहता हूं। अतः स्वप्न में प्रिया के दर्शन की तो आशा भी नहीं रही। और चित्र में-अपनी प्रिया को देखकर मैं कुछ सन्तोष करता, पर यह अश्रुधारा मुझे चित्र को भी देखने नहीं देती है। अतः मेरे दुःखका तो पारावार ही नहीं है। क्या करूँ?॥ २५॥

**सानुमती**—तुमने मेरी प्रियसखी शकुन्तला के प्रत्याख्यान जन्य दुःखको उसकी सखियों ( हमारे ) के सामने ही बिलकुल दूर कर दिया। अर्थात्-इस प्रकार विरह दशा में तुम्हारे दुःख भोगने से तुमने हमारे सामने ही शकुन्तला के तिरस्कार का दुःख दूर कर दिया। [ भाव—शकुन्तला के विरह में तुमारी इस प्रकार हीनदशा को सुनकर शकुन्तला अपने तिरस्कार को जरूर भूल जाएगी ]।

[ चतुरिका का प्रवेश ]

**चतुरिका**—महाराज का जय जयकार हो। मैं रंग और कूचियों की पेटी लेकर इधर ही आ रही थी, कि·······'।

राजा—ततः किम् ?।

चेटी—तं मे हत्थादो पिङ्गलिआवेदिआए देवीए वसुमदीए—'अहं ज्जेव अज्जउत्तस्स उवणइस्सं'त्ति भणिअ सवलक्कारं गहीदं।

[ 'तन्मे हस्तात् पिङ्गलिकाऽऽवेदितया देव्या वसुमत्या—'अहमेवाऽऽर्यपुत्रस्योपनेष्यामी'ति भणित्वा सबलात्कारं गृहीतम् ]।

विदूषकः—तुमं कधं विमुक्का ?।

[ त्वं कथं विमुक्ता ? ]।

चेटी—जाव देवीए लदाविडपलग्गं उत्तरीअञ्चलं पिङ्गलिआ मोआवेदि दाव णिह्नुदो मए अप्पा।

[ यावद्देव्या लताविटपलग्नमुत्तरीयाऽञ्चलं पिङ्गलिका मोचयति तावन्निह्नुतो मयाऽऽत्मा ]।

---

दिशि। पिङ्गलिकया=तन्नाम्न्या चेटिकया। आवेदितया='वर्त्तिकाकरण्डकमेषा नयती'ति विज्ञापितया। सबलात्कारं=हठात्।

कथं विमुक्ता=त्वं कुतो न दण्डितेत प्रश्नाशयः। विटपः=विस्तारः। 'विस्तारो विटपोऽस्त्रिया' मित्यमरः। लग्नं = सक्तम्। उत्तरीयस्याञ्चलम्=उत्तरीय-

---

राजा—हाँ, तो—फिर क्या हुआ ? कहो।

चतुरिका—पिङ्गलिका के सिखाने से देवी ( रानी ) वसुमती जी ने 'मैं ही इसे महाराज के पास पहुँचा दूंगी' ऐसा कहकर उस वर्त्तिका की पेटी को मेरे हाथ से जबरदस्ती छीन लिया।

विदूषक—पर उन्होंने तेरे को राजी-खुशी कैसे छोड़ दिया ?। अर्थात् तेरे को पीटा कैसे नहीं।

चतुरिका—वृक्ष की शाखा में फंसे हुए रानी साहिब के उत्तरीय (डुपट्टे) के अञ्चल को जब तक पिङ्गलिका छुड़ाने लगी, तब तक मैं वहाँ से भाग कर छिप गई। इसीलिए रानी जी मुझे पीट तो नहीं सकीं।

राजा—वयस्य ! उपस्थिता देवी, बहुमानगर्विता च । तद्भवानिमां प्रतिकृतिं रक्षतु ।

विदूषकः—अत्ताणम्पि किं ति ण भणासि ? । ( चित्रफलकमादायोत्थाय च— ) जइ भवं अन्तेउर-कूडवागुरादो मुञ्चिस्सदि तदो मेहच्छण्णप्पासादे सद्दाबिस्सदि । एदं च तहिं गोवाएमि जहिं पारावदं उज्झिअ अण्णो कोवि ण पेक्खिस्सदि ।

( —इति द्रुतपदं निष्क्रान्तः ) ।

[ आत्मानमपि किमिति न भणसि ? । यदि भवानन्तःपुरकूटवागुरातो मोक्ष्यते, तदा[1] मेघच्छन्नप्रासादे [2]शब्दायिष्यते । इदञ्च तत्र गोपा-

---

चेलाञ्चलं । निह्नुतः = आच्छादितो लताविटपादिभिः । बहुना मानेन गर्विता= अतिमानदर्पिता । दृष्ट्वैवेमां प्रतिमां 'मत्सपत्नीमालिखती'ति कृत्वा मयि मानं कोपं वा विदध्यादित्याशयः प्रतिकृतिं=शकुन्तलाचित्रं । रक्षतु = गोपायतु ।

आत्मानमपीति । 'आत्मानमपि गोपाये'ति कुतो न कथ्यते ? । 'चित्रं गोपायेत्येव किमुच्यते'—इति शेषः । अतिरोषणायास्तस्याः पुरतः पलायनमेव युक्तमात्मरक्षणार्थमस्माकमित्याशयः । अन्तःपुरमेव–कूटवागुरा, तस्याः=अन्तःपुररूपान्मायाबन्धनात् । वसुमत्यादिप्रपञ्चादिति यावत् । 'शब्दापये'ति पाठे—

---

राजा—हे मित्र ! महारानी उपस्थित है ( आ रही है ), और वह बहुत मान करने वाली है, और गर्विता भी है । यदि इस शकुन्तला के चित्र को वह देख लेगी, तो मान से कुपित हो जाएगी, और हमारे को बुरा-भला भी कहेगी। अतः इस चित्र की तुम रक्षा करो । इसे कहीं छिपा दो ।

विदूषक—आप इस चित्र की रक्षा की बात ही क्या कह रहे हैं, अपनी रक्षा की भी बात कहिए । अर्थात्-वह तो आप के प्रति भी बहुत ही नाराज होगी । ( चित्रपट को लेकर उठकर— ) यदि आप इस अन्तःपुर ( रानियों ) की कूट वागुरा ( गहरे जाल ) से किसी प्रकार बच सको, तो मुझे मेघच्छन्न प्रासाद (गगन चुम्बी ऊँचा महल, बुर्ज ) में आवाज देकर आप बुला लीजिएगा।

---

१ 'मेघप्रतिच्छन्दके' पा० । २ 'शब्दापय'-पा० ।

यामि यत्र पारावतमुज्झित्वाऽन्यः कोऽपि न प्रेक्षिष्यते ]।

**सानुमती**— अम्हा ! अण्णसंकन्तहिअओ वि पढमसम्भावणं रक्खदि । थिरसोहिदो दाव एसो ।

[ अम्मो ! अन्यसंक्रान्तहृदयोऽपि प्रथमसम्भावनं रक्षति । स्थिर-सौहृदस्तावदेषः ]।

( प्रविश्य पत्रहस्ता प्रतीहारी- )

**प्रतीहारी**—जेदु जेदु देवो ।

[ जयतु जयतु देवः ]।

---

आह्वयेत्यर्थः । इतो विमुच्य—मेघप्रतिच्छन्दके आगन्तव्यमित्याशयः । पारा-वतम् = कपोतम् । उज्झित्वा = विहाय । द्रुतानि पदानि यस्मिन् कर्मणि तद्यथा स्यात्तथा—द्रुतपदं=त्वरितपदन्यासम् ।

अन्यस्यां सङ्क्रान्तं हृदयं यस्यासौ तथा=शकुन्तलासक्तचित्तोऽपि । प्रथम-सम्भावनं=अन्यासां देवीनामपि पूर्वानुरागम् । स्थिरः स्नेहो यस्यासौ स्थिरस्नेहः=

---

अर्थात्-रानी से आपका जल्दी ही पीछा छूटना तो बहुत ही कठिन है, पर यदि उससे किसी तरह आप बच निकलें, तो मुझे ऊँचे बुर्जवाले महल में से बुला लें। इस चित्रपटको तो मैं ऐसी जगह छिपा दूंगा, जहाँ कबूतरों के सिवाय दूसरा देख ही नहीं सकेगा। अर्थात्-इतनी ऊँची जगह इसे छिपाऊँगा जहाँ केवल कबूतर ही जा सकते हैं, मनुष्य नहीं ।

**सानुमती**—यह राजा अन्य कान्ता ( शकुन्तला ) में आसक्त हृदय होकर भी अपने पहिले प्रेम की (पुरानी रानियों से प्रेम, उनके मान और भावना की) रक्षा कर रहा है, और उन्हें भी प्रसन्न रखना चाहता है। इसी लिए चित्रपट को छिपा दिया है, जिससे पुरानी रानी वसुमती उसे देखकर अप्रसन्न न हो जाए। ठीक है, यह राजा स्थिरसौहृद = दृढप्रेमवाला-है। दूसरी स्त्री से प्रेम करके भी पहिले की प्रेमपात्र रानियों को भूल नहीं जाता है, किन्तु उनका भी पहिले की ही तरह मान-संमान रखता है ।

[ पत्र हाथ में लिए हुए प्रतीहारी का प्रवेश ]।

**प्रतीहारी**—महाराज की जय, जयकार हो !

राजा—वेत्रवति ! न खल्वन्तरे त्वया दृष्टा देवी ?।

प्रतीहारी—देव ! दिट्ठा। पत्ताहत्थं मं पेक्खिअ पडिणिउत्ता। [ देव ! दृष्टा, पत्त्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता ]।

राजा—कार्य्यज्ञा देवी कार्य्योपरोधं मे परिहरति।

प्रतीहारी—देव ! अमच्चो विण्णवेदि—'अज्ज रज्जकज्जस्स बहुलदाए एक्कं ज्जेव मए पोरकज्जं पच्चवेक्खिदं, तं देवो पत्तरोविदं पच्चक्खीकरेदु' त्ति।

[ देव ! अमात्यो विज्ञापयति—'अद्य राज्यकार्य्यस्य बहुलतया एकमेव मया पौरकार्य्यं प्रत्यवेक्षितं, तद्देवः पत्त्रारोपितं प्रत्यक्षीकरोतु' —इति ]।

---

दृढानुरागः। वसुमतीप्रणयमर्यादापालनादिति भावः। अन्तरे = मार्गमध्ये। खलुरत्र प्रश्ने। प्रतिनिवृत्ता = स्वभवनमेव गता। अन्तःपुरभवनमेव प्रविष्टा। कार्यं जानातीति—कार्यज्ञा। कार्यज्ञा=अवसरज्ञा। कार्यगौरवाभिज्ञा वा। कार्यस्योपरोधं = कर्त्तव्याघातं। कार्यविघ्नं। परिहरति=निवारयति। न कुरुते। राज्यकार्यस्य = सन्धिविग्रहादिकार्यस्य। पौरकार्यं=पुरवासिश्रेष्ठिजनादिकार्यम्। प्रत्यक्षी-

---

राजा—हे वेत्रवति ! तैंने रास्ते में कहीं महारानी को भी देखा है ?।

प्रतीहारी—हाँ महाराज ! महारानी मुझे रास्ते में आती हुई मिली थीं, पर मुझे सर्कारी पर्वाना लाते हुए देखकर वे रास्ते से ही वापिस चली गईं। ( महल को ही वापिस लौट गईं )।

राजा—ठीक है, रानी राजकार्य की गुरुता को समझती हैं, वे मेरे राज-काज में विघ्न नहीं करती हैं।

प्रतीहारी—महाराज ! प्रधानमन्त्री पिशुनस्वामी निवेदन करते हैं, कि—आज राज्य सम्बन्धी और बहुत से कार्यों के उपस्थित हो जाने से, मैं केवल नगरवासियों के एकही कार्य ( मुकद्मे ) को देख सका हूं। उस कार्य को मैं इस पत्र पर लिखकर भेज रहा हूँ, महाराज इसको देख लें।

राजा—इतः पत्रं दर्शय।

( प्रतीहारी—उपनयति )।

राजा—( वाचयति—) 'विदितमस्तु देवपादानां—'धनवृद्धिर्नाम वणिग्वारिपथोपजीवी नौव्यसनेन विपन्नः। स चाऽनपत्यः। तस्य चाऽनेककोटिसङ्ख्यं वसु। तदिदानीं राजस्वतामापद्यते' इति श्रुत्वा देवः प्रमाणम्-'इति। (सविषादम्—) कष्टं खल्वनपत्यता। वेत्रवति! महा-

---

करोतु = विलोकयतु। उपनयति = अर्पयति।

देवपादानां = महाराजस्य। 'पाद'शब्दोऽत्र पूजायाम्। वारिणः पन्थाः—वारिपथस्तेनोपजीवति—सः वारिपथोपजीवी = समुद्रगामी। पोतवणिक्। नौव्यसनेन = पोतस्य विनाशेन। विपन्नः = मृतः। अनपत्यः = सन्तानविकलः। कोटयः सङ्ख्या यस्य तत्तथा = अनेककोटिपरिमितं। वसु = धनं। राजस्वतां = राजधनत्वं। राजा एव तस्याधिकारीति निश्चितमस्माभिरिति भावः। देवः प्रमाणमिति। यथा प्रभवे रोचते तथाऽनुमन्यतामित्यर्थः। 'इतरेषां तु वर्णानां सर्वाऽभावे हरेन्नृपः' इति हि मनुः।

अनपत्यता = सन्तानराहित्यम्। कष्टं = दुःखप्रदं। महद्धनं यस्यासौ-

---

राजा—इधर ला, मुझे पत्र दिखा।

[ प्रतीहारी—राजा को पत्र देती है ]।

[ राजा—पत्र बाँचता है- ]।

"महाराज को विदित हो, कि-'धनवृद्धि नाम का वैश्य ( सेठ ) जो कि समुद्र में जहाज द्वारा माल लाने व ले जाने का व्यापार करता था, वह समुद्र में जहाज के डूब जाने से पर लोक को चला गया है। उसके कोई सन्तान नहीं है। और उसके पास कई करोड़ रुपये की सम्पत्ति है। ( कई करोड़ रुपया छोड़ कर वह निःसन्तान ही चल बसा है )। अतः उसका वह सब धन उत्तराधिकारी के अभाव में राजा का ही होता है। इस बात को सुनकर आगे महाराज मालिक हैं, जो चाहें सो आज्ञा देवें।"

( बड़े विषाद और शोक से-) हाय! अनपत्यता (सन्तान का अभाव) भी

धनतया बहुपत्नीकेनाऽनेन भवितव्यं, तदन्विष्यतां यदि काचिदापन्नसत्त्वाऽस्य भार्य्या स्यात् ?।

**प्रतीहारी**—दाणिं ज्जेव साकेदउरस्स सेट्ठिणो दुहिदा णिव्वुत्तपुंसवणा तस्स जाआ सुणीअदि।

[ इदानीमेव साकेतपुरस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना तस्य जाया श्रूयते ]।

**राजा**—'स खलु गर्भः पित्र्यमृक्थमर्हति'–गत्वैवममात्यं ब्रूहि।

**प्रतीहारी**—जं देवो आणवेदि। ( इति प्रस्थिता )।

[ यद्देव आज्ञापयति ]।

**राजा**—एहि तावत्।

---

तस्य भावस्तया = महाधनाढ्यतया। बह्वयः पत्न्यो यस्य—तेन—बहुपत्नीकेन = बहुभार्येण। आपन्नसत्त्वा = गर्भिणी। अन्विष्यतां=निपुणं निरीक्ष्यताम्। साकेतः पुरं ( निवासः–) यस्य,—तस्य—साकेतपुरस्य = अयोध्यानिवासिनः-'स्यात्साकेतोऽयोध्यायाम्' इति हैमः। श्रेष्ठिनः=धनिनः। निर्वृत्तं पुंसवनं यस्या। सा = जातपुंसवनसंस्कारा। तस्य = धनवृद्धेः श्रेष्ठिनः। गर्भः = गर्भस्थः पुत्रः। पितुरागतं—पित्र्यं=पितृसम्बन्धि। ऋक्थं=धनं। 'रिक्थमृक्थं धनं वसु' इत्यमरः।

---

बड़ी कष्टप्रद होती है। हे वेत्रवति ! यह तो बड़ा धनी था, अतः इसके तो अनेक स्त्रियाँ होंगी, अतः खोज करो, कदाचित् इसकी कोई स्त्री गर्भवती हो।

प्रतीहारी—महाराज ! अयोध्यावासी सेठ की पुत्री–जो इसकी भार्या है, गर्भवती है। उसका पुंसवन संस्कार अभी अभी हुआ है, ऐसा सुना जाता है ( पुंसवन संस्कार गर्भ के छठे या आठवें मास में होता है )।

राजा—वही गर्भ ( गर्भस्थ बालक ) अपने पिता के इस धन का मालिक होने योग्य है—ऐसा अमात्य पिशुन को जाकर कह दो।

प्रतीहारी—जो महाराज की आज्ञा। ( जाने लगती है )।

राजा—प्रतीहारि ! यहाँ आ।

प्रतीहारी—( प्रतिनिवृत्य— ) ऐसा ह्मि ।

[ एषाऽस्मि ] ।

राजा—किमनेन 'सन्ततिरस्ति नास्ती'ति ? ।

'येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।

स स पापादृते तासां दुष्यन्त' इति–घुष्यताम् ॥२६॥

---

एहि तावत् = प्रतिनिवर्त्तस्व तावत् । किञ्चिच्छ्रुत्वा पश्चाद्गन्तव्यम् । सन्ततिरस्ति नास्तीति विचारेण—किं ? = न किमपि प्रयोजनम् ।

तदा किं कार्यमित्यत आह —येनेति । येन येन स्निग्धेन=येन येन प्रियेण । बन्धुना=पितृभ्रातृपुत्रादिना । प्रजाः — वियुज्यन्ते=विरहिता भवन्ति । पापदृते= पापसम्बन्धं विहाय । स्त्रीणां पतित्वं, पुंसां भार्यात्वं च विहाय । तासां=प्रजानां । स सः = यस्य पिता नास्ति तस्य दुष्यन्तः पिता । भ्रातृविगमे दुष्यन्त एव भ्राता । पुत्रविगमे च दुष्यन्त एव पुत्र इत्येवमेव । घुष्यतां = प्रजायां घोषणा क्रियताम् । यस्याः पतिर्मृतस्तस्यास्तु नाहं पतिरिति–'पापादृते'–इत्यनेन सूचितम् । [ अनुप्रासः ] ॥ २६ ॥

---

प्रतीहारी—( वापिस लौटकर ) महाराज! मैं उपस्थित हूँ । क्या आज्ञा है ? ।

राजा—'किसी के सन्तान है, या नहीं' इस विचार की कोई भी आवश्यकता नहीं है । अमात्य पिशुन से कहो कि—

'मेरी प्रजा में जिसका जो भी प्रिय बन्धु-बान्धव चला जाए, उसके लिए मैं दुष्यन्त ही उसके प्रिय बन्धु-बान्धव की जगह हूं, पर केवल पाप सम्बन्ध को छोड़ कर । अर्थात्—यदि किसी स्त्री का पति चला जाएगा, तो मैं उसका पति नहीं हो सकता हूँ, क्योंकि यह तो पाप सम्बन्ध हुआ, किन्तु यदि किसी का पुत्र या पिता चला जाए, तो मैं ही उसका पुत्र या पिता हूं । किसी को किसी प्रकार की चिन्ता करने की आवश्यकता नहीं है' यह घोषणा राज्य भर में करा देवें ॥ २६ ॥

प्रतीहारी—एदं णाम घोषइदव्वं। (-इति निष्क्रम्य पुनः प्रविश्य-) देव ! काले पविट्टं विअ अहिणन्दिदं देवस्स सासणं महाजणेण।

[ एवं नाम[1] घोषयितव्यम्। देव ! काले प्रवृष्टमिवाऽभिनन्दितं देवस्य शासनं महाजनेन ]।

राजा—( दीर्घमुष्णञ्च निःश्वस्य— ) एवं भोः ! सन्ततिविच्छेद-निरवलम्बना मूलपुरुषाऽवसाने सम्पदः परमुपतिष्ठन्ते। ममाऽप्यन्ते पुरु-वंशश्रिय एष (एव) वृत्तान्तः[2]।

---

एवम्=ईदृशमेव !। घोषयितव्यं = घोषणामर्हति। उचितमेतदिति भावः। ( वाह वाह ! इसका नाम है घोषणा ! )। महाजनेन = पौरवर्गेण। काले प्रवृ-ष्टमिव = उचितसमयवृष्टिरिव। देवस्य शासनं = राजघोषणा। अभिनन्दितम्= साधु स्वीकृतम्।

एवम् = एवमेव। धनवृद्धिश्रेष्ठिधनवत्। सन्ततिच्छेदेन निरवलम्बनाः = निराश्रयाः। सन्तानाऽभावात्। आश्रयविकलाः सत्यः। अवसाने = धनिजन-मरणे। मूलपुरुषः = वंशस्याऽऽदिमः पुरुषः। सम्पदः = वसूनि। परम् = अन्यं। राजादिकम्। उपतिष्ठन्ते = सङ्गता भवन्ति। [ ममापि=पुरुवंशाऽन्तिम-पुरुषस्य। अन्ते = अवसाने। परलोकगमने। एषः=अन्यहस्तसमागमः। पुरु-वंशश्रीः = पुरुवंशराजलक्ष्मीः। अकाले = अनवसरे। उप्तबीजा=रोपितबीजा। भूरिव = भूमिरिव। एवं संवृत्ता=ईदृशीं दशां गता। शोचनीया संवृत्ता ]।

---

प्रतीहारी—वाह ! इसका नाम घोषणा है !। (बाहर जाकर फिर आकर) महाराज ! आपकी इस घोषणा को प्रजाओं तथा महाजनों ने समय पर हुई वृष्टि की तरह बहुत ही पसन्द किया है। अर्थात्-महाराज की आज्ञा को सबने शिर पर धारण किया है, और सभी इससे प्रसन्न हुए हैं।

राजा—( दीर्घश्वास छोड़ ) अहो ! इसी प्रकार सन्तान के अभाव में, अवलम्ब रहित हो, मूल पुरुष के मरने पर सम्पत्ति ( धन-दौलत-राज्य ) दूसरों के हाथ में चली जाती है। मेरे बाद पुरुवंश की परम्परागत हमारी इस राजलक्ष्मी की भी यही दशा होगी।

---

१ 'एतन्नाम' पा०। २ 'ममाप्यन्ते पुरुवंशश्रीरकाल इवोप्तबीजा भूरेवं संवृत्ता'।

प्रतीहारी—पडिहदं अमङ्गलं।

[ प्रतिहतममङ्गलम् ]।

राजा—धिङ् मामुपनतश्रेयोऽवमानिनम्।

सानुमती—असंसअं पिअसहीं ज्जेव हिअए कदुअ णिन्दिदो अणेण अप्पा।

[ असंशयं प्रियसखीमेव हृदये कृत्वा निन्दितोऽनेनाऽऽत्मा ]।

राजा—

संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा।
कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तबीजा ॥ २७ ॥

---

प्रतिहतमिति। राज्ञोऽमङ्गलाशंसनं श्रुत्वा 'शुभं भवत्वि'ति प्रतिहार्या वचः। हृदये कृत्वा=विचिन्त्य।

संरोपित इति। काले=बीजारोपणयोग्ये समये। उप्तानि बीजानि यस्यां सा तथा=कृतबीजवपना। अत एव–महते=अनल्पाय। फलाय=लाभाय। कल्पिष्यमाणा=सम्पत्स्यमाना। वसुन्धरेव=भूमिरिव। मया आत्मनि संरोपितेऽपि=गर्भरूपेण योजितेऽपि। 'आत्मा वै जायते पुत्रः' इति श्रुतेः। कुलस्य

---

प्रतीहारी—ऐसा अमङ्गल दूर हो। यह पाप शान्त हो। महाराज ! ऐसी अमङ्गल की बात तो आप मुख से भी न निकालें।

राजा—प्राप्त हुए कल्याण का ( गर्भवती भार्या शकुन्तला का ) तिरस्कार करने वाले मुझको धिक्कार है !

सानुमती—मालूम होता है अवश्य ही इसने मेरी सखी शकुन्तला को लक्ष्य करके ही इस प्रकार अपनी ( आत्मा की ) निन्दा की है।

राजा—उचित समय में ही जिसमें बीजों का वपन कर दिया गया हो, और जो महान् फल को उत्पन्न करने वाली हो, ऐसी पृथ्वी की तरह–जिसमें अपने को

सानुमती—अपरिच्चत्ता दाणिं दे भविस्सदि।

[ अपरित्यक्तेदानीं ते भविष्यति ]।

चतुरिका—( जनान्तिकम् ) अज्जे एदं पत्तं पेसअन्तेण किं विआरिद अमच्चेण। पेक्ख दाव—भट्टिणो बाहजलप्पवाहो संवुत्तो। अधवा-ण एस सोअं बुद्धिपुव्वअं पडिविज्जस्सदि। ता मेहच्छण्णागारट्ठिदं णिव्वाणसमत्थं अज्जमाहव्वं गेण्हिअ आअच्छ।

[ आर्ये ! एतत्पत्रं प्रेषयता किं विचारितममात्येन ?। प्रेक्षस्व तावत्-भर्त्तुर्बाष्पजलप्रवाहः संवृत्तः !। [1]अथवा नैष शोकं बुद्धिपूर्वकं

प्रतिष्ठा = वंशप्रतिष्ठाहेतुः। धर्मपत्नी = भार्या शकुन्तला। त्यक्ता = अवमानिता। नामेति निन्दायाम्। उचिते समये कृष्टा भूमिरिव गर्भाधानविधिना मया निहितगर्भाऽपि शकुन्तला मयाऽवधीरितेति महदनौचित्यं मे–इति भावः। [ काव्यलिङ्गम्। उपमा। 'उपजातिः' ]॥ २७॥

अपरित्यक्ता = लब्धा। जनान्तिकम् = त्रिपताककरेण अन्यानपवार्य। आर्ये = प्रतिहारि !। एतत्पत्रं = धनवृद्धिवृत्तान्तपत्रं। बाष्पजलस्य प्रवाहः =

ही मैंने गर्भरूप से स्थापित कर दिया था, ऐसी मेरी कुल की प्रतिष्ठा और वंश को बढ़ाने वाली अपनी धर्मपत्नी ( शकुन्तला ) का मैंने त्याग कर दिया है। अर्थात्—जिसको मेरे द्वारा गर्भ हो गया था, ऐसे अपनी धर्मपत्नी शकुन्तला को छोड़कर मैंने अपने वंश की प्रतिष्ठा और वंश की वृद्धि को ही नष्ट कर दिया है। [मनुष्य अपनी स्त्री के पेट में स्वयं ही गर्भ रूप हो प्रविष्ट होता है। 'आत्मा वै जायते पुत्रः' 'गर्भो भूत्वा जायां प्रविशति' इत्यादि वचन इसमें प्रमाण हैं] ॥२७॥

सानुमती—अब शीघ्र ही वह आपसे अपरित्यक्ता हो जाएगी। अर्थात्–शीघ्र ही उससे आपका मिलाप होगा।

चतुरिका—( अलग से प्रतीहारी से—) आर्ये ! इस पत्र को भेजते हुए अमात्य ने क्या विचार किया ! अर्थात्–कुछ भी विचार नहीं किया। क्योंकि

[1] 'चतुरिका—अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्ता। एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यमाधव्यं गृहीत्वाऽऽगच्छ' पा०।

परिवर्जयिष्यति । तन्मेघच्छन्नाऽगारस्थितं निर्वाणसमर्थमार्य्यमाधव्यं गृहीत्वाऽऽगच्छ ]।

प्रतीहारी—सुट्ठु दे भणिदं। ( -इति निष्क्रान्ता )।

[ सुष्ठु त्वया भणितम् ]।

राजा—अहो ! दुष्यन्तस्य संशयमारूढाः पिण्डभाजः!। कुतः?—

'अस्मात्परं बत यथाश्रुति संभृतानि[1]

को नः कुले निवपनानि करिष्यती'ति ?।

नूनं प्रसूतिविकलेन मया प्रसिक्तं

धौता[2]ऽश्रुसेकमुदकं पितरः पिबन्ति ॥ २८ ॥

---

अश्रुधाराऽऽसारः। संवृत्तः = जातः। बुद्धिपूर्वकं = स्वयं विचार्यैव। परिवर्जयिष्यति = त्यक्ष्यति। निर्वाणसमर्थं = शोकापनोदकुशलम्।

संशयं = पिण्डलाभसंशयम्। आरूढाः = प्राप्ताः। पिण्डभाजः = पितरः। वंशच्छेदशङ्कया पितरो नूनं मे चिन्तिताः स्युरिति भावः।

पितृचिन्तामेवाह—अस्मादिति। 'बत' इति खेदे। अस्मात्=दुष्यन्तात्-परं। श्रुतिमनतिक्रम्य-यथाश्रुति=वेदोदितेन विधिना। सहितानि=पितृहितानि। 'सम्भृतानी'ति पाठे-नानोपकरणयुतानि परिपूर्णानि निवपनानि =

---

तुम ही देखो--महाराज के नेत्रों से आँसुओं की धारा ही बह रही है। अथवा-महाराज इस सन्तान के अभाव के शोक को अपने से तो जल्दी नहीं छोड़ेंगे। अतः मेघच्छन्न महल से आर्य माधव्य को ही बुलाकर शीघ्र ही सङ्ग लेकर आओ। वे ही इनके इस शोक को शान्त कर सकते हैं।

प्रतीहारी—तुम बहुत ठीक कहती हो। ( जाती है )।

राजा—अहो ! मुझ दुष्यन्त के पिण्डभागी पितृगण 'अब उनको आगे पिण्ड कौन देगा'-इस संशय को प्राप्त हो रहे हैं। क्योंकि—

सन्तान से रहित मेरे द्वारा दिए गए तर्पण के जल को, हमारे पितृ लोग

---

१ 'संहितानि' पा०। २ 'धौताश्रुसेकम्' पा०।

**सानुमती**—हद्धी हद्धी ! सदि क्खु दीवे ववधाणदोसेण अन्धआरं अणुहोदि राएसी।

[ हा धिक् ! हा धिक् ! सति खलु दीपे व्यवधानदोषेणाऽन्धकारमनुभवति राजर्षिः ]।

**चतुरिका**—भट्टा अलं सन्दाविदेन, वअत्थो ज्जेव पहू अवरासु देवीसु अणुरूवपुत्तजम्मेण पुव्वपुरुसाणं अणिणो भविस्सदि। ( आत्मगतम्– ) ण मे वअणं पडिच्छदि। अणुरूवं वि ओसधं आदङ्कं णिअत्तेदि।

[ भर्त्तः ! अलं सन्तापितेन। वयस्थ एव प्रभुरपरासु देवीष्वनुरूपपुत्रजन्मना पूर्वपुरुषाणामनृणो भविष्यति। न मे वचनं प्रतीच्छति।

श्राद्धादीनि पितृदानानि। 'पितृदानं निवापः स्या'दित्यमरः। नः = अस्माकं। कुले = पुरुवंशे। कः करिष्यति–इति=इति चिन्तया। नूनं = ध्रुवं। प्रसूतिविकलेन= सन्तानरहितेन। मया प्रसिक्त = पितृभ्यो दत्तम्। उदकं = जलाञ्जलि। धौतोऽश्रूणां सेको येन तत्–यथा स्यात्तथा = तेनैवोदकेनाश्रुसमाविलं मुखं स्वं प्रक्षाल्य। उदकं = तर्पणजल—पिबन्ति। 'धौताश्रुशेष'मिति पाठे—धौतान्यश्रूणि येन तच्च असौ शेषश्चेत्यर्थो बोध्यः। [ 'दीर्घमुष्णं निःश्वस्ये'त्यारभ्यैतदन्तं छलनं नामाऽङ्गम्। उत्प्रेक्षा। काव्यलिङ्गं। वसन्ततिलका ]॥ २८॥

दीपे = प्रदीपे। वंशाङ्कुरे, शकुन्तलागर्भे च। व्यवधानदोषेण = आवरणदोषेण। अज्ञानदोषेणेति च प्रकृतेऽर्थः। अन्धकारः = तमः। प्रकृते–दुःखञ्च। वयस्थः = तरुणः। 'वयस्थस्तरुणो युवा' इत्यमरः। अपरासु देवीषु=शकुन्तलाभिन्नासु देवीसु। अनुरूपस्य = स्वोचितस्य। पुत्रस्य—जन्मना = जननेन।

'हाय ! इसके ( दुष्यन्त के ) बाद हमें शास्त्रोक्त रीति से पिण्ड और जल कौन देगा' ! इस चिन्ता से आँसूओं की धारा बहाते हुए (उसी जलसे मुख धोकर ही उसे )—पीते हैं॥ २८॥

सानुमती—हाय ! हाय ! दीप ( वंश चलाने वाले पुत्र ) के रहते हुए भी, व्यवधान दोष से ही (दूर देश में रहने से, एवं इसको मालूम नहीं रहने से ही) यह राजर्षि इस प्रकार अन्धकार में पड़ा हैं, और शोक का अनुभव कर रहा है।

चतुरिका—हे स्वामिन् ! आप इस प्रकार सन्ताप न करें। अभी तो आप जवान ही हैं, दूसरी रानियों में अपने योग्य पुत्र को जन्म देकर, पितरों से

अनुरूपमपि औषधमातङ्कं निवर्त्तयति ]।

राजा—( शोकनाटितकेन— )

आमूलशुद्धसन्तति कुलमेतत्पौरवं प्रजावन्ध्ये ।
मय्यस्तमितमनार्य्ये देश इव सरस्वतीस्रोतः ॥ २९ ॥

( —इति मोहमुपगतः ) ।

---

पूर्वपुरुषाणां = पितृणाम् । प्रतीच्छति = गृह्णाति । अनुरूपमपि = स्वोचितमेव । अविरेवार्थे । आतङ्कं = रोगम् । एवञ्च विदूषक एव सान्त्वने समर्थो, नाऽह-मिति भावः ।

आमूलेति । आ मूलात् शुद्धा सन्ततिर्यस्य तत्—आमूलशुद्धसन्तति = आदितोऽपि अविच्छिन्नप्रवाहम् । एतत्—पौरवं = पुरुसम्बन्धि । कुलं = वंशः । अनार्ये=अनार्यजनसङ्कुले । देशे = प्रदेशे । सरस्वत्याः=तन्नामिकायाः सुप्रसिद्धाया नद्याः । स्रोत इव = प्रवाह इव । प्रजया वन्ध्ये = सन्तानशून्ये । अतएव अनार्ये= पापे । पापाचारे । मयि = दुष्यन्ते । अस्तमितं = विच्छिन्नम् ।

सरस्वतीस्रोतोऽपि—आ मूलात् प्रादुर्भावस्थलादारभ्य, शुद्धसन्तति=अवि-च्छिन्नधारं सत् । पुरु एव पौरवं = बिपुलं च सत्—अनार्ये, म्लेच्छबहुले

---

अनृण हो जाएँगें । ( मन ही मन ) ये तो मेरी बात सुन ही नहीं रहे हैं । रोग के अनुरूप ही औषध रोग को हटाती है । अर्थात्—विदूषक ही इनको समझा सकता है, मैं दासी इनको कैसे समझा सकती हूं ? ।

राजा—( शोक का अभिनय करता हुआ— ) मूल पुरुष ( पुरु ) से लेकर आज तक ( मेरे तक ) शुद्ध—चला आता हुआ, यह पौरव वंश, सन्तान रहित मुझ अनार्य ( पापी ) को पाकर इसी प्रकार अस्त हो गया, जैसे—पापी देशों में जाकर विशुद्ध सरस्वती का प्रवाह । [ सरस्वती नदी—जहाँ से निकली हैं, वहाँ से बराबर बहती हुई, भी समुद्र निकटवर्ती पापी देशों में लुप्त होकर, फिर समुद्र के पास प्रकट हुई है । यह नदी कुरुक्षेत्र मातृ गया आदि में दृश्य है ] ॥२९॥

[ राजा—मूर्छित हो जाता है ]

चतुरिका—( ससम्भ्रमम्-) समस्ससदु समस्ससदु भट्टा।

[ समाश्वसितु समाश्वसितु भर्त्ता ]।

सानुमती—किं दाणिं ज्जेव णिव्वुदं करेमि ?। अथवा सुदं मए सउन्तलं समस्सन्तीए देवजणणीए मुहादो—जण्णभाअसमुस्सुआओ देवाओ ज्जेव तह अणुचिट्ठिस्सन्ति जह सो भट्टा अइरेण धम्मपदिणीं तुमं अहिणन्दिस्सदि'त्ति। ता ण जुत्तं मे एत्थ विलम्बिदुं, जाव इमिणा वुत्तन्तेण पिअसहीं सउन्तलं समास्सासेमि।

( —इत्युद्भ्रान्तकेन निष्क्रान्ता )।

[ किमिदानीमेव निर्वृतं करोमि ?। अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या देवजनन्या मुखात्—'यज्ञभागसमुत्सुका देवा एव तथाऽनुष्ठास्यन्ति-यथा स भर्त्ताऽचिरेण धर्मपत्नीं त्वामभिनन्दिष्यति-'

---

प्रदेशे सहसैव लुप्तप्रवाहं—भवति। सरस्वती नदी हि कुरुक्षेत्रादिदेशे प्रवहति सिन्ध्वादिम्लेच्छदेशे क्वचिदन्तर्हिता भवतीति प्रसिद्धम्। [ उपमा ]॥ २६॥

मोहं =मूर्च्छाम्। निर्वृतं=शकुन्तलावृत्तान्तनिवेदनेन सुखितं। देवजननी=कश्यपपत्नी देवमाता—अदितिः।

यज्ञभागे समुत्सुकाः=यज्ञभागाऽभिलाषिणः। सपत्नीकस्यैव यज्ञेऽधिकारात्। यद्वा-विरहातुरो राजा यज्ञादिदेवकृत्यं यथावन्नानुतिष्ठतीति पुनस्तस्मिन् प्रकृतिस्थे सति यज्ञादयः पूर्ववत्प्रवर्त्तेरन्निति कृतिस्थं राजानं कर्त्तुं समुत्सुका देवाः। त्वां=शकुन्तलाम्। अभिनन्दिष्यति=स्वीकरिष्यति। आनन्दयिष्यति। अनेन=राजानुरागादिसूचकेन। उद्भ्रान्तकम्=उत्प्लुतिभेदः ['उछलकर' 'कूदकर' 'झपटकर']।—

---

चतुरिका—( घबड़ा कर—) महाराज ! चेत करिए। चेत करिए। ( होश में आइए )।

सानुमती—क्या इस राजाको शकुन्तला की खबर देकर अभी प्रसन्न कर दूँ ?। अथवा-मैंने शकुन्तला को धीरज देती हुई देवताओं की माता अदिति के मुख से सुना है, कि—'यज्ञभाग के लिए उत्सुक हुए देवता गण स्वयं ही ऐसा उपाय करेंगे, जिससे तेरा पति तेरे को पुनः पाकर, तेरा सत्कार करेगा,

इति। तन्न युक्तं मेऽत्र विलम्बितुम्। यावदेतेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि ]।

( नेपथ्ये— )

भो ! अव्वह्मण्णं अव्वह्मण्णं।

[ भोः ! अब्रह्मण्यम ! अब्रह्मण्यम् !! ]।

राजा—( प्रत्यागतचेतनः कर्णं दत्त्वा- ) अये ! माधव्यस्येवाऽऽर्त्तनादः !।

चतुरिका—सो णाम माधव्वो तवस्सी पिङ्गलिआमिस्सिआहिं चेडिआहिं चित्तफलअहत्थो पाविदो भवे।

[ स नाम माधव्यस्तपस्वी पिङ्गलिकामिश्रिताभिश्चेटकाभिश्चित्रफलकहस्तः प्राप्तो भवेत् ]!

---

'पूर्वं दक्षिणमुत्थाप्य पादं सङ्कोचयेत्ततः। वामं, शीघ्रं भ्रमेद्वामावर्त्तमुद्भ्रान्तकं विदुः' इति तल्लक्षणम्। [ आदानं नाम सन्ध्यङ्गम् ]।

ब्रह्मणे हितं ब्रह्मण्यं, न ब्रह्मण्यम्–अब्रह्मण्यं;=नाहं वध्यः ! नाहं वध्यः !!। 'अब्रह्मण्यमवध्योक्तौ' इत्यमरः। ['दुहाई सरकार की बचाओ']। प्रत्यागतचेतनः= लब्धचैतन्यः। मूर्छापगमात्। आर्त्तनादः=करुणस्वरः। माधव्यो = माधव्यः मधुपुरी–मथुरावासी 'चौबे' प्रसिद्धः। मधुदेशनगरीवास्तव्यो ब्राह्मणो विदूषकः। तपस्वी = दयनीयः। पिङ्गलिकामिश्रिताभिः=पिङ्गलिकामुख्याभिः। नूनं तत्ताडनादिनाऽऽक्रन्दति माधव्य इत्याशयः।

---

और तुझे पाकर प्रसन्न होगा। अतः मुझे अब यहाँ ज्यादा बिलम्ब नहीं करना चाहिए। और मैं जाकर के सखी शकुन्तला को यहाँ का आँखों देखा सब वृत्तान्त सुनाकर धैर्य प्रदान करूँ। [लम्बे २ पैर–रखती हुई उछलकर जल्दी से जाती है]।

[ नेपथ्य में— ]

बड़ा अनर्थ हो रहा है ! दुहाई महाराज की, मुझे बचाइए ! मुझे बचाइए !!

राजा—( होश में आकर, कान लगा कर सुनकर ) हैं ! यह तो माधव्य (विदूषक चौबे) का सा आर्त्तनाद (करुणाक्रन्दन) मालूम होता है ! क्या बात है ?।

चतुरिका—वह बेचारा माधव्य (चौबे) चित्रपट ले जाता हुआ महरानी की पिङ्गलिका आदि चेटियों से घेरकर तंग किया जा रहा है ऐसा मालूम होता है।

**राजा**—चतुरिके ! गच्छ । मद्वचनादनिषिद्धपरिजनां देवी-मुपालभस्व ।

( चतुरिका—निष्क्रान्ता ) ।

( नेपथ्ये—भूयः स एव शब्दः ) ।

**राजा**—परमाऽर्थतो भीतिभिन्नस्वरो ब्राह्मणः । कः कोऽत्र भोः ? ।

( प्रविश्य-कञ्चुकी—)

**कञ्चुकी**—आज्ञापयतु देवः ।

**राजा**—निरूप्यतां-'किमेवं माधव्यब्राह्मणः[1] क्रन्दतीति ? ।

---

न निषिद्धः परिजनो यया ताम् = अनिवारितपरिजनचापल्यां । देवीं=वसुमतीम् । उपालभस्व=विनिन्द । 'किमितीमाश्चेटिका न निवारिता भवत्या, माधव्यं क्लेशयन्त्य' इति ।

स एव = 'अब्रह्मण्यम् ! अब्रह्मण्य'मिति शब्दः । भूयः = पुनरपि । परमार्थतः=वस्तुतः । भीत्या भिन्नः स्वरो यस्यासौ तथा=भीतिकम्पितस्वरः । वस्तुतो भयातुरो माधव्यो, यतो-नोपहासमात्रेणैवंविधः शब्दो भवतीत्याशयः । किम् ?=

---

राजा—चतुरिके ! तूँ जाकर महारानी को मेरी ओर से-अपनी दासियों को डाट कर नहीं रखने के लिए, तथा उनके द्वारा विदूषक को कष्ट पहुँचाने के लिए उलाहना दे ।

[ चतुरिका—जाती है ] ।

[ नेपथ्य में—फिर वही शब्द-'बचाइए' 'बचाइए' सुनाई पड़ता है ] ।

राजा—यह तो उस ब्राह्मण का डरसे वस्तुतः काँपते हुए का सा शब्द मालूम होता है । अर्थात् माधव्य का सचमुच डरे हुए का सा यह शब्द है । वह हँसी नहीं कर रहा है, वास्तविक में वह डरा हुआ है ।

यहाँ पहरे पर बाहर कौन है ? ।

[ कञ्चुकी का—प्रवेश ] ।

कञ्चुकी—महाराज ! आज्ञा करें ।

राजा—जाकर देखो-माधव्य ब्राह्मण इस प्रकार क्यों चिल्ला रहा है ? ।

---

१ 'माधव्यो ब्राह्मणः' पा० ।

कञ्चुकी—यावदवलोकयामि ।

(-इति निष्क्रम्य, ससम्भ्रमं पुनः प्रविश्य-)

राजा—पार्वतायन ! न खलु किञ्चिदत्याहितम् ? ।

कञ्चुकी—नैवम् ।

राजा—ततः कुतोऽयं वेपथुः ? । तथाहि—

प्रागेव जरसा कम्पः, सविशेषस्तु सम्प्रति ।
आविष्करोति सर्वाङ्गमश्वत्थमिव मारुतः ॥३०॥

कञ्चुकी—परित्रायतां [1]सुहृदं महाराजः ।

---

कुतः । यावत् = सर्वं यथावत् । अत्याहितं = महद्भयकारणम् । 'अत्याहितं महाभीतिः'—इत्यमरः । नैवं = नैव किञ्चित् । वेपथुः = कम्पः ।

प्रागेवेति । जरसा = वार्द्धक्येन । प्रागेव = इतः पूर्वमेव । कम्पः = वेपथुः—आसीत् । तु = पुनः । सम्प्रति=इदानीं । सविशेषः=विशिष्टः । अधिकः सन् । सर्वाङ्गं = सकलमेव तव शरीरम् । अश्वत्थं = पिप्पलं । मारुत-इव = वात इव । कम्पः—आविष्करोति = चालयति । 'सर्वाङ्गमाविष्करोति=सर्वाङ्गमालम्बते कम्प' इति वाऽर्थः । [ अनुमानम् । उपमा ] ॥३०॥

---

कञ्चुकी—अभी जाकर ठीक २ सब बातें देखता हूं ।

[ बाहर जाकर, घबड़ाता हुआ फिर आता है ] ।

राजा—पार्वतायन ! कोई भय की बात तो नहीं है न ? ।

कञ्चुकी—नहीं................न........हीं ।

राजा—तो तुम काँप क्यों रहे हो ? ।

पहिले ही वृद्ध अवस्था के कारण तुमारा शरीर काँपता रहता था, फिर यह विशेष रूप से तुमारे सर्वाङ्ग में—पीपल का पत्ता जैसे वायु से हिलता है,—वैसे ही—तुम्हें यह कम्प क्यों हो रहा है ? ॥ ३० ॥

कञ्चुकी—महाराज ! अपने मित्र की रक्षा करिए ।

---

१ 'कञ्चुकी-(प्रविश्य-) परित्रायतां देवः सङ्कटगतं वयस्यम्'-इति पा० ।

राजा—कस्मात्परित्रातव्यः[1] ?।

कञ्चुकी—महतः कृच्छ्रात्।

राजा—अये ! भिन्नार्थमभिधीयताम्।

कञ्चुकी—योऽसौ दिगवलोकनप्रासादो मेघच्छन्नो नाम—'।

राजा—किन्तत्र ?।

कञ्चुकी—

[2]तस्याऽग्रभागाद् गृहनीलकण्ठै-
रनेकविश्रामविलङ्घ्यशृङ्गात्।

---

सुहृदं = माधव्यं। परित्रायतां = पालयतु। कृच्छ्रात् = विपत्तेः। भिन्नोऽर्थो यस्मिंस्तद्यथा स्यात्तथा = स्पष्टार्थम्। स्पष्टतरमिति यावत्। दिशामवलोकने उचितः प्रासादः—दिगवलोकनप्रासादः = दूरविलोकनोचितगृहम्। 'घरहरा-बुर्ज' इति भाषायां प्रसिद्धम्।

तस्येति। गृहनीलकण्ठैः = गृहपालितमयूरैः। तेन मयूराणां बलवत्त्वम्। अनेकैर्विश्रामैर्विलङ्घ्यं शृङ्गं यस्य तस्मात् = अनेकविश्रामविलङ्घ्यशृङ्गात्।

---

राजा—किससे रक्षा करूँ ?।

कञ्चुकी—बड़े भारी भय से ( कष्ट से ) उसकी रक्षा करिए।

राजा—ओह ! तुम बातको साफ २ समझा कर कहो।

कञ्चुकी—यह जो दूर तक देखने के लिए बना हुआ ऊँचा मेघच्छन्न महल ( बुर्ज ) है........।

राजा—हाँ, तो—वहाँ क्या है ?।

कञ्चुकी—जिसके अग्रभाग—घर के पालतू मयूरों से भी अनेक जगह

---

१ 'केनाऽऽत्तगन्धो माणवकः'—पा०।

२ श्लोकस्यास्य स्थाने—'अदृष्टरूपेण केनाऽपि सत्त्वेनाऽतिक्रम्य मेघप्रतिच्छन्दस्य प्रासादास्याऽग्रभूमिमारोपितः' –इति पाठः क्वचित्।

सखा प्रकाशेतरमूर्त्तिना ते
केनापि सत्त्वेन निगृह्य नीतः ॥३१॥

राजा—(सहसोत्थाय-) आः ! ममाऽपि सत्त्वैरभिभूयन्ते गृहाः ?। अथवा बहुप्रत्यवायं नृपत्वम्।

अहन्यहन्यात्मन एव ताव-
ज्ज्ञातुं प्रमादस्खलितं न शक्यम्।

---

अतिविप्रकृष्टोच्चतरश्रृङ्गात्। बहुशः=मध्ये मध्ये विच्छिद्य प्रापणीयशिखरात्। अत्युन्नतादिति यावत्। तस्य=प्रासादस्य। अग्रभागात्=ऊर्ध्वतलात्। केनापि= अज्ञातेन। प्रकाशेतरा मूर्त्तिर्यस्य तेन—प्रकाशेतरमूर्त्तिना = अदृश्यशरीरेण। सत्त्वेन=भूतादिना। निगृह्य=बलादभिभूय। ते सखा=त्वन्मित्रं माधव्यः। नीतः= क्वचन प्रापितः। गृहमयूरैरपि न सहसा प्राप्तुं शक्यात्प्रासादात्तव सुहृत्केनाप्यदृश्येन भूतादिना नीतः सन् क्रोशतीति भावः। 'सत्त्वं क्ष्मादौ पिशाचादौ' इति मेदिनी। [ उपजातिः ] ॥ ३१ ॥

गृहाः=प्रासादाः। तत्स्था लोका वा। बहवः प्रत्यवाया यत्र तत्= बहुप्रत्यवायं = क्लेशबहुलं। पापाविलं वा। नृपत्वं—राजकार्यम्। तदेवाह-

अहनीति। तावत् = प्रथमम्। अहन्यहनि = प्रतिदिनम्। आत्मन एव = स्वस्यैव। प्रमादेन स्खलिमम् = अनवधानोत्थितं कार्यवैपरीत्यं। धर्मोल्लङ्घनम्।

---

विश्राम लेकर ही पहुँचे जा सकते हैं, ऐसे बहुत ऊँचे उस मेघच्छन्न प्रासाद के अग्रभाग से ( चोटी पर से ) आपके उस मित्रको, काली २ भयङ्कर मूर्त्ति वाला कोई भूत, प्रेत या राक्षस पकड़ कर ले गया है ॥ ३१ ॥

राजा—( सहसा उठकर ) क्या मेरे महलों में भी भूत-प्रेत पिशाच आदि के उपद्रव होने लगे ?। अथवा-राजा होना भी बड़ा ही क्लेश और पाप का ही काम है। क्योंकि—

'मनुष्यकी प्रतिदिन अपनी ही त्रुटियाँ कितनी होती हैं'—यही जानना जब

'प्रजासु कः केन पथा प्रयाती'–
त्यशेषतः कस्य पुनः प्रभुत्वम् ? ॥ ३२ ॥
( नेपथ्ये— )

¹अबिहा ! अबिहा ।
[ अभिधाव भो ! अभिधाव ] ।

राजा—(आकर्ण्य ²गतिभेदं रूपयन्–) सखे ! न भेतव्यं न भेतव्यम्।
( नेपथ्ये— )

भो ! कधं न भाइस्सं ? । एसो मं कोवि पच्चाडिअसिरोधरं इक्खुं विअ भग्गत्थिं करिदुं इच्छदि ।

ज्ञातुं न शक्यं, किं पुनः–प्रजासु = जनेषु । कः केन पथा = कः केन मार्गेण। धर्मेण वा, तद्विपरीतेन वा । प्रयाति = व्यवहरति ! इ त = एतत् । अशेषतः = कात्स्न्र्येन ज्ञातुं । कस्य पुनः प्रभुत्वं = कस्य सामर्थ्यम् ? । न कस्यापीत्य र्थः। स्वस्यैव तावत्स्खलितं न ज्ञायते, किं पुनः सकलस्य लोकस्येति—केनापि पापेनैव कर्मणा मद्गेहेऽपि सत्त्वबाधेयमिति भावः । [ अनुप्रासः । उपजातिः ] ॥ ३२ ॥

अबिहेति—खेदे देशी । 'अविधे'ति पाठे अविधेत्याक्रोशे । 'अभिधावे'ति पाठे–त्वरितमागच्छेत्यर्थः । [ गतिभेदेन = क्रोधोद्धतया गत्या । परिक्रामन् =

कठिन है, तब प्रजा में कौन क्या पाप करता है ?, कौन किस रास्ते से चलता है, कौन पाप करता है, कौन पुण्य करता है–इन सब बातों को कौन पूरी २ तरह जान सकता है? इसलिए न मालूम किसके पाप से मेरे महलों में भी ऐसे उपद्रव होने लगे हैं ? ॥ ३२ ॥

[ नेपथ्य में— ]

हाय ! हाय ! मित्र ! दौड़ो, दौड़ो, मुझे बचाओ, बचाओ ! ।

राजा—( सुनकर दौड़ता हुआ— ) हे मित्र ! डरो मत, डरो मत ! ।

[ नेपथ्य में— ]

हाय ! मैं कैसे न डरूं ? । न मालूम यह कौन है, जो मेरे गले को जोर से

१ 'अभिधावेहि भो ! अभिधावेहि ।' इति पा० ।
भो वअस्स अविहा' । [ भो वयस्य! अविहा अविहा ] इति च पा० ।
२ 'गतिभेदेन परिक्रामन्' पा० ।

[ भोः ! कथं न भेष्यामि, एष मां कोऽपि [1]प्रत्यामोड्य शिरोधरा-मिक्षुमिव भग्नास्थिं कर्तुमिच्छति ]।

राजा—( सदृष्टिक्षेपम्— ) [2]धनुस्तावत्।

( प्रविश्य शार्ङ्गहस्ता [3]प्रतीहारी— )

प्रतीहारी—जअदु जअदु भट्टा। एदं ससरं सरासणं, हत्था-वारओ अ।

[ जयतु जयतु भर्त्ता। [3]एतत्सशरं [4]शरासनं, [5]हस्तावारकश्च ]।

( राजा—सशरं धनुरादत्ते )।

( नेपथ्ये— )

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् [6]।

---

परिचलन्। पुनस्तदेव पठित्वा = 'भो वयस्य ! अविहाऽविहे'त्युक्त्वा। पाठा-न्तरे—प्रत्यवनता शिरोधरा यस्य तं–प्रत्यवनतशिरोधरं = नीचैर्ग्रीवम्। तिर्य-ग्ग्रीवं वा ]। माम् इक्षुमिव–त्रिभङ्गं = त्रिखण्डम्। पाठान्तरे-प्रत्यामोड्य = पीडयित्वा। भग्नास्थि = भग्नकीकसं। शिरोधरा = ग्रीवा। सदृष्टिक्षेपं=विलोक्य। धनुस्तावत्। आनये'ति शेषः। शरैः सहितं—सशरं=बाणैः सहितं। शरासनं= धनुः। हस्तावारः = ज्याघातवारणं चर्मफलकं यद्धस्तयोराबध्यते।

एष इति। अभिनवं कण्ठस्य शोणितमर्थो यस्यासौ—अभिनवकण्ठ

---

पकड़ कर, मुझे ईख की तरह निचोड़ रहा है, और मेरी हड्डी २ चूर कर रहा है।

राजा—(इधर उधर देखकर) मेरा धनुष कहाँ है ?। जल्दी धनुष बाण लाओ।

प्रतीहारी—महाराज की जय जयकार हो। यह धनुष बाण है, और यह हाथ में बान्धने का पट्टा है।

[ राजा—धनुष और बाण उठाता है ]।

[ नेपथ्य में— ]

तेरे गले से निकले हुए ताजा व गर्मागर्म खून के पीने की इच्छा से, पशु की

---

१ 'प्रत्यवनतशिरोधरमिक्षुमिव त्रिभङ्गं करोति' पा०।

२ 'धनुर्धनुः' पा०। ३ क्वचिन्न। ४ 'भर्त्तः एतद्धस्तावारसहितं शरासनं'।

५ 'हस्ताऽऽवाप' इति पा०। ६ 'चेष्टमानः' पा०।

आर्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम् ॥३३॥

राजा—( सरोषं— ) कथं मामेवोद्दिशति ! । आः ! तिष्ठ तिष्ठ। [1]कौणपापसद ! त्वमिदानीं न [2]भवसि ? । ( [3]चापमारोप्य )—पार्वतायन ! सोपानमार्गमादेशय ।

कञ्चुकी—इत इतो देवः ।

---

शोणितार्थी = उष्णोष्णकण्ठरक्तपानाभिलाषी । एषः = एषोऽहं । चेष्टमानं = स्फुरन्तं । त्वां=माधव्यं । शार्दूलः=व्याघ्रः । पशुमिव=हरिणादिपशुमिव । हन्मि= मारयामि । भीतानां=त्रस्तानां । भयमपनेतुम्=दूरीकर्तुम् । आत्तं धनुर्येनासौ— आत्तधन्वा = अधिज्यधन्वा । दुष्यन्तः— इदानीम् = अद्य । तव—शरणं = रक्षिता । भवतु । त्वां रक्षतु तावद्दुष्यन्तः । अर्थात् का शक्तिर्दुष्यन्तस्य मया गृहीतस्य तव रक्षणे इति भावः । [ उपमानुप्रासौ । प्रहर्षिणी ] ॥ ३३ ॥

मामेवोद्दिशति = मामधिक्षिपति । मामुद्दिश्य बहु भाषते इति वा । कौणपश्चासावपसदश्च कौणपापसदः । तत्सबुद्धौ— कौणपापसद = हे राक्षसाधम ! । 'राक्षसः कौणपः क्रव्या'दित्यमरः । [ पाठान्तरे—कुणपाशनः = राक्षसः ] । न भवसि = द्रागेव मरिष्यसि मद्बाणाहत इत्यर्थः । सोपानस्य मार्गम् = आरोहण-

---

तरह छट-पटाते हुए तेरे को, मैं सिंह की तरह अब यह मारता हूँ। आर्तों के भय को दूर करने वाला, और धनुष बाण को लिए हुए, यह राजा दुष्यन्त अब तेरे को बचावे तो मैं जानूं ॥ ३३ ॥

राजा—( क्रोध के साथ ) हैं ! यह मुझ पर भी आक्षेप कर रहा है ! अरे ! मांसाशी राक्षसाधम ! खड़ा रह, खड़ा रह । अब तेरा बचना कठिन है । ( धनुष चढ़ाकर— ) हे पार्वतायन ! महल की सीढ़ी का मार्ग दिखा ।

कञ्चुकी—महाराज ! इधर से पधारिए, इधर से ।

---

१ 'कुणपाशन' पा० । २ 'भविष्यसि' पा० ।
३ ( शार्ङ्गमारोप्य ) 'वेत्रवति ! सोपानमार्गम्' ।

( सर्वे—सत्वरमुपसर्पन्ति )।

राजा—( समन्तादवलोक्य— ) अये ! शून्यं खल्विदम् !।

( नेपथ्ये— )

भो ! परित्ताआहि परित्ताआहि । अहं तुमं पेक्खामि, तुमं मं ण पेक्खसि !। मज्जारगहिदो उन्दुरू विअ णिरासो ह्मि जीविदे संवुत्तो।

[ भोः ! परित्रायस्व परित्रायस्व। अहं त्वां प्रेक्षे, त्वं मां न प्रेक्षसे !। मार्जारगृहीत उन्दुरुरिव निराशोऽस्मि [1]जीविते संवृत्तः ]।

राजा—भोस्तिरस्करिणीगर्वित ! मदीयमस्त्रमपि त्वां न पश्यति ?। स्थिरो भव। मा च ते वयस्यसम्पर्काद्विश्वासोऽभूत्। एष तमिषुं सन्दधे

---

मार्गम् । इदं = भवनं । बिडालेन = मार्जारेण । गृहीतः = धृतः । उन्दुरुरिव= मूषिक इव । जीविते = जीवने । निराशोऽस्मि = व्यपगताशो जातः । मार्जारेण गृहीतो मूषिकः कथंचिन्मुक्तोऽपि न जीवति तन्नखराहतस्तद्वदहमपि निराशोऽस्मि जीविते इत्याशयः ।

तिरस्करिणी नाम—अन्तर्धानविद्या । तया गर्वितः = मत्तः । तत्सम्बुद्धौ रूपम् । ते = तव । वयस्यस्य = माधव्यस्य । सम्पर्कात् = शरीरसंयोगात् ।

---

[ सब जल्दी जल्दी दौड़कर उस ऊँचे महल ( बुर्ज ) की ओर जाते हैं ]।

राजा—( चारों ओर देखकर ) हैं ! यह स्थान तो शून्य पड़ा हुआ है !। यहाँ तो कोई भी नहीं है !।

[ नेपथ्य में— ]

हे मित्र ! मुझे बचाओ, मुझे बचाओ । मैं तो तुमको देख रहा हूं, पर तुम मुझ को नहीं देखते हो !। अब तो मैं बिल्ली से पकड़े गए चूहे की तरह इससे पकड़ा जाकर, अपने जीने से ही निराश हो गया हूं।

राजा—हे तिरस्करिणी विद्या ( अन्तर्धान विद्या ) के बल से गर्वित राक्षसाधम ! क्या मेरा अस्त्र भी तेरे को नहीं देखेगा ?। अवश्य देखेगा।

---

१ क्वचिन्न ।

यो हनिष्यति वध्यं त्वां, रक्ष्यं रक्षिष्यति द्विजम् ।
हंसो हि क्षीरमादत्ते, तन्मिश्रा वर्जयत्यपः ॥ ३४ ॥

(—इति [1]शस्त्रं सन्धत्ते ) ।

( ततः प्रविशति मातलिर्विदूषकश्च ) ।

विश्वासः = आस्था । पाठान्तरे—विश्लेषः = वियोगः । मा भूत् = मा भवतु नाम । माधव्यवपुःसम्बन्धे सत्यपि न मे बाणमोक्षे बाधा ।

ननु कदाचित्तव बाणो माधव्यमेव हन्यादित्यत आह—य इति । तं = तादृशम् । इषुं = बाणं । सन्दधे—यः = बाणः । वध्यं = वधार्हं—त्वां । हनिष्यति = मारयिष्यति । रक्ष्यं = रक्षणीयतयाऽभिमतं । द्विजं = माधव्यं च । रक्षिष्यति = पालयिष्यति । हि—यतः । हंसः = क्षीरं = दुग्धं स्वभोज्यम् । आदत्ते = गृह्णाति । तेन मिश्राः—तन्मिश्राः = पयसा मिलिताः । अपः = जलम् । वर्जयति = त्यजति । [ दृष्टान्तालङ्कारः । 'भोस्तिरस्करिणी गर्विते'त्यादिनैतदन्तेन व्यवसायो दर्शितः ॥ ३४ ॥

अत्र 'अब्रह्मण्य'मित्यत आरभ्य विद्रवो नाम गर्भसन्ध्यङ्गं दर्शितं 'वधोद्योगो विद्रवः स्याद्वधसन्ताडनादिभिः'—इति तल्लक्षणात् ] ।

मातलिः = इन्द्रसारथिः । 'सूतो मातलि' रित्यमरः ।

ठहर तो । मेरे मित्र के साथ सम्पर्क रखने से ( सटे रहने से ) उसके मरने के डर से, मैं तुमारे ऊपर भी अस्त्र नहीं चला सकूंगा,—ऐसा मत समझना । मैं ऐसे बाण को धनुष पर चढ़ा रहा हूं, जो कि—

मारने योग्य तुझ राक्षस को तो मार गिराएगा, और रक्षा के योग्य इस ब्राह्मण माधव्य की रक्षा भी करेगा । क्योंकि—हंस जैसे दूध में मिले हुए जल को छोड़कर उसमें से केवल दूध को ही अलग करके पी लेता है, इसी प्रकार मेरा बाण भी मेरे मित्र को बचाकर केवल तुझको ही मारेगा ॥ ३४ ॥

( अस्त्र का = बाणका सन्धान करता है ) ।

[ इन्द्र के सारथि मातलिका और विदूषक का प्रवेश ] ।

[1] 'अस्त्रं' पा० ।

मातलिः—आयुष्मन् !
कृताः शरव्यं हरिणा तवाऽसुराः,
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि, न दारुणाः शराः ॥३५॥

राजा—( ससम्भ्रममस्त्रमुपसंहरन्- ). अये मातलिः ! । स्वागतं देवराजसारथेः[1] ।

---

कृता इति । हरिणा = इन्द्रेण । असुराः = राक्षसा एव । तव—शरव्यं = लक्ष्यं—कृताः । 'लक्ष्यं लक्षं शरव्यञ्चे'त्यमरः । तेषु=असुरेष्वेव । इदं शरासनं= धनुरिदं । विकृष्यताम् = सन्धीयताम् । यतः-सतां=साधूनां । सुहृज्जने=स्वमित्रादिबन्धुवर्गे । प्रसादेन सौम्यानि—प्रसादसौम्यानि=प्रसन्नमधुराण्येव । चक्षूंषि= लोचनानि । पतन्ति=निपतन्ति । दारुणाः=विदारणदारुणाः । शराः=बाणास्तु । न = नैव पतन्ति । अस्मासु सुहृत्सु बन्धुवर्गेषु स्नेहमसृणानि लोचनानि निक्षिप, न खलु तव शरपातोचिता वयमिति भावः । [ काव्यलिङ्गम् । परिसङ्ख्याऽर्थान्तरन्यासश्च । वंशस्थम् ] ॥ ३५ ॥

अये ! मातलिः=अहो मातलिरयं, न पिशाचादिरित्याश्चर्यम् । देवराजस्य= मघवतः । सारथिः=सूतस्तसम्बुद्धौ चात्र रूपम् । षष्ठ्यन्तं वा क्वचित्पठ्यते ।

---

मातलि—हे आयुष्मन् ! भगवान् इन्द्रने आपके बाणों के लिए तो लक्ष्य असुरों को ही बनाया है, अतः उन असुरों पर ही इस धनुष को आप चढ़ाइए । अपने सुहृज्जनों पर तो सज्जनों के कृपा से सौम्य (शान्त) और प्रसन्न नेत्र ( दृष्टि ) ही पड़ा करते हैं, दारुण ( कठोर ) बाण नहीं पड़ा करते हैं । और हम तो आप के सुहृत् हैं, अतः हमें तो प्रसन्न दृष्टि से ही आप देखिए ।। इस धनुष को तो असुरों पर तानियेगा । अभी तो इसको विश्राम ही दीजिए ।

राजा—( जल्दी से हड़बड़ा कर, बाण को उतारता हुआ ) हैं ! ये तो इन्द्र के सारथि मातलि हैं ! । हे देवराज इन्द्र के सारथे ! आप का स्वागत है । आइए, आइए ।

---



१ सारथे' पा० ।

( [1]प्रविश्य विदूषकः– )

**विदूषकः**—भो मणस्सि ! इमिणा अहं पशुमारणं मारिदुं पाविदो, भवं उण इमं साअदेण अहिणन्ददि !।

[ भो मनस्विन् ! अनेनाहं [2]पशुमारणं मारयितुं प्रवृत्तः[3], भवान् पुनरिमं स्वागतेनाऽभिनन्दति ! ]।

**मातलिः**—( सस्मितम्– ) आयुष्मन् ! श्रूयताम् ! यदर्थमस्मि हरिणा भवत्सकाशं प्रेषितः।

**राजा**—अवहितोऽस्मि।

**मातलिः**—अस्ति कालनेमिप्रसूतिर्दुर्ज्जयो नाम दानवगणः।

---

मनस्विन् = हे उदाराशय !। रिपोरपि स्वागतकरणात्। अनेन = आगन्तुकेन। पाठान्तरे—इष्टिपशुमारं मारितः = यज्ञपशुवन्मारितः। ग्रीवायां गृहीत्वा मुष्ट्यादिना क्रूरतरं ताडित इति यावत्। अस्यैव स्वागतम् = अभ्यर्थनां त्वं करोषीति सोल्लुण्ठनं सम्बोधनं—**मनस्विन्निति**।

हरिणा = इन्द्रेण। कालनेमेः प्रसूतिरुत्पत्तिर्यस्यासौ–कालनेमिप्रसूतिः=कालनेमिराक्षसप्रभवः। कालनेमेः प्रसूतिः—सन्ततिरिति वाऽर्थः। अत एव दुर्जयः।

---

**विदूषक**—हे उदाराशय ! यह तो मुझे पशु की तरह मारने को ही तैयार था, और आप इसका इस प्रकार स्वागत कर अभिनन्दन कर रहे हैं !। धन्य है आप की इस उदारता को !।

**मातलि**—( मुसकराता हुआ ) हे आयुष्मन् ! आपके पास मुझे भगवान् इन्द्र ने जिस कार्य के लिए भेजा है, उसे आप ध्यान से सुनिए।

**राजा**—मैं सावधान हूं, कहिए।

**मातलि**—'कालनेमि' से उत्पन्न 'दुर्जय' नामक दानवों का एक गण है।

---

१ क्वचिन्न। २ 'अहं येनेष्टिपशुमारं मारितः, सोऽनेन स्वागतेनाभिनन्द्यते' पा०। ३ 'प्राप्तः'।

राजा—अस्ति । श्रुतपूर्वो मया नारदात् ।

मातलिः—

सख्युस्ते स किल शतक्रतोरवध्य-
स्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥३६॥

---

मया नारदात्पूर्वं श्रुतः—श्रुतपूर्वः । नारदात्तद्वृत्तान्तं श्रुतवानस्मीत्याशयः ।

सख्युस्त इति । सः = दुर्जयो दानवगणः । ते = तव । सख्युः = मित्रस्य । शतं क्रतवो यस्य तस्य—शतक्रतोः = इन्द्रस्य । अवध्यः = वरविशेषप्रभावादवध्यः । किलेति प्रसिद्धौ । तस्य = दानवगणस्य । रणशिरसि = युद्धाङ्गणे । त्वं निहन्ता = त्वमेव विजेता । स्मृतः=देवैश्चिन्तितः । यतः - निशाया इदं-नैशं= रात्रिसम्बन्धि, यत्-तिमिरम्=तमः । उच्छेत्तुं = दूरीकर्त्तुं । सप्त सप्तयो यस्यासौ—सप्तसप्तिः = सूर्यः । 'हयसैन्धवसप्तयः' इत्यमरः । न प्रभवति = न समर्थः । तत्-नैशं = निशासम्बन्धि तिमिरं = तमः । चन्द्रः = इन्दुः । अपाकरोति = नाशयति ।

यथा सूर्यस्य रात्रावन्धकारध्वंसे सामर्थ्यं नास्ति, तत्र तु चन्द्र एवोचितो ध्वान्तहन्ता, तथैवाऽतुलशक्तेरपि महेन्द्रस्याऽवध्यो, दानवगणस्त्वया नाशनीय इति भावः । [ दृष्टान्तालङ्कारः । 'प्रहर्षिणी' ] ॥ ३६ ॥

---

राजा—हाँ है, मैंने नारदजी से उसके विषय में पहिले सेही सुन रखा है ।

मातलि—वह 'दुर्जय' नामक दानवों का गण वरदान के प्रभाव से आपके मित्र भगवान् इन्द्र से तो अवध्य है । अतः उनको युद्ध में आप ही मार सकते हैं ऐसा देवताओं का विश्वास है । जिस रात्रि के अन्धकार को सात घोड़ों के रथ पर चढ़ने वाले भगवान् सूर्यनारायण भी दूर नहीं कर सकते हैं, उस रात्रि के अन्धकार को भगवान् चन्द्रमा दूर करते हैं ॥ ३६ ॥

स भवानात्तशस्त्र एवेदानीं देवरथमारुह्य विजयाय प्रतिष्ठताम्।

राजा—अनुगृहीतोऽस्म्यनया मघवतः सम्भावनया। अथ माधव्यं प्रति भवता किमेवं प्रयुक्तम् ?।

मातलिः—( सस्मितं- ) तदपि कथ्यते—किञ्चिन्निमित्तादपि मनःसन्तापादायुष्मान्मया विक्लवो दृष्टः। पश्चात्कोपयितुमायुष्मन्तं तथा कृतवानस्मि।। कुतः ?।

ज्वलति चलितेन्धनोऽग्नि-

विप्रकृतः पन्नगः फणां कुरुते।

---

सः = ईदृशातिशयितशक्तिशाली। आत्तं शास्त्रं येनासौ—आत्तशस्त्रः= गृहीतशस्त्रः। विजयाय = दानवविजयाय। प्रतिष्ठतां = प्रस्थानमङ्गलं करोतु।

अनया = स्मरणरूपया। सम्भावनया = सत्कारेण। अनुगृहीतः = अनुकम्पितः। अथेति—प्रश्ने। माधव्यं प्रति = विदूषकं प्रति। एवं = ताडनधर्षणादिकं। किञ्चिन्निमित्तं यत्र तस्मात्—किञ्चिन्निमित्तात् = कुतोऽपि हेतोः। समुत्थितान्मनःसन्तापात्। अत्र मातलिना क्लेशवर्द्धकतया शकुन्तलानाम न गृहीतम्। विक्लवः = विह्वलः।

ज्वलतीति। चलितमिन्धनं यस्यासौ चलितेन्धनः = विपर्यस्तकाष्ठः।

---

इसलिए—आप शस्त्र लेकर, इसी समय इस देवरथ पर चढ़कर विजय के लिए प्रस्थान करिए।

राजा—भगवान् इन्द्र की इस प्रकार मेरे ऊपर हुई कृपा से मैं बहुत ही अनुगृहीत हुआ हूं। अच्छा, मैं आप से एक बात पूछना चाहता हूं, कि-आपने इस बेचारे माधव्य के साथ ऐसा व्यवहार क्यों किया ?।

मातलि—( हँसकर ) उसको भी मैं कहता हूं, सुनिए—किसी भी कारण से हुए मन के सन्ताप से आपको मैंने कुछ खिन्न और अन्यमनस्क देखा। तब आप को क्रोध दिलाने व उत्तेजित करने के ही लिए मैंने यह नाटक रचा था।

क्योंकि—अग्निमें भी जब इन्धन डाला जाता है, या उसमें गिराया हुआ इन्धन

तेजस्वी संक्षोभा-

स्प्रायः प्रतिपद्यते तेजः ॥ ३७ ॥

राजा—युक्तमनुष्ठितं भवद्भिः। (विदूषकं प्रति-) वयस्य ! अनतिक्रमणीया दिवस्पतेराज्ञा। तद्गच्छ परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि—

'त्वन्मतिः केवला तावत्प्रतिपालयतु प्रजाः।
अधिज्यमिदमन्यस्मिन्कर्म्मणि व्यापृतं धनुः' ॥ ३८ ॥

---

प्रक्षिप्तेन्धनो वा। अग्निः=वह्निः। ज्वलति=भृशं दीप्यते। किञ्च-विप्रकृतः=अवमतः (कृतधर्षणः)। पन्नगः=भुजङ्गमः। फणां=फटाटोपम्। कुरुते=रचयति। हि=यतः-स्वम्=आत्मीयं। महिमानं=प्रभावं। जनः=सर्वोऽपि लोकः। क्षोभात्=संक्षोभात्। (-धर्षणादिना)। प्रायः=बहुलं। प्रतिपद्यते=लभते। [ अप्रस्तुतप्रशंसा। दृष्टान्तः ] ॥ ३७ ॥

युक्तम्=उचितम्। अनुष्ठितम्=कृतं। परिगतार्थं=विदितसर्ववृत्तान्तम्।

त्वन्मतिरिति। केवला तावत्=केवलं त्वन्मतिरेव। प्रजाः=राज्यं। प्रतिपालयतु=रक्षतु। इदम्=मदीयम्। अधिगतं ज्याम्—अधिज्यम्=आरोपितमौर्वीकं। धनुः=कोदण्डम्। अन्यस्मिन् कर्मणि=दानवविजय-

---

जब इधर-उधर हिलाया डुलाया जाता है, तभी वह अग्नि तेजी से जलने लगता है। और सर्प भी—जब उसे छेड़ा जाता है, तभी फण उठाता है। इसी प्रकार तेजस्वी पुरुष भी—किसी बात से क्षोभ (क्रोध) दिलाये जाने पर ही प्रायः अपने तेज (पौरुष एवं वीरता) को प्राप्त करता है ॥ ३७ ॥

राजा—आपने ठीक ही किया। (विदूषक के प्रति—) हे मित्र ! भगवान् इन्द्र की आज्ञा तो अनुल्लङ्घनीय है। अतः अमात्य पिशुन के पास जाकर और सभी बातों को उन्हें पूरी २ बता कर, तुम उनसे कहना, कि—

'कुछ दिन तुमारी बुद्धि ही अब प्रजा की रक्षा करे। हमारा यह चढ़ा हुआ

**विदूषकः**—जं भवं आणवेदि । ( —इति निष्क्रान्तः ) ।

[ यद्भवानाज्ञापयति ] ।

**मातलिः**—आयुष्मान् रथमारोहतु ।

[ राजा—तथा करोति ] ।

( इति निष्क्रान्ताः—सर्वे ) ।

* इत्यभिज्ञानशाकुन्तले षष्ठोऽङ्कः *

---

रूपे कर्मणि । व्यापृतं=नियुक्तम् । योजितम् । दानववधाय गच्छाम्यहं, प्रजाभारः केवलं त्वय्येव निवेशितोऽस्माभिरिति भावः ॥ ३८ ॥

* इत्यभिनवराजलक्ष्मीटीकायां षष्ठोऽङ्कः *

---

धनुष तो अब दूसरे ही काममें ( दानवों के मारने में ) लग रहा है ॥ ३८ ॥

विदूषक—जैसी आपकी आज्ञा । ( जाता है ) ।

मातलि—अब आप रथ पर सवार होइए ।

[ राजा—रथ पर चढ़ता है ] ।

[ इस प्रकार सब—जाते हैं ] ।

* षष्ठ अङ्क समाप्त *

# ❀ अथ सप्तमोऽङ्कः ❀

( ततः प्रविशत्याकाशवर्त्मना रथारूढो राजा, मातलिश्च )।

राजा—मातले! अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये।

---

## ❋ अभिनवराजलक्ष्मीः ❋

[ अस्मिन् सप्तमेऽङ्केऽङ्कसमाप्ति यावन्निर्वहणसन्धिः पञ्चमः।

'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्।
एकार्थमुपनीयन्ते यत्र—निर्वहणं हि तत्'॥

—इति दर्पणोक्तेः। केचित्तु—अभिज्ञानात्परं निर्वहणसन्धिः, ततः पूर्वन्तु सप्तमेऽपि विमर्शसन्धिरेवेत्याहुः।

युद्धस्य साक्षाददर्शनीयततया तस्य ( असुरयुद्धस्य ) तु कृतकार्यस्य स्वर्गात् प्रतिनिवर्त्तमानस्य राज्ञो वाक्यैरेव—सूचनमत्रेति ध्येयम्।

अत्राऽङ्कास्यं नामाऽर्थोपक्षेपकमेतत्। तदुक्तम्—'अङ्कान्तपात्रैरङ्कास्यमुत्तराऽङ्कार्थसूचना' इति। प्रकृते हि—षष्ठाङ्कान्तपात्राभ्यां राजमातलिभ्यामेव सप्तमाङ्के प्रवेशः कृतः। षष्ठाङ्कान्ते च सप्तमाङ्कार्थः सूचितः—'आयुष्मन्! श्रूयता'मित्यादिना ]।

तत इति। आकाशवर्त्मना = आकाशमार्गेण। रथमारूढः—रथारूढः = इन्द्ररथमारूढः। अनुष्ठितो निदेशो येनासौ—अनुष्ठितनिदेशः = पालितेन्द्रशासनः। विजितदानव इति यावत्। मघवतः = इन्द्रस्य। सत्क्रियाविशेषात् = सत्कारातिशयेन। सत्कारातिशयसम्पादनं विलोक्येत्यर्थोऽपि—ल्यब्लोपे पञ्चम्या।

---

## अथ सप्तम अङ्क।

[ आकाश मार्ग से रथपर चढ़े हुए राजा दुष्यन्त और मातलि का प्रवेश ]।

राजा—हे मातले! भगवान् इन्द्रके आदेश का ( दुर्जय नामक दानवों के गण के विनाश करने की आज्ञा का ) पालन करलेने पर भी—भगवान् महेन्द्र ने

**मातलिः**—( सस्मितम्- ) आयुष्मन् ! उभयत्राऽप्यसन्तोषमवगच्छ । कुतः ?—

उपकृत्य हरेस्तथा भवा-
ल्लँघु सत्कारमवेक्ष्य मन्यते ।
गणयत्यवदानसंमितां
भवतः सोऽपि न सत्क्रियामिमाम् ॥ १ ॥

---

अनुपयुक्तमिव = अकृतोपकारमिव । आत्मानं समर्थये = आत्मानं सम्भावयामि । न मया महेन्द्रस्य किञ्चिदप्यनुष्ठितमिति असन्तुष्टमिवात्मानं तर्कयामि ।

मत्कार्यादप्यधिको महेन्द्रकृतो मत्सत्कार इति यावत् । तदित्थं–मया दानवा युद्धे निपातितास्तुष्टेनेन्द्रेण च महती मे सत्क्रिया कृतेति राज्ञा सूचितमेतेन ।

उभयत्रापि = भवच्चित्त इव मघवच्चित्तेऽपि । असन्तोषमवगच्छ = 'न मया राज्ञोऽनुरूपा सत्क्रिया खल्वकारी'ति हेतोरसन्तोषं विद्धि ।

उपकृत्येति । हरेः = इन्द्रस्य । तथा = महता श्रमेण । दानवानां विजयेन । उपकृत्य = उपकारं विधायाऽपि । सत्कारमवेक्ष्य = इन्द्रकृतसत्कारमवेक्ष्य । सत्कारापेक्षया । आत्मनः श्रमादिकं । लघु = अत्यल्पमेव । मन्यसे = चिन्तयसि । एवं सोऽपि=मघवाऽपि । इमां सत्क्रियां=भवन्तमुद्दिश्य स्वेन कृतां पूजां । भवतः= तव । अवदानेन संमिताम्—अवदानसंमितां = भवत्कृतोपकाराऽनुरूपां । न गणयति=न विचारयति । 'अवदानं कर्म वृत्त'मित्यमरः । सत्क्रियामवेक्ष्य भवान्

---

मेरा जो विशेष आदर और सत्कार किया है, उससे मैं अपने को दबा हुआ एव असन्तुष्ट, 'तथा महेन्द्र का मैंने कुछ भी कार्य नहीं किया'—यही मैं समझ रहा हूं।

मातलि—( मुसकराता हुआ— ) हे आयुष्मन् ! दोनों ही ओर इसी प्रकार का असन्तोष ( हमने कुछ भी उपकार इनका नहीं किया—यह असन्तोष ) आप समझिए । क्योंकि—

इन्द्रका शत्रुसंहाररूपी इतना बड़ा उपकार करके भी, इन्द्रके द्वारा किए गए सत्कार विशेष के कारण, अपने किए हुए उपकार को आप सत्कार की अपेक्षा छोटा ही समझते हैं, और मघवान् इन्द्र भी आपने द्वारा किए गए आपके

राजा—मातले ! मा मैवम् । स खलु मनोरथानामपि दूरवर्ती यो मे विसर्जनाऽवसरे सत्कारः ! । मम हि दिवौकसां समक्षमर्द्धासनोपविष्टस्य[1]—

अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन ।

स्वस्य श्रमं लघु मनुते, भवत्पराक्रमादिकमवेक्ष्य च महेन्द्रोऽपीमां स्वकृतां सत्क्रियामल्पीयसीमेव चिन्तयतीत्युभयोरपि तुल्यैवाऽकृतार्थतेत्याशयः । [विभावना-विशेषोक्तिसन्देहसङ्करः । अन्योन्यं । सुन्दरी वृत्तम् ] ॥ १ ॥

मा मैवम् = एवं मा वद, मा वद । मे विसर्जनावसरे = मम प्रस्थापन-समये । यः सत्कारः, स – मनोरथानामपि = मनसोऽपि । दूरवर्त्ती = अगोचरः । यो महेन्द्रेण मम सत्कार आचरितः, स मनसाप्यचिन्तनीयोऽतुलनीयश्चेति भावः ।

सत्कारस्य मनोरथातिभूमित्वमेवाऽऽह—मम हीति । यतः-दिवौकसां = देवानां । 'त्रिदिवेशा दिवौकसः' इत्यमरः । समक्षं=प्रत्यक्षम् । अर्द्धासने उप-विष्टस्तस्य—अर्द्धासनोपविष्टस्य = महेन्द्रसिंहासनस्य अर्द्ध भागे आसीनस्य । मम गले मन्दारमाला हरिणा विनद्धेति—वाक्यमग्रिमश्लोकेन सह सम्बध्यते ।

अन्तर्गतेति । अन्तर्गता प्रार्थना यस्य तम्–अन्तर्गतप्रार्थनं = हृद्गतमन्दार-मालाऽभिलाषशालिनम् । अन्तिके तिष्ठति अन्तिकस्थः, तम्–अन्तिकस्थं = निकट-

विशेष सत्कार को भी, आपके महान् कार्य ( असुर विनाश ) के सामने कुछ भी नहीं समझ रहे हैं । अतः आप दोनों को ( इन्द्रको और आपको ) अपने २ कार्यों में समान ही असन्तोष है ॥ १ ॥

राजा—हे मातले ! ऐसी बात मत कहो । उन्होंने मुझे बिदा करते समय जो मेरा सत्कार किया है, उसकी तो कभी कल्पना भी नहीं की जा सकती थी ।

क्योंकि—मुझे सभी देवताओं के सामने ही, अपने सिंहासन के आधे आसन पर बैठाकर—

मनहीमन उस माला की इच्छा रखने वाले, पास में बैठे हुए, अपने पुत्र

१ 'अर्द्धासनोपवेशितस्य' पाठः ।

आमृष्टवक्षोहरिचन्दनाऽङ्का
मन्दारमाला हरिणा पिनद्धा ! ॥२॥

मातलिः—किमिव नाऽऽयुष्मानमरेश्वरादर्हति ?। पश्य—

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः
पुरुषकेसरिणश्च पुरा नखैः । ३ ॥

---

स्थितं । जयन्तं = स्वपुत्रम् । उद्वीक्ष्य = दृष्ट्वा । ज्ञात्वाऽपि । कृतं स्मितं येन,-तेन-कृतस्मितेन=ईषद्धसता । हरिणा=महेन्द्रेण । आमृष्टं यद्वक्षसो हरिचन्दनं-तेनाऽङ्कः = चिह्नं यस्यां सा -आमृष्टवक्षोहरिचन्दनाङ्का=विलुप्तमहेन्द्रवक्षःस्थलचन्दनाङ्किता मन्दारमाला=दिव्यसुमनोमाला । [सिंहासनार्द्ध भागे स्थितस्य मम कण्ठे]। पिनद्धा = बद्धा । क्षिप्ता । मदुरसि समर्पिता । दानत्वरया, अत्र सम्पर्कादिना वा मालाया महेन्द्रवक्षोलिप्तदिव्यचन्दनरसाङ्कता । स्वपुत्रेच्छामप्यविगणय्य मह्यं माला दत्तेति तस्मादप्यधिकस्नेहपात्रता मयीति च ध्वन्यते । [ अनुप्रासः । परिकरः । उदात्तालङ्कारश्च । उपजातिः ] ॥ २ ॥

किमिव = किन्तत् ? । यत्-अमरेश्वरात् = देवेन्द्रात् । आयुष्मान्=भवान् । नार्हति = न प्राप्तुमर्हति ? । सर्वं ततः प्राप्तुमर्हति भवानित्याशयः ।

योग्यतामेव स्फुटयति—सुखपरस्येति । सुखमेव परं यस्यासौ–सुखपरः=

---

जयन्त की माँ उपेक्षा करके, हसते हुए भगवान् महेन्द्र ने, अपने वक्षःस्थलपर लगे हुए दिव्य चन्दन से चर्चित, मन्दार ( कल्प वृक्ष ) के पुष्पों की वह दिव्य माला मुझे ही पहिरा दी ! ॥ २ ॥

मातलि—ऐसा कौनसा सत्कार है जिसे आप अमरेश्वर भगवान् महेन्द्र से पाने के अधिकारी नहीं हैं । क्यों कि, देखिए—

सुखों के उपभोग में लगे हुए भगवान् इन्द्र के स्वर्ग को दानवरूपी कण्टकों

राजा— [1]अत्र खलु शतक्रतोरेव महिमा। पश्य—

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम्।
किं [2]वाऽभविष्यदरुणस्तमसां वधाय,
तञ्चेत्सहस्रकिरणो धुरि नाऽकरिष्यत् ॥४॥

सुखे परः=प्रसक्तो वा सुखपरः। तस्य सुखपरस्य=सुखोपभोगपरायणास्यभोय। हरेः = इन्द्रस्य। त्रिदिवं = स्वर्गः। 'त्रिदिवं सुखे स्वर्गे चे'ति हैमः।

अधुना = सम्प्रति। नतानि = गूढानि, पर्वाणि = ग्रन्थयो येषान्तैः–नतपर्वभिः = नतग्रन्थिभिः। तव = शरैः = बाणैः। च = किञ्च। पुरा = पूर्वकाले च। पुरुषश्चासौ केसरी च, पुरुषः केसरी वेति वा–पुरुषकेसरी। तस्य-पुरुषकेसरिणः= नृसिंहस्य भगवतः। नतं = नमनं पर्वणः सकाशाद्येषां तैः–[ नतानि पर्वाणि येषां तैरिति वा–] नतपर्वभिः = पर्वभागादारभ्य कुञ्चितैः। आभुग्नाग्रैः। कुटिलैरिति यावत्। नखैश्च = नखरैश्च। उभयैः = पुरुषकेसरिणो नखैः, तव शरैश्चेत्युभयैः। ( दानवाः कण्टका इव–दानवकण्टकाः )—उद्धृता दानवकण्टका यस्मात्—तत्-उद्धृतदानवकण्टकं=समूलोन्मूलितराक्षसरूपकण्टकं—कृतम्। पुरा युगे नृसिंहस्य नखैः, अद्यत्वे तु त्वच्छरैश्च स्वर्गस्य कण्टकस्थानीया इन्द्रस्य शत्रवो दूरीकृताः। अत एव इन्द्रस्तु निरन्तरं सुखमेवानुभवतीति भावः। [ तुल्ययोगिता। उपमाऽनुप्रासौ। द्रुतविलम्बितम् ] ॥३॥

से रहित इन दोनों ही ने किया है। एक तो—इस समय आप के नतपर्व (घिसी हुई गांठ वाले, तीखे फल वाले ) इन बाणों ने, और दूसरे पूर्वकालमें पुरुषोत्तम भगवान् नृसिंह जी के तीखे २ नखों ने। [ नृसिंहजी ने हिरण्यकशिपु को मार कर स्वर्ग को निष्कण्टक कर दिया था ] ॥ ३ ॥

राजा—मैंने जो दुर्जय नामक असुरों का वध किया है, वह भी तो शतक्रतु भगवान् इन्द्र की ही महिमा है। क्योंकि, देखो—

१ 'तत्र' पा०। २ 'किं वाऽभविष्यदरुणस्तमसां विभेत्ता' पा०।

मातलिः—सदृशन्तवैतन। ( स्तोकमन्तरमतीत्य- ) आयुष्मन्! इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः।

---

अत्र = दानवविजये। शतक्रतोः = इन्द्रस्य। सिध्यन्तीति। महत्सु = असाध्येष्वपि। कर्मसु = कार्येषु। नियोज्याः = सेवकाः। यत्—सिध्यन्ति = समीहितार्था भवन्ति। स्वामिकार्यं साधयन्तीति यावत्। तत्—ईश्वराणां = प्रभूणां। सम्भावनाया गुणस्तं-सम्भावनागुणं = गौरवविशेषम्। अवेहि = जानीहि। 'सम्भावना वासनायां गौरवे ध्यानकर्मणी'त्यजयः। सेवका हि स्वामिमहत्त्वेनैव कार्यं साधयन्ति, तत्र च सेवकस्य न कश्चिद् गुण इति भावः।

अत्र दृष्टान्तमाह—किमिति। अरुणः = सूर्यसारथिः। तमसां वधाय प्राभविष्यत् = समर्थोऽभविष्यत्। पाठान्तरे—तमसां विभेत्ता = अन्धकाराणां नाशकः। किंवा = कथं खलु। अभविष्यत् ?। चेत् = यदि। तम् = अरुणम्। सहस्रकिरणः = भास्करः। धुरि = अग्रे। स्वरथाग्रभागे। न अकरिष्यत् = न अस्थापयिष्यत्। [ अप्रस्तुतप्रशंसा। दृष्टान्तानुप्रासौ। वसन्ततिलका ]॥४॥

तव एतत् = ईदृशमेव। सदृशं = वक्तुमुचितं। स्तोकं = किञ्चित्। अन्तरम् = अवकाशम्। अतीत्य = अतिक्रम्य। नाकस्य = स्वर्गस्य। पृष्ठे = तले। प्रतिष्ठितस्य = विख्यातस्य। आत्मनो-यशसः = कीर्त्तेः। सौभाग्यम् = अहोभाग्यम्। इतः = अत्र। पश्येति—योजना।

---

बड़े २ कार्यों में भी जो सेवक लोग सफल सिद्ध होते हैं, उसको भी आप ईश्वरों ( मालिकों ) के प्रताप एवं गौरव का ही फल समझिए। क्योंकि—सूर्य के सारथि अरुण अन्धकार को दूर करने में क्या कभी समर्थ हो सकते हैं, यदि भगवान् सूर्य उनको अपने रथपर आगे नहीं बैठावें तो ?। अर्थात्—कभी नहीं। अतः-मैंने भी जो इन असुरों का वध किया है, यह भी भगवान् महेन्द्र की ही कृपा और प्रताप का ही फल है॥ ४॥

मातलि—यह बात (ऐसा समझना और कहना) आप ऐसे अभिमानशून्य महापुरुष के योग्य ही है। ( कुछ दूर चलकर ) हे आयुष्मन्! स्वर्ग लोक में फैले हुए सुप्रतिष्ठित अपने सुयश के सौभाग्य (वैभव) को आप देखिए,—

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतांऽशुकेषु ।
सञ्चिन्त्य गीतक्षमम[1]र्थबन्धं[2]
दिवौकसस्त्वच्चरितं लिखन्ति ॥ ५ ॥

राजा—मातले ! असुरसम्प्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता न लक्षितोऽयं प्रदेशो मया । तत्कतमस्मिन् पथि वर्त्तामहे मरुताम् ? ।

विच्छित्तीति । सुरसुन्दरीणां = देवाङ्गनानां । विच्छित्तेः शेषास्तैः—विच्छित्तिशेषैः = अङ्गरागाऽवशिष्टैः । 'विच्छित्तिरङ्गरागेऽपी'ति विश्वः । वर्णैः= कुङ्कुमकस्तूरीचन्दनादिनिर्मितैः–वर्णकैः=अङ्गरागैः, वर्णकैश्च । (वर्णक = स्याही, 'रंग') । एतेनाऽतिप्रियत्वं तद्यशसः सूचितम् । अमी दिवौकसः=देवाः । कल्पलतानामंशुकास्तेषु = कल्पवृक्षसमुत्थितपटेषु । [1]गीतक्षमं = गानयोग्यम् । अर्थजातं=पदार्थसमूहं । विचिन्त्य=विचार्य । काव्यं विरच्य । त्वच्चरितं=त्वत्कृतानि दानवविजयादिकर्माणि—लिखन्ति । [परिणामः । अनुप्रासः । उपजातिः ] ॥५॥

राजा–आत्मप्रशंसाश्रवणविलक्षः सन् प्रसङ्गान्तरं सञ्चारयति—असुरेति । असुराणां = दानवानाम् । सम्प्रहारे = युद्धे । उत्सुकेन = उत्कण्ठितेन । दिवं= स्वर्गम् । अधिरोहता = आरोहता–मया । पूर्वेद्युः = पूर्वस्मिन्दिवसे । न लक्षितः = न यथावद् दृष्टः । तत् = तस्मात् । कथय मे परिचयार्थम् । मरुतां = वायूनां–कतमस्मिन् = कस्मिन् । पथि = मार्गे । सप्तसु वायुमार्गेषु–कस्मिन् वायुमार्गे–वयं वर्त्तामहे = वयं सम्प्रति प्रवर्त्तामहे ? ।

देवाङ्गनाओं के अङ्गरागों से बचे हुए भाग (रंग) से, कल्पलता (कल्पवृक्ष) से निर्मित रेशमी वस्त्रों पर, गाने योग्य पद और अर्थों के बन्ध (काव्य) को विचार पूर्वक बना २ कर, ये देवतागण तुमारे इस सुन्दर चरित को लिख रहे हैं ! ॥ ५ ॥

राजा—हे मातले ! असुरों से युद्ध करने की उत्सुकता के कारण पहिले दिन तो मैंने स्वर्ग जाते समय इस प्रदेश को ठीक २ नहीं देखा था । अतः कहिए–अब इस समय हम किस वायुमण्डल के मार्ग में चल रहे हैं ? ।

१ 'गीतिक्षमं' । २ 'अर्थजातम्' पाठः ।

मातलिः—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां,
ज्योतींषि वर्त्तयति च प्रविभक्त[1]रश्मि ।
[2]तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ६ ॥

आवहादयः सप्त वायुस्कन्धास्तत्र कतमस्मिन् वायुस्कन्धे सम्प्रति वयं वर्त्तामहे इति प्रश्नाशयः ।

त्रिस्रोतसमिति । यः = मार्गः । गगने प्रतिष्ठा अवस्थितिर्यस्याः सा तां—गगनप्रतिष्ठां = गगनगामिनीं । त्रिस्रोतसं=स्वर्गगङ्गां मन्दाकिनीं नाम । वहति= धारयति । च = किञ्च । प्रविभक्ता रश्मयो यस्मिन् कर्मणि तत्—प्रविभक्तरश्मि = असङ्कीर्णकिरणं यथा स्यात्तथा । ज्योतींषि = सप्तर्षिस्थानानि । वर्त्तयति = सञ्चारयति । द्वितीयेन —हरेर्विक्रमेण = पादन्यासेन । निस्तमस्कं = तमोलेशशून्यं । निर्दोषं । परिवहस्य=परिवहाख्यस्य । तस्य=प्रसिद्धस्य वायोः । इमं मार्गं वदन्ति।

परिवहो नाम—वामनद्वितीयचरणन्यासपवित्रः स्वर्गङ्गा-सप्तर्षिमण्डलादि-प्रवर्त्तकः षष्ठो वायुस्कन्धः । तदुक्तं ब्रह्माण्डपुराणे—

'आवहः प्रवहश्चैव संवहश्चोद्वहस्ततः ।
विवहाख्यः परिवहः परावह इति क्रमात् ॥
सप्तैते मारुतस्कन्धा महर्षिभिरुदीरिताः ।" इति ।
'सप्तर्षिचक्रं स्वर्गङ्गां षष्ठः परिवहस्तथा ।'
( अस्य—'वर्त्तये'दिति शेषः )।

"भुवं सनाकं त्रिदशाधिवासं सोमार्कऋक्षैरभिवन्दितं नभः ।
देवो द्वितीयेन जगाम वेगात्क्रमेण देवप्रियमीप्सुरीश्वरः ॥" इति च ।

**मातलि**—आकाशगामिनी गङ्गाजी ( मन्दाकिनी ) को जो धारण करता है, और जो अलग २ रश्मियों (किरणों) के विभागपूर्वक नक्षत्रमण्डल को धारण करता

१ 'चक्रविभक्तरश्मिः' पा० ।
२ 'तस्य व्यपेतरजसः प्रवहस्य वायोर्मार्गो द्वितीयहरिविक्रमपूत एषः' पा० ।

**राजा**—अतः खलु मे [1]सबाह्याऽन्तःकरणोऽन्तरात्मा प्रसीदति। (रथाङ्गमवलोक्य—) शङ्के मेघपदवीमवतीर्णाः स्मः।?

**मातलिः**—आयुष्मन्! कथमवगम्यते ?।

---

इत्थं व्यासवचनाद्वामनद्वितीयचरणाक्रान्तत्वमन्तरिक्षमण्डलस्य प्रसिद्धम्। पाठान्तरे—प्रवहाख्यो द्वितीयो वायुस्कन्धः। तत्कर्म च—'प्रवर्तयेत्प्रवहश्चाथ तथा मार्त्तण्डमण्डल' मिति व्यास एव आह। 'चक्रविभक्तरश्मि' रिति पाठान्तरे—चक्रेण = आवर्त्तेन, विभक्ता रश्मयो = ज्योतिर्मण्डलानि येनासौ—तथेति वायुविशेषणं बोध्यम् [ अत्र महापुरुषचरितवर्णनादुदात्तालङ्कारः। अनुप्रासश्च। 'वसन्ततिलका' ] ॥ ६ ॥

अतः खलु=अस्मात्कारणादेव। परिवहवायुस्कन्धसञ्चारादेव। बाह्यैः करणैः सहितः सबाह्यकरणः = बहिरिन्द्रियसमूहसहितः। मे = मम। अन्तरात्मा = अन्तःकरणम्। आत्मा वा। 'सबाह्यान्तःकरण' इति पाठे—बाह्यं = बहिरिन्द्रियादि। अन्तःकरणं = मनोबुध्यहङ्करादीति बोध्यम्। रथाङ्गं = रथचक्रं। मेघानां पदवीं = मेघमार्गं। तदुक्तं भास्करार्येण—'भूमेर्बहिर्द्वादश योजनानि भूवायुरत्राऽम्बुदविद्युदाद्यम्।' इति।

---

है, भगवान् वामन के चरण विन्यास से पवित्र-उस परिवह नामक छठे वायुका यह-मार्ग है। अर्थात्—हम लोग परिवहनामक छठे वायु मण्डल में चल रहे हैं॥ ६ ॥

**राजा**—इसी लिए मेरा बाह्य और भीतर के इन्द्रियों और अन्तःकरणों से (मन, बुद्धि, चित्त, अहङ्कार इन चारों अन्तःकरणों से) युक्त अन्तरात्मा प्रसन्न हो रहा है। (रथ के पहियों की ओर देखकर) मालूम होता है, हम लोग अब मेघमण्डल के मार्ग में उतर आए हैं।

**मातलि**—हे आयुष्मन्! आपने यह कैसे समझा ?।

---



१ 'सबाह्यकरणः' पा०।

राजा—

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि—[1]
हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ७ ॥

---

अयमिति । शीकरैः क्लिन्ना नेमिर्यस्यासौ शीकरक्लिन्ननेमिः = वारिकणार्द्र-चक्रप्रान्तः । ते = तव । अयं रथः-अराणां विवरेभ्यः-अरविवरेभ्यः = चक्राव-यवच्छिद्रेभ्यः । 'अरं शीघ्रे च चक्राङ्गे' इति विश्वः । विनिष्पतद्भिः=निस्सरद्भिः । च = किञ्च, अचिरभासां = तडितां । तेजसा = प्रकाशेन । अनुलिप्तैः=परीतैः । व्याप्तैः । हरिभिः=रथाश्वैः । वारिगर्भाणि उदराणि येषान्तेषां-वारिगर्भोदराणां= जलपरिपूर्णानां । घनानां=मेघानाम् । उपरि = ऊर्ध्वं । गतं=गमनं । पिशुनयति = सूचयति ।

चातकानां रथचक्रच्छिद्रमार्गणैतस्ततो गतागतेन, विद्युदालोकपरीताङ्गै-रथवाजिभिः, आर्द्रचक्रनेमिभिश्च तवायं रथ एव मेघपदव्या उपरि गमनमस्माकं सूचयतीति भावः । 'पिशुनौ खलसूचकौ' इत्यमरः । [ काव्यलिङ्गानुप्रासौ । मालिनीवृत्तम् ] ॥ ७ ॥

---

राजा—तुमारा यह रथ ही—जिसके पहियों की पखुड़ियों के बीच में से चातक निकल २ कर उड़ रहे हैं, और जिसके घोड़े भी-चमकती हुई बिजलियों की चमक से चमक रहे हैं, और जिसके पहियों की परिधि भी जल से गीली हो रही है-स्वयं जल से भरे हुए मेघों के ऊपर से अपने चलने की सूचना दे रहा है ।

अर्थात्-रथ के पहियों की परिधि भीगी हुई है, रथ के पहियों के बीचमें लगे हुए काष्ठों के बीच से चातक निकल २ कर उड़ रहे हैं, रथ के घोड़े-बिजली की चमक से प्रकाशित हो रहे हैं-इन सब बातों से स्पष्ट ही प्रतीत हो रहा है, कि-तुमारा यह रथ मेघमण्डल के ऊपर से अब जा रहा है ॥ ७ ॥

---

१ 'अयमगविवरेभ्यः'—पा० ।

मातलिः—अथ किम् । क्षणाच्चायुष्मान्स्वाधिकारभूमौ वर्त्तिष्यते।

राजा—( अधोऽवलोक्य- ) मातले! वेगादवतरणादाश्चर्य्यदर्शनः संलक्ष्यते मनुष्यलोकः। तथाहि—

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी,
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः।

---

स्वस्याधिकारो यस्यां सा—स्वाधिकारा, सा चासौ भूमिश्च, तस्यां= स्वाधिकारभूमौ = भूलोके । वर्त्तिष्यते=स्वनिवासं भूलोकं प्राप्स्यति । आश्चर्यदर्शनः = अद्भुतदर्शनः ।

शैलानामिति । उन्मज्जतां=प्रकटीभवतामिव दृश्यमानानां। शैलानां= गिरीणां। शिखरात्=अग्रभागात्। मेदिनी = भूमिः। अवरोहतीव=अधो गच्छतीव। पूर्वं दूरतया पर्वतशिखरलग्नेव भूरालक्षिता, इदनीं तु सान्निध्यात् पर्वत- मेदिन्योः शनैः शनैर्दूरीभावो ज्ञायत इत्याशयः। पादपाः = तरवः। स्कन्धानां=

---

मातलि---यह बात बिलकुल ठीक है। हम मेघ मण्डल के ऊपर से ही अब जा रहे हैं। अब शीघ्र ही आप-अपनी अधिकृत भूमि में-भूमण्डल में-अपने को पाएँगें।

राजा—( नीचे की ओर देखकर ) हे मातले! वेग से उतरने से यह मनुष्य लोक ( भूमण्डल ) हमें आश्चर्यजनक ( अद्भुत रूप में ) ही दिखाई दे रहा है जैसे, देखो—

यह पृथ्वी-पर्वतों के शिखरों से उतरती हुई सी मालूम हो रही है। ये वृक्ष भी-पहिले तो पत्तों में छिपे हुए से मालूम होकर भी, अब धीरे २ उनके पेड़ ( तना, पेड़ी ) दिखाई देने से, पत्तों से निकले हुए से मालूम हो रहे हैं। ये नदियां भी-पहिले तो जहां उनके प्रवाह में-जल कम है, वहाँ से बीच

सन्धानं तनुभागनष्टसलिलव्यक्त्या व्रजन्त्यापगाः,
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ! ॥८॥

प्रकाण्डानाम्। 'अस्त्री प्रकाण्डः स्कन्धः स्या' दित्यमरः। उदयात्=प्राकट्यात्। पर्णानामभ्यन्तरे लीनतां = पत्रमयतां। पत्रान्तर्लयं। विजहति=त्यजन्ति। प्रकटीभवन्तीत्यर्थः। आपगाः = सरितश्च। तनुभागेषु नष्टस्य सलिलस्य व्यक्त्या-तनुभागनष्टसलिलव्यक्त्या = क्वचित्तनुतराणां जलधाराणामदृश्यतया, क्वचिच्च विपुलजलप्रपातस्य दृश्यतया विच्छिन्नप्रवाहतया लक्ष्यमाणा--अपि नद्यः-क्रमात् = शनैः शनैः, तनुतरनद्यादिप्रवाहस्यापि स्पष्टं दर्शनात्--सन्धानम् = अविच्छिन्नप्रवाहतां। व्रजन्ति=भजन्ते। पाठान्तरे—'तनुभावेन = तनुत्वेन, नष्टम् = अदृश्यं, सलिलं = जलधारा यासान्ताः—तनुभावनष्टसलिलाः। आपगाः=नद्यः। सन्तानैः = विस्तारेण। व्यक्तिं = स्पष्टतां, व्रजन्ति = गच्छन्ति—'इत्यर्थो बोध्यः। भुवनं=जगत्। उत्क्षिपतेव=कन्दुकवदुत्क्षिपतेव। केनापि=केनापि अदृश्येनेव। मत्पार्श्वं = मन्निकटम्। आनीयते=प्राप्यते। भूवलयं सहसैव अस्मन्निकटमागच्छतीत्यर्थः। इति पश्य = एतद्विलोकय। [उत्प्रेक्षा। स्वभावोक्तिः। काव्यलिङ्गम्। अनुप्रासः। 'शार्दूलविक्रीडितम्' ]॥ ८॥

बीच में खण्डित सी मालूम होती थीं, वेही अब धीरे २ कम जल वाले प्रवाह भाग के भी स्पष्ट हो जाने से, अब जुड़ी हुई सी मालूम होती हैं। और यह भूलोक-मानों किसी के द्वारा उछाला जाकर मेरे पास दौड़ा चला आ रहा है।

भावार्थ—आकाश से नीचे उतरते समय पहिले पर्वतों की चोटियाँ ही दिखाई देती हैं, पीछे धीरे २ पृथ्वी दिखाई देती है, अतः ऐसा मालूम होता है, मानों—पृथिवी पर्वतों की चोटी से धीरे २ उतर रही है। और पहिले वृक्षों की पत्तियाँ दिखाई देती हैं, फिर उनके पेड़ दिखाई पड़ते हैं। नदियाँ भी पहिले बीच २ में खण्डित सी मालूम होती हैं, क्योंकि—नदियों का भी पाट जहाँ चौड़ा है, जहाँ जल ज्यादा है, वही भाग पहिले दीखता है, कम जल वाला, कम चौड़े पाट वाला भाग नहीं दिखलाई देता है, अतः नदियाँ भी बीच २ में टूटी हुई सी पहिले मालूम होती हैं, पीछे धीरे २ निकट आने से, पूरी जुड़ी हुई सी मालूम होने लगती हैं। भूमण्डल भी मानों ऊपर को उछलता हुआ आ रहा है, ऐसा मालूम होता है॥ ८॥

१ 'सन्तानैस्तनुभावनष्टसलिला व्यक्तिं व्रजन्त्यापगाः' पा०।

मातलिः——आयुष्मन् ! साधु दृष्टम् । (सबहुमानमालोक्य–) अहो ! उदाररमणीया पृथिवी ! ।

राजा——मातले ! कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरस-निष्यन्दः-सान्ध्य इव मेघः—सानुमानालोक्यते ? ।

मातलिः——आयुष्मन् ! एष खलु हेमकूटो नाम किंपुरुषपर्वतः—परं तपस्विनां क्षेत्रम् ।

स्वायम्भुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुराऽसुरगुरुः सोऽस्मिन्त्सपत्नीकस्तपस्यति ॥९॥

---

साधु = शोभनं । दृष्टं = भवतोत्प्रेक्षितम् । उदाररमणीया = अतिरमणीया । 'उदारो दातृमहतोः' इति कोशः । पूर्वापरसमुद्रयोरवगाढः—पूर्वाऽपरसमुद्राव-गाढः = पूर्वपश्चिमसमुद्रसम्बद्धः । कनकरसस्य निष्यन्दो यत्रासौ तथा = स्वर्ण-द्रवशोभितः । सान्ध्यः=सायङ्कालिकः । मेघ इव=अम्भोद इव रक्तः । सानुमान्= पर्वतः । किम्पुरुषपर्वतः = किम्पुरुषवर्षपर्वतः । 'भारतं प्रथमं वर्षं, ततः किम्पु-रुषं स्मृतम्'—इति विष्णुपुराणम् । परं = श्रेष्ठं । क्षेत्रं=स्थानम् ।

स्वायम्भुवादिति । स्वयम्भुवोऽपत्यं-स्वायम्भुवस्तस्मात्=स्वयम्भूतनयात् । मरीचेः=तन्नामकात् । यः प्रजापतिः=यो जगत्स्रष्टा । प्रथमम् = आदौ-बभूव । सुराणामसुराणां च-गुरुः = पूज्यः पिता । स भगवान् = कश्यपः । प्रजापतीनां

---

मातलि—आपने बहुत ठीक देखा । ऐसीही बात है । ( बड़ेही संमान पूर्वक सामने देखकर ) अहो ! यह पृथिवी भी कैसी विशाल और मनोहर है ! ।

राजा—हे मातले ! पूर्व और पश्चिम के समुद्रों में घुसा हुआ, सोने के रस के प्रवाह को छोड़ता हुआ, सन्ध्या समय के मेघ की तरह पीला २ यह कौनसा पर्वत है ? ।

मातलि—हे आयुष्मन् ! यह हेमकूट ( काराकोरम् या कैलास ) नामका किम्पुरुष वर्ष का पर्वत है, जो तपस्वियों की तपस्या का सर्वश्रेष्ठ मुख्य स्थान है ।

स्वयम्भू ब्रह्माजी के [illegible] मरीचि से जो प्रजापति उत्पन्न हुए

राजा—( सादरम् ) तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

मातलिः—आयुष्मन् ! प्रथमः कल्पः । ( अवतरणं नाटयन्- ) एतावबतीर्णौ स्वः ।

राजा—( सविस्मयम्- ) मातले !

उपोढशब्दा न रथाङ्गनेमयः,
प्रवर्त्तमानं न च दृश्यते रजः ।

---

प्रथमः; अस्मिन्=हेमकूटे[1] पर्वते । सपत्नीकः=सभार्यः । तपस्यति=तपश्चरति । [ अनुप्रासः ] ।।६।।

अनतिक्रमणीयानि = अनुल्लङ्घनीयानि । श्रेयांसि = शुभप्रदानि कश्यपदर्शनादीनि । प्रथमः = श्रेष्ठः । कल्पः = विधिः । पन्थाः । अयमुत्तमः पक्ष इति यावत् । अवतीर्णौ = अवरूढौ । रथोऽवतीर्ण इति भावः । नाटयन् = रूपयन् ।

उपोढेति । अभूतलस्पर्शतया—रथाङ्गनेमयः = चक्रप्रान्तभागाः । उपोढः

---

हैं, वे ही सुर-और असुरों के पिता ( कश्यपजी ) इसी पर्वत में अपनी पत्नी के साथ ही तपस्या करते हैं ॥ ९ ॥

राजा—( बड़े आदर से ) तो कल्याणप्रद इस अवसर को छोड़ना उचित नहीं है, अतः मैं उनके दर्शन एवं उनकी प्रदक्षिणा करके ही तब आगे चलना चाहता हूं ।

मातलि—हे आयुष्मन् ! यह तो मुख्य विधि है । अर्थात्-यह तो बहुतही उत्तम विचार है । उनके दर्शन करके ही हमें आगे चलना उचित है ।

[ आकाश से पर्वत पर उतरने का अभिनय करता हुआ- ]

हे आयुष्मन् ! लीजिए, हम नीचे उतर आए हैं ।

राजा—( आश्चर्य चकित हो ) हे मातले !

तुमारे रथ के पहियों की नेमियाँ ( पहिये का नीचे का हिस्सा, जो भूमि

---

१ अयं सम्प्रति-'काराकोरम्' इति प्रसिद्धः । हिमालयादुत्तरदिशि हि किंपुरुषवर्षम् । तच्च-सम्प्रति 'रूस' इति प्रसिद्धः प्रदेशः कदाचित् स्यात् ।

अभूतलस्पर्शतया निरुद्धति-

स्तवाऽवतीर्णोऽपि न लक्ष्यते रथः ! ॥१०॥

मातलिः—एतावानेव[1] शतमन्योरायुष्मतश्च रथस्य विशेषः।

---

शब्दो याभिस्ताः-उपोढशब्दाः = कृतध्वनयः। न = नैव। भूतलस्पर्शाऽभावा-चक्रप्रान्तभागसङ्घर्षजो रथस्य घर्घरस्वनो नैव श्रूयते इति भावः।

अभूतलस्पर्शतयैव-प्रवर्त्तमानम् = उद्गच्छत्। रजः = धूलिः। न च दृश्यते = न विलोक्यते। अभूतलस्पर्शतयैव-निर्गता उद्धतिर्यस्यासौ निरुद्धतिः = समविषमप्रदेशावस्थानादिजन्यौद्धत्यविकलः। ( उद्धतिः='धक्का' )। तव रथः अवतीर्णोऽपि = हेमकूटभूतलमवतीर्णोऽपि। न लक्ष्यते = न विज्ञायते। [ विशेषोक्तिः। काव्यलिङ्गम्। अनुप्रासः। विरोधाभासः। वंशस्थम् ]॥ १० ॥

शतमन्योः = इन्द्रस्य। 'शतमन्युर्दिवस्पति'रित्यमरः। आयुष्मतः = भव-

---

को छूता है, 'पुट्ठियाँ' ) तो बिलकुल ही शब्द (आवाज) नहीं करती हैं। और भूमि से धूलि भी उड़ती नहीं दीखती है। और यह रथ भूमि से ऊँचा ही रहता है, जमीन को छूता नहीं है, अतः इसमें धक्के भी नहीं लगरहे हैं। इस लिए यह तुमारा रथ भूमि पर उतर जाने पर भी, भूमि पर उतरा हुआ सा मालूम ही नहीं होता है !।

भावार्थ—और जितने रथ हैं, वे जब भूमि पर चलते हैं, तो उनके चलने से पहियों की खड़खड़ाहट होती है, धूलि उड़ती है, ऊँची-नीची जगहों में धक्के भी लगते हैं, परन्तु तुमारा यह दिव्य रथ तो इन सब बातों से रहित है, अतः यह भूमि पर उतरने पर भी, भूमि में उतरा हुआ-सा नहीं मालूम होता है। [ देवताओं के पैर, और रथों के पहिए, भूमि से स्पर्श नहीं करते हैं, किन्तु वे ऊँचे ही उठे रहते हैं ]॥ १० ॥

मातलि—यही तो आपके रथमें और भगवान् इन्द्र के रथमें विशेषता है।

---

१ 'शतक्रतोः' पा०

राजा —मातले ! कतमस्मिन् प्रदेशे मारीचाश्रमः ?।

मातलिः—( हस्तेन दर्शयन्- ) पश्य—

वल्मीकार्द्धनिमग्नमूर्त्तिरुरगत्वग्ब्रह्मसूत्रान्तरः,
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसम्पीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥११॥

तश्च । विशेषः = भेदः। 'शतक्रतु'रिति पाठेऽप्येष एवार्थः। मारीचः=कश्यपः।
वल्मीकेति । वल्मीकस्याऽर्द्धं निमग्ना मूर्तिर्यस्यासौ–वल्मीकार्द्धनिमग्न-मूर्त्तिः = वामलूरमृत्कूटनिविष्टशरीरार्द्धः । 'वामलूरश्च नाकुश्च वल्मीकं पुंन-पुंसकम्'—इत्यमरः । पाठान्तरे–वल्मीकाग्रं = वल्मीकप्रान्तभागः । अन्यद् ब्रह्मसूत्रं–ब्रह्मसूत्रान्तरम् । उरगत्वगेव ब्रह्मसूत्रान्तरं यस्यासौ—उरगत्वग्ब्रह्म-सूत्रान्तरः = सर्पनिर्मोकयज्ञोपवीतान्तरः । सर्पत्वग्यत्राऽपरं यज्ञोपवीतमिव भाती-त्याशयः । पाठान्तरे–संदष्टाः सर्पाणां त्वचो यत्र, तेन = संसक्तसर्पकञ्चुकेन । उरसा=उरस्थलेनोपलक्षित इत्यर्थः । कण्ठे = कण्ठस्थले । जीर्णानां लतानां प्रतानं, तदेव वलयं–तेन जीर्णलताप्रतानवलयेन = पुराणलतामण्डलेन । अत्यर्थं सम्पीडितः = समन्तादावृतः । प्रतानं वलय इव=कण्ठरोमाणीवेति वा । 'वलयः कण्ठलोम्नि स्याद्वलयं कङ्कणेऽपि च' ति विश्वः । अंसौ व्याप्नोति तच्छीलम्–अंसव्यापि = स्कन्धप्रसृतं । शकुन्तानां नीडैर्निचितं–शकुन्तनीडनिचितं =

राजा—हे मातले ! भगवान् मारीच (कश्यपजी) का आश्रम किस जगह है ?।

मातलि—( हाथ से दिखाता हुआ— ) हे आयुष्मन् ! वह देखिए—चींटियों और दीमकों से निकली हुई मिट्टी के ढूह के बीच में जिनका आधा शरीर ( शरीर के नीचे का भाग ) दब गया है, सर्पों की केंचुलियाँ जिनके शरीर पर दूसरी जनेऊ की तरह मालूम हो रही हैं, लिपटी हुई लताओं के तन्तुओं से जिनका गला खूब कस गया है, ऐसे ये महर्षिगण, जिसमें पक्षियों ने घोंसले

१ 'वल्मीकाग्रनिमग्नमूर्त्तिरुरसा संदष्टसर्पत्वचा' पा० ।

राजा—( विलोक्य- ) नमोऽस्मै कष्टतपसे ।

मातलिः—( संयतप्रग्रहं रथं कृत्वा— ) एतावदितिपरिवर्द्धित—मन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।

---

पक्षिकुलायैर्व्याप्तं । जटामण्डलं = जटाजूटं । बिभ्रत् = दधत् । स्थाणुरिव = शुष्कवृक्ष इव । अचलः = निश्चलः । मुनिः = मरीचिपुत्रो महर्षिः कश्यपः । अन्यो वा कश्चन तापसः । अर्कबिम्बं = सूर्यमण्डलम् । अभि = लक्ष्यीकृत्य । यत्र= यस्मिन् प्रदेशे—स्थितः । असौ मारीचाश्रम इति—योजना ।

स्थाणुः=वृक्षोऽपि—वल्मीकाग्रनिमग्नकायः, सर्पत्वक्परीतकोटरः, कण्ठे=कण्ठ-प्रदेशसमीपे—जीर्णलतावलयेनाऽऽचितश्च—पक्षिकुलायनिचितं स्कन्धप्रसूतं जटानां = शिफानां मण्डलं दधदचलोऽर्कबिम्बाभिमुखस्तिष्ठति । ( कण्ठ = 'कन्न' 'पास' ) इति भाषा ।

स्थाणुपक्षे हि—उरः—कोटरं । कण्ठः-समीपं, जटाः—शिफा । अंसः=स्कन्धः- इति विशेषतोऽर्थो ज्ञेयः । [परिकरश्लेषोपमानुप्रासाः । शार्दूलविक्रीडितम्] ॥११॥

कष्टं तपो यस्य, तस्मै—कष्टतपसे = उग्रतपसे । संयताः प्रग्रहा यत्र तत्—संयत-प्रग्रहं = नियमितरश्मिरज्जुम् । एतौ = आवाम् । अदित्या परिवर्द्धिता मन्दार-वृक्षा यत्र तम्—अदितिनामककश्यपपत्नीपरिवर्द्धितमन्दारतरुशोभितम् । प्रजा—

---

बना लिए हैं, ऐसे कन्धे तक लटकते हुए जटा के मण्डल को ( जटाजूट को ) धारण किये हुए, स्थाणु ( सूखे वृक्ष ) की तरह निश्चल हो, सूर्य की ओर मुख करके खड़े हो, तपस्या कर रहे हैं ॥ ११ ॥

राजा—(देखकर) इस प्रकार कष्ट पूर्वक तपश्चर्या करने वाले इन (मुनिजी) को मेरा प्रणाम है ।

मातलि—( घोड़ों की लगाम खींचकर, रथ को खड़ा करके ) अब हम दोनों ही देवमाता अदितिजी से लगाए हुए मन्दार वृक्षों ( कल्पवृक्षों ) से सुशोभित प्रजापति कश्यपजी के आश्रम में पहुँच गये हैं । (कश्यपजी के आश्रम में प्रविष्ट हो गये हैं ) ।

**राजा**—अहो ! स्वर्गादिदमधिकं निर्वृतिस्थानम् । अमृतह्रदमिवाऽवगाढोऽस्मि ! ।

**मातलिः**—( रथं स्थापयित्वा- ) अवतरत्वायुष्मान् ।

**राजा**—(अवतीर्य्य-) भवान् [1]'किमिदानीम्—' ? ।

**मातलिः**—[2]समययन्त्रित एवाऽयमास्ते रथः । वयमप्यवतरामः । ( तथा कृत्वा- ) इत इत आयुष्मन् ! दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः ।

---

पतेः = कश्यपस्य । आश्रमं = तपोवनं । निर्वृतिस्थानं = सुखप्रदम् । अमृतह्रदमिव = पीयूषसरोवरविशेषमिव । अवगाढः = प्रविष्टः । भवान् कथमिदानीं ! भविष्यतीति शेषः । सम्प्रति किं करिष्यति भवान् ? । 'किमिदानी'मिति पाठे-'अवतरिष्यती'ति शेषः । प्रश्नश्चाऽयम् । संयन्त्रितः = सम्यक् संस्थापितः । स्वयंनियन्त्रित इति वाऽर्थः । समययन्त्रितः' इति पाठे-हे रथ ! अस्मदागमनपर्यन्तं त्वं तिष्ठेति समयबन्धपूर्वकमवस्थापितः ।

---

राजा—ओह ! यह स्थान तो स्वर्ग से भी अधिक शान्ति और आनन्द का देने वाला है ! । मैं तो जैसे अमृतके ह्रद ( सरोवर ) में ही प्रविष्ट हो गया हूँ। अर्थात्—अमृत के ह्रद में गोता लगाने का सा आनन्द मुझे आ रहा है ।

मातलि—( रथ को खड़ा करके- ) अब आप उतरिए ।

राजा—( रथ से उतर कर ) और अब आप ? । ( रथ की रक्षा के लिए आप यहीं रहेंगे, या मेरे साथ ही आश्रम में चलेंगे ? ) ।

मातलि—यह देवरथ सङ्केत मात्र से ही, अपने आप ही खड़ा रहता है । इसकी रक्षा करने की आवश्यकता नहीं है । इसलिए मैं भी इससे उतरता हूँ । ( उतरकर- ) हे आयुष्मन् ! आप इधर से पधारिए, इधर से । और यहाँ पूज्य ऋषियों की तपोवनभूमिका दर्शन करिए ।

---

१ 'कथमिदानीं'—पा० । २ 'संयन्त्रितः' ।

राजा—ननु विस्मयादुभयमवलोकयामि[1]।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने,
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया।
ध्यानं रत्नशिलागृहेषु, विबुधस्त्रीसंनिधौ संयमो,
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी॥१२॥

---

प्राणानामिति। सन्तः कल्पवृक्षा यत्र, तस्मिन्—सत्कल्पवृक्षे=सकलभोगप्रदकल्पपादपशोभितेऽपि। वने=अरण्ये। आश्रमे। प्राणानाम्—उचिता=अवश्यकर्त्तव्या। वृत्तिः=प्राणधारणक्रिया। जीवनमिति यावत्। अनिलेन=वायुना। न तु—नानाविधैः कल्पवृक्षकल्पितैर्भोज्यभक्ष्यादिभिः। काञ्चनानां पद्मानां रेणुभिः कपिशं, तस्मिन्=स्वर्णकमलपरागपिङ्गलवर्णे। तोये=जले। धर्मार्थमभिषेकक्रिया=धर्माचरणार्थमेव स्नानादिकं, न तु जलक्रीडादिकामोपभागार्थम्। रत्नशिलानां तलेषु—ध्यानं, रत्नशिलाफलकेष्वपि ध्यानमाचरन्ति, न तु तत्र विहरन्ति। विबुधानां स्त्रीणां संनिधिस्तस्मिन्—विबुधस्त्रीसनिधौ=देवाङ्गनाऽभ्यासेऽपि। संयमः=इन्द्रियनिग्रहः। न तु ताभिः सह सम्भोगः। इति—अन्ये मुनयः=अन्ये तपस्विनः। तपोभिः=तपःफलतया। यत्=यत् स्थानं स्वर्गभुवं।

---

राजा—यहाँ इन दोनों बातों को मैं आश्चर्यान्वित हो देख रहा हूं, कि—

जहाँ सम्पूर्ण मनोरथों को पूर्ण करने वाले कल्पवृक्ष विराजमान हैं, वहाँ भी ये ऋषिलोग केवल वायु का ही भक्षण करके प्राणों को धारण कर रहे हैं। और सोने के पद्मों के पराग से पीले रंग में रंगे हुए दिव्य जल में भी पुण्यसञ्चयार्थ ही ये स्नान कर रहे हैं। रत्न की शिलाओं से विरचित भवनों (कन्दराओं) में बैठकर भी ये लोग ध्यान लगाते हैं!। देवाङ्गनाओं ( दिव्यस्त्रियों ) के बीचमें रहकर भी ये संयम (इन्द्रियनिग्रह, ब्रह्मचर्य) का ही पालन करते हैं!। अन्य मुनिगण तपस्या करके जिन वस्तुओं को ( स्वर्ग के भोगों को ) प्राप्त करना चाहते हैं, उन्हीं वस्तुओं के बीच में रहकर भी ये तपस्या करते हैं!। इन दोनों बातों को

---

१ क्वचिन्न।

**मातलिः**—उत्सर्पिणी खलु महतां प्रार्थना। (परिक्रम्य, आकाशे-) वृद्धशाकल्य ! किंव्यापारः सम्प्रति भगवान् मारीचः ?। ( आकर्ण्य- ) किं ब्रवीषि '—दाक्षायण्या पतिव्रतापुण्यमधिकृत्य पृष्टस्तदस्यै महर्षिपत्नीगणसहितायै कथयती'ति ?। तत्प्रतिपाल्यावसरः खलु प्रस्तावः।

---

वाञ्छन्ति=काङ्क्षन्ति=इच्छन्ति। सुराङ्गनासम्भोगाद्यर्थं यत्स्थानमिच्छन्ति। तत्रैव=तत्प्राप्यापि। अमी=पुरःस्थिता मुनयः। तपश्चरन्ति=तपस्यन्ति !। [स्त्रीसांनिध्यादि-कारणसत्त्वेऽपि कार्यानुत्पत्त्या-विशेषोक्तिः। अनुप्रासः। शार्दूलविक्रीडितम्] ॥१२॥

उत्-ऊर्ध्वं-सर्पति तच्छीला-उत्सर्पिणी=उपर्युपरि धावमाना। सकलातिशायिनी। महतां=मनस्विनां। प्रार्थना=अभिलाषः। इमे इतोऽपि महत्पदं कैवल्यादिकमभिलषन्तस्तपस्यन्तीति भावः। आकाशे=गगने। अर्थात्-स्वयमेव। वृद्धशाकल्यः—तापसविशेषः। को व्यापारो यस्यासौ तथा। किं करोतीत्यर्थः।

आकर्ण्य = श्रवणमभिनीय। दक्षस्यापत्यं स्त्री-दाक्षायणी, तया=अदित्या। पतिव्रतापुण्यं = पतिव्रताधर्मम्। अधिकृत्य = विषयीकृत्य। महर्षीणां पत्न्यस्तासां गणेन सहितायै। अस्यै = अदित्यै। तत् = पतिव्रतापुण्यम्। 'इति ब्रवीषि कि'मिति शाकल्योक्तानुवादः। प्रतिपाल्योऽवसरो यस्यासौ प्रतिपाल्या-

---

(भोगसामग्री और त्याग को) देखकर मैं तो आश्चर्यचकित हो रहा हूं। अर्थात् भोग की सम्पूर्ण सामग्री की उपस्थिति और उसका त्याग—इन दोनों बातों को यहाँ एक साथ देखकर मेरे आश्चर्य का ठिकाना नहीं है ॥ १२ ॥

**मातलि**—महात्माओं की इच्छा और प्रार्थना सदा ऊँची ही ऊँची बढ़ने वाली रहा करती है। अर्थात्—इन वस्तुओं के आनन्द से भी अधिक श्रेष्ठ ब्रह्मानन्द को प्राप्त करने के लिए ही लोग ऐसा कठिन तपस्या कर रहे हैं। [ कुछ चलकर आकाशमें, अर्थात्—स्वयमेव दूसरेके नामसे प्रश्नोत्तर करता हुआ ]

हे वृद्ध शाकल्य ! इस समय भगवान् मारीच (कश्यपजी) क्या कर रहे हैं ?। ( यह सुनकर आप- ) क्या कह रहे हो कि—"भगवती दाक्षायणी अदितिजीसे पतिव्रता के धर्म और पुण्य का प्रश्न करने पर, ऋषिपत्नियों से परिवृता भगवती दक्षपुत्री अदितिजी को पतिव्रता धर्म का उपदेश दे रहे हैं" ?।

(राजानमवलोक्य—) अस्यामशोकच्छायायां तावदास्तामायुष्मान्, यावत्त्वामहमिन्द्रगुरवे निवेदयामि।

राजा—यथा भवान्मन्यते। (–इति स्थितः)।

( मातलिः—निष्क्रान्तः)।

राजा—( निमित्तं सूचयित्वा )—

**मनोरथाय नाऽऽशंसे, किं बाहो! स्पन्दसे मुधा।**
**पूर्वाऽवधीरितं श्रेयो, दुःखं हि परिवर्तते॥ १३॥**

---

वसरः=प्रतीक्षणीयावसरः। प्रस्तावः=कथाप्रसङ्गः। कथासमाप्तौ सत्यवसरे तस्य दर्शनं स्यादिति भावः। त्वाम्=त्वदागमनम्। इन्द्रगुरवे=महेन्द्रजनकाय कश्यपाय।

निमित्तं=भुजस्पन्दं। सूचयित्वा=नाटयित्वा। 'आह'इति शेषः। मनोरथा- येति। हे बाहो! मुधा=वृथा। किं स्पन्दसे=किं स्फुरसि। यतः-मनो- रथाय=मनोरथभूतायाः शकुन्तलायाः प्राप्तये। नाऽऽशंसे=तं मनोरथं प्राप्तुं न आशां हृदि धारयामि। हि=यतः। पूर्वम् अवधीरितं पूर्वावधीरितं=प्रथमं स्वयमेव परित्यक्तं सत्—श्रेयः=सुखसाधनं (प्रिया)। दुःखं यथा

---

अच्छा, तब तो हम लोगों को कुछ देर प्रतीक्षा करनी पड़ेगी।

( राजा की ओर देखकर-) इस अशोक वृक्षकी छायामें तबतक आप बैठिए, जबतक मैं भगवान् इन्द्र के पिता कश्यपजी को आपके आने की सूचना देता हूँ।

राजा—जैसा आप उचित समझें करें।

[ राजा वहीं अशोक वृक्ष के नीचे ठहर जाता है ]।

[ मातलि—जाता है ]।

राजा—( शुभ शकुन की सूचना देता हुआ-) हे मेरी दक्षिणभुजा! तू क्यों फड़क रही है?। मैं तो अपने मनोरथ की ( शकुन्तला की ) प्राप्ति की आशा को छोड़ बैठा हूं। क्योंकि—

पूर्व उपस्थित कल्याणकारी वस्तु ( जैसे शकुन्तला ) का यदि तिरस्कार कर दिया जाता है, तो फिर पुनः उसकी प्राप्ति कठिन ही हो जाती है। अतः अब

( नेपथ्ये- )

मा क्खु चवलदं करेहि, जहिं तहिं ज्जेव अत्तणा पइदिं दंसेसि।
[ मा खलु चपलताङ्कुरु, यस्मिंस्तस्मिन्नेवाऽऽत्मनः प्रकृतिं दर्शयसि[1] ? ]।

**राजा**—( कर्णं दत्त्वा— ) अभूमिरियमविनयस्य । तत्को नु खल्वेवं निषिध्यते ? । ( शब्दाऽनुसारेणाऽवलोक्य, सविस्मयम्— ) अये! को नु खल्वयमव[2]रुध्यमानस्तापसीभ्यामबालसत्त्वो बालः ? ।

---

स्यात्तथा = क्लेशेनैव । परिवर्त्तते = पुनरायाति । यद्वा—दुःखरूपेण । परिवर्त्तते—परिणमति । अन्तःस्फुरतीत्यर्थः । यद्वा श्रेयो मया स्वयमेव तिरस्कृतं, सम्प्रति दुःखमात्रमेवाऽवशिष्यते । अतः क्व सुखं ? । अहन्तु सम्प्रति केवलं दुःखभागस्मीत्याशयः । [ अर्थान्तरन्यासोऽनुप्रासोऽतिशयोक्तिश्च ] ॥ १३ ॥

पाठान्तरे-आत्मनः प्रकृतिं कथं गतः=बालसुलभं चाञ्चल्यं कुतः करोषि ?। प्रकृतिः=स्वभावः । इयं = तपोवनभूमिः । अविनयस्य=चपलतायाः । अभूमिः= अस्थानम् । एवम् = इत्थम् । [2]अवरुध्यमानः = निषिध्यमानः । अबालस्येव

---

शकुन्तला की प्राप्ति तो बहुत कठिन है, और इधर तूं फडक रही है । अतः तेरा फडकना मुझे तो वृथा ही मालूम होता है । [ पुरुष की दक्षिण भुजा का फडकना—अपने प्रिय से समागम की सूचना देता है ] ॥ १३ ॥

[ नेपथ्य में— ]

अरे ! (बालक) ऐसी चपलता मत कर । जिस किसी के आगे भी ( सिंह आदि हिंसक पशुओं के सामने भी ) तूं अपनी चपल प्रकृति को दिखलाया ही करता है । मानता ही नहीं है ।

**राजा**—( कान लगाकर सुनता हुआ ) हैं ! यह तपोवन तो अविनय और धृष्टता की भूमि ( जगह ) नहीं है । फिर इस प्रकार किसको मना किया जा रहा है ? । ( जिधर से आवाज आ रही थी उधर ही देखकर ) अहो ! दो तापसियों से रोका जाता ( पकड़ कर खींचा जाता ) हुआ, बालक होते हुए

---

१ 'कथं गत एवात्मप्रकृतिम्' । २ 'अवरुध्यमानः' ।

अर्द्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं करेणैवाऽवकर्षति ! ॥१४॥

( ततः प्रविशति यथानिर्दिष्टकर्मा तापसीभ्यां सह बालः ) ।

बालः—जिम्भ ले सिंहसावआ जिम्भ, दन्ताइं दे गणइस्सं ।

[ जृम्भस्व रे सिंहशावक ! जृम्भस्व, दन्तांस्ते गणयिष्यामि ] ।

प्रथमा—अविणीद ! किं णो अवच्चणिव्विसेसाइं सत्ताइं विप्प-अरेसि ? । हन्त ! वड्ढइ व्विअ दे संरम्भो । ट्ठाणे क्खु इसिजणेण 'सव्वदमणो'त्ति किदणामहेओसि ।

[ अविनीत ! किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि ।

---

सत्त्वं यस्यासौ—अबालसत्त्वः = युवेव महाबलः । अस्य—अग्रिमश्लोकेनान्वयः ।

अर्द्धपीतेति । मातुः = सिंह्याः । अर्द्धं पीतः स्तनो येनासौ, तम्—अर्द्ध-पीतस्तनं = किञ्चित्पीतस्तन्यम् । आमर्देन क्लिष्टाः केसरा यस्यासौ तम् = आक-र्षणविसंष्ठुलविश्लथकेसरं । सिंहशिशुं = सिंहबालं । क्रीडितुं = स्वक्रीडनार्थं । करेण = हस्तेन । आकर्षति = आच्छिनत्ति । पाठान्तरे—बलात्कारेण = प्रसह्य । कर्षति = स्वाभिमुखं कर्षति । [ उदात्तं, स्वभावोक्तिरनुप्रासश्च ] ॥ १४ ॥

यथानिर्दिष्टं—सिंहाकर्षणरूपं कर्म यस्याऽसौ=यथानिर्दिष्टकर्मा । जृम्भस्व=

---

सी बड़ों की तरह प्रचण्ड पराक्रमी—यह बालक कौन है ?, और किसका है ? ।

जो कि—उसकी माता सिंहिनी के स्तनों को पूरा २ पीने से पहिले ही, अर्थात् आधे ही पीने पर भी, बीच में ही उसके केसर ( आयल ) के बालों को पकड़कर सिंह के बच्चे को खेलने के लिए जबरदस्ती हाथ से ही खींच रहा है ॥ ५४ ॥

[ सिंह के बच्चे को जबरदस्ती पकड़कर खींचते हुए, तथा दो तापसियों से मना किए जाते हुए बालक का प्रवेश ] ।

बालक—अरे सिंह के बच्चे ! अपना मुंह खोल, अपना मुंह खोल । मैं तेरे दाँत गिनूंगा ।

पहिली तापसी—अरे अविनीत ! ( कहना न माननेवाले ! ) हमारे द्वारा

---

१ 'बलात्कारेण कर्षति' ।

हन्त ! वर्द्धते इव ते संरम्भः । स्थाने खलु ऋषिजनेन 'सर्वदमन', इति कृतनामधेयोऽसि ]।

**राजा**—किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे हृदयम्। ( विचिन्त्य- ) नूनमनपत्यता मां वत्सलयति ।

**द्वितीया**—एषा तुमं केसरिणी लंघइस्सदि ! जइ से पुत्तअं ण मुञ्चिस्सदि ।

[ एषा त्वां [1]केसरिणी लङ्घयिष्यति, यद्यस्याः पुत्रकं न मोक्ष्यसि]।

**बालः**—( -सस्मितम्- ) अम्महे ! बलिअं क्खु भीदह्मि !

( इत्यधरं दर्शयति- )

[ अहो ! बलीयः खलु भीतोऽस्मि ]।

---

मुखं व्यादेहि । नः = अस्माकम् । अपत्यनिर्विशेषाणि = पुत्रवत्पालितानि । पुत्रतुल्यानि । सत्त्वानि = प्राणिनः । विप्रकरोषि = क्लेशयसि । हन्त ! आश्चर्ये, खेदे वा । संरम्भः = धाष्टर्यं, वेगश्च । स्थाने = युक्तमेव । सर्वान् दमयति— सर्वदमनः । उरसा जातः—औरसः—इव=आत्मज इव । अनपत्यता = सन्तान· राहित्यं । वत्सलयति = स्नेहयति । स्नेहं प्रवर्त्तयति ।

अनपत्यो हि बालं दृष्ट्वा तस्मिन् बलवत्स्निह्यतीति प्रसिद्धम् । लङ्घयिष्यति=

---

पुत्रों का तरह पाले हुए इन जीवोंको तूं इस प्रकार क्यों कष्ट देता है ? हा हन्त ! तेरी धृष्टता (उपद्रव) तो प्रतिदिन बढ़ती ही जा रही है ! । ऋषि लोगों ने तेरा 'सर्वदमन' नाम ठीक ही रखा है । तूं तो किसी से भी डरता ही नहीं है ! ।

राजा—( मन ही मन ) इस बालक के प्रति तो मेरे हृदय में अपने औरस पुत्र की तरह ही स्नेह क्यों हो रहा है । (विचार कर-) ठीक है, मेरी अनपत्यता ( सन्तानशून्यता ) ही मुझे यों दूसरों के बालकों में स्नेह करा रही है ।

दूसरी तापसी—यदि तूं इसके बच्चे को नहीं छोड़ेगा, तो यह सिंहिनी तेरे ऊपर आक्रमण कर बैठेगी ।

बालक—(मुसकराता हुआ—) अरी मैया री ! तुमारे कहने से तो मैं बहुत ही डर गया हूँ । ( होठ निकाल कर दिखाता है । चिढ़ाता है ) ।

---

१ 'सिंही' पा० ।

राजा—( सविस्मयम्- )

**महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।**
**स्फुलिङ्गावस्थया वह्निरेधोऽपेक्ष इव स्थितः ॥१५॥**

प्रथमा—वच्छ ! एदं मुञ्च बालमइन्दअं, अवरं दे कीलणअं दाइस्सं ।

[ वत्स ! एतं मुञ्च बालमृगेन्द्रकम् , अपरं ते क्रीडनकं दास्यामि ]।

बालः—कहिं ?। देहि णं । ( -इति हस्तं प्रसारयति )।

[ कुत्र ?। देहि एनत् ]।

---

प्रहरिष्यति । बलीयः=महत् । भीतोऽस्मीति-सोपहासं वचः । न सिंहीलङ्घनादि अहं बिभेमीत्याशयः । अधरम्=अधरोष्ठम् । मुखं विडम्बयतीत्यर्थः । अनादर-सूचनाय ओष्ठदर्शनं, मुखं विडम्बनमिति च बालानां स्वभावो लोकविदित एव ।

महत इति । स्फुलिङ्गावस्थया=अग्निकणावस्थया । स्थितः=वर्त्तमानः । एधांस्यपेक्षत इति एधोऽपेक्षः=काष्ठापेक्षः । वह्निरिव=अग्निरिव । महतः—तेजसो बीजम्=अनल्पतेजोनिदानम्—अयं बालो मे प्रतिभाति ।

अग्निस्फुलिङ्गोऽणुरपि काष्ठसंयोगाद्यथा प्रवृद्धो महते तेजसे सम्पद्यते, तद्वदयं बालोऽनल्पस्य महापुरुषतेजसो बीजमिव समयापेक्षी वर्द्धिष्णुर्विभाव्यत इति भावः । [ उपमानुप्रासौ ] ॥ १५ ॥

क्रीडनकं=क्रीडोपकरणं । ( 'खिलौना' ) । तत्=क्रीडनकम् ।

---

राजा—( आश्चर्यान्वित हो-) यह बालक तो मुझे किसी बड़े भारी तेज का ( किसी तेजस्वी पुरुष का ) बीज ( वीर्य, अंश, या स्फुलिङ्ग ) ही मालूम होता है । और स्फुलिङ्ग ( चिनगारी ) की दशा में स्थित अग्नि जैसे काष्ठ की अपेक्षा करता है, और इन्धन ( काष्ठ ) मिलने से वह स्फुलिङ्ग बढ़कर अति प्रचण्ड अग्निरूप हो जाता है, वैसे ही यह बालक भी समय पाकर बड़ा भारी प्रतापी वीर हो जाएगा ॥ १५ ॥

पहिली तापसी—वत्स ! इस सिंह के बच्चे को तो तूं छोड़ दे, तुझे मैं दूसरा खिलौना दूंगी ।

बालक—दे, कहाँ है वह खिलौना ? । ( हाथ फैलाता है )।

राजा—( बालस्य हस्तं दृष्ट्वा- ) कथं चक्रवर्त्तिलक्षणमप्यनेन धार्य्यते !।

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः।
अलक्ष्यपत्त्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥ १६ ॥

चक्रवर्त्तिनः = सम्राजः। लक्षणं = चिह्नम्। चापाङ्कुशशङ्खचक्रादिकम्। तच्च सामुद्रिकोक्तमित्यनुसन्धेयम्।

प्रलोभ्येति। प्रकर्षेण लोभ्यः, तस्य = प्रलोभ्यस्य वस्तुनः। प्रणयेन = लोभेन। प्रसारितः = क्रीडनकप्रार्थनया, तत्प्रीत्या वा प्रसारितः। जालवद्ग्रथिता अङ्गुलयो यस्यासौ तथा = जालवत्संश्लिष्टाङ्गुलिः। जालेषु = च्छिद्रेषु ग्रथिता अङ्गुलयो यस्येति विग्रहे–अन्तरालसंश्लिष्टाङ्गुलिरित्यर्थः। करः = हस्तः। इद्धो रागो यस्यास्तया—इद्धरागया = समृद्धलौहित्यया। नवा चासौ उषाश्च नवोषाः, तया—नवोषसा = नवप्रभातसन्ध्यया। भिन्नम् = किञ्चिद्विकसितम्। अत एव-अलक्ष्याणि पत्त्राणामन्तराणि यस्य तत्–अलक्ष्यपत्त्रान्तरम्=अप्रकटितपत्त्रसन्धि। एकञ्च तत् पङ्कजञ्च–एकपङ्कजम् = एकं कमलमिव। विभाति = शोभते। 'उषा रात्रौ तदन्ते स्यादनव्ययमप्युषा' इति विश्वः। 'उषः प्रत्युषसि क्लीबं, पितृप्रस्वां च योषिति' इति च भानुदीक्षिताः। ( पितृप्रसूः—सन्ध्या )।

बालस्याऽस्य सुलोहितो मिलिताङ्गुलिर्हस्तः–प्रभातसन्ध्यया ईषद्विकसितमत एव संश्लिष्टपत्त्रसन्धि मृदुलतरं कमलमिव—भासते इति भावः। सूर्योदयाऽभावात्कमलस्य न पूर्णो विकासः। तदुक्तम्—'अतिरक्तः करो यस्य ग्रथिताङ्गु-

राजा—( बालक के हाथ को देखकर ) हैं! इसके हाथ में तो चक्रवर्ती राजा के सभी चिह्न विद्यमान हैं!।

अभिलषित वस्तु ( खिलौना ) में प्रेम होने के कारण, उसको लेने के लिए फैलाया हुआ, यह जाल की तरह गुँथी हुई अंगुलियों से शोभायमान इसका हाथ ऐसा मालूम होता है, जैसे अत्यन्त लालवर्ण प्रभातकालिक नवीन सन्ध्या के

द्वितीया—सुव्वदे ! मुञ्च णं। ण एसो सक्को वाआमेत्तेण समइदुं। ता गच्छ मम केरए उडए सङ्कोचणस्स इसिकुमारस्स वण्ण-चित्तिदो मट्टिआमोरओ चिट्ठदि, तं से उवहर।

[ सुव्रते ! मुञ्चैनम्। नैष शक्यो [1]वाचामात्रेण शमयितुम्। तद्गच्छ। मदीये उटजे [2]सङ्कोचनस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति तमस्योपहर ]।

प्रथमा—तह (—इति निष्क्रान्ता)।

[ तथा ]।

बालकः—दाव इमिणा ज्जेव कीलिस्सं।

[ तावदनेनैव क्रीडिष्यामि ]।

तापसी—( विलोक्य हसन्ती- ) णं मुञ्च ण।

[ ननु मुञ्चैनम् ]।

---

लिको मृदुः। चापाङ्कुशाङ्कितः सोऽपि चक्रवर्ती भवेद् ध्रुवम्।'—इति सामुद्रिके। [ काव्यलिङ्गमुपमाऽनुप्रासः। 'वंशस्थं वृत्तम्' ]॥ १६॥

सुव्रता नाम तापसी। वाचामात्रेण = कथनमात्रेण। यावदस्य हस्ते क्रीडनकं न दीयते, तावन्नाऽसौ संरम्भाद्विरमिष्यतीति भावः। उटजः=पर्णशाला। पाठान्तरे—मार्कण्डेयः—कश्चन महर्षिबालकः। वर्णैश्चित्रितो–रक्तपीतनीलादि-नानावर्णनिवेशसुन्दरः। तं = मृत्तिकामयूरम्। अस्य = सर्वदमनस्य। उपहर = कलय। देहि तं खल्वस्मै—इति भावः। तथा = आनयामि। अनेनैव=सिंह-

---

सम्पर्क से और भी लाल (अत्यन्त लाल) हुआ अधखिला कमल का फूल॥१६॥

दूसरी तापसी—हे सुव्रते ! इसे छोड़। यह केवल कहने मात्र से मानने वाला नहीं है। अतः जा, मेरी कुटी में ऋषिकुमार सङ्कोचन ( या मार्कण्डेय ) का मट्टी का बना हुआ रंगीन मोर रखा है। वह इसको लाकर दे दे।

पहिली तापसी—अच्छा लाता हूँ। ( जाती है )।

बालक—तब तक मैं इसी सिंह के बच्चे से ही खेलता हूँ।

तापसी—(देखकर हंसती हुई) अरे ! इस बेचारे सिंह के बच्चे को छोड़।

---

१ 'वाङ्मात्रेण'। २ 'मार्कण्डेयस्य'।

राजा—स्पृहयामि खलु दुर्ललितायाऽस्मै । ( निःश्वस्य- ) ।

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा कलुषीभवन्ति ॥१७॥

---

शावकेन । न तु मृण्मयूरेणेति भावः । दुर्ललिताय = धृष्टाय । अस्मै स्पृहयामि। 'स्पृहेरीप्सितः' इति सम्प्रदानता। एनमालोक्य प्रसीदामि। प्रहृष्यामीति यावत्।

आलक्ष्येति । अनिमित्तं हासैः = निष्कारणप्रहासैः । आ–ईषत्, लक्ष्याः= दृश्याः, दन्ता मुकुलानीव—येषां तान्—आलक्ष्यदन्तमुकुलान् = ईषद्विकसित-दन्तकुड्मलान् । अव्यक्ता वर्णा यासु ताः—अव्यक्तवर्णाः–अत एव रमणीया वचसां प्रवृत्तिर्येषान्तान् । अङ्काश्रयप्रणयिनः = उत्सङ्गावस्थानलालसान् । तत्प-रायणान् वा । वहन्तः = धारयन्तः । तेषामङ्गानां रजसा—तदङ्गरजसा = बाल-वपुःपांसुना । धन्याः = सुकृतिनः । कलुषीभवन्ति = मलिनतां धारयन्ति । धन्या एव मलिनीभवन्ति ।

ईषद्धसतः, काकलीचटुलं लपतः, पांसुमलिनितान् बालान्—क्रोडे कुर्वन्तो धन्या एव तदङ्गमृण्मलिना भवन्तीति भावः ।

[ अप्रस्तुतप्रशंसा । अनुप्रासः । वसन्ततिलका । ] ॥१७॥

---

राजा—इस धृष्ट अविनीत बालक को देखकर मेरा मन ललच रहा है ! ( दीर्घ श्वास लेकर— )

विना कारण हसने से जिनके दांतों की पङ्क्ति कुछ २ विकसित हो रही है, और जो अव्यक्त ( अस्पष्ट ) अक्षरों से मनोहर वाणी ( तोतली बोली ) बोलते हैं, और जो गोद में बैठने के लिए उत्सुक हो रहे हैं, ऐसे पुत्रों को गोद में बैठाकर उनके अङ्ग में लगी हुई धूलि से धन्य एवं पुण्यात्मा लोग ही मलिन और धूलिधूसरित होते हैं ॥ १७ ॥

तापसी—( साङ्गुलीतर्जनम्- ) भो! ण मं गणेसि। ( पार्श्वमवलोक्य—) को एत्थ इसिकुमारआणं ?। ( राजानं दृष्ट्वा- ) भद्दमुह ! एहि दाव मोआवेहि इमिणा दुम्मोक्खहत्थग्गहेण डिम्भएण लीलया वाधीअमाणं बालमइन्दअं।

[[1]भोः ! न मां गणयसि ?। कोऽत्र ऋषिकुमाराणाम् ?। भद्रमुख ! एहि तावत्। मोचयाऽनेन दुर्मोकहस्तग्रहेण डिम्भकेन [2]लीलया [3]बाध्यमानं बालमृगेन्द्रकम् ]।

राजा—तथा। (-इत्युपगम्य, सस्मितम्-) अयि भो महर्षिपुत्रक !।

एवमाश्रमविरुद्धवृत्तिना
संयमः किमिति जन्मतस्[4]त्वया।

---

भवतु = अस्तु तावत्। न गणयति=मद्वाचं न शृणोति। अयं न सिंहशिशुं मुञ्चति। ऋषिकुमाराणां मध्ये कोऽत्र तिष्ठति-स आयातु-इति ऋषिकुमाराह्वानं सर्वदमनवारणार्थम्। भद्रमुखेति—राजसम्बोधनम्। 'सौम्य भद्रमुखेत्येवं वाच्यो राजसुतो भवेत्' इति। दुर्मोको—मोचयितुमशक्यो-हस्तेन ग्रहो यस्यतेन-दुर्मोकहस्तग्रहेण=दृढतरमुष्टिबन्धशालिना। अनेन-डिम्भलीलया=बाला चापलेन। बाध्यमानं=पीड्यमानं। बालमृगेन्द्रकं=बालसिंहं। मोचय तावदिति-योजना।

एवमिति। कृष्णसर्पशिशुना चन्दनमिव-आश्रमस्य विरुद्धा वृत्तिर्यस्य, तेन=

---

तापसी—( अगुली दिखाकर डराती हुई ) क्यों रे ? मेरी बात नहीं मानता है ! ( अगल बगल देखकर ) कोई ऋषिकुमार यहाँ है ?। ( राजा की ओर देखकर ) हे महाशय ! जरा आप ही यहाँ आइए, और इस लड़के के—मेरे से भी नहीं छुड़ाए जा सकने वाले कठोर हाथों से-खेल ही खेल में पीड़ित ( पीड़ा पहुँचाए जाते ) हुए इस सिंह के बच्चे को छुड़ाइए।

राजा—बहुत अच्छा। (पास में जाकर, हंसकर) हे महर्षिपुत्र ! जैसे काले

---

१ 'भवतु'। न मां गणयति। २ क्वचिन्न।
३ 'डिम्भलीलया'। ४ 'जन्मतः'।

सत्त्वसंश्रयगुणोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनम् ? ॥१८॥

तापसी—भद्दमुह ! ण क्खु एसो इसिकुमारओ ।
[ भद्रमुख ! न खल्वेष ऋषिकुमारकः ] ।

राजा—आकारसदृशं चेष्टितमेवाऽस्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किणः । ( यथाभ्यर्थितमनुतिष्ठन्, बालकस्य स्पर्शमुपलभ्य, स्वगतम्- ) ।

---

आश्रमविपरीताचारेण । त्वया—सत्त्वानां संश्रयेण ( सुखयतीति—)—सुखः-सत्त्वसंश्रयसुखः = सकलजीवाऽभयदानस्पृहणीयः । संयमः = अहिंसादिनियमः । एवम्=इत्थम् । जन्मतः=बाल्यादेव । किमिति=कुतो नु ? । दूष्यते=विहन्यते ? ।

आश्रमवासिविपरीतं सत्त्वपीडनं बाल्यादेव त्वयि कथमाविर्भूतं ? । न हि ऋषिकुमाराणामेवंविधा वृत्तिरुचितेति सर्पशिशुना चन्दनमिव त्वया तपोवनमिदं दूषितमिति भावः । [ उपमाऽनुप्रासौ । स्वागता वृत्तम् ] ॥१८॥

आकारेण सदृशम्=आकारेण सहैव । चेष्टितं=कर्म । आकृतिः । कर्म चास्य 'नायमृषिकुमार' इति कथयतीति भावः । स्थानस्य = आश्रमस्य, प्रत्ययात्—विश्वासात् । ऋषीणां स्थानमेतदत्र तिष्ठता बालेन तत्कुमारेणैव भवितव्यमिति विश्वासमात्रादेव । एवं तर्को एषान्ते–तथा । 'ऋषिकुमारोऽयं स्या'दिति तर्कितवन्तो वयमिति भावः । अभ्यर्थितमनतिक्रम्य–यथाऽभ्यर्थितं = तापसीप्रार्थितं सिंहशिशुमोचनम् । अनुतिष्ठन् = कारयन् ।

---

नाग का बच्चा अपने जन्म से ही (छोटा होने पर भी) चन्दन के वृक्ष को दूषित कर देता है । ( चन्दन को भय का स्थान बना देता है ), वैसे ही तू भी जन्म से ही इस तपोवन के विरुद्ध वृत्ति का ( प्राणियों को कष्ट पहुंचाने वाली वृत्ति को ) धारण करके, संपूर्ण प्राणी मात्र को अभय देनेवाले मुनियों के स्पृहणीय संयम ( शान्ति ) को क्यों दूषित कर रहा है ? ॥ १८ ॥

तापसी—हे भद्रमुख ! ( महाशय ) यह ऋषिकुमार नहीं है ।

राजा—इस बात को तो इसकी आकृति तथा उसी के अनुरूप व्यवहार ही कह रहा है । केवल यहाँ ऋषियों का आश्रम होने के कारण ही मैंने इसको ऋषिकुमार समझा था । ( बालक के हाथ से सिंहशावक को छुड़ाता हुआ, उस

अनेन कस्याऽपि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्या-
द्यस्याऽयमङ्कात्कृतिनः प्ररूढः ॥१९॥

तापसी—( उभौ विलोक्य- ) अच्चरीअं ! अच्चरीअं !! ।
[ आश्चर्यम् ! आश्चर्यम् !! ] ।

राजा—आर्ये ! किमिव ? ।

---

अनेनेति । अनेन कस्यापि-कुलस्याङ्कुर इव-तेन=वंशाङ्कुरेण, कुल-दीपकेन । गात्रेषु = अङ्गेषु । स्पृष्टस्य = आलिङ्गितस्य । मम एवं सुखं भवति । यस्य कृतिनः = भाग्यशालिनः । अङ्कात् = उत्सङ्गात् । अयं बालः—प्ररूढः = वर्द्धितः । प्रसूतो वा तस्य चेतसि कां निर्वृतिं=शान्ति-कुर्यात् ? । कुलादिसम्बन्धं विनाऽपि क्षणमात्रपरिचितोऽयं बालः शरीरसम्पर्कमात्रादपि यदि मां सुखयति, तर्हि यस्याङ्के चिरात्प्ररूढस्तस्य अयं कियतीं नाम शान्तिं कुर्यादिति न शक्यते वर्णयितुमित्याशयः । 'अङ्कात्प्रसूत' इति पाठान्तरम् । [ अर्थापत्तिः । रूपक-मनुप्रासः । उपजातिः ] ॥ १९ ॥

उभौ = दुष्यन्तबालकौ । निर्वर्ण्य = दृष्ट्वा । किमिव = किमाश्चर्यमिति

---

बालक के स्पर्श का अनुभव कर, मनही मन-) किसी अन्य के कुल के अङ्कुर स्वरूप इस बालक के स्पर्श से मुझे भी जब ऐसा सुख मिल रहा है, तो जिस का यह पुत्र है, जिसने इसे पाला-पोसा है, उसके चित्त में तो न मालूम यह कैसा सुख देता होगा ? ॥ १९ ॥

तापसी—( दोनों को देखकर ) बड़े आश्चर्य की बात है ! बड़े ही आश्चर्य की बात है ! ।

राजा—हे आर्ये ! आश्चर्य की क्या बात है ? ।

---

१ 'अङ्कात्कृतिनः प्रसूतः' पा० ।

तापसी—इमस्स बालअस्स असम्बद्धेवि भद्दमुहे संवादिणी आकिदि त्ति विह्मिदह्मि । अवि अ वामसीलो वि भविअ अवरिचिदस्स वि दे वअणेण पइदित्थो संवुत्तो ! ।

[ अस्य बालकस्य [1]असम्बद्धेऽपि भद्रमुखे संवादिनी आकृतिरिति विस्मिताऽस्मि । अपि च—वामशीलोऽपि भूत्वा अपरिचितस्यापि ते वचनेन प्रकृतिस्थः संवृत्तः ! ] ।

राजा—( बालमुपलालयन्- ) आर्ये ! न चेन्मुनिकुमारोऽयं, तत्कोऽस्य व्यपदेशः ? ।

तापसी—'पोरव'त्ति ।

[ 'पौरव' इति ] ।

---

प्रश्नः । संवादिनी = सदृशी । अप्रतिलोमः = अनुकूलः । पाठान्तरे- असम्बन्धे= सम्बन्धाऽभावेऽपि । वामशीलः = हठी । प्रकृतिस्थः = शान्त इत्यर्थः । उपलालयन् = आवर्जयन् । परामृशन् । व्यपदेशः = कुलपरम्परागताऽऽख्या ।

---

तापसी—इस बालक के साथ आप का कोई सम्बन्ध न होते हुए भी, इस की और आप की आकृति ( चेहरा-मोहरा ) बिलकुल मिलती-जुलती है । इसी लिए मैं आश्चर्य चकित हो रही हूं । और भी–यह अत्यन्त हठी होने पर भी आप के अपरिचित के कहने से भी प्रकृतिस्थ ( शान्त व चुपचाप ) हो गया- यह भी कम आश्चर्य की बात नहीं है । नहीं तो यह बालक जल्दी किसी की बात मानता ही नहीं है ।

राजा—( उस बालक का लाड-प्यार करता हुआ, उसे खिलाता हुआ ) हे आर्ये ! यदि यह ऋषिकुमार नहीं है, तो फिर इसके वंश का परिचय क्या है ? । अर्थात्—यह किस वंश का है ? ।

तापसी—यह 'पौरव' वंश का है । अर्थात् यह क्षत्रिय का बालक है ।

---

१ 'अस्य बालस्याऽसम्बन्धेऽपि भद्रमुखसंवादिनी आकृतिरिति विस्मिताऽस्मि । अपि च वामशीलोऽपि भूत्वाऽपरिचितस्य ते वचनेन प्रकृतिस्थः संवृत्तः' पा० ।

राजा--( स्वगतम्- ) कथमेकाऽन्ववायोऽयमस्माकम् । अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । ( प्रकाशम्- ) अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम्—

भवनेषु सुधासितेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकयतिव्रतानि पश्चा-
त्तरुमूलानि गृहीभवन्ति तेषाम् ॥ २० ॥

उपनाम—किमिति प्रश्नाशयः । एकोऽन्ववायोऽस्य–एकान्ववायः = समानवंशः । 'वंशोऽन्ववायः' इत्यमरः । राज्ञोऽपि पौरवत्वात् । अतः = एकान्वयत्वात् । मदनुकारिणं = मत्सदृशम् । अत्रभवती = पूज्येयं तापसी ।

अन्ते भवम् अन्त्यं = वानप्रस्थाश्रमकालपालनीयं । कुलस्य व्रतं-कुलव्रतं = वंशपरम्पराप्राप्तो नियमः ।

नियममेव दर्शयति—भुवनेष्विति । ये = पौरवा राजानः । पूर्वम् = आदौ–यौवने । 'रसाधिकेषु' इति पाठे—रसा अधिका येषु तेषु–रसाधिकेषु = सुखदेषु । मनोहरेषु इति यावत् । 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः' इति विश्वः । 'सुधासितेषु' इति पाठे सुधाधवलेषु—इत्यर्थः । क्षितिरक्षार्थं = पृथ्वीरक्षणाय । निवासं = वासम् । उशन्ति = वाञ्छति । तेषां = पौरवाणां । पश्चात् = वृद्धावस्थायां । नियतमेकं यतिव्रतं येषु तानि नियतैकयतिव्रतानि = निरन्तरतपस्विव्रतानुष्ठानार्हाणि । अगृहाणि गृहाणि भवन्ति–गृहीभवन्ति =

राजा—(मनही मन) पौरव वंश तो मेरा भी है । यह तो मेरे ही वंश का है । इसीलिए यह तापसी इसको मेरे ही समान आकृति वाला समझ रही है । (प्रकट में—) हाँ, पौरवकुल का यह अन्तिम ( वृद्ध अवस्था में ) नियम है, कि–

जो पौरव—सुधा से (सफेद चूने से) सफेद महलों में पहिले प्रजा की रक्षा के लिए निवास करना पसन्द करते हैं, पीछे वे ही पौरव—नियम पूर्वक यतिव्रत

१ 'रसाधिकेषु' । २ 'नियतैकपतिव्रतानि'—पा० ।

कथं पुनरात्मगत्या मानुषाणामेष विषयः ? ।

**तापसी**—जधा भद्दमुहो भणादि । किन्तु अच्छरासम्बन्धेण उण इमस्स बालअस्स जणणी इध ज्जेव देवगुरुणो तवोवणे पसूदा ।

[ यथा भद्रमुखो भणति । किन्त्वप्सरःसम्बन्धेन पुनरस्य बालकस्य जननी इहैव देवगुरोस्तपोवने प्रसूता ] ।

**राजा**—( स्वगतम्- ) हन्त ! द्वितीयमिदमाशाजननम् ।

---

निवासाय सम्पद्यन्ते । [नियता=नियमचारिणी पुत्रादिरहिता एका पतिव्रता येषु तानि-नियतैकपतिव्रतानि = नियमप्रवणपतिव्रताशोभितानि तरुतलानीति—पाठान्तरेऽर्थः ] । एवञ्च तदात्वे हि पुत्राऽसम्भवो दर्शितः । यद्वा—नियतैकपतिव्रतानि = ईश्वर एव एकः पतिर्व्रतं = ध्येयं येषान्तानि । ईश्वरैकस्वामिकानि । अस्वामिकानीत्यर्थः। [ रूपकाऽनुप्रासौ । मालभारिणी वृत्तम् ] ॥ २० ॥

अस्त्येतत् ( श्लोकोक्तं ) पौरवाणां कुलव्रतं । पुनः = तथापि । एषः = हेमकूटः । आत्मगत्या = स्वभावगत्या । अविषयः = गमनाऽयोग्यः । मनुष्याणां स्वभावत एवाऽयमगम्य इति कथमयं बालोऽत्रागत इति शङ्काशयः । यथा भद्रमुखो भणति—तथा सत्यमेव । तथापि अप्सरसःसम्बन्धेन = देवजातिविशेषसम्बन्धेन । बालकस्य=बालस्य । अत्र=देवगुरोः = कश्यपस्य । तपोवने=आश्रमे । मारीचाश्रमे इति यावत् । प्रसूता=बालं प्रसुषुवे । इदम्=अप्सरःसम्बन्धकथनं ।

---

( संन्यासी के व्रत ) को धारण कर, वृक्षों के मूल को ही अपना घर बनाकर तपोवनों में निवास करते हैं ॥ २० ॥

परन्तु—इस दिव्य प्रदेश में अपनी गति से (स्वतः) मनुष्यों का आगमन कैसे सम्भव है ? । अर्थात्-यह बालक मनुष्य होकर यहाँ कैसे आ पहुँचा ? ।

तापसी—आप ठीक कहते हैं, यह प्रदेश मनुष्यों से स्वयं तो अगम्य ही है । परन्तु-इसकी माता ने अप्सरा की पुत्री होने के कारण ही देवताओं के गुरु कश्यपजी के इस आश्रम में इस बालक को प्रसव किया है ( जन्म दिया है ) ।

राजा—( मनही मन ) अहा ! यह तो दूसरी आशाजनक बात हुई । [ पहिली आशाजनक बात तो—इस बालक का पौरव वंश का होना है, दूसरी

( प्रकाशम्- ) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ?।

तापसी—को तस्स धम्मदारपरिच्चाइणो णामं कीत्तइस्सदि ?। [ कस्तस्य धर्मदारपरित्यागिनो नाम कीर्त्तयिष्यति ? ]।

राजा—( स्वगतम्- ) कथमियं कथा मामेव लक्ष्यीकरोति !। यावदस्य शिशोर्मातरं नामतः पृच्छामि। ( विचिन्त्य- ) अथवा अनार्यः खलु परदारपृच्छाव्यापारः।

( प्रविश्य मृण्मयूरहस्ता [1]तापसी— )

तापसी—सव्वदमण ! पेक्ख सउन्त-लावण्णं। [ सर्वदमन ! प्रेक्षस्व 'शकुन्त-लावण्यं' ( 'शकुन्तलावर्णम्' ) ]।

---

प्रथमं पौरवेति वंशतया, द्वितीयमप्सरःसम्बन्धतया। तत्रभवती = एतन्माता। किम्—आख्या यस्य तस्य किमाख्यस्य = किंनाम्नः। धर्मदाराणां परित्यागोऽस्त्यस्य तस्य धर्मदारपरित्यागिनः। सङ्कीर्त्तयितुम् = उच्चारयितुमपि। इयं कथा= एतद्बालकविषयिणी कथा। नामतः = नाम्ना। किंनामाऽस्या मातुरिति पृच्छामीत्यर्थः। अनार्यः = अनुचितः। परदाराणां पृच्छा एव व्यवहारः = परपत्नीनामादिजिज्ञासा। विबोधो नामाऽत्र सन्ध्यङ्गं। शकुन्तस्य=पक्षिणो मृण्मयूरस्य,

---

बात—अप्सरा की पुत्री से इसका उत्पन्न होना है !। अतः कहीं यह मेरी प्रिया शकुन्तला से उत्पन्न तो नहीं है ? ]। ( प्रकट में— ) तो इसकी माननीया माता किस राजर्षि की पत्नी है ?।

तापसी—अपनी धर्मपत्नी को त्यागने वाले उस ( पापी ) राजा का नाम भला कौन लेना चाहेगा ?।

राजा—( मन ही मन ) यह कथा तो मेरे को ही लक्ष्य करती है ! यह क्या बात है ?। अच्छा ! इसकी माता का नाम पूछता हूँ। ( कुछ सोचकर ) अथवा-पर स्त्री के नाम आदि का पूछना तो भले मनुष्य का काम नहीं है।

[ मट्टी के बने मोर को लेकर तापसी का प्रवेश ]।

तापसी—हे सर्वदमन ! इस शकुन्त ( पक्षी ) का लावण्य—सौन्दर्य देख। [या शकुन्तला के रूप को देख)। इस शब्द के ये दोनों ही अर्थ होते हैं]।

---

[1] कश्चिन्न।

**बाल:**—( सदृष्टिक्षेपम्- ) कहिं सा मे अम्बा ?।
[ कुत्र सा मेऽम्बा ? ]।

( उभे—प्रहसतः )।

**प्रथमा**—णामसारिस्सेण उवच्छन्दिदो मादिवच्छलो।
[ नामसादृश्येन उपच्छन्दितो मातृवत्सलः ]।

**द्वितीया**—'इमस्स मोरस्स रमणीअदं पेक्ख' त्ति भणिदोसि।
[ 'अस्य मयूरस्य रमणीयतां प्रेक्षस्वे'ति भणितोऽसि ]।

**राजा**—( स्वगतम्- ) किं 'शकुन्तले'ति-अस्य मातुराख्या ?। अथवा सन्ति पुनर्नामधेयसादृश्यानि। अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय [1]कल्पते।

---

लावण्यं = शोभाम्। शकुन्तलाया वर्णं = रूपञ्चेति— श्लेषवक्रोक्तिः। मे = माता शकुन्तला। नामसादृश्येन = शकुन्तलेति वर्णसाम्यात्। मातृवत्सलः = मातृप्रियः। वञ्चितः=प्रतारितः। पाठान्तरे—उपच्छन्दितः = प्रलोभितः। नामधेयसादृश्यानि=नाममात्रसादृश्यं। बहुषु दृश्यते। नाममात्रप्रस्तावः=नाममात्रप्रसङ्गः। नाममात्रोच्चारणं। यथा—मृगतृष्णिकायां जलभ्रान्तिर्न वस्तुतो जलं, तथाऽत्र

---

बालक—(इधर-उधर देखता हुआ) यहाँ मेरी माता शकुन्तला कहाँ है ?। ( इस बालक ने 'शकुन्तला के रूप को देख' यह दूसरा ही अर्थ समझा है, अतएव वह कह रहा है—मेरी माता कहाँ है ? )।

[ दोनों तापसी—हंसती हैं ]।

पहिली तापसी—नाम के सादृश्य से ही यह बेचारा बालक इस प्रकार ठगा गया, और अपनी माता को देखने के लिए उत्सुक-लोभाक्रान्त हो गया।

दूसरी तापसी—अरे ! मैंने तो कहा है—इस शकुन्त = मोर पक्षी का—लावण्य ( सौन्दर्य ) देख।

राजा—( मन ही मन ) क्या इसकी माता का नाम 'शकुन्तला' है ?। अथवा—नाम में तो समानता बहुत जगह देखी जाती है। शकुन्तला नामवाली

---

१ 'कल्पेत'—पा०।

बालः—अत्तिए ! रोअदि मे चडुलके एसे मोले ।

(—इति क्रीडनमादत्ते)

[ अत्तिके ! रोचते मे चटुलक [1]एष मयूरः ]।

प्रथमा—( विलोक्य साऽऽवेगम्- ) अम्मो ! [2]रक्खाकाण्डओ से मणिबन्धे ण दीसति ।

[ अम्मो ! रक्षाकाण्डकोऽस्य[2] मणिबन्धे न दृश्यते ]।

राजा—आर्ये ! अलमावेगेन, नन्वयमस्य सिंहशावकस्य विमर्दात्परिभ्रष्टः । ( -इत्यादातुमिच्छति ) ।

---

नाममात्रसादृश्यं, न मे प्रिया स्यादिति । विषादाय=खेदाय । अपि नाम कल्पते = किंस्विज्जायते । 'कल्पेत' इति मनोहरः पाठः प्रतिभाति । अत्तिके-हे ज्येष्ठभगिनि ! 'अत्तिका भगिनी ज्येष्ठा' इत्यमरः । चटुलकः = मधुरमनोहरः । [ अक्षरसङ्क्षातकं नाम भूषणं, नामसादृश्यदर्शनात् ] । रक्षाकरण्डकः=रक्षाऽर्थं बद्ध ओषधिग्रन्थिभेदः । 'करण्डो मधुकोशे स्याद्वीटिकाखड्गकोशयोः' इत्यमरः । 'रक्षाकाण्ड' इति पाठेऽपि स एवार्थः । 'काण्डः स्तम्बे नाडास्तम्बे' इति मेदिनी । मणिबन्धे = करमूले । सिंहशावेन सह विमर्दात् = सङ्घर्षात् । परिभ्रष्टः =पतितः ।

---

कोई दूसरी स्त्री भी हो सकती है । यह शकुन्तला के नाम का प्रस्ताव मृगतृष्णा में जल की भ्रान्ति की तरह मुझे कष्ट देनेवाला भी हो सकता है ।

बालक—हे बड़ी बहिन ! यह सुन्दर मोर मुझे बहुत अच्छा लग रहा है ।

[ खिलौने को हाथ में लेता है ] ।

पहिली तापसी—अरी मैया री ! इसके हाथ में वह रक्षायन्त्र नहीं दिखाई दे रहा है ? ।

राजा—हे आर्ये ! आप घबड़ाइए मत । सिंह के बच्चे को पकड़ने के समय छीना-झपटी में इसके हाथ से यह नीचे गिर गया है ।

[ रक्षा यन्त्र को उठाना चाहता है ] ।

---



१ 'भद्रमयूरः' । २ 'रक्षाकाण्डः' इति, 'रक्षाकरण्डकः' इति च पा० ।

**उभे**--मा क्खु मा [1]क्खुएदं ( विलोक्य- ) कथं गहिदो ज्जेव !। (--विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः )।

**राजा**--किमर्थं भवतीभ्यां प्रतिषिद्धोऽस्मि ?।

**प्रथमा**--सुणादु महाभाओ। एसा महाप्पहावा अवराजिदा णाम सुरमहोसही। इमस्स दारअस्स जादकम्मसमए भअवदा मारीएण दिण्णा। एदं किल मादापिदरो, अप्पाणं च वज्जिअ अवरो भूमिपदिआं ण गेह्लादि।

[ शृणोतु महाभागः। 'एषा महाप्रभावा अपराजिता नाम सुरमहौषधिरस्य दारकस्य जातकर्मसमये भगवता मारीचेन दत्ता। एतां किल मातापितरावात्मानञ्च वर्जयित्वाऽपरो भूमिपतितां न गृह्लाति]।

---

गलितः। आदातुं=ग्रहीतुं। मा खलु=नहि। एतत्। 'आदेय'मिति शेषः। अर्द्धावसितमिदं वाक्यं, संभ्रमादेव। आलम्ब्य=गृहीत्वा। उरो निहितो हस्तो हि विस्मये स्त्रीणां भवति। माता च पिता च मातापितरौ = पितरौ। आत्मानञ्च = स्वञ्च। सुरमहौषधिः = दिव्यौषधिः। अपरः। एतद्व्यतिरिक्तः। गृह्लाति =

---

**दोनों तापसियाँ**—ऐसा मत करिए, ऐसा मत करिए। ( देखकर- ) हैं! इसने इस जन्तर को कैसे उठा लिया !।

[ दोनों तापसियाँ आश्चर्य से छाती पर हाथ रखकर परस्पर देखती हैं ]।

**राजा**—आप लोगों ने मुझे इस यन्त्र के उठाने से क्यों मना किया था ?।

**पहिली तापसी**—हे महाभाग ! सुनिए। यह अपराजिता नाम की महान् प्रभाव रखने वाली दिव्य महौषधि है, जो जातकर्म ( जन्म समय के ) संस्कार के समय भगवान् मारीच जी ने इसके हाथ में रक्षार्थ बान्ध दी थी। इसको भूमिपर गिर जाने पर, स्वयं, या इस बालक के पिता और माता ही इसे उठा सकते हैं। अन्य लोग नहीं उठा सकते हैं।

---

१ 'मा खल्विदमवलम्ब्य' पा०।

राजा—अथ गृह्णाति ?।

प्रथमा—तदो सप्पो भविअ तं दंसइ।

[ ततः सर्पो भूत्वा तं दशति ]।

राजा—अत्रभवतीभ्यां कदाचिदन्यत्र प्रत्यक्षीकृतमिदम् ?।

उभे—अणेअसो।

[ अनेकशः ]।

राजा—( सहर्षमात्मगतं- ) तत्किं खल्विदानीं पूर्णमात्मनो मनोरथं नाऽभिनन्दामि !। ( -इति बालकं परिष्वजते )।

द्वितीया—सुव्वदे! एहि इमं वुत्तन्तं णिअमवावडाए सउन्तलाए णिवेदेह्म। ( -इति निष्क्रान्ते )।

[सुव्रते! एहि! इमं वृत्तान्तं नियमव्यापृतायाः शकुन्तलाया निवेदयावः]।

---

आदत्ते। सर्पो भूत्वा=ओषधिः सर्परूपा भूत्वा। तं=ग्रहीतारम्। अनेकशः=बहुवारमन्यत्र प्रत्यक्षीकृतम्। मनोरथं=स्त्रीपुत्रसमागमरूपम्। किं नाभिनन्दामि=किं न प्रशंसामि। सर्वथा मया अभिनन्दनीयमेव। पुत्रं, पत्नीञ्च प्राप्तवानस्मीति भावः।

[ 'शृणोतु महाभाग' इत्यादिना पूर्वभावनामकं निर्वहणाङ्गम्। आनन्दो नाम सन्ध्यङ्गञ्च ]। नियमे=पूजादौ, वियोगिनीव्रते च। व्यापृतायै = प्रसक्तायै।

---

राजा—यदि इसे अन्य पुरुष उठा ले तो क्या हो ?।

पहिली तापसी—तो यह महौषधि उसे साँप बनकर काट लेती है।

राजा—क्या इस बात की कभी आपलोगों ने अन्यत्र ( मेरे सिवाय कहीं और जगह भी ) परीक्षा की है ?।

दोनों तापसी—एक दो बार नहीं, किन्तु बहुत बार हम इस बात को देख चुकी हैं, कि—जब २ किसी दूसरे ने इस जन्तर को उठाया है, तभी इस महौषधि ने सर्परूप हो उसे काट लिया है।

राजा—( हर्ष पूर्वक मन ही मन ) तब तो मैं अब अपने पूर्ण हुए मनोरथ ( शकुन्तला और अपने पुत्र को प्राप्ति ) का अभिनन्दन ( प्रशंसा ) क्यों न करूं ?। [ बालक को छाती से लगाता है ]।

दूसरी तापसी—हे सुव्रते ! आ चलें, और (अपराजिता महौषधि के) इस वृत्तान्त को तपस्विनी ( दुःखिया बेचारी ) शकुन्तला को सुनावें। (दोनों जाती हैं)।

बालः—मुञ्च मं मुञ्च मं, अम्बाए सआसं गमिस्सं।

[ मुञ्च मां, मुञ्च माम् । अम्बायाः सकाशं गमिष्यामि ]।

राजा—पुत्र ! मयैव सह मातरमभिनन्दिष्यसि।

बालः—दुस्सन्तो मम तादो, ण क्खु तुमं।

[ दुष्यन्तो मम तातो, न खलु त्वम् ]।

राजा—एष विवाद एव मां प्रत्याययति।

( ततः प्रविशत्येकवेणीधरा शकुन्तला )।

शकुन्तला—( सवितर्कम्- ) विआरकाले वि पइदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसंसो अत्तणो भाअधेएसुं। अधवा जधा साणुमईए मे आचक्खिदं तधा सम्भावीअदि एदं।

[ विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्य ओषधिं श्रुत्वा न मे आशंसाऽऽत्मनो भागधेयेषु। अथवा यथा सानुमत्या मे आख्यातं

---

एष विवादः = 'न मे त्वं'मित्यादि त्वत्कथनमेव। प्रत्याययति = निश्चाययति। विकारकाले=अन्येन ग्रहणे सर्परूपताप्राप्त्यवसरेऽपि। प्रकृतिस्थां = यथावस्थितामेव। आशंसा = भूयो मां प्रतिग्रहीष्यतीति प्रत्याशा। भागधेयेषु = भाग्येषु।

---

बालक—मुझे छोड़ो, मुझे छोड़ो। मैं तो मेरी माता के ही पास जाऊँगा।

राजा—हे पुत्र! मेरे साथ ही अपनी माताके पास चलकर उसे आनन्दित करना।

बालक—मेरे पिता तो 'दुष्यन्त' हैं। तुम मेरे पिता नहीं हो।

राजा—यही विवाद ( दुष्यन्त मेरा पिता है—यह तुमारा कहना ही मुझे विश्वास दिला रहा है, कि—मैं ही तेरा पिता हूं। क्योंकि मेरा ही नाम दुष्यन्त है।

[ एक वेणी ( खुले हुए व एक में लिपटे हुए बालों को ) धारण किए हुए शकुन्तला का प्रवेश ।

शकुन्तला—( विचार करती हुई ) 'पिता—माता के सिवाय दूसरे मनुष्य से उठाई जाने पर सर्परूप हो जाने वाला सर्वदमन के हाथ में बान्धी हुई अपराजिता ओषधि उसके उठाने से भी विकार को प्राप्त नहीं हुई' यह बात सुनकर भी मुझे तो मेरे भाग्य पर ( इस बात पर ) भरोसा नहीं होता है—कि आर्यपुत्र

तथा सम्भाव्यते एतत् ]।

राजा—( शकुन्तलां विलोक्य, सहर्षखेदम्— ) अये ! सेयमत्रभवती शकुन्तला !।

वसने परिधूसरे वसाना,
नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला,
मम दीर्घं विरहव्रतं बिभर्त्ति ॥ २१ ॥

---

एतत् = दुष्यन्तागमनम् । दुष्यन्तसमागमः । [ अत्र-समयनामकमङ्गं, दुःखविगमात् ] ।

वसने इति । परितः = सर्वतः । धूसरे = मलिने । वसने = वस्त्रयुगलं। वसाना = दधाना । नियमैः क्षामं मुखं यस्याः सा = व्रतादिनियमाऽऽचरणशुष्कवदना । धृता एका वेणिर्यया सा धृतैकवेणिः = एकवेणिधारिणी । वेणिः = केशबन्धभेदः । पतिप्रवासे स्त्रीणामेका वेणिर्भवतीति समाचारः। अत एव शुद्धं शीलं यस्याः सा—शुद्धशीला = शुद्धस्वभावाऽऽचारा । अतिनिष्करुणस्य= क्रूरस्य, कठोरहृदस्य । मम=मत्सम्बन्धि । दीर्घं=बहुकालव्यापि । विरहस्य व्रतं, विरह एव व्रतं वा = विरहनियमपरिपालनं । बिभर्त्ति=कुरुते । [ सन्धिर्नामाङ्गम्। रूपक-काव्यलिङ्ग-स्वभावोक्त्यनुप्रासाः : 'मालभारिणी वृत्तम्' ] ॥ २१ ॥

---

ही ( मुझे लेने ) यहाँ आ गए हैं !। अथवा सानुमती ने मुझे उनके पश्चात्ताप का जो वृत्तान्त सुनाया था, उससे तो यह बात सम्भव हो भी सकती है।

राजा—( शकुन्तला को देखकर हर्ष और खेद के साथ- )

मैले कुचेले पुराने कपड़े पहिरे हुए, नियमों (व्रत, उपवास आदि) के पालन से क्षीण और उदास मुखवाली, एक वेणी को धारण किए हुए, यह शुद्धशीला शकुन्तला-करुणाशून्य एवं अत्यन्त निर्दयी मेरे लिए इस प्रकार विरह व्रत का पालन कर रही है ॥ २१ ॥

**शकुन्तला**—( पश्चात्तापविवर्णं राजानं दृष्ट्वा, सवितर्कम्— ) ण क्खु अज्जउत्ते इव, ता को एसो किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि ?।

[ न खल्वार्यपुत्र इव[1]। तत्क एष कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ? ]।

**बालः**—( मातरमुपगम्य— ) अम्ब ! को एसो मं 'पुत्तके'त्ति ससिणेहं आलिङ्गदि ?।

[ अम्ब ! क एष मां 'पुत्रके'ति सस्नेहमालिङ्गति ? ]।

**राजा**—प्रिये ! क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम्। तदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानमिच्छामि[2]।

---

पश्चात्तापन विवर्णं=किञ्चिद्विपरीतरूपम्। आर्यपुत्र इव न खलु=नाऽयम्। दुष्यन्तसदृशो नाऽयम्। कृतं रक्षैव मङ्गलं यस्य तं=कृतरक्षासंस्कारविशेषं। गात्रसंसर्गेण=आलिङ्गनेन। दूषयति=अपवित्रतां नयति।

त्वयि प्रयुक्तं=त्वामधिकृत्य कृतम्। क्रौर्यं=शाठ्यम्। अनुकूलः परिणामो यस्य तत्=अभीष्टकफलप्रदं। यथा मया न त्वं प्रत्यभिज्ञातपूर्वा, तथा त्वयाऽद्याहं न प्रत्यभिज्ञात इति उचितो दण्ड इदानीं मे संवृत्त इत्यभिप्रायः। प्रत्यभिज्ञातमा-

---

शकुन्तला—( पश्चात्ताप से विवर्ण और उदास मुख राजा को देखकर, विचार करती हुई) यह तो आर्यपुत्र ( मेरे पति ) नहीं मालूम होते हैं। तो फिर यह कौन है, जा रक्षा विधान से रक्षित मेरे पुत्र को अपनी गोद में लेकर इस प्रकार अपने शरीरके संपर्क से अपवित्र कर रहा है ?।

बालक—( अपनी माता के पास जाकर ) माँ ! यह कौन है, जो मुझे 'पुत्र' 'पुत्र' कहकर बड़े प्रेम से अपनी छाती से लगा रहा है ?।

राजा—हे प्रिये ! मैंने तेरे साथ जो क्रूरता का व्यवहार किया था, उसके अनुरूप ही यह परिणाम हुआ है। अर्थात्–उस समय जैसे मैंने तुम्हें नहीं पहिचाना था, इसी प्रकार तुमने भी मुझे अब नहीं पहिचाना। अतः मुझे अपने किए का उचित ही दण्ड मिल गया। अतः अब तो तुम मुझे पहिचानो। मैं ही वह दुष्यन्त हूं, जिसने तुमारा प्रत्याख्यान किया था।

---

१ 'न खलु आर्यपुत्रोऽयम्' पा०। २ '...इच्छामि'।

शकुन्तला--( स्वगतम्- ) हिअअ ! समस्सस समस्सस। पहरिअ परिच्चत्तच्छरेण अणुकम्पिदह्मि देव्वेण। अज्जउओ एव्व एसो।

[ हृदय ! समाश्वसिहि, समाश्वसिहि। प्रहृत्य परित्यक्तमत्सरेणाऽनुकम्पितास्मि दैवेन। आर्यपुत्र एव एषः ]।

राजा--प्रिये !

स्मृतिभिन्नमोहतमसो
दिष्ट्या प्रमुखे स्थिताऽसि मे सुमुखि !।
उपरागान्ते शशिनः
समुपगता रोहिणी योगम् ॥ २२ ॥

---

त्मानमिच्छामीति। स एवाहं दुष्यन्तः, परिचिनु मामिति प्रार्थनेयम्। परित्यक्तो मत्सरो येन तत्, तेन=त्यक्तविरोधेन। अनुकूलेनेति यावत्। 'मत्सरोऽन्यशुभद्वेषे' इत्यमरः। दैवेन=भाग्येन। खल्वेष इति प्रत्यभिज्ञा। [ आनन्दो नाम सन्ध्यङ्गं, मनोरथप्राप्तेः ]।

स्मृतीति। सुमुखि != हे सुवदने ! दिष्ट्या=सौभाग्येन। स्मृत्या भिन्नं ( मोहस्तमो = राहुरिव- ) मोहतमो यस्य तस्य-स्मृतिभिन्नमोहतमसः=स्मरणाऽपगतमोहान्धकारस्य। मे=मम। प्रमुखे=संमुखे। स्थिताऽसि। तन्नूनम्-उपरागस्यान्ते=ग्रहणाऽन्ते। रोहिणी=नक्षत्रभेदः। शशिनः=स्वकान्तस्य चन्द्रमसः। योगं=संयोगम्। उपगता = प्राप्ता। 'तमस्तु राहुः स्वर्भानुः', इति, 'तमिस्रं

---

शकुन्तला—हे हृदय ! धैर्य धर, धैर्य धर। पहिले तो दैव ( विधाता, दुर्भाग्य ने मेरे ऊपर प्रहार किया था, पर अब तो मेरे से मत्सर (द्वेष) छोड़कर दैव ने मेरे ऊपर यह दया दिखाई है। ये तो आर्यपुत्र ( मेरे पति ) ही हैं।

राजा—हे प्रिये !

हे सुमुखि ! तेरी पुनः याद आजाने से, जिसका पहिला भ्रम दूर होगया है, ऐसे मेरे सामने ही तुम आज उपस्थित हो -यह बड़े हर्ष की बात है। ग्रहण के बाद

---

१ 'समुपगतेवाऽऽशु रोहिणी योग'मिति क्वचित्पाठः।

शकुन्तला—( सहर्षं— ) जअदु जअदु अज्जउत्तो। ( –इत्यर्द्धोक्ते बाष्पसन्नकण्ठी विरमति )।

[ जयतु जयत्वार्य्यपुत्रः ]।

राजा—प्रिये !

बाष्पेण प्रतिरुद्धेऽपि जयशब्दे, जितं मया।
यत्ते दृष्टमसंस्कार-पाटलोष्ठपुटं मुखम्॥ २३॥

बालः—अम्ब ! को एसो ?।

[ अम्ब ! क एषः ? ]।

तिमिरं तमः' इति, 'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च'त्यमरः। ग्रहणान्ते चन्द्रमसः स्वकान्तया रोहिण्या सह सम्बन्ध इव मया सह त्वत्समागमोऽयमिति भावः। [ अनुप्रासः। निदर्शना। दृष्टान्तः। 'आर्या' ]॥ २२॥

बाष्पेणेति। बाष्पेण = हर्षाश्रुभिः। जयशब्दे = 'जयतु जयतु' इति शब्दे प्रतिषिद्धेऽपि = अवरुद्धेऽपि। मया जितं = विजय एव मे जातः। यत् = यस्मात्। असंस्कारेऽपि = प्रसाधनलेपनादिविवर्जनेऽपि। पाटल ओष्ठपुटो यत्र तत्—असंस्कारपाटलोष्ठपुटम् = अकृत्रिमाऽरुणप्रभोद्भासितोष्ठपुटललितं। ते = तव। मुखं। दृष्टम् = मयाऽवलोकितम्। 'श्वेतरक्तस्तु पाटलः' इत्यमरः। अकृत्रिमाऽरुणप्रभाभासितं त्वन्मुखं विलोक्य कृतार्थोऽस्मीति भावः। [ विरोधाऽऽभासः। काव्यलिङ्गम्। अनुप्रासः ]॥ २३॥

चन्द्रमा से रोहिणी के समागम की तरह ही आज मेरे से तुमारा यह समागम हो रहा है॥ २२॥

शकुन्तला—(बड़े हर्ष के साथ) आर्यपुत्र की जय जयकार हो (इस वाक्य को आधा ही बोलकर, आँसुओं से गला भर जाने से, उसकी बोली रुक जाती है)।

राजा—हे प्रिये ! तुमारे जय जयकार के शब्द आँसुओं से रुक जाने पर भी, संस्कार ( बनाव शृङ्गार ) से शून्य इन लाल २ ओठों से शोभायमान इस तेरे मुख को देखकर ही मैंने विजय प्राप्त कर ली॥ २३॥

बालक—माँ ! यह कौन है ?।

शकुन्तला--वच्छ दे भाअधेआइं पुच्छ।

[ वत्स[1] ! ते भागधेयानि पृच्छ ]।

राजा--

सुतनु ! हृदयात्प्रत्यादेशव्यलीकमपैतु ते,

किमपि मनसः संमोहो मे तदा बलवानभूत्।

प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः,

स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥२४॥

(—इति पादयोः पतति)

---

ते भागधेयानि = स्वं भाग्यं। तव सौभाग्यमेवेदमिति भावः। यद्वा–येन दुरदृष्टेन तातपुत्रयोरप्येवमपरिचयस्तदेव स्वं भाग्यं मन्त्रयस्वेत्याशयः।

सुतन्विति। सुतनु! = हे कृशाङ्गलतिके!। ते—हृदयात् = मनसः। प्रत्यादेश एव व्यलीकम्=प्रत्याख्यानजनिताऽप्रीतिः। मन्युर्वा। अपैतु=गच्छतु। 'व्यलीकं त्वप्रियेऽनृते' इत्यमरः। यतः–तदा = यदा मया तव प्रत्याख्यानं कृतं तदा। किमपि = अलौकिकः। बलवान्। संमोहः=अज्ञानम्। मे अभूत्=जातम्। प्रबलं तमो येषान्तेषां—प्रबलतमसां = बलवदज्ञानाऽऽवृतमनसाम्। शुभेष्वपि = स्वशुभप्रदेष्वपि वस्तुषु। एवंविधाः = ईदृश्यः। तन्निराकरणात्मिकाः। प्रवृत्तयः = व्यापाराः। दृश्यन्ते। तथाहि—अन्धः— शिरसि, क्षिप्तां = निहितां। स्रजमपि = मालामपि। अहिशङ्कया = सर्पभ्रान्त्या। धुनोति = तिरस्करोति।

---

शकुन्तला—हे वत्स ! अपने (बड़े हुए) सौभाग्य से ही इस बात को पूछ। अर्थात्–तेरा आज बड़ा सौभाग्य है, जो तेरे ये पिता तेरे सामने उपस्थित हैं।

राजा—हे सुतनु = हे सुन्दरि ! तेरे हृदय से मेरे द्वारा किए गए प्रत्याख्यान की वह अप्रिय बात निकल जानी चाहिए, क्योंकि–उस समय मेरे मन में न मालूम कैसे बलवान् ( जबरदस्त ) मोह उत्पन्न हो गया था। और अज्ञान से आवृत मन वाले मनुष्यों की चित्तवृत्तियाँ कल्याणकारी वस्तु में भी इस प्रकार के विपरीत

---



१ कच्चिन्न।

**शकुन्तला**—उत्थेदु अज्जउत्तो। णूणं मे सुहप्पडिबन्धअं पुराकिदं तेसु दिअसेसुं परिणाममुहं आसि, जेण साणुक्कोसो बि अज्जउत्तो मइ विरसो संवुत्तो।

[ उत्तिष्ठत्वार्यपुत्रः। नूनं मे सुखप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीत्, येन साऽनुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः]।

( **राजा**—उत्तिष्ठति )।

**शकुन्तला**—अध कधं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो?

[ अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः ?।

---

[ दृष्टान्तः। भ्रान्तिमान्। अर्थान्तरन्यासः। काव्यलिङ्गं वा। प्रसादो नाम सन्ध्यङ्गम्। अनुनयो नाम भूषणञ्च। 'हरिणीवृत्तम्' ]॥ २४॥

सुखस्य प्रतिबन्धकं=सुखविलोपि। पुराकृतम्=अदृष्टं। तेषु दिवसेषु=यदा भवताऽहं तिरस्कृता तदात्वे। परिणाममुखं=फलोन्मुखं। सानुक्रोशः=कृपापरोऽपि। विरसः=क्रूरः। दुःखं भजति—तच्छीलः दुःखभागी=

---

ज्ञान वाली हो जाती हैं। जैसे अन्धा मनुष्य अपने शिर पर किसी के द्वारा पहिनाई गई माला को भी साँप समझकर दूर फेंक देता है। अतः अज्ञान के ही कारण मैंने उस समय तुमारा प्रत्याख्यान कर दिया था। उसे अब तुम मन से निकाल दो॥२४॥

[ शकुन्तला के पैरों में पड़ता है ]।

शकुन्तला—हे आर्यपुत्र! आप उठिए, उन दिनों ( उस समय ) मेरे सुख का प्रतिबन्धक जरूर कोई पूर्वकृत पाप ही उदय हो गया था, जिससे इस प्रकार अत्यन्त दयालु स्वभाव होते हुए भी आपने मेरे प्रति इतनी उदासीनता दिखलाई थी।

[ राजा—उठता है ]।

शकुन्तला—अच्छा तो फिर आपने इस दुःखिया को स्मरण कैसे किया?।

राजा—उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु ! पूर्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
कान्ते ! प्रमृज्य विगतानुशयो भवामि ॥२५॥

( — इति यथोक्तं करोति ) ।

शकुन्तला—( प्रमृष्टबाष्पा अङ्गुलीयकं विलोक्य— ) अज्जउत्त ! तं एदं अङ्गुलीअअ ? ।

---

दुःखभोगशीलः । उत् = ऊर्ध्वं धृतं विषाद एव शल्यं येनासौ तथा = व्यपगतशोकशङ्कुः । पूर्वं त्वद्वाष्पमार्जनेन सुखितो भूत्वा ततः कथयिष्यामीत्याशयः ।

मोहादिति । सुतनु ! ते = तव । अधरम् = अधरोष्ठं । बाधमानः=आविलयन् । यः—बाष्पस्य बिन्दुः = अश्रुप्रवाहः । मोहात् = अज्ञानात् । उपेक्षितः = न मया गणितः । न परिमृष्टः । तम्—आ = ईषत् । कुटिलेषु–पक्ष्मसु–विलग्नम्= ईषद्वक्रनेत्रलोमसंसक्तं—बाष्पं । तावत्=प्रथमं । प्रमृज्य=अपनीय । विगतोऽनुशयो यस्याऽसौ तथा=व्यपगतसन्तापः । भवेयम् । प्रथमं तेऽश्रु प्रमृज्य विगतविषादो भूत्वा, पश्चात्सकलं कथयिष्यामीति भावः । [ काव्यलिङ्गम् । अनुप्रासः । 'वसन्ततिलका' ] ॥ २५ ॥

यथोक्तमनुतिष्ठति = अश्रु परिमार्ष्टि । तत्=मद्धस्तस्थं प्रभ्रष्टम् ।

---

राजा—विषाद के शल्य को पहिले उखाड़ कर ही ( तेरे आंसुओं को पहिले पोंछ कर ही ) फिर इस बात को कहूंगा । क्योंकि-

हे सुतनु = हे कृशाङ्गि ! पहिले तो मोह (अज्ञान) से तेरे अधर पर गिरने वाले आंसुओं के बिन्दुओं की मैंने उपेक्षा की थी, हे कान्ते ! उन्हीं अश्रुबिन्दुओं को जो तेरे ईषत् कुटिल आँखों के पक्ष्म ( बरौनी, बाफण ) के अग्रभाग में लगे हुए हैं — उनको पोंछ कर तब मैं पश्चात्ताप और शोक से छुटकारा पाऊंगा ॥२५॥

[ आँखों के आंसुओं को अपने हाथ से पोंछता है ] ।

शकुन्तला—[ राजा के द्वारा आंसु पोंछे जाने पर, अङ्गुलीयक ( अंगूठी )

[ आर्यपुत्र ! तदेतदङ्गुलीयकम् ? ]।

राजा—अथ किम्। अस्याऽद्भुतोपलम्भान्मया स्मृतिरुपलब्धा।

शकुन्तला—विसमं किदं क्खु इमिणा जं तदा अज्जउत्तस्स पच्चअणकाले दुल्लहं आसि।

[ विषमं कृतं खल्वनेन यत्तदाऽऽर्यपुत्रस्य प्रत्यायनकाले दुर्लभमासीत् ]।

राजा—तेन हि ऋतुसमागमचिह्नं प्रतिपद्यतां लता कुसुमम्।

शकुन्तला—ण से विस्ससेमि, अज्जउत्तो ज्जेव णं धारेदु।

[ नाऽस्य विश्वसिमि। आर्यपुत्र एवैतद्धारयतु ]।

---

अद्भुतमुपलम्भोऽस्य तस्मात्=अतर्कितोपलम्भात्। प्रत्यायनकाले=विश्वासजननसमये।

ऋत्विति। ऋतुसमागमचिह्नं कुसुमं यथा लता धत्ते, तथा मत्समागमचिह्नं ममेदमङ्गुलीयकमेतर्हि भवती दधात्विति वर्त्तुलितोऽर्थः।

---

को देखकर-] हे आर्यपुत्र ! क्या यह वही अंगूठी है ?। ( जो मेरे हाथ से जल में गिर गई थी )।

राजा—हाँ, और अकस्मात् आश्चर्यजनक रूप से ही इसके मिलने पर ही मुझे तुमारा स्मरण हुआ।

शकुन्तला—इस अंगूठी ने उस समय बहुत ही कठिन ( अनुचित ) काम किया था, जो आर्यपुत्र को ( आप को ) विश्वास दिलाने के समय मुझे दुर्लभ हो गई थी।

राजा—तो ऋतु के समागम के चिन्ह स्वरूप लता जैसे पुष्पों को धारण करती है, उसी प्रकार मेरे साथ समागम के फल स्वरूप तुम भी इस अंगूठी को अब धारण करो।

शकुन्तला—मैं इस अंगूठी का विश्वास नहीं करती हूं। इसे तो आप ही धारण करिए।

( ततः प्रविशति मातलिः ) ।

मातलिः--दिष्ट्या धर्मपत्नीसमागमेन, पुत्रमुखदर्शनेन च आयुष्मान्वर्द्धते ।

राजा--अभूतसम्पादितस्वादुफलो मे मनोरथः । मातले ! न खलु विदितोऽयमाखण्डलस्याऽर्थः स्यात् ? ।

मातलिः--( सस्मितम्— ) किमीश्वराणां परोक्षम् ? । एहि भगवान् मारीचस्ते दर्शनं [1]वितरति ।

राजा--प्रिये ! अवलम्ब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टु-मिच्छामि ।

---

अस्य = अङ्गुलीयकस्य । [ 'परिभाषणं' नाम सन्ध्यङ्गमत्र ] । दिष्ट्या = भागधेयेन । 'दैवं दिष्टं भागधेय'मित्यमरः । वर्द्धते=शोभते । [ बधाई है । प्रथनं नाम सन्ध्यङ्गमेतत्, मातलिप्रवेशात् ] ।

सम्पादितं स्वादु फलं यस्यासौ—सम्पादितस्वादुफलः = सञ्जातमधुरफलः । मनोरथः=अभिलाषः । आखण्डलः=इन्द्रः । 'आखण्डलः सहस्राक्षः' इत्यमरः । ईश्वराणां = प्रभूणां । परोक्षम् = अविदितं । किं ? । न किमपीत्याशयः । दर्शनं वितरति = ददाति । अवलम्ब्यतां = गृह्यतां । त्वां पुरस्कृत्य = त्वामग्रे कृत्वा ।

---

[ मातलि—इन्द्र के सारथि का प्रवेश ] ।

मातलि—बड़े हर्ष की बात है, कि–आप अपनी धर्मपत्नी को पाकर और अपने पुत्र के मुख को देखकर हर्षान्वित हो रहे हैं । आपको बधाई है ।

राजा—आज मेरे मनोरथ रूपी वृक्ष के यह मीठा फल लगा है । हे मातले ! भगवान् इन्द्र को तो यह बात मालूम नहीं हुई होगी ? ।

मातलि—( मुसकराकर ) ईश्वरों से क्या बात छिपी है ? । अर्थात्–उनको तो यह बात पहिले ही मालूम हो चुकी है । अच्छा, अब आइए ! भगवान् मारीच ( कश्यप जी ) आपको अपनें दर्शन के अवसर दे रहे हैं ।

राजा—हे प्रिये ! इस पुत्र ( बालक ) को गोद में ले लो । तुमको आगे कर ( साथ लेकर ) ही मैं भगवान् कश्यप जी के दर्शन करना चाहता हूँ ।

---

१ 'दर्शनमिच्छति' 'दर्शनं यच्छति' पा० ।

**शकुन्तला**—लज्जेमि क्खु अज्जउत्तेण सद्धं गुरुअणसमीवं गन्तुम्।
[ लज्जे खल्वार्य्यपुत्रेण सार्द्धं गुरुजनसमीपं गन्तुम् ]।

**राजा**—आचरितव्यमेतदभ्युदयकालेषु। तदेहि तावत्।

(—इति सर्वे परिक्रामन्ति )।

( ततः प्रविशत्यदित्या सहासनोपविष्टो मारीचः )।

**मारीचः**—( राजानमवलोक्य—) दाक्षायणि !

पुत्रस्य ते रणशिरस्ययमग्रयायी
'दुष्यन्त' इत्यभिहितो भुवनस्य भर्त्ता।
चापेन यस्य विनिवर्त्तितकर्म्म जातं
तत्कोटिमत्कुलिशमाभरणं मघोनः ॥२५॥

---

गुरुसमीपं=मारीचसंनिधौ। एतत्=भर्त्रा सहैव गुरुजनदर्शनम्। आचरितव्यम्=अवश्यं करणीयम्। आवश्यकम्। अभ्युदयकालेषु=मङ्गलोत्सवेषु।

दाक्षायणि=हे दक्षतनये अदिते!। पुत्रस्येति। दुष्यन्त इत्यभिहितः=दुष्यन्त इतिनाम्ना विदितः। भुवनस्य भर्त्ता=भूमण्डलपालकः। अयं—ते=तव। पुत्रस्य=इन्द्रस्य। रणशिरसि=युद्धभूमौ। अग्रयायी=अग्रणी रस्ति। यस्य चापेन=धनुषा।

---

**शकुन्तला**—मुझे तो आप के साथ गुरुजनों के पास जाते हुए मुझे लज्जा आ रही है।

**राजा**—उत्सव और आनन्द के समय तो यह कार्य ( पति के साथ गुरुजनों का दर्शन ) करना ही चाहिए। इस लिए तुम भी मेरे साथ ही चलो।

[ सब—चलते हैं ]।

[ अदिति के साथ आसन पर बैठे हुए मारीच ( कश्यप जी ) का प्रवेश ]।

**मारीच**—( राजा को देखकर अपनी स्त्री से— ) हे दक्ष पुत्रि अदिते ! देखो—

युद्ध में तेरे पुत्र इन्द्र के साथ आगे आगे चलने वाला, दुष्यन्त नाम से जगत् में प्रसिद्ध, पृथ्वी का चक्रवर्ती महाराजा तेरे सामने उपस्थित हैं, जिसके

अदितिः——सम्भावणीअप्पहावा से आकिदी।

[ सम्भावनीयप्रभावाऽस्याऽऽकृतिः ]।

मातलिः——आयुष्मन्! एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः!। तदुपसर्प।

---

तत्=जगद्विदितमाहात्म्यं। मघोनः=इन्द्रस्य। कोटिमत्=शतकोटि। ('सौ पहलदार') कुलिशं=वज्रं। विनिवर्त्तितं कर्म यस्य तत्=समाप्तस्वकार्यं सत्, आभरणमात्रमेव जातं। भूषणरूपतयैव केवलं वज्रमिन्द्रहस्ते तिष्ठति, तत्कार्यमसुरविजयरूपन्तु एतद्धनुषैव सम्प्रति क्रियते इति भावः।[ उदात्तं। रूपकम्। अनुप्रासश्च। वसन्ततिलका ] ॥२६॥

सम्भावनीयः प्रभावो यस्याः सा=प्रभावशालिनी। आकृतिः=मूर्त्तिः। रूपम्। आकृत्यैव महानुभावोऽयमित्याशयः। पुत्रे या प्रीतिस्तस्याः पिशुनं, तेन पुत्रप्रीतिपिशुनेन=पुत्रवत्स्नेहं त्वयि सूचयता। दिवौकसां=देवानां। पितरौ=अदितिकश्यपौ। उपसर्प=निकटं गच्छ। 'पिशुनौ खलसूचकौ' इत्यमरः।

---

धनुष से ही अपनें ( वज्र के ) कर्त्तव्य कार्यों की-असुरों के वध की—सिद्धि हो जाने से, पहलदार वह इन्द्र का वज्र—अब इन्द्र के लिए शोभामात्र-फलक एक आभूषण की तरह ही हो रहा है। अर्थात्—इन्द्र के वज्र का काम है—दैत्य, दानव, असुरों को मारना, उस कार्य को तो अब इस राजा का धनुष ही कर रहा है, अतः अब वज्र के लिए कोई कार्य तो करने को रहा नहीं है, अतः वह वज्र तो अब इन्द्र का एक प्रकार से आभूषण ही हो रहा है, आयुध नहीं रहा। क्योंकि—उससे अब इन्द्र को कोई काम तो लेना नहीं पड़ता है॥ २६॥

अदिति—ठीक है। इसकी आकृति से ही मालूम होता है, कि-यह कोई प्रभावशाली पुरुष है।

मातलि—हे आयुष्मन्! देखिए, पुत्र की तरह प्रीति ( पुत्र में जैसा स्नेह होता है, उसी प्रकार के स्नेह ) की सूचना देने वाले नेत्रों से ये देवताओं के माता-पिता ( अदिति और कश्यप ) आपको देख रहे हैं। अतः आप इनके निकट चलिए!।

राजा—मातले !

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं,
भर्त्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायाऽऽस्पदं
द्वन्द्वं दक्षमरीचिसम्भवमिदं तत्स्रष्टुरेकान्तरम् ?॥२७॥

---

प्राहुरिति । यत्–द्वन्द्वं = मिथुनं । द्वादशधा स्थितस्य = द्वादशात्मकस्य । तेजसः = सूर्यस्य । 'द्वादशात्मा दिवाकरः' इत्यमरः । कारणं = निदान । जनकमिति यावत् । मुनयः=ऋषयः। प्राहुः। यत्=द्वन्द्वं —भुवनत्रयस्य=त्रैलोक्यस्य । भर्त्तारं=पालकं । यज्ञभागानामीश्वरं=देवराजमिन्द्रं । सुषुवे=जनयमास । यस्मिन्–आत्मभुवः = ब्रह्मणोऽपि । परः = श्रेष्ठः । पुरुषः = विष्णुः । भवाय = लोककल्याणाय । आस्पदं = प्रतिष्ठां । चक्रे = चकार । वामनरूपेणावततारेति यावत् । तत् = तथा प्रसिद्धम् । स्रष्टुः = ब्रह्मणः । एकमन्तरं यस्य तत्तथेति । ब्रह्मणा कश्यपस्य एकेन मरीचिना व्यवधानम् । अदितेश्च ब्रह्मणा एकेन दक्षेण व्यवधानमिति कथनात्परमं पवित्रत्वं सूचितमनयोः । दक्षमरीचि–सम्भवं=दक्षमरीचिभ्यां

---

राजा—हे मातले !

जिसको—ऋषि-मुनिगण बारह महीनों के तेजस्वी बारह सूर्यों का कारण ( जनक ) कहते हैं, तथा तीनों लोक के पति और यज्ञ के भाग के ईश्वर भगवान् इन्द्र को जिसने जन्म दिया है, और संसार के कल्याण के लिए परम पुरुष ( पुरुषोत्तम विष्णु = वामन ) भी जिसके यहाँ आकर अवतीर्ण हुए हैं, वही दक्ष और मरीचि से उत्पन्न ( दक्ष से उत्पन्न अदिति मरीचि से उत्पन्न कश्यप ), तथा ब्रह्मा जी से एक ही पीढ़ी बाद उत्पन्न हुई जो युगल जोड़ी संसार में प्रसिद्ध है क्या वही यह है ? ।

अर्थात्—ब्रह्माजी के पुत्र दक्षजी की पुत्री—अदिति, और ब्रह्मा जी के पुत्र मरीचि से उत्पन्न—कश्यपजी, इन दोनों की जो जोड़ी संसार में प्रसिद्ध है, जिससे बारह रूप से स्थित जगद्विदित तेजस्वी ( बारह ) सूर्य उत्पन्न हुए हैं, त्रैलोक्य के मालिक, यज्ञ के भागों के भोग करने वाले भगवान् इन्द्र भी जिसके पुत्र हैं,

मातलिः –अथ किम।

राजा––( प्रणिपत्य– ) उभाभ्यामपि वां वासवनियोज्यो दुष्यन्तः प्रणमति।

मारीचः––वत्स ! चिरं जीवन् पृथिवीं पालय।

अदितिः––अप्पदिरधो होहि।

[ अप्रतिरथो भव ]।

( शकुन्तला – पुत्रसहिता पादयोः पतति )।

मारीचः––वत्से !

आखण्डलसमो भर्त्ता, जयन्तप्रतिमः सुतः।
आशीरन्या न ते योग्या, पौलोमीमङ्गला भव ॥ २८ ॥

---

क्रमशोऽदितिकाश्यपयोरुत्पत्तेः। द्वन्द्वमिदं = पुरतो विभाव्यते किमिति प्रश्नः। अथ किम्=ओम् (हां)। [मालोदात्तम्। अर्थावृत्तिः। शार्दूलविक्रीडितम्।] ॥२७॥

उभाभ्याम् = अदितिकश्यपाभ्यां। वासवस्य=इन्द्रस्य। नियोज्यः=प्रेष्यः। अप्रतिरथः = भुवनैकवीरः। जितशत्रुर्वा।

आखण्डलेति। इन्द्रसमः=शक्रतुल्यः। भर्ता=पतिः। दुष्यन्तः। अस्त्येव।

---

भगवान् पुरुषोत्तम वामन भी जिसके यहाँ आकर पुत्र रूप से उत्पन्न हुए हैं, वही स्त्री पुरुष की आदि जोड़ी ( अदिति और कश्यप ) यही है क्या ? ॥ २७ ॥

मातलि—हाँ, जगत् के तथा देवताओं के माता पिता ये ही हैं।

राजा—(साष्टाङ्ग प्रणाम करके ) आप दोनों को इन्द्रका आज्ञाकारी सेवक दुष्यन्त प्रणाम करता है।

मारीच—हे पुत्र ! तुम दीर्घजीवी हो, और चिरकाल तक पृथिवी का पालन करो।

अदिति—संसार में तुम बेजोड़ वीर योद्धा हो।

[ शकुन्तला––अपने पुत्र के साथ उनके पैरों में पड़ती है ]।

मारीच—हे पुत्रि !

इन्द्र के समान यह तेरा पति है, और इन्द्र के पुत्र जयन्त के ही समान

---

१ योज्या'।

**अदितिः**——जादे ! भत्तुणो बहुमदा होहि। अअञ्च दीहाऊ उहअपक्खं अलङ्करेदु। एध। उपविसध।

[ जाते ! भर्त्तुर्बहुमता भव। अयञ्च दीर्घायुरुभ[१]यपक्षमलङ्करोतु। एतम्। उपविशतम् ]।

( सर्वे प्रजापतिमभित उपविशन्ति )।

**मारीचः**——(एकैकं निर्दिशन्— )।

दिष्ट्या शकुन्तला साध्वी, सदपत्यमिदं, भवान्।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम् ॥ २९ ॥

---

जयन्तेन=इन्द्रपुत्रेण। समः-सुतः=भरतोऽपि। अस्त्येव। अतः-अन्या आशीः=आशीर्वादान्तरं। न ते योग्या=नोचिता। 'योज्ये'ति पाठान्तरम्। किन्तु-पौलोमीति। पौलोमी=इन्द्राणी। तस्या मङ्गलमिव मङ्गलं—सौभाग्यं यस्याः सा, तथा=स्थिरसौभाग्या भवेति। एषैवाऽऽशीस्ते उपयुक्तेत्याशयः। [उपमा। काव्यलिङ्गम्। अनुप्रासः ]॥ २८॥

दीर्घायुः=चिरजीवी। वत्सः=भरतः। उभयकुलनन्दनः=मातृपितृकुलानन्ददः। प्रजापतिः=कश्यपः। अभितः=उभयतः। एकैक=शकुन्तलादित्रयं। निर्दिशन्=अङ्गुल्या निर्दिशन्।

दिष्ट्येति। दिष्ट्या=सौभाग्येन। साध्वी=पतिव्रता। शकुन्तला। सत्-अपत्यमिद=शोभनः पुत्रो भरतः। भवान्=दुष्यन्तश्च। इति=इत्येतत्।

---

यह तेरा पुत्र है, अतः अब इसके सिवाय और क्या आशीर्वाद तुमको दूं, किन्तु भी इन्द्राणी की ही तरह स्थिर सौभाग्यवती हो। अर्थात्-तूं इन्द्राणी की तरह चिर सौभाग्यवती हो॥ २८॥

**अदिति**—हे पुत्रि ! तूं पति की सदा प्यारी हो। यह बच्चा भी दोनों कुलों को ( मातृकुल व पितृकुलको ) आनन्द देनेवाला हो। आओ, यहाँ बैठो।

[ सब—कश्यपजी के चारों ओर बैठ जाते हैं ]।

**मारीच**—( प्रत्येक को उद्देश्य करके ) बड़े आनन्द की बात है, कि—यह साध्वी शकुन्तला, यह होनहार पुत्र, और तुम ( दुष्यन्त )—यह तुम तीनों का

---

१ 'उभयकुलनन्दनः'।

राजा—भगवन् ! 'प्रागभिप्रेतसिद्धिः, पश्चाद्दर्शनम्'-इत्यपूर्वः खलु वोऽनुग्रहः ! । कुतः ?—

> उदेति पूर्वं कुसुमं, ततः फलं,
> घनोदयः प्राक्, तदनन्तरं पयः ।
> निमित्तनैमित्तकयोरयं क्रम-
> स्तव प्रसादस्य पुरस्तु सम्पदः ! ॥३०॥

---

श्रद्धा = भक्तिः । वित्तं = धनं । विधिः = श्रुत्युदितो मार्गः । त्रितयमेतत्—समागतं = मिलितम् । श्रद्धया, धनेन, विधिना च मिलित्वैव यज्ञादयो धर्मा अनुष्ठातुं शक्यन्ते, ततश्च परं पदमवाप्यते इति दुष्यन्तस्य सौभाग्यातिशयो दर्शितः । [ समालङ्कारः । निदर्शना च ] ॥ २९ ॥

प्राक् = दर्शनात्प्रागेव । अभिप्रेतस्य = मनोरथस्य । सिद्धिः = प्राप्तिः । पश्चात् — दर्शनम् । वः = युष्माकम् । अनुग्रहः=प्रसादः । अपूर्वः=आश्चर्यप्रदः ।

उदेतीति । कुसुमं=पुष्पं वृक्षे । पूर्वं=प्रथमम् । उदेति=उद्गच्छति । ततः= कुसुमानन्तरं । फलम्—उदेति । एवम्-घनस्य = मेघस्योदयादनन्तरं । पयः = जलमिति । निमित्तनैमित्तकयोः = कार्यकारणयोः । अयं क्रमः—लोकविदित

---

समागम-श्रद्धा, धन, और विधि (शास्त्रोक्त विधान) का ही समागम है। अर्थात्—मनुष्य धन और श्रद्धा और शास्त्रोक्त पद्धति के आश्रय से ही यज्ञ याग आदि पुण्य-कार्य करके स्वर्गआदि परमपदों को प्राप्त करता है। अतः इन तीनों का एकत्र समागम होना प्रायः दुर्लभ होता है। पर यहाँ तो उन तीनों का समन्वय हम देख रहे हैं। अतः तुमारा तीनों का यह योग जगत् के कल्याण के लिए ही है॥२९॥

राजा—हे भगवन् ! किसी के तो दर्शनों के पीछे ही फल होता है, परन्तु आपके दर्शनों की तो यह महिमा है, कि—पहिले फलसिद्धि ( शकुन्तला और पुत्र की प्राप्ति ) और पीछे आपके दर्शन !। अतः यह तो आपकी कृपा का ( अनुग्रह का ) अपूर्व ही क्रम देखने में आ रहा है। क्योंकि—

संसार में भी—वृक्षों में पहिले पुष्प आते हैं, तब फल आते हैं। मेघका उदय भी पहिले होता है, तब वर्षा होती है,-यही कार्य कारण का नियम सर्वत्र

**मातलिः**—आयुष्मन् ! एवं प्रसीदन्ति विश्वगुरवः[१] ।

**राजा**—भगवन ! इमामाज्ञाकरीं वो,—गान्धर्वेण विवाहविधिनोपयम्य,—कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन्नपराद्धोऽस्मि [२]तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य । पश्चादेनाम्

एव । तु=परन्तु । तव प्रसादस्य=कृपायाः । पुरः=पूर्वमेव । सम्पदः=फलसम्पदः । मनोरथाः सिध्यन्ति । यतो मया दर्शनात्पूर्वमेव कलत्रपुत्रादिसम्पल्लब्धेति भावः । [ 'मधुरं' नाम भूषणं । क्रियादीपकम् । अतिशयोक्तिः । अप्रस्तुतप्रशंसा । अनुप्रासः । वंशस्थम् ] ॥३०॥

एवम्=इत्थमेव । विश्वस्य गुरवः=जगद्गुरवः । ( 'विधातार'इति पाठे—स्रष्टारः । प्रजापतय इत्यर्थः ) । वः=युष्माकम् । आज्ञां करोति तच्छीला आज्ञाकरी—ताम्=आज्ञाकारिणीम् । इमां=शकुन्तलाम् । उपयम्य=तया सह विवाहं कृत्वा । कस्यचित्कालस्येति । 'विगमे जाते'इति शेषः । अल्पे काले व्यतीते इति यावत् । बन्धुभिः=तापसैः । स्मृतिशैथिल्यात्=स्मृतिभ्रंशात् । प्रत्यादिशन्=निराकुर्वन् । युष्माभिः समानं गोत्रं यस्य तस्य=कश्यपसगोत्रस्य—काश्यपस्य । तत्र भवतः=पूज्यस्य कण्वस्य । अपराद्धः=कृतापराधः । पश्चात्=

प्रसिद्ध है । अर्थात्–पहिले कारण होने से ही पीछे ही कार्य उत्पन्न हुआ करता है—यही सर्वत्र नियम है । परन्तु आपकी प्रसन्नता से तो, दर्शनों से—पहिले ही सुख सम्पत्ति होती है, और पीछे आपकी प्रसन्नता ( आपके दर्शन ) होती है । यही आश्चर्य है ! ॥ ३० ॥

**मातलि**—हे आयुष्मन् ! जगत् के गुरुओं की=बड़ों की (जगत् के पूज्य पिता माता की ) प्रसन्नता इसी प्रकार की है ।

**राजा**—हे भगवान् ! मैंने आपकी आज्ञाकारिणी इसके ( शकुन्तला के) साथ गान्धर्व विवाह की विधि से ( दोनों की इच्छा से ) विवाह करके, कुछ काल के बाद जब इसके बन्धु लोग मेरे यहां इसे पहुंचाने आए तब स्मृति की शिथिलता से ( भूल से ) इसको त्याग दिया था । इस प्रकार आप के सगोत्र ( आपकी सन्तान ) भगवान् कण्व का (शकुन्तला के पिता का) मैंने बहुत बड़ा

१ 'विधातारः—इति' पा० । २ 'अत्रभवतः'—पा० ।

अङ्गुलीयकदर्शनाऽऽरूढस्मृतिरूढपूर्वामवगतोऽहम्।
तच्चित्रमिव मे प्रतिभाति!।

यथा गजे साधु समक्षरूपे,
तस्मिन्नतिक्रामति संशयः स्यात्।
पदानि दृष्ट्वाऽथ भवेत्प्रतीति-
स्तथाविधो मे मनसो विकारः! ॥३१॥

---

निराकरणानन्तरम्। ऊढपूर्वा = पूर्वं विवाहितां। तस्य=काश्यपस्य। दुहितरं = तनयाम्। अवगतः = स्मृतवान्। चित्रम् = आश्चर्यम्।

यथेति। समक्षं रूपमाकृतिर्यस्य तस्मिन्-समक्षरूपे=प्रत्यक्षविषये। तस्मिन्= गजे। अपक्रामति = गच्छति सति 'गजो ने'ति संशयः स्यात् = 'गजो नवे'ति संशयः, 'गजो ने'ति भ्रान्तिर्वा भवेत्। तु = पुनः। पदानि = पदचिह्नानि, दृष्ट्वा च। प्रतीतिः = गज एवायमिति निश्चयो—यथा स्यात्तथाविधो मे मनसो विकारः = चित्तविभ्रमोऽयमिति चित्रमिव मे भातीति सम्बन्धः। यद्वा-समक्षरूपे 'गजो न वे'ति सन्देहः, अपक्रामति = चलति सति च चरणचिह्नं दृष्ट्वा यथा निर्णयः—इत्यन्वयः।

साक्षादुपस्थितायां त्वस्यां भ्रमः, अस्या अङ्गुलीयकेन च तन्निवृत्तिरिति प्रकृतेऽपि योजनीयम्। [ निदर्शनाऽनुप्रासः। उपजातिः ] ॥३१॥

---

अपराध किया है। फिर इस अंगूठी को देखकर मुझे स्मरण हुआ, कि-मैंने इस शकुन्तला से अवश्य विवाह किया था। यह बात मुझे बड़ी ही आश्चर्यजनक मालूम हो रही है। क्योंकि—

मेरा यह मन का विकार (भूल) तो ऐसा है, जैसे किसी को साक्षात् हाथी को सामने से जाते हुए को देखकर भी 'यह हाथी है, या नहीं' यह सन्देह हो जाए, और फिर उस हाथी के पैरों (खोज, पदचिह्नों) को देखकर यह स्मरण हो, कि—'वह हाथी ही था, मेरी ही भूल थी, जो मैंने उस हाथीको नहीं पहिचाना'। अतः यह क्या बात थी? कृपया मेरा सन्देह दूर करिए ॥ ३१ ॥

**मारीचः**—वत्स ! अलमात्माऽपराधशङ्कया । संमोहोऽपि त्वय्यु-पपन्न [1]एव । श्रूयताम्—

**राजा**—अवहितोऽस्मि ।

**मारीचः**-यदैवाऽप्सरस्तीर्थावतरणात्प्रत्याख्यानविक्लवां शकुन्तला-मादाय दाक्षायणीमुपगता मेनका, तदैव ध्यानादवगतवृत्तान्तोऽस्मि—'दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा । स चाऽङ्गुलीयकदर्शनाऽवसानः—'इति ।

---

आत्मनः—अपराधस्य शङ्कया = आशङ्कया । अलं=न प्रयोजनं । संमोहः= भ्रान्तिः, सन्देहो वा । त्वयि अनुपपन्नः = न सम्भाव्यते । तत्कथमेतदत आह-श्रूयतामिति । 'उपपन्न' इति पाठे—युक्त एव । शापादिहेतुविशेषादित्यर्थः । अप्सरस्तीर्थावतरणात् = अप्सरस्तीर्थपरिसरात् । प्रत्याख्यानेन = निराकरणेन । विक्लवां = विह्वलां । दाक्षायणीम् = अदितिम् । उपगता = प्राप्ता । मेनका = शकुन्तलामाता मेनका । अवगतवृत्तान्तः = ज्ञातवृत्तान्तः । नान्यथा = न वृथैव । सः=शापः । अङ्गुलीयकस्य दर्शनमवसानं यस्यासौ तथा=अङ्गुलीयकदर्शनावधिः ।

---

**मारीच**—हे वत्स ! इसमें ( शकुन्तला को भूलने में ) तुम अपना दोष मत समझो । तुमारा वह मोह ( अज्ञान ) तो सहेतुक था । सुनों—

**राजा**—हे भगवन् ! मैं सावधान हूं । आप कृपया कहिए ।

**मारीच**—तुमारे द्वारा परित्याग की गई इस शकुन्तला को अप्सरा तीर्थ के पास से जब इसकी माता मेनका लेकर यहाँ आई थी, उसी समय ध्यान लगा कर मैंने इस बात को जान लिया था, कि—दुर्वासा के कारण ही अपनी धर्मपत्नी इस शकुन्तला का तुमने प्रत्याख्यान किया है । और वह शाप अपनी अंगूठी के देखने तक ही है । अंगूठी के देखने के बाद वह शाप अपने आप हट जाएगा ।

---

१ 'त्वयि नाऽनुपपन्नः' पा० ।

राजा—( सोच्छ्वासमात्मगतम्- ) एष वचनीयान्मुक्तोऽस्मि ।

शकुन्तला—( स्वगतम्- ) दिट्ठिआ अआरणपच्चादेसी ण अज्ज-उत्तो। ण उण सत्तं अत्ताणं सुमरेसि। अधवा ण सुदो सुण्णहिअआए मए अअं सावो। जदो सहीहिं अच्चाअरेण सन्दिट्ठह्मि—'सो राआ जइ तुमं ण सुमरेदि तदा एदं अङ्गुलीअअं दंसेसि' त्ति।

[ दिष्ट्या अकारणप्रत्यादेशो नाऽऽर्यपुत्रः। न पुनः शप्तमात्मानं स्मरामि। अथवा न श्रुतो विरहशून्यहृदयया मयाऽयं शापः। यतः सखीभ्यामत्यादरेण सन्दिष्टास्मि,—'स राजा यदि त्वां न स्मरति, तदा इदमङ्गुलीयकं [1]दर्शयसी' ति ]।

मारीचः—( शकुन्तलां विलोक्य- ) वत्से ! विदितार्थाऽसि । तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः करणीयः। पश्य-

---

वचनीयात्=लोकापवादात् । [ निर्णयो नाम सन्ध्यङ्गम् ]। दिष्ट्या=मत्सौभाग्यात्। अकारणप्रत्यादेशी=निर्निमित्तं प्रत्याख्यानकारकः। चरितार्था=कृतार्था। सह धर्मं चरतीति—सहधर्मचारी = पतिः। मन्युः = कोपः।

---

राजा—( निश्चिन्तता का सांस लेकर, मनही मन—) अब मैं अपनी पत्नी के परित्याग से होनेवाले लोकापवाद ( लोक निन्दा ) से मुक्त हो गया हूँ

शकुन्तला—( मन ही मन ) बड़े हर्ष की बात है, कि—आर्यपुत्र ने योंही ( विना कारण ही ) मेरा परित्याग नहीं किया था, किन्तु उसमें यह शाप ही कारण था। परन्तु मुझे तो दुर्वासा जी के इस अपने शापकी बात वो स्मरण नहीं आती है। मैने पति विरहसे शून्य हृदय होने से ही यह शाप नहीं सुना होगा।

इसी लिए मेरी सखियों ने चलते समय मुझे बड़े ही आग्रह से कहा था, कि—'यदि वह राजा तेरे को न पहिचाने तो उसके दिए हुए इस अङ्गुलीयक ( अंगूठी ) को हो परिचय स्वरूप दिखा देना'।

मारीच—( शकुन्तला को देख कर ) हे पुत्रि ! अब तो तूं अपने परित्याग

---

१ 'दर्शयितव्यमिति' ।

शापादसि प्रतिहता स्मृतिलोपरूक्षे
भर्त्तर्य्यपेततमसि प्रभुता तवैव ।
छाया न मूर्च्छति मलोपहतप्रसादे,
शुद्धे तु दर्पणतले सुलभावकाशा ॥ ३२ ॥

राजा——यथाऽह भगवान् !

---

शापादसीति । स्मृते रोधाद्रूक्षे = स्मृतिभ्रंशान्निरासके । क्रूरे । भर्त्तरि = पत्यौ । प्रतिहता = न पदं कृतवती । यद्वा—शापादेव पत्या—प्रतिहता = निराकृता । पूर्वं स्मृतिलोपेन रूक्षे——इदानीम् अपेतं तमो यस्मात्तस्मिन् = हताज्ञानाऽन्धकारे प्रकृतिस्थे । भर्त्तरि = पत्यौ । तवैव——प्रभुता = स्वाम्यं, न सपत्नीनां। मलेनोपहतः प्रसादो यस्य तस्मिन् = मलविलुप्तनैर्मल्ये दर्पणतले । छाया = प्रतिबिम्बं । न मूर्च्छति = न प्रकाशते । तु = पुनः । शुद्धे = निर्मले । दर्पणतले= दर्पणोदरे तु । छाया । सुलभोऽवकाशो यस्याः सा—सुलभावकाशा = स्पष्टा भाति । [ अनुप्रासः । दृष्टान्तः । हेतुश्चालङ्काराः । वसन्ततिलका । ] ॥ ३२ ॥

---

के सच्चे कारण को जान ही गई है । अतः अब अपने पति पर इसके लिए कुछ भी क्रोध मत करना । देख—

शाप के कारण स्मृति के लुप्त हो जाने से पति के द्वारा तेरा परित्याग किया गया था । अब उसका वह स्मृति भ्रंश रूपी अज्ञान दूर होगया है। अतः अब तेरे पति पर तेरी प्रभुता पुनः अक्षुण्ण है। मैल से स्वच्छता का विनाश हो जाने से ही दर्पण में छाया नहीं पड़ती है, परन्तु यदि दर्पण पुनः स्वच्छ और निर्मल हो जाए, तो उसमें छाया पुनः पूर्ववत् पड़ने लगती है । अतः अब तेरा पति अज्ञान के विनाश से निर्मलहृदय हो गया है, उसमें तेरी प्रभुता पुनः अब वैसा ही हो जायगी ॥ ३२ ॥

राजा—आप जो कहते हैं, वह बिलकुल ठीक है । मैं इससे पूर्ववत् ही प्रेम करता हूं ।

मारीचः—वत्स ! कच्चिदभिनन्दितस्त्वयाऽस्माभिर्विधिवदनुष्ठित-जातकर्मादिक्रियः पुत्र एष शाकुन्तलेयः ? ।

राजा—भगवन् ! अत्र खलु मे वंशप्रतिष्ठा ।

( —इति बालकं हस्तेन गृह्णाति ) ।

मारीचः—भाविनं चक्रवर्त्तिनमेनमवगच्छतु भवान् । पश्यतु—

रथेनानुद्धातस्तिमितगतिना तीर्णजलधिः,
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहाऽयं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥३३॥

---

अभिनन्दितः = सम्भावितः । आहतः । विधिवत् = वेदोदितेन विधिना । अनुष्ठितं जातकर्म यस्यासौ तथा—कृतजातकर्मा । शकुन्तलाया अपत्यं—शाकुन्तलेयः = भरतः । अत्र = भरते । वंशस्य प्रतिष्ठा=वंशगौरवं । वंशावस्थानं च । चक्रवर्त्तिनं = सम्राजम् ।

रथेनेति । अनुद्धाता स्तिमिता च गतिर्यस्य तेन—अनुद्धातस्तिमित-गतिना = अस्खलितनिष्कम्पगतिना । रथेन = स्यन्दनेन । तीर्णा जलधयो येनासौ-तीर्णजलधिः = उत्तीर्णसागरः । न विद्यते प्रतिद्वन्द्वी रथो यस्यासौ—अप्रतिरथः = प्रतिद्वन्द्विविरहितः । सर्वविजयी—सन् । सप्तद्वीपां वसुधां = भुवं पुरा जयति = जेष्यति । 'यावत्पुरानिपातयोर्लट्' इति भविष्यति लट् ।

---

मारीच—हे वत्स ! हमारे द्वारा विधिवत् सब संस्कार किए गए इस शकुन्तला के पुत्र का तुमने अभिनन्दन ( प्रशंसा, श्लाघा ) किया, या नहीं ? ।

राजा—हे भगवन् ! इससे ही मेरे वंश की प्रतिष्ठा है । अर्थात्—मेरे वंश का चलाने वाला यही है । यही मेरे राज्य का उत्तराधिकारी बनेगा ।

[बालक को अपने हाथ से पकड़ता है, (या बालक का हाथ पकड़ता है) ] ।

मारीच—हे वत्स ! तुम इसको भावी चक्रवर्ती समझना ।

यह—कहीं भी नहीं रुकने वाले अपने अस्खलित वेगवान् रथ से समुद्र को पार करके, सातों द्वीपों से युक्त संपूर्ण पृथिवी के मण्डल को यह जीत लेगा, और इसके

राजा--भगवत्कृतसंस्कारेऽस्मिन्सर्वमाशंसे।

अदितिः---इमाए दुहिदिमणोरहसम्पत्तीए कण्णो दाव सुद-वित्थारो करीअदु। दुहिदिवच्छला मेणआ उण इह मं परिअरन्ती सण्णिहिदा ज्जेव।

[ अनया दुहितृमनोरथसम्पत्त्या कण्वस्तावच्छ्रुतविस्तारः क्रियताम्। दुहितृवत्सला मेनका पुनरिह मां परिचरन्ती संनिहितैव ]।

शकुन्तला—( आत्मगतं- ) मणोगदं मे वाहरिदं भअवदीए।

[ [1]मनोगतं मे व्याहृतं भगवत्या ]।

---

'जम्बुः, प्लक्षः, कुशः, क्रौञ्चः, शाल्मलिः, शाक-पुष्करौ' इति सप्तद्वीपाः। इह = आश्रमे च-सर्वेषां दमनात् = सत्त्वानां=जीवानां=पीडनात्। सर्वदमन इत्ययं तव पुत्रः प्रसिद्धः। पुनः लोकस्य भरणात्—पालनाद्भरत इत्याख्यां यास्यति। [ प्रसादलक्षणमङ्गमुपन्यस्तं। काव्यलिङ्गानुप्रासौ। शिखरिणी ]॥ ३३॥

आशास्महे = सम्भावयामः। दुहितुर्मनोरथस्य सम्पत्त्या = पुत्रीसौभाग्य-सम्पत्त्या। श्रुतो विस्तारो येनासौ तथा = ज्ञातवृत्तान्तः। मामुपचरन्ती = मत्समीपचारिणी। तया श्रुत एवैष शुभो वृत्तान्त इत्याशयः। मनोरथः =

---

सामने कोई भी शत्रु नहीं ठहर सकेगा, और यह अद्वितीय वीर होगा। और हमारे इस आश्रम में तो इसका सब जीवों का बलात्कार से दमन करने के कारण 'सर्वदमन' नाम था, आगे यह प्रजा का अच्छी तरह से भरण पोषण करने से 'भरत' नाम से विख्यात होगा। [ इसी के नाम से हमारा यह भारतवर्ष भी प्रसिद्ध हुआ है ] ॥३३॥

राजा—जिसका संस्कार आपके हाथ से हुआ है—उससे ( इस बालक से ) मैं इन सभी बातों की आशा करता हूँ।

अदिति—अपनी पुत्री के मनोरथ सिद्धि ( पति प्राप्ति ) की सूचना इसके पिता कण्व को भी देनी चाहिए। और अपनी पुत्री ( शकुन्तला ) में प्रेम रखनेवाली मेनका तो यहाँ मेरी सेवा करती हुई उपस्थित है ही।

शकुन्तला—( मन ही मन ) भगवती ने यह मेरे मन की ही बात कही है। अर्थात् मेरे पिता कण्व को इसकी सूचना अवश्य मिलनी चाहिए।

---

१ 'मनोरथो मे भणितो'।

मारीचः--तपःप्रभावात्सर्वमिदं प्रत्यक्षं तत्रभवतः कण्वस्य ।

राजा--अतः खलु ममाऽनतिक्रुद्धो मुनिः ।

मारीचः--तथाऽप्यसौ दुहितुः सपुत्रायाः पत्या परिग्रहप्रिय-मस्माभिः श्रावयितव्यः । कः कोऽत्र भो ।

( प्रविश्यशिष्यः- )

शिष्यः—भगवन् ! अयमस्मि ।

मारीचः—वत्स गालव ! मद्वचनादिदानीमेव वैहायस्या गत्या तत्रभवते कण्वाय प्रियमावेदस्य—यथा-'पुत्रवती शकुन्तला तच्छाप-निवृत्तौ स्मृतिमता दुष्यन्तेन परिगृहीते'ति ।

शिष्यः—यथाऽऽज्ञापयन्ति गुरवः । (—इति निष्क्रान्तः ) ।

मरीचः—( राजानं प्रति- ) वत्स ! त्वमपि सापत्यदारः सख्युरा-

---

अभिलाषः । भणितः=कथितः । मम हृदयेऽप्येवमस्ति यत्तातोऽवगच्छतु वृत्तान्तमिममिति भावः। [क्रुतिर्नामाङ्गम् ]। नातिक्रुद्धः=न शप्तवान् । विप्रकृतो-

---

मारीच—यद्यपि तप के प्रभाव से यह सब वृत्तान्त भगवान् कण्व को पूरा पूरा मालूम हो ही गया है ।

राजा–इसी लिए भगवान् कण्व मुनि ने मेरे ऊपर विशेष क्रोध नहीं दिखाया ।

मारीच—तथापि पुत्र सहिता अपनी पुत्री शकुन्तला का उसके पति के द्वारा पुनः स्वीकार कर लेने का शुभ वृत्तान्त हमें कण्व को सुनाना ही है। बाहर कौन है ?।

[ शिष्य का प्रवेश ]।

शिष्य—हे भगवन् ! मैं उपस्थित हूं, क्या आज्ञा है ? ।

मारीच —हे वत्स गालव ! तुम अभी आकाश मार्ग से जाकर मेरी ओर से कण्व को यह यह प्रिय वृत्तान्त सुनाओ, कि—'पुत्रवती शकुन्तला को उसके पति दुष्यन्त ने शाप निवृत्ति के बाद ग्रहण कर लिया है ।'

शिष्य—जैसी गुरुजी की आज्ञा । ( जाता है ) ।

मारीच—(राजा के प्रति) हे वत्स ! तुम भी अपने पुत्र एवं स्त्री को साथ लेकर

खण्डलस्य रथमारुह्य स्वां राजधानीं प्रतिष्ठस्व ।

राजा—( सप्रणामम्- ) यदाज्ञापयति भगवान् ।

मारीचः—सम्प्रति हि—

तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु,
त्वमपि विततयज्ञो वज्रिणं प्रीणयाऽलम् ।
युगशतपरिवर्त्तानेवमन्योन्यकृत्यै-
र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ ३४ ॥

---

ऽपि—स्वपुत्रीप्रत्याख्यानात् । आखण्डलः = इन्द्रः । प्रतिष्ठस्व = गच्छ ।

तवेति । तव प्रजासु = राष्ट्रे । बिडौजाः = इन्द्रः । प्राज्या वृष्टिर्यस्यासौ = प्रभूतवृष्टिः । भवतु । काले वर्षतु । त्वमपि —वितता यज्ञा येनासौ- विततयज्ञः= विस्तृतानेकयज्ञः । आहृतानेकयज्ञसम्भारः । वज्रिणं = महेन्द्रं । प्रीणयस्व = प्रसादय । उभयोर्लोकयोरनुग्रहेण श्लाघनीयैः = देवलोकभूलोकोपकारप्रशंसनीयैः। अन्योन्यस्य = परस्परस्य । कृत्यैः = यज्ञादिभिः, सुवर्षणादिभिश्च । युगानां शतस्य परिवर्तान्—युगशतपरिवर्तान् = अनेकयुगसहस्रपरिवर्त्तनानि । नयतं = गमयतं । सहस्रं समाः परस्परं प्रीतिर्भवतामस्त्वित्याशयः । 'जयत' मिति पाठान्तरम् । [ मालिनी ] ॥ ३४ ॥

---

अपने मित्र इन्द्र के रथ पर चढ़ कर अपनी राजधानी हस्तिनापुर को प्रस्थान करो।

राजा—( प्रणाम पूर्वक-- ) जैसी आप की आज्ञा ।

मारीच—इस समय तो तुमको यही आशीर्वाद देना अवशिष्ट है, कि—

तुमारे राज्य में सदाही इन्द्र यथेच्छ वर्षा करें । और तुम भी अनेक बड़े २ यज्ञों को करके इन्द्र को सदा प्रसन्न करते रहो । इस प्रकार तुमारा कार्य ( प्रजा में उत्तमवृष्टि ) इन्द्र करे, और तुम इन्द्र का कार्य ( यज्ञ आदि ) करते रहो। इसी तरह से तुम दोनों लोकानुग्रह ( परोपकार ) से श्लाघनीय अपने २ कार्यों को सैकड़ों युगों तक ( लाखों वर्षों तक ) करते रहो ॥ ३४ ॥

---

१ 'जयतं' ।

राजा—भगवन् ! यथाशक्ति श्रेयसे यतिष्ये ।

मारीचः—वत्स ! किन्ते भूयः प्रियमुपहरामि ? ।

राजा—अतः परमपि प्रियमस्ति ?

तथाप्येतदस्तु[1]—( भरतवाक्यम्- )

प्रवर्त्ततां प्रकृतिहिताय पार्थिवः,
सरस्वती श्रुतिमहती[2] महीयताम् ।

---

अतः परमपि प्रियमस्ति किं ?। नैवाऽस्तीत्यर्थः। (भरतवाक्यं=नटवाक्यम्) । नाटकप्रारम्भे नान्दीवदन्तेऽपि सूत्रधारेण पठ्यन्तेऽन्तिमश्लोक इत्यर्थः ।

प्रवर्त्ततामिति । पृथिव्या ईश्वरः—पार्थिवः=राजा । प्रकृतिहिताय = राष्ट्ररक्षायै, प्रवर्त्तताम् । श्रुत्या-वेदेन । महती श्रेष्ठा—सरस्वती = देववाणी । महीयतां = विजयतां । श्रुतेन = शास्त्रश्रवणेन, महतां = गरीयसां । महीयसां = महाकवीनां । प्रवर्त्ततामिति पाठान्तरेऽर्थः । परिगता शक्तिर्यस्यासौ—

---

राजा—हे भगवन् ! यथाशक्ति कल्याणकारी उत्तम कार्यों को ( यज्ञ आदि को ) करते रहने का मैं यत्न करूंगा ।

मारीच—हे वत्स अच्छा ! कहो-इससे अधिक और क्या प्रिय वस्तु तुमको दूं ? । [ इस ( शकुन्तला की प्राप्तिसे ) भी अच्छा और क्या प्रिय उपहार तुमको दूं ? ] ।

राजा-हे भगवन् ! इससे भी अधिक और भला क्या प्रिय हो सकता है ? । अर्थात्—मेरी सब से अधिक प्रियवस्तु तो आप की कृपा से मुझे प्राप्त हो ही चुकी है । इससे अधिक और मेरा प्रिय हो ही क्या सकता है । ?

[ इसी बीच में नाटक खेलने वाला भरत = नट इस प्रकार आशीर्वाद देता है- ]

तो भी,-यह भी हो,—

राजा लोग प्रजा के हित के कार्यों में लगे रहें । चारों वेदों से शोभमान भगवती सरस्वती ही जगत् में पूजा को प्राप्त हो । अर्थात् वैदिक साहित्य, वेद-

---

१ ( 'भरतवाक्यं' ) 'तथाप्येतदस्तु' । २ 'श्रुतमहती'—पा० ।

**ममापि च क्षपयतु नीललोहितः**
**पुनर्भवं परिगतशक्तिरात्मभूः ॥ ३५ ॥**

( —इति निष्क्रान्ताः सर्वे ) ।

❀ इत्यभिज्ञानशाकुन्तले सप्तमोऽङ्कः ❀

---

परिगतशक्तिः = सर्वशक्तिशाली । आत्मना भवतीत्यात्मभूः = स्वयंप्रकाशः । अनादिश्च । नीललोहितः = शिवः । 'धूर्जटिर्नीललोहितः'—इत्यमरः । ममापि = सूत्रधारस्य । कवेः कालिदासस्येति च निगूढोऽर्थः । पुनर्भवं = पुनर्जन्म । क्षपयतु = नाशयतु । [ प्रशस्तिर्नाम सन्ध्यङ्गम्, 'देवद्विजनृपादीनां प्रशस्तिः स्यात्प्रशंसन' मिति भरतोक्तेः । क्रियादीपकम् । अनुप्रासः । क्रियासमुच्चयः । रुचिरा वृत्तम् ] ॥ ३५ ॥

इति कैलासवासि-पण्डितप्रकाण्ड-श्रीस्नेहिरामशास्त्रिणां पौत्रेण,
कै० श्रीशिवनारायणशास्त्रिणां पुत्रेण, राजलक्ष्मीगर्भसम्भवेन
'न्यायाचार्य'—'व्याकरणाचार्य'—'दर्शनाचार्य'—
श्रीगुरुप्रसादशास्त्रिणाऽऽकलिताऽभिज्ञान-
शाकुन्तलाऽभिनवराजलक्ष्मीः ।

---

मार्ग, तथा वैदिक धर्म की (सनातनधर्म की) सर्वत्र विजय हो । और शक्ति सहित स्वयंभू भगवान् शङ्कर मेरे पुनर्जन्म का नाश करें। अर्थात्—भगवान् साम्ब शिव की कृपा से मेरा जन्म—मरण रूप यह संसार बन्धन सदा के लिए छूट जाए । (यह उत्तरार्द्धगत अन्तिम उक्ति महाकवि कालिदास की स्वयं अपनी प्रार्थना है) ॥३५॥

[ सब—यथास्थान जाते हैं ]

❀ अभिज्ञान शाकुन्तल का सप्तम अङ्क समाप्त ❀

**श्रीगुरुप्रसादशास्त्री कृत—**

तथा

**आचार्य—श्रीसीतारामशास्त्री, द्वारा परिशोधित ।**

**अभिज्ञान शाकुन्तल का विस्तृत भाषा अनुवाद समाप्त ।**

---

संस्कर्त्ता—**आचार्य श्रीसीतारामशास्त्री,**
व्याकरणाचार्यः, साहित्यरत्नं, राजशास्त्री ।
प्रिन्सिपल—सेठ राधाकृष्णपोद्दार संस्कृत विद्यालय, रामगढ़ (जयपुर) ।

श्रीगणेशाय नमः ।

# अथ दाक्षिणात्यपाठानुसारि मूलमात्रम्

# अभिज्ञान-शाकुन्तलम् ।

या सृष्टिः स्रष्टुराद्या, वहति विधिहुतं या हविर्या च होत्री,
ये द्वे कालं विधत्तः, श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः 'सर्वबीजप्रकृति'रिति, यया प्राणिनः प्राणवन्तः,
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ १ ॥

( नान्द्यन्ते— ) ।

सूत्रधारः—( नेपथ्याभिमुखमवलोक्य— ) आर्ये ! यदि नेपथ्यविधानमवसितमितस्तावदागम्यताम् ।

नटी—अज्जउत्त ! इयं ह्मि । [ आयपुत्र ! इयमस्मि ] ।

सूत्रधारः—आर्ये ! अभिरूपभूयिष्ठा परिषदियम् । अद्य खलु कालिदासग्रथितवस्तुनाऽभिज्ञान-शाकुन्तलनामधेयेन नवेन नाटकेनोपस्थातव्यमस्माभिः । तत्प्रतिपात्रमाधीयतां यत्नः ।

नटी—सुविहिदप्पओअदाए अज्जस्स ण किं वि परिहाइस्सदि ।
[ सुविहितप्रयोगतयाऽऽर्यस्य न किमपि परिहास्यते ] ।

सूत्रधारः—आर्ये ! कथयामि ते भूतार्थम् ।

---

१ अभिज्ञानशाकुन्तलस्य द्विविधः पाठो दृश्यते—गौडः, दाक्षिणात्यश्च । तत्र गौडपाठस्य प्रायः परीक्षादिषु प्रचलितत्वात्तमनुसृत्य टीकाऽस्माभिर्विरचिता । परं दाक्षिणात्यपाठस्यापि सरसमधुरत्वाद्विद्वदादृतत्वाच्चमत्कारित्वाच्च रसिकजनानुरञ्जनाय परिशिष्टतया संपूर्णमभिज्ञानशाकुन्तलं मूलमात्रं दक्षिणापथप्रसिद्धं संमुद्र्यते ।

आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ २ ॥

नटी—अज्ज एवं ! णेदम् । अणन्तरकरणिज्ज अज्जो आणवेदु ।
[ आर्य ! एवमेतत् । अनन्तकरणीयमार्य आज्ञापयतु ] ।

सूत्रधारः—किमन्यदस्याः परिषदः श्रुतिप्रसादनतः । तदिममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम् । संप्रति हि—

सुभगसलिलावगाहाः पाटलसंसर्गिसुरभिवनवाताः ।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ ३ ॥

नटी—तह । ( इति गायति ) । [ तथा ] ।

ईसीसि चुम्बिआइं भमरेहिं सुउमारकेसरसिहाइं ।
ओदंसयन्ति दअमाणा पमदाओ सिरीसकुसुमाइं ॥ ४ ॥
[ ईषदीषच्चुम्बितानि भ्रमरैः सुकुमारकेसरशिखानि ।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ] ॥ ४ ॥

सूत्रधारः—आर्ये ! साधु गीतम् । अहो रागबद्धचित्तवृत्तिरालिखित इव सर्वतो रङ्गः । तदिदानीं कतमत्प्रकरणमाश्रित्यैनमाराधयामः ? ।

नटी—णं अज्जमिस्सेहिं पढमं एव्व आणत्तं—'अहिण्णाणसाउन्दलं णाम अपुव्वं णाडअं पओए अधिकरीअदु'त्ति ।

[ नन्वार्यमिश्रैः प्रथममेवाज्ञप्तमभिज्ञानशाकुन्तलं नामाऽपूर्वं नाटकं प्रयोगेऽधिक्रियतामिति ] ।

सूत्रधारः—आर्ये ! सम्यगनुबोधितोऽस्मि । अस्मिन्क्षणे विस्मृतं खलु मया । कुतः ? ।

तवाऽस्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणाऽतिरंहसा ॥ ५ ॥

( इति निष्क्रान्तौ )

प्रस्तावना ।

( ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा, रथेन सूतश्च )।

सूतः—( राजानं मृगं चावलोक्य— ) आयुष्मन् !

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके ।
मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम् ॥ ६ ॥

राजा—सूत ! दूरममुना सारङ्गेण वयमाकृष्टाः ! । अयं पुनरिदानीमपि—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः,
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा,
पश्योदग्रप्लुतत्वाद्वियति बहुतरं, स्तोकमुर्व्यां प्रयाति ॥७॥

तदेष कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः संवृत्तः ! ।

सूतः—आयुष्मन् ! 'उद्घातिनी भूमि'रिति मया रश्मिसंयमनाद्रथस्य मन्दीकृतो वेगः । तेन मृग एष विप्रकृष्टान्तरः [१]संवृत्तः। संप्रति समदेशवर्तिनस्ते न दुरासदो भविष्यति ।

राजा—तेन हि मुच्यन्तामभीषवः ।

सूतः—यदाज्ञापयत्यायुष्मान् । ( रथवेगं निरूप्य— ) आयुष्मन् ! पश्य पश्य—

मुक्तेषु रश्मिषु निरायतपूर्वकाया,
निष्कम्पचामरशिखा, निभृतोर्द्ध्वकर्णाः ।
आत्मोद्धतैरपि रजोभिरलङ्घनीया,
धावन्त्यमी मृगजवाऽक्षमयेव रथ्याः ॥ ८ ॥

राजा—( सहर्षं ) [२]नूनमतीत्य हरितो, हरींश्च वर्तन्ते वाजिनः। तथा हि—

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां,
यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत् ।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किंचित्क्षणमपि न पार्श्वे रथजवात् ॥ ९ ॥

सूत ! पश्यैनं व्यापाद्यमानम् । ( इति शरसंधानं नाटयति ) ।

---



१ क्वचिन्न । २ 'सत्यम् । अतीत्य' ।

( नेपथ्ये— )

भो भो राजन् ! आश्रममृगोऽयं, न हन्तव्यो; न हन्तव्यः ।

सूतः—( आकर्ण्याऽवलोक्य च— ) आयुष्मन् ! अस्य खलु ते बाणपातवर्तिनः कृष्णसारस्याऽन्तरे तपस्विन उपस्थिताः ।

राजा—( ससंभ्रमं— ) तेन हि प्रगृह्यन्तां वाजिनः ।

सूतः—तथा । ( —इति रथं स्थापयति ) ।

( ततः प्रविशत्यात्मना तृतीयो वैखानसः ) ।

वैखानसः—( हस्तमुद्यम्य— ) राजन् ! आश्रममृगोऽयं, न हन्तव्यो, न हन्तव्यः ।

तत्साधु कृतसन्धानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं, न प्रहर्तुमनागसि ॥ १० ॥

राजा—एष प्रतिसंहृतः । ( इति यथोक्तं करोति ) ।

वैखानसः—सदृशमेतत्पुरुवंशप्रदीपस्य भवतः ।

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवङ्गुणोपेतं चक्रवर्तिनमाप्नुहि ॥ ११ ॥

इतरौ—( बाहू उद्यम्य- ) सर्वथा चक्रवर्तिनं पुत्रमाप्नुहि ।

राजा—( सप्रणामम्— ) प्रतिगृहीतम् ।

वैखानसः—राजन् ! समिदाहरणाय प्रस्थिता वयम् । एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्यातिपातस्तत्प्रविश्य प्रतिगृह्यतामातिथेयः सत्कारः । अपि च—

रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि 'कियद्भुजो मे रक्षति मौर्वीकिणाङ्क' इति ॥ १२ ॥

राजा—अपि सन्निहितोऽत्र कुलपतिः ? ।

वैखानसः—इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ।

राजा—भवतु । तामेव द्रक्ष्यामि । सा खलु विदितभक्तिं मां महर्षेः [1]कथयिष्यति ।

---

१ 'करिष्यति'

वैखानसः—साधयामस्तावत् । (–इति सशिष्यो निष्क्रान्तः ) ।

राजा—सूत ! [1]तूर्णं चोदयाऽश्वान् । पुण्याश्रमदर्शनेन तावदात्मानं पुनीमहे ।

सूतः—यदाज्ञापयत्यायुष्मान् । ( –इति भूयो रथवेगं निरूपयति ) ।

राजा—( समन्तादवलोक्य— ) सूत ! अकथितोऽपि ज्ञायत एव यथा-'ऽयमाश्रमाऽऽभोगस्तपोवनस्ये'ति ।

सूतः—कथमिव ? ।

राजा—किं न पश्यति भवान् । इह हि—

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः,
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिःष्यन्दरेखाङ्किताः ॥१३॥

सूतः—सर्वमुपपन्नम् ।

राजा—( स्तोकमन्तरं गत्वा ) तपोवननिवासिनामुपरोधो माभूत् । एतावत्येव रथं स्थापय, यावदवतरामि ।

सूतः—धृताः प्रग्रहाः । अवतरत्वायुष्मान् ।

राजाः—( अवतीर्य– ) सूत ! विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम । इदं तावद् गृह्यताम् । ( —इति सूतस्याऽऽभरणानि, धनुश्चोपनीयाऽर्पयते ) । सूत ! यावदाश्रमवासिनः प्रत्यवेक्ष्याऽहमुपावर्त्ते तावदार्द्रपृष्ठाः क्रियतां वाजिनः ।

सूतः—तथा । ( –इति निष्क्रान्तः ) ।

राजा—( परिक्रम्याऽवलोक्य च) इदमाश्रमद्वारम् । यावत्प्रविशामि ।

( प्रविश्य, निमित्तं सूचयन्—)

शान्तमिदमाश्रमपदं, स्फुरति च बाहुः, कुतः फलमिहाऽस्य ? ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ १४ ॥

( नेपथ्ये– )

इदो इदो सहीओ । [ इत इतः सख्यौ ] ।

---

१ क्वचिन्न ।

राजा—( कर्णं दत्वा ) अये ! दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते। यावदत्र गच्छामि। ( परिक्रम्याऽवलोक्य च- ) अये ! एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाऽभिवर्त्तन्ते। ( निपुणं निरूप्य-) अहो ! मधुरमासां दर्शनम्।

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ! ॥ १५ ॥

—यावदिमां छायामाश्रित्य प्रतिपालयामि। ( –इति विलोकयन् स्थितः )।

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला )।

शकुन्तला—इदो इदो सहीओ। [ इत इतः सख्यौ ]।

अनसूया—हला सउन्दले ! तुअत्तो वि [1]तादकस्सवस्स अस्समरुक्खआ पिअदरेत्ति तक्केमि, जेण णोमालिआकुसुमपेलवा तुमं वि एदाणं आलवालपूरणे णिउत्ता।

[ हला शकुन्तले ! त्वत्तोऽपि तातकाश्यपस्या[1]ऽऽश्रमवृक्षकाः प्रियतरा इति तर्कयामि, येन नवमालिकाकुसुमपेलवा त्वमप्येतेषामालवालपूरणे नियुक्ता ]।

शकुन्तला—ण केअलं तादणिओओ एव्व, अत्थि मे सोदरसणेहो एदेसु। ( –इति वृक्षसेचनं रूपयति )।

[ न केवलं तातनियोग एव, अस्ति मे सोदरस्नेह एतेषु ]।

राजा—कथमियं सा कण्वदुहिता !। असाधुदर्शी खलु तत्रभवान्काश्यपो[2] य इमामाश्रमधर्मे नियुङ्क्ते।

इदं किलाऽव्याजमनोहरं वपुस्तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्त्रधारया समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥१६॥

—भवतु। पादपाऽन्तर्हित एव विस्रब्धं तावदेनां पश्यामि।

( –इति तथा करोति )।

शकुन्तला—सहि अणसूए ! अदिपिणद्धेण वक्कलेण पिअंवदाए णिअन्तिदह्मि। सिढिलेहि दाव णं।

---

१ 'कण्णस्य' [ कण्वस्य ]। २ [illegible]

[ सखि अनसूये ! अतिपिनद्धेन वल्कलेन प्रियंवदया नियन्त्रिताऽस्मि । शिथिलय तावदेतत् ] ।

अनसूया—तह । (-इति शिथिलयति ) । [ तथा ]

प्रियंवदा—( सहासम्- ) एत्थ पओहरवित्थारइत्तअं अत्तणो जोव्वणं उवालह ।

[ अत्र पयोधरविस्तारयितृ आत्मनो यौवनमुपालभस्व ] ।

राजा—काममनुरूपमस्या वयसो वल्कलं, न पुनरलङ्कारश्रियं न पुष्यति । कुतः ?—

सरसिजमनुविद्धं शैवलेनाऽपि रम्यं,
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनाऽपि तन्वी,
किमिव हि मधुराणां मण्डनं नाऽऽकृतीनाम् ॥१७॥

शकुन्तला—( अग्रतोऽवलोक्य- ) एसो वादेरिदपल्लवङ्गुलीहिं तुवरेदि विअ मं केसररुक्खओ । जाव णं संभावेमि । ( इति परिक्रामति ) ।

[ एष वातेरितपल्लवाङ्गुलीभिस्त्वरयतीव मां केसरवृक्षकः । यावदेनं संभावयामि ] ।

प्रियंवदा—हला सउन्दले ! एत्थ एव्व दाव मुहुत्तअं चिट्ठ । जाव तुए उवगदाए लदासणाहो विअ अअं केसररुक्खओ पडिभादि ।

[ हला शकुन्तले ! अत्रैव तावन्मुहूर्तं तिष्ठ, यावत्त्वयोपगतया लतासनाथ इवाऽयं केसरवृक्षकः प्रतिभाति ] ।

शकुन्तला—अदो क्खु पिअंवदा सि तुमं ।

[ अतः खलु प्रियंवदाऽसि त्वम् ] ।

राजा—प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा । अस्याः खलु—

अधरः किसलयरागः, कोमलविटपाऽनुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥ १८ ॥

अनसूया—हला सउन्दले ! इअं सअंवरवहू बालसहआरस्स तुए किदणामहेआ 'वणजोसिणि'त्ति णोमालिआ । णं विसुमरिदा सि ? ।

[ हला शकुन्तले ! इयं स्वयंवरवधूः [1]बालसहकारस्य त्वया कृतनामधेया 'वनज्योत्स्ने'ति नवमालिका । एनां विस्मृतवत्यसि ? ]।

**शकुन्तला**—तदा अत्ताणं वि विसुमरिस्सं । ( लतामुपेत्याऽवलोक्य च-) हला ! रमणीए क्खु काले इमस्स लदापाअवमिहुणस्स वइअरो संवुत्तो । णव-कुसुमजोवणा वणजोसिणी, सिणिद्धपल्लवदाए उवभोअक्खमो सहआरो (-इति पश्यन्ती तिष्ठति ) ।

[ तदात्मानमपि विस्मरिष्यामि । हला ! रमणीये खलु काले एतस्य लता-पादपमिथुनस्य व्यतिकरः संवृत्तः । नवकुसुमयौवना वनज्योत्स्ना [2]स्निग्धपल्लव-तयोपभोगक्षमः सहकारः ] ।

**प्रियंवदा**—अणसूए ! जाणासि किं सउन्दला वणजोसिणीं अदिमेत्तं पेक्खदित्ति ? ।

[ अनसूये ! जानासि किं शकुन्तला वनज्योत्स्नामतिमात्रं [3]प्रेक्षते इति ? ]

**अनसूया**—ण क्खु विभावेमि । कहेहि ।

[ न खलु विभावयामि । कथय ] ।

**प्रियंवदा**—जह वणजोसिणी अणुरूवेण पाअवेण संगदा, अवि णाम एव्वं अहं वि अत्तणो अनुरूवं वरं लहेअं त्ति ।

[ यथा वनज्योत्स्नाऽनुरूपेण पादपेन सङ्गता, अपि नामैवमहमप्यात्मनोऽनु रूपं वरं लभेयेति ] ।

**शकुन्तला**—एसो णूणं तुह अत्तगदो मणोरहो ।

( -इति कलसमावर्जयति ) ।

[ एष नूनं तवात्मगतो मनोरथः ] ।

**राजा**—अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात् ? । अथवा कृतं सन्देहेन ।

**असंशयं क्षतपरिग्रहक्षमा,**
**यदार्यमस्यामभिलाषि मे मनः ।**
**सतां हि सन्देहपदेषु वस्तुषु**
**प्रमाणमन्तःकरणप्रवृत्तयः ॥ १९ ॥**

---

१ बालेति क्वचिन्न । २ 'बद्धफलद्वयः' [ बद्धफलतया ] । ३ 'पश्यति' ।

—तथापि तत्त्वत एनामुपलप्स्ये ।

शकुन्तला—( ससंभ्रमम्- ) अम्मो ! सलिलसेअसंभमुग्गदो णोमालिअं उज्झिअ वअणं मे महुअरो अहिवट्टइ ! । (-इति भ्रमरबाधां रूपयति ) ।

[ अम्मो ! सलिलसेकसंभ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते ] ।

राजा—( सस्पृहं- )

चलाऽपाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं,
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
[1]करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं,
वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥ २० ॥

शकुन्तला—ण एसो दुट्ठो विरमदि । अण्णदो गमिस्सं । ( पदान्तरे स्थित्वा, सदृष्टिक्षेपं- ) कहं इदो वि आअच्छदि ? । हला परित्ताअह मं इमिणा दुव्विणीदेण दुट्ठमहुअरेण अहिहूअमाणं[2] ।

[ नैष दुष्टो विरमति । अन्यतो गमिष्यामि । कथमितोऽप्यागच्छति ? । हला ! परित्रायेथां मामनेन दुर्विनीतेन दुष्टमधुकरेण [2]अभिभूयमानाम् ] ।

उभे—( सस्मितं- ) का वअं परित्तादुं ? । दुस्सन्दं [3]एव्व अक्कन्द । राअरक्खिदव्वाइं तवोवणाइं णाम ।

[ के आवां परित्रातुम् । दुष्यन्तमेवाक्रन्द । राजरक्षितव्यानि तपोवनानि नाम ] ।

राजा—अवसरोऽयमात्मानं प्रकाशयितुम् । न भेतव्यं, न भेतव्यम् । ( —इत्यर्द्धोक्ते । स्वगतम्- ) राजभावस्त्वभिज्ञातो भवेत् । भवतु । एवं तावदभिधास्ये ।

शकुन्तला—( पदान्तरे स्थित्वा । सदृष्टिक्षेपम्— ) कहं इदो वि मं अणुसरदि ? । [ कथमितोऽपि मामनुसरति ? ] ।

राजा—( सत्वरमुपसृत्य )—

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ? ॥ २१ ॥

---

१ 'करं' । २ 'परिहूअमाणं' [ परिभूयमानाम् ] । ३ क्वचिन्न ।

( सर्वा राजानं दृष्ट्वा किञ्चिदिव संभ्रान्ताः ) ।

अनसूया—अज्ज ! ण क्खु किंवि अच्चाहिदं । इअं णो पिअसही महुअरेण अहिहूअमाणा कादरीभूदा । ( —इति शकुन्तलां दर्शयति ) ।

[ आर्य ! न खलु किमप्यत्याहितम् । इयं नौ प्रियसखी मधुकरेणाभिभूयमाना कातरीभूता ] ।

राजा—( शकुन्तलाभिमुखो भूत्वा— ) अपि तपो वर्द्धते ? ।

( शकुन्तला—साध्वसादवचना तिष्ठति ) ।

अनसूया—दाणिं अदिहिविसेसलाहेण । हला सउन्दले ! गच्छ उडअं फलमिस्सं अग्घं उवहर । इदं पादोदअं भविस्सदि ।

[ इदानीमतिथिविशेषलाभेन । हला शकुन्तले ! गच्छोटजम् । फलमिश्रमर्घमुपहर । इदं पादोदकं भविष्यति ] ।

राजा—भवतीनां सूनृतयैव गिरा कृतमातिथ्यम् ।

प्रियंवदा—तेण हि इमस्सिं [1]दाव पच्छाअसीअलाए सत्तवण्णवेदिआए मुहुत्तअं उवविसिअ परिस्समविणोदं करेदु अज्जो ।

[ तेन ह्यस्यां [1]तावत् प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोत्वार्यः ] ।

राजा—नूनं यूयमप्यनेन कर्मणा परिश्रान्ताः ।

अनसूया—हला सउन्तले ! उइदं णो पज्जुवासणं अदिहीणं । एत्थ उवविसम्ह । ( —इति सर्वा उपविशन्ति ) ।

[ हला शकुन्तले ! उचितं नः पर्युपासनमतिथीनाम् । अत्रोपविशामः ] ।

शकुन्तला—( आत्मगतम्– ) किं णु क्खु इमं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणीअम्हि संवुत्ता ? ।

[ किं नु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयाऽस्मि संवृत्ता ] ।

राजा—( सर्वा विलोक्य– ) अहो समवयोरूपरमणीयं भवतीनां सौहार्दम् ।

प्रियंवदा—( जनान्तिकम्– ) अणसूए ! को णु क्खु एसो चउरगम्भीराकिदी चउरं पिअं आलवन्तो पहाववन्दो विअ लक्खीअदि ? ।

---

१ कच्चिन्न ।

[ अनसूये ! को नु खल्वेष चतुरगम्भीराकृतिश्चतुरं प्रियमालपन्प्रभाववानिव लक्ष्यते ? ] ।

अनसूया—सहि ! मम वि अत्थि कोदूहलं । पुच्छिस्सं दाव णं । ( प्रकाशम्- ) अज्जस्स महुरालाबजणिदो वीसम्भो मं मन्तावेदि—'कदमो अज्जेण राएसिणो वंसो अलङ्करीअदि ? । कदमो वा विरहपज्जुस्सुअजणो किदो देसो ? । किंणिमित्तं वा सुउमारदरो बि तवोवणगमणपरिस्समस्स अत्ता पदं उवणीदो' ? ।

[ सखि ! ममाप्यस्ति कौतूहलम् । पृच्छामि तावदेनम् । आर्यस्य मधुरालापजनितो विश्रम्भो मां मन्त्रयते—'कतम आर्येण राजर्षेर्वंशोऽलङ्क्रियते ? । कतमो वा विरहपर्युत्सुकजनः कृतो देशः ? । किंनिमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्रमस्यात्मा पदमुपनीतः' ? ] ।

शकुन्तला—( आत्मगतम्- ) हिअअ ! मा उत्तम्म । एषा तुए चिन्तिदाइं अणसूआ मन्तेदि ।

[ हृदय ! मा उत्ताम्य । एषा त्वया चिन्तितान्यनसूया मन्त्रयते ] ।

राजा—( आत्मगतम्- ) कथमिदानीमात्मानं निवेदयामि ? । कथं वाऽऽत्मापहारं करोमि ? । भवतु । एवं तावदेनां वक्ष्ये । ( प्रकाशम्- ) भवति ! यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहमाश्रमिणामविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः ।

अनसूया—सणाहा दाणिं धम्मआरिणो ।

[ सनाथा इदानीं धर्मचारिणः ] ।

( शकुन्तला—शृङ्गारलज्जां रूपयति ) ।

सख्यौ—( उभयोराकारं विदित्वा, जनान्तिकम्— ) हला सउन्तले ! जइ एत्थ अज्ज तादो संणिहिदो भवे ! ।

[ हला शकुन्तले ! यद्यत्राऽद्य तातः संनिहितो [1]भवेत् ! ] ।

शकुन्तला—तदो किं भवे ? । [ ततः किं [1]भवेत् ! ] ।

सख्यौ—इमं जीविदसव्वस्सेण वि अदिहिविसेसं किदत्थं करिस्सदि ।

[ इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं [2]करिष्यति ] ।

---

१ 'अभविष्यत्' पा० । २ 'अकरिष्यत्' पा० ।

शकुन्तला—तुह्मे अवेध । किं वि हिअए करिअ मन्तेध । ण वो वअणं सुणिस्सं ।

[युवामपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । न युवयोर्वचनं श्रोष्यामि]।

राजा—वयमपि तावद्भवत्योः सखीगतं [1]किञ्चित् पृच्छामः ।

सख्यौ—अज्ज ! अनुग्गहो विअ इअं अब्भत्थणा ।

[ आर्य ! अनुग्रह इवेयमभ्यर्थना ]।

राजा—'भगवान्काश्यपः[2] शाश्वते ब्रह्मणि स्थित' इति प्रकाशः । इयं च वः सखी तदात्मजेति—कथमेतत् ? ।

अनसूया—सुणादु अज्जो । अत्थि को वि कोसिओत्ति गोत्तणामहेओ महाप्पहावो राएसी ।

[श्रृणोत्वार्यः अस्ति कोऽपि 'कौशिक' इति गोत्रनामधेयो महाप्रभावो राजर्षिः]।

राजा—अस्ति । श्रूयते ।

अनसूया—तं णो पिअसहीए पहवं अवगच्छ । उज्झिआए सरीरसवंड्ढणादिहिं तादकस्सवो[3] से पिदा ।

[ तमावयोः प्रियसख्याः प्रभवमवगच्छ । उज्झितायाः शरीरसंवर्धनादिभिस्तातकाश्यपोऽस्याः[3] पिता ]।

राजा—'उज्झित'शब्देन जनितं मे कौतूहलम् । आ मूलाच्छ्रोतुमिच्छामि ।

अनसूया—सुणादु अज्जो । गोदमीतीरे पुरा किल तस्स राएसिणो उग्गे तवसि वट्टमाणस्स किंवि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा पेसिदा णिअमविग्घकालिणी ।

[ श्रृणोत्वार्यः । गौतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नामाऽप्सराः प्रेषिता नियमविघ्नकारिणी ]।

राजा—अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् ।

अनसूया—तदो वसन्तोदारसमए से उम्मादइत्तअं रूवं पेक्खिअ (—इत्यर्द्धोक्ते लज्जया विरमति)।

---

१ क्वचिन्न । २ 'कण्वः' । ३ 'कण्णो' [ कण्वो ]।

[ ततो वसन्तोदारसमये तस्या उन्मादयितृ रूपं प्रेक्ष्य ?—]

राजा—परस्ताज्ज्ञायत एव । सर्वथाऽप्सरःसंभवैषा ।

अनसूया—अह इं । [ अथ किम् ] ।

राजा—उपपद्यते ।

मानुषीषु कथं वा स्यादस्य रूपस्य संभवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ २२ ॥

( शकुन्तला—अधोमुखी तिष्ठति ) ।

राजा—( आत्मगतम्- ) लब्धावकाशो मे मनोरथः । किंतु सख्याः परिहासोदाहृतां वरप्रार्थनां श्रुत्वा धृतद्वैधीभावकातरं मे मनः ।

प्रियंवदा—( सस्मितं शकुन्तलां विलोक्य, नायकाभिमुखी भूत्वा- ) पुणो वि वत्तुकामो विअ अज्जो ? । [ पुनरपि वक्तुकाम इवार्यः ? ] ।

( शकुन्तला—सखीमङ्गुल्या तर्जयति ) ।

राजा—सम्यगुपलक्षितं भवत्या । अस्ति नः सच्चरितश्रवणलोभादन्यदपि प्रष्टव्यम् ।

प्रियंवदा—अलं विआरिअ । अणिअन्तणाणुओओ तवस्सिअणो णाम ।
[ अलं विचार्य । अनियन्त्रणाऽनुयोगस्तपस्विजनो नाम ] ।

राजा—इति सखीं ते ज्ञातुमिच्छामि—

वैखानसं किमनया व्रतमा प्रदाना-
व्यापाररोधि मदनस्य निषेवितव्यम् ।
अत्यन्तमेव मदिरेक्षणवल्लभाभि-
राहो ! निवत्स्यति समं हरिणाङ्गनाभिः ? ॥ २३ ॥

प्रियंवदा—अज्ज ! धम्मचरणे वि परवसो अअं जणो । गुरुणो उण से अणुरूववरप्पदाणे सङ्कप्पो ।

[ आर्य धर्मचरणेऽपि परवशोऽयं जनः । गुरोः पुनरस्या अनुरूपवरप्रदाने सङ्कल्पः ] ।

राजा—( आत्मगतम्- ) न दुरवापेयं खलु प्रार्थना ।

भव हृदय ! साभिलाषं, संप्रति सन्देहनिर्णयो जातः ।
आशङ्कसे यदग्निं, तदिदं स्पर्शक्षमं रत्नम् ॥ २४ ॥

शकुन्तला—( सरोषमिव- ) अणसूए ! गमिस्सं अहं ।
[ अनसूये ! गमिष्याम्यहम् ] ।

अनसूया—किंणिमित्तं ? । ( किंनिमित्तम् ? ] ।

शकुन्तला—इमं असंबद्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए णिवेदइस्स । [इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि ] ।

अनसूया —सहि ! ण जुत्तं अकिदसक्कारं अदिहिविसेसं विसज्जिअ सच्छन्ददो गमणं ।
[ सखि ! न युक्तमकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम् ] ।

( शकुन्तला—न किञ्चिदुक्त्वा प्रस्थितैव ) ।

राजा—आः ! कथं गच्छति ! । ( गृहीतुमिच्छन्निगृह्यात्मानम्, आत्मगतम् ) अहो ! चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः । अहं हि—

अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः ।
स्थानादनुच्चलन्नपि, गत्वेव पुनः प्रतिनिवृत्तः ॥ २५ ॥

प्रियंवदा—( शकुन्तलां निरुध्य- ) हला ! ण दे जुत्तं गन्तुं ।
[ हला ! न ते युक्तं गन्तुम् ] ।

शकुन्तला—( सभ्रूभङ्गम्-) किं णिमित्तं ? । [ किंनिमित्तम् ? ] ।

प्रियंवदा—रुक्खसेअणे दुवे धारेसि मे । एहि जाव । अत्ताणं मोचिअ तदो गमिस्ससि । (—इति बलादेनां निवर्त्तयति ) ।
[ वृक्षसेचने द्वे धारयसि मे । एहि तावत् । आत्मानं मोचयित्वा ततो गमिष्यसि ] ।

राजा—भद्रे ! वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये । तथा ह्यस्याः—

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
[1]स्रस्तं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं,
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥२६॥

१ 'बद्धं' ।

—तदहमेनामनृणां करोमि । ( इत्यङ्गुलीयं दातुमिच्छति ) ।

( उभे—नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः ) ।

राजा—अलमस्मानन्यथा संभाव्य । 'राज्ञः परिग्रहोऽय'मिति राजपुरुषं मामवगच्छथ ।

प्रियंवदा—तेण हि णारिहदि एदं अङ्गुलीअअं अङ्गुलीविओअं । अज्जस्स वअणेण अणिरिणा दाणिं एसा । ( किंचिद्विहस्य— ) हला सउन्दले ! मोइदासि अणुअम्पिणा अज्जेण । अहवा—महाराएण । गच्छ दाणिं ।

[ तेन हि नाऽर्हत्येतदङ्गुलीयकमङ्गुलीवियोगम् । आर्यस्य वचनेनाऽनृणेदानीमेषा । हला शकुन्तले ! मोचिताऽस्यनुकम्पिनाऽऽर्येण । अथवा महाराजेन । गच्छेदानीम् ] ।

शकुन्तला—( आत्मगतम्– )—'जइ अत्तणो पहविस्सं । ( प्रकाशम्– ) का तुमं विसज्जिदव्वस्स, रुन्धिदव्वस्स वा ? ।

[ यद्यात्मनः प्रभविष्यामि । का त्वं विसर्जितव्यस्य, रोद्धव्यस्य वा ? ] ।

राजा—( शकुन्तलां विलोक्य, आत्मगतम्– ) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति स्यात् ? । अथवा लब्धाऽवकाशा मे प्रार्थना । कुतः ?

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यभिमुखं मयि भाषमाणे ।
कामं न तिष्ठति मदाननसंमुखीना,
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥२७॥

( नेपथ्ये— )

भो भोस्तपस्विनः ! संनिहितास्तपोवनसत्त्वरक्षायै भवत । प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः ।

तुरगखुरहतस्तथा हि रेणुर्विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणताऽरुणप्रकाशः शलभसमूह इवाऽऽश्रमद्रुमेषु ॥२८॥

अपि च—

तीव्राऽऽघातप्रतिहततरुः, स्कन्धलग्नैकदन्तः,
पादाकृष्टव्रततिवलयाऽऽसङ्गसंजातपाशः ।

मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो,
धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ! ॥२९॥

( सर्वाः— कर्णं दत्त्वा किंचिदिव संभ्रान्ताः ) ।

राजा—( आत्मगतम्— ) अहो धिक् । [1]पौरा अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति । भवतु । प्रतिगमिष्यामस्तावत् ।

सख्यौ—अज्ज ! इमिणा अरण्णअवुत्तन्तेण पज्जाउल ह्म । अणुजाणीहि णो उडअगमणस्स ।

[ आर्य ! अनेनाऽऽरण्यकवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीहि न उटजगमनाय ] ।

राजा—( ससंभ्रमम्- ) गच्छन्तु भवत्यः । वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे ।

( सर्वे—उत्तिष्ठन्ति ) ।

सख्यौ—अज्ज ! असंभाविदअदिहिसक्कारं भूओ वि पेक्खणणिमित्तं लज्जेमो अज्जं विण्णविदुं ।

[ आर्य ! असंभाविताऽतिथिसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जावहे आर्यं विज्ञापयितुम् ] ।

राजा—मा मैवम् । दर्शनेनैव भवतीनां पुरस्कृतोऽस्मि ।

(शकुन्तला-राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता)।

राजा—मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदनुयात्रिकान्समेत्य नातिदूरे तपोवनस्य निवेशयेयम् । न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्तयितुम् । मम हि—

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ ३० ॥

(—इति निष्क्रान्ताः सर्वे ) ।

इति प्रथमोऽङ्कः ।

---

१ सैनिकाः' ।

# अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति विषण्णो विदूषकः ) ।

विदूषकः—( निःश्वस्य ) [1]भो दिट्ठं । एदस्स मिअआसीलस्स रण्णो वअस्सभावेण णिव्विण्णो ह्मि । 'अअं मओ, 'अअं वराओ' 'अअं सद्दूलो' त्ति मज्झण्णे वि गिह्मविरलपाअवच्छाआसु वणराईसु आहिण्डीअदि अडवीदो अडवी । पत्त-संकरकसाआइं कडुआइं गिरिणईजलाइं पीअन्ति । अणिअदवेलं सुल्लमंसभूइट्ठो आहारो अण्हीअदि । तुरगाणुधावणकण्डिदसंधिणो रत्तिम्मि वि णिकामं सइदव्वं णत्थि । तदो महन्ते एव्व पच्चूसे दासीएपुत्तेहिं सउणिलुद्धएहिं वणग्ग-हणकोलाहलेण पडिबोधिदो म्हि । एत्तएण दाणिं वि पीडा ण णिक्कमिदि । तदो गण्डस्स उवरि पिडओ संवुत्तो । हिओ किल अह्मेसु ओहीणेसु तत्तहोदो मआणु-सारेण अस्समपदं पविट्ठस्स तावसकण्णआ सउन्दला मम अधण्णदाए दंसिदा । संपदं णअरगमणस्स मणं कहं वि ण करेदि । अज्ज वि से तं एव्व चिन्तअन्तस्स अक्खीसु प्रभादं आसि । का गदी ? । जाव णं किदाचारपरिक्कमं पेक्खामि । ( —इति परिक्रम्यावलोक्य च— ) एसो बाणासणहत्थाहिं जवणीहिं वणपुप्फमालाधारिणीहिं पडिवुदो इदो एव्व आअच्छदि पिअवअस्सो । होदु । अङ्गभङ्गविअलो विअ भविअ चिट्ठिस्सं । जइ एव्वं वि णाम विस्समं लहेअं ।

( —इति दण्डकाष्ठमवलम्ब्य स्थितः ) ।

[ भो दृष्टम् । एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि । 'अयं मृगोऽयं वराहोऽयं शार्दूल' इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वन-राजीष्वाहिण्ड्यतेऽटवीतोऽटवी । पत्रसङ्करकषायाणि कटूनि गिरिनदीजलानि पीयन्ते । अनियतवेलं शूल्यमांसभूयिष्ठ आहारो भुज्यते । तुरगानुधावनकण्डित-सन्धेः रात्रावपि निकामं शयितव्यं नास्ति । ततो महत्येव प्रत्यूषे दास्याः पुत्रैः शकुनिलुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितोऽस्मि । इयतेदानीमपि पीडा न निष्क्रामति । ततो गण्डस्योपरि पिटकः संवृत्तः,—ह्यः किलाऽस्मास्ववहीनेषु तत्र-भवतो मृगानुसारेणाऽऽश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला ममाऽधन्यतया

दर्शिता[1]। साम्प्रतं नगरगमनस्य मनः कथमपि न करोति। अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत्। का गतिः?। यावत्तं कृताचारपरिक्रमं पश्यामि। एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृत इत एवाऽऽगच्छति प्रियवयस्यः। भवतु। अङ्गभङ्गविकल इव भूत्वा स्थास्यामि। यद्येवमपि नाम विश्रमं लभेय ]।

( ततः प्रविशति यथानिर्दिष्टपरिवारो राजा )।

राजा—

कामं प्रिया न सुलभा, मनस्तु तद्भावदर्शनाऽऽयासि[2]।
अकृतार्थेऽपि मनसिजे, रतिमुभयप्रार्थना कुरुते ॥ १ ॥

( स्मितं कृत्वा— ) एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते। [3]तथाहि—

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेषयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।
'मा गा' इत्युपरुद्धया यदपि सा साऽसूयमुक्ता सखी,
सर्वं तत्किल तत्परायणमहो! कामी स्वतां पश्यति ॥२॥

विदूषकः—(तथास्थित एव—) भो वअस्स! ण मे हत्थपाआ पसरन्ति। वाआमेत्तएण [4]जीआवइस्सं।

[ वयस्य! न मे हस्तपादं प्रसरति। वाङ्मात्रेण [4]जापयिष्यामि ]।

राजा—कुतोऽयं गात्रोपघातः?।

विदूषकः—कुदो किल सअं अच्छी आउलीकरिअ अस्सुकारणं पुच्छेसि?।

[ कुतः किल स्वयमक्ष्याकुलीकृत्याऽश्रुकारणं पृच्छसि? ]।

राजा—न खल्ववगच्छामि।

विदूषकः—भो वअस्स! जं वेदसो खुज्जलीलं विडम्बेदि, तं किं अत्तणो पहावेण, [5]णं णईवेअस्स?

[ भो वयस्य! यद्वेतसः कुब्जलीलां विडम्बयति, तत्किमात्मनः प्रभावेण?, [5]ननु नदीवेगस्य? ]।

---

१ 'दृष्टा'। २ 'दर्शनाश्वासि'। ३ क्वचिन्न। ४ 'जईकरियसि' [जयीक्रियसे]। ५ 'उद'। [ उत ]।

राजा—नदीवेगस्तत्र कारणम् ।

विदूषकः—मम वि भवं । [ ममापि भवान् ] ।

राजा—कथमिव ? :

विदूषकः—एव्वं राअकज्जाणि उज्झिअ तारिसे आउलप्पदेसे वणचरवुत्तिणा तुए होदव्वं । जं सच्चं पच्चहं सावदसमुच्छारणेहिं संखोहिअसंधिबन्धाणं मम गत्ताणं अणीसो म्हि संवुत्तो । ता पसादइस्सं विसज्जिदुं मं एक्काहं वि दाव विस्समिदुं ।

[ एवं राजकार्याण्युज्झित्वा तादृशे आकुलप्रदेशे वनचरवृत्तिना त्वया भवितव्यम् । यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसन्धिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः । तत्प्रसादयिष्यामि विसर्जितुं मामेकाहमपि तावद्विश्रमितुम् ] ।

राजा—(—स्वगतम् ) अयं चैवमाह । ममपि [1]काश्यपसुतामनुस्मृत्य मृगयाविक्लवं चेतः । कुतः ?—

न नमयितुमधिज्यमस्मि शक्तो,
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव मुग्धविलोकितोपदेशः ॥३॥

विदूषकः—( राज्ञो मुखं विलोक्य—) अत्तभवं किं वि हिअए करिअ मन्तेदि ! । अरण्णे मए रुदिअं आसी ? ।

[ अत्रभवान्किमपि हृदये कृत्वा मन्त्रयते ! । अरण्ये मया रुदितमासीत् ?] ।

राजा—( सस्मितम्— ) किमन्यत् ? अनतिक्रमणीयं मे सुहृद्वाक्यमिति स्थितोऽस्मि ।

विदूषकः—चिरं जीअ । ( —इति गन्तुमिच्छति ) । [ चिरं जीव ] ।

राजा—वयस्य ! तिष्ठ । सावशेषं मे वचः ।

विदूषकः—आणवेदु भवं । [ आज्ञापयतु भवान् ] ।

राजा—विश्रान्तेन भवता ममाप्यनायासे कर्मणि सहायेन भवितव्यम् ।

---

१ 'कण्व'

विदूषकः—किं मोदअखण्डिआए ?। तेण हि अअं सुगहीदो खणो।
[ किं मोदकखण्डिकायाम् ?। तेन ह्ययं सुगृहीतः क्षणः ]।
राजा—यत्र वक्ष्यामि। कः कोऽत्र भोः ?।

( प्रविश्य— )।

दौवारिकः—( प्रणम्य ) आणवेदु भट्टा। [ आज्ञापयतु भर्ता ]।
राजा—रैवतक ! सेनापतिस्तावदाहूयताम्।
दौवारिकः—तह। (-इति निष्क्रम्य सेनापतिना सह पुनः प्रविश्य-)।
एसो अण्णावअणुक्कण्ठो भट्टा इदो दिण्णदिट्ठी एव्व चिट्ठदि। उवसप्पदु अज्जो।
[ तथा। एष आज्ञावचनोत्कण्ठो भर्तेतो दत्तदृष्टिरेव तिष्ठति। उपसर्पत्वार्यः]।
सेनापतिः—( राजानमवलोक्य— ) दृष्टदोषाऽपि स्वामिनि मृगया केवलं गुण एव संवृत्ता !। तथा हि देवः—

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं,
रविकिरणसहिष्णु स्वेदलेशैरभिन्नम्।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं,
गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ४॥

(उपेत्य—) जयतु स्वामी। गृहीतश्वापदमरण्यम्। किमद्याऽप्यवस्थीयते[१] ?।
राजा—मन्दोत्साहः कृतोऽस्मि मृगयापवादिना माढव्येन।
सेनापतिः—( जनान्तिकम्— ) सखे ! स्थिरप्रतिबन्धो भव। अहं तावत्स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये। ( प्रकाशम्— ) प्रलपत्वेष वैधवेयः[२]। ननु प्रभुरेव निदर्शनम्,—

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः,
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिद्ध्यन्ति लक्ष्ये चले,
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ?॥ ५॥

विदूषकः—अत्तभवं पकिदिं आपण्णो। तुमं दाव अडवीदो अडवीं आहिण्डन्तो णरणासिआलोलुवस्स जिण्णरिच्छस्स कस्स वि मुहे पडिस्ससि।

१ किमन्यत्रा'। २ 'वैधेयः'।

[ अत्रभवान्प्रकृतिमापन्नः । त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य जीर्णऋक्षस्य कस्यापि मुखे पतिष्यसि ] ।

राजा—भद्र सेनापते ! आश्रमसंनिकृष्टे स्थिताः स्मः । अतस्ते वचो नाऽभिनन्दामि । अद्य तावत्—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं,
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विश्रब्धं[1] क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले,
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ ६ ॥

सेनापतिः—यत्प्रभविष्णवे रोचते ।

राजा—तेन हि निवर्त्तय पूर्वगतान्वनग्राहिणः । यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्याः । पश्य—

शमप्रधानेषु तपोवनेषु,
गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्ता-
स्तदन्यतेजोऽभिभवाद्वमन्ति ॥ ७ ॥

सेनापतिः—यदाज्ञापयति स्वामी ।

विदूषकः—धंसदु दे उच्छाहवुत्तन्तो ।

[ ध्वंसतां ते उत्साहवृत्तान्तः ] ।

( —निष्क्रान्तः सेनापतिः ) ।

राजा—( परिजनं विलोक्य— ) अपनयन्तु भवन्तो मृगयावेषम् । रैवतक ! त्वमपि स्वं नियोगमशून्यं कुरु ।

परिजनः—जं देवो आणवेदि । ( —इति निष्क्रान्तः ) ।

[ यद्देव आज्ञापयति ] ।

विदूषकः—किदं भवदा णिम्मच्छिअं । संपदं एदस्सिं पादवच्छाआए विरइदलदाविदाणदंसणीआए आसणे णिसीददु भवं, जाव अहं वि सुहासीणो होमि ।

---

१ 'विश्रब्धैः' ।

[ कृतं भवता निर्मक्षिकम् । साम्प्रतमेतस्यां पादपच्छायायां विरचितलतावितानदर्शनीयायामासने निषीदतु भवान्, यावदहमपि सुखासीनो भवामि ]।

राजा—गच्छाऽग्रतः ।

विदूषकः—एदु भवं । [ एतु भवान् ]।

( — इत्युभौ परिक्रम्योपविष्टौ )।

राजा—माढव्य ! अनवाप्तचक्षुःफलोऽसि, येन त्वया दर्शनीयं न दृष्टम् ।

विदूषकः—णं भवं अग्गदो मे वट्टदि ।

[ ननु भवानग्रतो मे वर्त्तते ]।

राजा—सर्वः खलुः कान्तमात्मानं पश्यति । तामाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

विदूषकः—( स्वगतम्—) होदु । से अवसरं ण दाइस्सं । (प्रकाशम्—) भो वअस्स ! ते तावसकण्णआ अब्भत्थणीआ दीसदि ।

[ भवतु । अस्यावसरं न दास्ये । भो वयस्य ! ते तापसकन्यकाऽभ्यर्थनीया दृश्यते ? ]।

राजा—सखे ! न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते ।

सुरयुवतिसम्भवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥ ८ ॥

विदूषकः—( विहस्य— ) जह कस्स वि पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिणीए अहिलासो भवे, तह इत्थिआरअणपरिभाविणो भवदो इअं अब्भत्थणा ! ।

[ यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना ]।

राजा—न तावदेनां पश्यसि येनैवमवादीः ।

विदूषकः—तं क्खु रमणिज्जं जं भवदो वि विह्मअं उप्पादेदि ।

[ तत्खलु रमणीयं यद्भवतोऽपि विस्मयमुत्पादयति ]।

राजा—वयस्य ! किं बहुना—

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।

स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे,
　　धातुर्विभुत्वमनुचिन्त्य, वपुश्च तस्याः ॥ ९ ॥

विदूषकः—जइ एव्वं—पच्चादेसो दाणिं रूववदीणं ।
[ यद्येवं—प्रत्यादेश इदानीं रूपवतीनाम् ] ।
राजा—इदं च मे मनसि वर्तते—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
　　रनाविद्धं रत्नं, मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं,
　　न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ! ॥ १० ॥

विदूषकः—तेण हि लहु परित्ताअदु णं भवं । मा कस्स वि तवस्सिणो इङ्गुदीतेल्लमिस्सचिक्कणसीसस्स हत्थे पडिस्सदि ।
[ तेन हि लघु परित्रायतामेनां भवान् । मा कस्यापि तपस्विन इङ्गुदीतैलमिश्रचिक्कणशीर्षस्य हस्ते पतिष्यति ] ।
राजा—परवती खलु तत्रभवती । न च संनिहितोऽत्र गुरुजनः ।
विदूषकः—अत्तभवन्तं अन्तरेण कीदिसो से दिट्ठिराओ ? ।
[ अत्रभवन्तमन्तरेण कीदृशस्तस्या दृष्टिरागः ? ] ।
राजा—निसर्गादेवाऽप्रगल्भस्तपस्विकन्याजनः । तथापि तु—

अभिमुखे मयि [1]संहृतमीक्षणं,
　　हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया
　　न विवृतो मदनो, न च संवृतः ॥ ११ ॥

विदूषकः—( विहस्य[2]— ) णं क्खु दिट्ठमेत्तस्स तुह अङ्कं समारोहदि ! ।
[ न खलु दृष्टमात्रस्य तवाऽङ्कं समारोहति[3] ] ।
राजा—मिथः प्रस्थाने पुनः शालीनतयाऽपि काममविष्कृतो भावस्तत्रभवत्या । तथा हि—

'दर्भाङ्कुरेण चरणः क्षत' इत्यकाण्डे
　　तन्वी स्थिता कतिचिदेव पदानि गत्वा ।

---

१ 'मीक्षित' । २ ... । ३ ...

असीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२ ॥

विदूषकः—तेण हि गहीदपाहेओ होहि । किदं तुए उववणं तवोवणं त्ति पेक्खामि ।

[ तेन हि गृहीतपाथेयो भव । कृतं त्वयोपवनं तपोवनमिति पश्यामि ]।

राजा—सखे ! तपस्विभिः कैश्चित्परिज्ञातोऽस्मि । चिन्तय तावत्केनाऽपदेशेन सकृदप्याश्रमे वसामः ।

विदूषकः—को अवरो अवदेसो तुह रण्णाणं । णीवारच्छट्ठभाअं अह्माणं उवहरन्तु त्ति ।

[ कोऽपरोऽपदेशस्तव राज्ञः । नीवारषष्ठभागमस्माकमुपहरन्त्विति ]।

राजा—मूर्ख ! अन्यद्भागधेयमेतेषां रक्षणे निपतति, यद्रत्नराशीनपि विहायाऽभिनन्द्यम् । पश्य—

यदुत्तिष्ठति वर्णेभ्यो नृपाणां, क्षयि तत्फलम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १३ ॥

( नेपथ्ये— )

हन्त ! सिद्धार्थौ स्वः ।

राजा—( कर्णं दत्त्वा— ) अये ! धीरप्रशान्तस्वरैस्तपस्विभिर्भवितव्यम् ।

( प्रविश्य— )

दौवारिकः—जेदु भट्टा । एदे दुवे इसिकुमारआ पडिहारभूमिं उवट्ठिदा ।
[ जयतु भर्ता । एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिमुपस्थितौ ]।

राजा—तेन ह्यविलम्बितं प्रवेशय तौ ।

दौवारिकः—एसो पवेसेमि । (—इति निष्क्रम्य, ऋषिकुमाराभ्यां सह प्रविश्य— ) इदो इदो भवन्तौ ! । [ एष प्रवेशयामि । इत इतो भवन्तौ ]।

( उभौ-राजानं विलोकयतः ) ।

प्रथमः—अहो ! दीप्तिमतोऽपि विश्वसनीयताऽस्य वपुषः । अथवोपपन्नमेतदृषिभ्यो नाऽतिभिन्ने राजनि । कुतः ?—

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये,
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।

अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः, केवलं राजपूर्वः ॥१४॥

द्वितीयः—गौतम ! अयं स बलभित्सखो दुष्यन्तः ? ।

प्रथमः—अथ किम् ।

द्वितीयः—तेन हि—

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते सुरयुवयो बद्धवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं, पौरुहूते च वज्रे ॥१५॥

उभौ—( उपगम्य—) विजयस्व राजन् ! ।

राजा—( आसनादुत्थाय—) अभिवादये भवन्तौ ।

उभौ—स्वस्ति भवते । (—इति फलान्युपहरतः ) ।

राजा—( सप्रणामं परिगृह्य—) आज्ञापयितुमिच्छामि ।

उभौ—विदितो भवानाश्रमसदामिहस्थः । ते [1]भवन्तं प्रार्थयन्ते ।

राजा—किमाज्ञापयन्ति ? ।

उभौ—'तत्रभवतः कण्वस्य महर्षेरसांनिध्याद्रक्षांसि न इष्टिविघ्नमुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम' इति ।

राजा—अनुगृहीतोऽस्मि ।

विदूषकः—( अपवार्य—) । एसा दाणिं अणुऊला ते अब्भत्थणा ।
[ एषेदानीमनुकूला तेऽभ्यथना ] ।

राजा—( स्मितं कृत्वा—) रैवतक ! मद्वचनादुच्यतां सारथिः—'सबाणासनं[2] रथमुपस्थापये'ति ।

दौवारिकः—जं देवो आणवेदि । (—इति निष्क्रान्तः ) ।
[ यद्देव आज्ञापयति ] ।

उभौ—( सहर्षम्—) ।

---

१ 'तेन भवन्तं' । २ 'सबाणकार्मुकं' ।

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि।
आपन्नाऽभयसत्त्रेषु दीक्षिताः खलु पौरवाः ॥१६॥

उभौ—( सप्रणामम्—) गच्छतं पुरो भवन्तौ। अहमप्यनुपदमागत एव।

उभौ—विजयस्व। (—इति निष्क्रान्तौ )।

राजा—माढव्य ! अप्यस्ति शकुन्तलादर्शने कुतूहलम् ?।

विदूषकः—पढमं सपरीवाहं आसि, दाणिं रक्खसवुत्तन्तेण बिन्दूविणावसेसिदो।

[प्रथमं सपरीवाहमासीत्। इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेषितः]।

राजा—मा भैषीः। ननु मत्समीपे वर्तिष्यसे।

विदूषकः—एस रक्खसादो रक्खिदो म्हि।

[ एष राक्षसाद्रक्षितोऽस्मि ]।

( प्रविश्य—)

दौवारिकः—सज्जो रधो भट्टिणो विजअप्पत्थाणं अवेक्खदि। एस उण णअरादो देवीणं आणत्तिहरओ करभओ आअदो।

[ सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते। एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः ]।

राजा—( सादरम्—)। किमम्बाभिः प्रेषितः ?।

दौवारिकः—अह इ। [ अथ किम् ]।

राजा—ननु प्रवेश्यताम्।

दौवारिकः—तह। (—इति निष्क्रम्य, करभकेण सह प्रविश्य—) एसो भट्टा। उवसप्प। [ तथा। एष भर्ता। उपसर्प ]।

करभकः—जेदु भट्टा। देवी आणवेदि। आआमिणि चउत्थदिअहे पउत्तपारणो मे उववासो भविस्सदि। तहिं दीहाउणा अवस्सं संभाविदव्वा त्ति।

[ जयतु भर्ता। देव्याज्ञापयति। आगामिनि चतुर्थदिवसे [1]प्रवृत्तपारणो मे उपवासो भविष्यति। तत्र दीर्घायुषाऽवश्यं संभावितव्येति ]।

---

१ 'पुत्रपारण'।

राजा—इतस्तपस्विकार्यम्, इतो गुरुजनाज्ञा। द्वयमप्यनतिक्रमणीयम्। किमत्र प्रतिविधेयम् ?

विदूषकः—तिसङ्कू विअ अन्तराले चिट्ठ।

[ त्रिशङ्कुरिवान्तराले तिष्ठ ]।

राजा—सत्यमाकुलीभूतोऽस्मि।

कृत्ययोर्भिन्नदेशत्वाद् द्वैधीभवति मे मनः।
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥ १७ ॥

( विचिन्त्य— ) सखे ! त्वमम्बया पुत्र इति प्रतिगृहीतः। अतो भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रमानसं मामावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति।

विदूषकः—ण क्खु मं रक्खभीरुअं गणेसि !।

[ न खलु मां रक्षोभीरुकं [1]गणयसि ! ]।

राजा—( सस्मितम्— ) कथमेतद्भवति संभाव्यते !।

विदूषकः—जह राआणुएण गन्तव्वं तह गच्छामि।

[ यथा राजाऽनुजेन गन्तव्यं तथा गच्छामि ]।

राजा—'ननु तपोवनोपरोधः परिहरणीय' इति सर्वानानुयात्रिकांस्त्वयैव सह प्रस्थापयामि।

विदूषकः—तेण हि जुवराओ ह्मि दाणिं संवुत्तो।

[ तेन हि युवराजोऽस्मीदानीं संवृत्तः ]।

राजा—( स्वगतम्— ) चपलोऽयं वटुः ! कदाचिदस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत्। भवतु। एनमेवं वक्ष्ये। ( विदूषकं हस्ते गृहीत्वा, प्रकाशम्— ) वयस्य ! ऋषिगौरवादाश्रमं गच्छामि। न खलु सत्यमेव तापसकन्यकायां ममाऽभिलाषः। पश्य—

क्व वयं, क्व परोक्षमन्मथो मृगशावैः सममेधितो जनः।
परिहासविजल्पितं सखे ! परमार्थेन न गृह्यतां वचः ॥ १८ ॥

विदूषकः[2]—अथ किम्। [ अथ किम् ]।

( इति निष्क्रान्ताः सर्वे )।

इति द्वितीयोऽङ्कः।

---

१ 'गणय'। २ धीविन।

# अथ तृतीयोऽङ्कः ।

( ततः प्रविशति कुशानादाय यजमानशिष्यः ) ।

**शिष्यः**—अहो महानुभावः पार्थिवो दुष्यन्तः ! । प्रविष्टमात्र एवाऽऽश्रमं तत्रभवति राजनि निरुपद्रवाणि नः कर्माणि प्रवृत्तानि भवन्ति ! ।

का कथा बाणसन्धाने, ज्याशब्देनैव दूरतः ।
हुङ्कारेणेव धनुषः स हि विघ्नानपोहति ॥ १ ॥

—यावदिमान्वेदिसंस्तरणार्थं दर्भानृत्विग्भ्य उपनयामि । ( परिक्रम्यावलोक्य च आकाशे— ) । प्रियंवदे ! कस्येदमुशीरानुलेपनं, मृणालवन्ति च नलिनीपत्त्राणि नीयन्ते ? । ( आकर्ण्य— ) किं ब्रवीषि—'आतपलङ्घनाद्बलवदस्वस्था शकुन्तला । तस्याः शरीरनिर्वापणाये'ति । तर्हि त्वरितं गम्यताम् । सखि ! सा खलु भगवतः कण्वस्य कुलपतेरुच्छ्वसितम् । अहमपि तावद्वैतानिकं शान्त्युदकमस्यै गौतमीहस्ते विसर्जयिष्यामि । ( —इति निष्क्रान्तः ) ।

विष्कम्भकः ।

---

( ततः प्रविशति कामयमानावस्थो राजा ) ।

**राजा**—( निःश्वस्य— )

जाने तपसो वीर्यं, "सा बाला परवती"ति मे विदितम् ।
अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् ॥ २ ॥

( मदनबाधां निरूप्य— ) । भगवन्कुसुमायुध ! त्वया, चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजनसार्थः । कुतः ?

तव कुसुमशरत्वं, शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ ३ ॥

( [1]सखेदं परिक्रम्य— ) क नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि । ( निःश्वस्य— ) किं नु खलु मे प्रियादर्शनादृते

---

१ 'क्वचिन्न' ।

शरणमन्यत् ?। यावदेनामन्विष्यामि। ( सूर्यमवलोक्य[1]— ) इमामुग्रातप-वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति। तत्रैव तावद् गच्छामि। ( परिक्रम्य, संस्पर्शं रूपयित्वा— ) अहो प्रवात-सुभगोऽयमुद्देशः !।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम्।
अङ्गैरनङ्गतप्तैरलमालिङ्गितुं पवनः ॥ ४॥

( परिक्रम्यावलोक्य च— ) अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे संनिहितया तया भवितव्यम्। तथा हि—( [2]अधो विलोक्य )--

अत्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ५॥

यावद्विटपान्तरेणाऽवलोकयामि। ( परिक्रम्य, तथा कृत्वा, सहर्षम्— ) अये ! लब्धं नेत्रनिर्वाणम्। एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टम-धिशयाना सखीभ्यामन्वास्यते। भवतु। श्रोष्याम्यासां विस्रम्भकथितानि। ( —इति विलोकयन्स्थितः )।

( ततः प्रविशति तथोक्तव्यापारा सह सखीभ्यां शकुन्तला )।

सख्यौ—( उपवीज्य, सस्नेहम्— ) हला सउन्दले ! अवि सुहेदि दे णलिणीवत्तवादो ?। [ हला शकुन्तले ! अपि सुखयति ते नलिनीपत्त्रवातः ? ]।

शकुन्तला—किं वीअअन्ति मं सहीओ ?।

[ किं वीजयतो मां सख्यौ ? ]।

( सख्यौ विषादं नाटयित्वा परस्परमवलोकयतः )।

राजा—बलवदस्वस्थशरीरा शकुन्तला दृश्यते !। ( सवितर्कम्— ) तत्किमयमातपदोषः स्यादुत यथा मे मनसि वर्तते ?। (साभिलाषं निर्वर्ण्य—)। अथवा कृतं संदेहेन।

स्तनन्यस्तोशीरं शिथिलितमृणालैकवलयं,
प्रियायाः साबाधं किमपि कमनीयं वपुरिदम्।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ६॥

---

१ क्वचिन्न। २ उद्भ्रमवलोक्य।

प्रियंवदा—( जनान्तिकम्— ) अणसूए ! तस्स राएसिणो पढमदंसणादो आरहिअ पज्जुस्सुआ विअ सउन्दला । किंणु क्खु से तण्णिमित्तो अअं आतङ्को भवे ? ।

[ अनसूये ! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला । किंनु खलु तस्यास्तन्निमित्तोऽयमातङ्को भवेत् ! ] ।

अनसूया—सहि ! मम वि ईदिसी आसङ्का हिअअस्स । होदु । पुच्छिस्सं दाव णं । (प्रकाशम्—) । सहि ! पुच्छदव्वासि किंपि । बलवं क्खु दे संदावो ।

[ सखि ! ममापीदृश्याशङ्का हृदयस्य । भवतु । प्रक्ष्यामि तावदेनाम् । सखि ! प्रष्टव्याऽसि किमपि । बलवान्खलु ते संतापः ? ] ।

शकुन्तला—( पूर्वार्द्धेन शयनादुत्थाय— ) । हला किं वत्तुकामासि ! ।

[ हला ! किं वक्तुकामाऽसि ? ] ।

अनसूया—हला सउन्दले ! अणब्भन्तरा क्खु अह्मे मदणगदस्स वुत्तन्तस्स । किंदु जादिसी इदिहासणिबन्धेसु कामअमाणाणं अवस्था सुणीअदि तादिसीं दे पेक्खामि । कहेहि किंणिमित्तं दे संदावो ? । विआरं क्खु परमत्थदो अजाणिअ अणारम्भो पडिआरस्स ।

[ हला शकुन्तले ! अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य । किंतु यादृशीतिहासनिबन्धेषु कामयमानानामवस्था श्रूयते तादृशीं तव पश्यामि । कथय किंनिमित्तं ते संतापः ? । विकारं खलु परमार्थतोऽज्ञात्वाऽनारम्भः प्रतीकारस्य] ।

राजा—अनसूयामप्यनुगतो मदीयस्तर्कः । नहि स्वाभिप्रायेण मे दर्शनम् ।

शकुन्तला—( आत्मगतम्— ) बलवं क्खु मे अहिणिवेसो । दाणिं वि सहसा एदाणं ण सक्कणोमि णिवेदिदुं ।

[बलवान् खलु मेऽभिनिवेशः। इदानीमपि सहसैतयोर्न शक्नोमि निवेदयितुम् ]।

प्रियंवदा—सहि सउन्दले ! सुट्ठु एसा भणादि । किं अत्तणो आतङ्कं उवेक्खसि ? । अणुदिअहं क्खु परिहीअसि अङ्गेहिं । केवलं लावण्णमई छाआ तुमं ण मुञ्चदि ।

[ सखि शकुन्तले ! सुष्ठ्वेषा भणति । किमात्मन आतङ्कमुपेक्षसे ? । अनुदिवसं खलु परिहीयसेऽङ्गैः । केवलं लावण्यमयी छाया त्वां न मुञ्चति ] ।

राजा—अवितथमाह प्रियंवदा । तथा हि—

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं,
मध्यः क्लान्ततरः, प्रकामविनतावंसौ, छविः पाण्डुरा ।
शोच्या च, प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते,
पत्त्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥७॥

शकुन्तला—सहि ! कस्स वा अण्णस्स कहइस्सं ? । आआसइत्तिआ दाणिं वो भविस्सं ।

[[1]सख्यौ ! कस्य वान्यस्य कथयिष्यामि । आयासयित्रीदानीं वां भविष्यामि] ।

उभे—अदो एव्व क्खु णिब्बन्धो । सिणिद्धजणसंविभत्तं हि दुक्खं सज्झवेदणं होदि ।

[अत एव खलु निर्बन्धः । स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति ] ।

राजा—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥८॥

शकुन्तला—सहि ! जदो पहुदि मम दंसणपहं आअदो सो तवोवणरक्खिदा राएसी तदो आरहिअ तग्गदेण अहिलासेण एतदवत्थम्हि संवुत्ता ।

[ सखि ! यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिस्तत आरभ्य तद्गतेनाऽभिलाषेणैतदवस्थाऽस्मि संवृत्ता ] ।

राजा—( सहर्षम्— ) श्रुत श्रोतव्यम् ।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।
दिवस इवाद्धश्यामस्तपात्यये जीवलोकस्य ॥९॥

शकुन्तला—तं जइ वो अणुमदं ता तहवट्टह जह तस्स राएसिणो अणुकम्पणिज्जा होमि । अण्णहा अवस्सं सिञ्चध मे तिलोदअं ।

[ तद्यदि वामनुमतं तदा तथा वर्तेथां—यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथाऽवश्यं सिञ्चतं मे तिलोदकम् ] ।

१ 'सखि !' ।

राजा—संशयच्छेदि वचनम् ।

प्रियंवदा—(जनान्तिकम्) अणसूए ! दूरगअमन्महा अक्खमा इअं कालहरणस्स । जस्सिं बद्धभावा एसा सो ललामभूदो पोरवाणं । ता जुत्तं से अहिलासो अहिणन्दिदुं ।

[ अनसूये ! दूरगतमन्मथाऽक्षमेयं कालहरणस्य । यस्मिन्बद्धभावैषा स ललामभूतः पौरवाणाम् । तद्युक्तमस्या अभिलाषोऽभिनन्दितुम् ] ।

अनसूया—तह जह भणसि । [ तथा यथा भणसि ] ।

प्रियंवदा—( प्रकाशम्— ) सहि ! दिट्ठिआ अणुरूवो दे अहिणिवेसो । साअरं उज्झिअ कहिं वा महाणई ओदरइ ? । को दाणिं सहआरं अन्तरेण अदिमुत्तलदं पल्लविदं सहेदि ? ।

[ सखि ! दिष्ट्याऽनुरूपस्तेऽभिनिवेशः । सागरमुज्झित्वा कुत्र वा महानद्यवतरति ? क इदानीं सहकारमन्तरेणाऽतिमुक्तलतां पल्लवितां सहते ? ] ।

राजा—किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते ? ।

अनसूया—को उण उवाओ भवे जेण अविलम्बिअं, णिहुअं अ सहीए मणोरहं संपादेह्म ।

[कः पुनरुपायो भवेद्येनाऽविलम्बितं, निभृतं च सख्या मनोरथं संपादयावः] ।

प्रियंवदा—णिहुअंति चिन्तणिज्जं भवे । सिग्घंति सुअरं ।

[ निभृतमिति चिन्तनीयं भवेत् । शीघ्रमिति सुकरम् ] ।

अनसूया—कहं विअ ? । [ कथमिव ? ] ।

प्रियंवदा—णं सो राएसि इमस्सिं सिणिद्धदिट्ठीए सूइदाहिलासो इमाइं दिअहाइं पजाअरकिसो लक्खीअदि ।

[ ननु स राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलाष एतान्दिवसान्प्रजागरकृशो लक्ष्यते ] ।

राजा—सत्यमित्थम्भूत एवाऽस्मि । तथाहि—

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं,
निशि निशि भुजन्यस्तापाङ्गप्रसारिभिरश्रुभिः ।
अनभिलुलितज्याघाताऽङ्कं मुहुर्मणिबन्धना-
त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ १० ॥

प्रियंवदा—( विचिन्त्य- ) हला ! मअणलेहो से करीअदु । इमं देवप्पसादस्सावदेसेण सुमणोगोविदं करिअ से हत्थअं पावइस्सं ।

[ हला ! मदनलेखोऽस्य क्रियताम् । इमं देवप्रसादस्याऽपदेशेन सुमनोगोपितं कृत्वा तस्य हस्तं प्रापयिष्यामि ] ।

अनसूया—रोअइ मे सुउमारो पओओ । किं वा सउन्दला भणादि ? ।

[ रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणति ? ] ।

शकुन्तला—को णिओओ विकप्पीअदि ? । [ को नियोगो विकल्प्यते ? ] ।

प्रियंवदा—तेण हि अत्तणो उवण्णासपुव्वं चिन्तेहि दाव ललिअपदबन्धणं । [ तेन ह्यात्मन उपन्यासपूर्वं चिन्तय तावल्ललितपदबन्धनम् ] ।

शकुन्तला—हला ! चिन्तेमि अहं । अवहीरभीरुअं पुणो वेवइ मे हिअअं । [ हला ! चिन्तयाम्यहम् । अवधीरणाभीरु पुनर्वेपते मे हृदयम् ] ।

राजा—( सहर्षम्- )

अय स ते तिष्ठति सङ्गमोत्सुको
विशङ्कसे भीरु ! यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता, न वा श्रियं,
श्रिया दुरापः कथमीप्सितो भवेत् ? ॥ ११ ॥

सख्यौ—अत्तगुणावमाणिणि ! को दाणिं सरीरणिव्वावत्तिअं सारदिअं जोसिणिं पडन्तेण वारेदि ? ।

[ आत्मगुणावमानिनि ! क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति ? ] ।

शकुन्तला—( सस्मितम्- ) णिओइआ दाणिं ह्मि । ( —इत्युपविष्टा चिन्तयति ) । [ नियोजितेदानीमस्मि ] ।

राजा—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः—

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १२ ॥

शकुन्तला—हला ! चिन्तिदं मए गीदवत्थु । ण क्खु सण्णिहिदाणि उण लेहणसाहणाणि ।

[हला ! चिन्तितं मया गीतवस्तु। न खलु सन्निहितानि पुनर्लेखनसाधनानि]।

प्रियंवदा--इमस्सिं सुओदरसुउमारे णलिणीपत्ते णहेहिं णिक्खित्त-वण्णं करेहि। [ एतस्मिञ्छुकोदरसुकुमारे नलिनीपत्त्रे नखैर्निक्षिप्तवर्णं कुरु ]।

शकुन्तला—( यथोक्तं रूपयित्वा— ) हला ! सुणुह दाणिं सङ्गदत्थं ण वेत्ति ?। [ हला ! शृणुतमिदानीं सङ्गतार्थं न वेति ? ]।

उभे—अवहिद म्ह । [ अवहिते स्वः ]।

( शकुन्तला—वाचयति )।

तुज्झ ण आणे हिअअं, मम उण कामो दिवावि रत्तिम्मि।
णिग्घण ! तवइ बलीअं तुइ वुत्तमणोरहाइं अङ्गाइं ॥ १३ ॥
[ तव न जाने हृदयं मम पुनः कामो दिवापि रात्रावपि[1]।
निर्घृण ! तपति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि ]॥

राजा—( सहसोपसृत्य—)
तपति तनुगात्रि ! मदनस्त्वामनिशं, मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं, न तथा हि कुमुद्वतीं दिवसः ॥ १४ ॥

सख्यौ—( सहर्षम्—) साअदं अविलम्बिणो मणोरहस्स ।
[ स्वागतमविलम्बिनो मनोरथस्य ]।

( शकुन्तला—( अभ्युत्थातुमिच्छति )।

राजा—अलमलमायासेन ।
संदष्टकुसुमशयनान्याशु क्लान्तबिसभङ्गसुरभीणि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ १५ ॥

अनसूया—इदो सिलातलेक्कदेसं अलङ्करेदु वअस्सो ।
[ इतः शिलातलैकदेशमलङ्करोतु वयस्यः ]।

( राजा—उपविशति । शकुन्तला—सलज्जा तिष्ठति )।

प्रियंवदा—दुवेणं णु वो अण्णोण्णाणुराओ पच्चक्खो। सहीसिणेहो मं पुणरुत्तवादिणिं करेदि ।

[ द्वयोर्नन्ु युवयोरन्योन्यानुरागः प्रत्यक्षः । सखीस्नेहो मां पुनरुक्तवादिनीं करोति ]।

---

१ 'रात्रिमपि'

राजा—भद्रे ! नैतत्परिहार्यम् । विवक्षितं ह्यनुक्तमनुतापं जनयति ।

प्रियंवदा—आवण्णस्स विसअणिवासिणो जणस्स अत्तिहरेण रण्णा होदव्वं त्ति एसो वो धम्मो ।

[ आपन्नस्य विषयनिवासिनो जनस्याऽऽर्तिहरेण राज्ञा भवितव्यमित्येष युष्माकं धर्मः ] ।

राजा—नाऽस्मात्परम् ।

प्रियंवदा—तेण हि इअं णो पिअसही तुमं उद्दिसिअ इमं अवत्थन्तरं भअवता मअणेण आरोविदा । ता अरुहसि अब्भुववत्तीए जीविदं से अवलम्बिदुं ।

[ तेन हीयमावयोः प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनाऽऽरोपिता । तदर्हस्यभ्युपपत्त्या जीवितं तस्या अवलम्बितुम् ] ।

राजा—भद्रे ! साधारणोऽयं प्रणयः । सर्वथाऽनुगृहीतोऽस्मि ।

शकुन्तला—( प्रियंवदामवलोक्य— ) हला ! किं अन्तेउरविरहपज्जुस्सुअस्स राएसिणो उवरोहेण ? ।

[ हला ! किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन ? ] ।

राजा—

इदमनन्यपरायणमन्यथा
हृदयसंनिहिते ! हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे !
मदनबाणहतोऽस्मि[1] हतः पुनः ॥ १६ ॥

अनसूया—वअस्स ! बहुवल्लहा राआणो सुणीअन्ति । जह णो पिअसही बन्धुअणसोअणिज्जा ण होइ तह णिवत्तेहि ।

[ वयस्य ! बहुवल्लभा राजानः श्रूयन्ते । यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वर्तय ] ।

राजा—भद्रे ! किं बहुना—

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्रवसना चोर्वी, सखी च युवयोरियम् ॥१७॥



१ 'हतोऽपि' पा० ।

उभे—णिव्वुद म्ह । [ निर्वृते स्वः ] ।

प्रियंवदा—(सदृष्टिक्षेपम्–) अणसूए ! जह एसो इदो दिण्णदिट्ठी उस्सुओ मिअपोदओ मादरं अण्णोसदि । एहि । संजोएम णं ।

(—इत्युभे प्रस्थिते ) ।

[ अनसूये ! यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति । एहि । संयोजयाव एनम् ] ।

शकुन्तला—हला ! असरण ह्मि । अण्णदरा वो आअच्छदु ।

[ हला ! अशरणाऽस्मि । अन्यतरा युवयोरागच्छतु ] ।

उभे—पुहवीए जो शरणं सो तुह समीवे वट्टइ । ( इति निष्क्रान्ते ) ।

[ पृथिव्या यः शरणं स तव समीपे वर्तते ] ।

शकुन्तला—कहं गदाओ एव्व ? । [ कथं गते एव ? ] ।

राजा—अलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्तते ।

किं शीतलैः क्लमविनोदिभिरार्द्रवातान्
संचारयामि नलिनीदलतालवृन्तैः[1] ? ।
अङ्के निधाय ! करभोरु यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ? ॥१८॥

शकुन्तला—ण माणणीएसु अत्ताणं अवराहइस्सं । (— इत्युत्थाय गन्तुमिच्छति ) । [ न माननीयेष्वात्मानमपराधयिष्ये ] ।

राजा—सुन्दरि ! अनिर्वाणो दिवसः । इयं च ते शरीरावस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम् ।
कथमातपे गमिष्यसि परिबाधापेलवैरङ्गैः ? ॥ १९ ॥

(—इति बलादेनां निवर्तयति ) ।

शकुन्तला—पोरव ! रक्ख अविणअं । मअणसंसत्तावि ण हु अत्तणो पहवामि ।

[ पौरव ! रक्षाऽविनयम् । मदनसन्तप्ताऽपि न खल्वात्मनः प्रभवामि ] ।

१ 'वृन्तम्' ।

राजा—भीरु ! अलं गुरुजनभयेन । दृष्ट्वा ते विदितधर्मा तत्रभवान् न तत्र दोषं ग्रहीष्यति कुलपतिः । अपि च—

गान्धर्वेण विवाहेन बह्वयो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥ २० ॥

शकुन्तला—मुञ्च दाव मं, भूओ वि सहीजणं अणुमाणइस्सं ।
[ मुञ्च तावन्माम् । भूयोऽपि सखीजनमनुमानयिष्ये ] ।
राजा—भवतु । मोक्ष्यामि ।

शकुन्तला—कदा ? । [ कदा ? ] ।
राजा—

अपरिक्षतकोमलस्य याव-
त्कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते
सदयं सुन्दरि ! गृह्यते रसोऽस्य ॥२१॥

(—इति मुखमस्याः समुन्नमयितुमिच्छति । शकुन्तला–परिहरति नाटयेन ) ।

( नेपथ्ये— )

चक्कवाकवहुए ! आमन्ते हि सहअरं । उवट्ठिआ रअणी ।

[ चक्रवाकवधूः ! आमन्त्रयस्व सहचरम् । उपस्थिता रजनी ] ।

शकुन्तला—( ससंभ्रमम् — ) पोरव ! असंसअं मम सरीरवुत्तन्तोवलम्भस्स अज्जा गोदमी इदो एव्व आअच्छदि । जाव विडवन्तरिदो होहि ।

[ पौरव ! असंशयं मम शरीरवृत्तान्तोपलम्भायाऽऽर्या गोतमीत एवाऽऽगच्छति । यावद्विटपान्तरितो भव ] ।

राजा—तथा । (—इत्यात्मानमावृत्य तिष्ठति ) ।

( ततः प्रविशति पात्रहस्ता गौतमी, सख्यौ च ) ।

सख्यौ—इदो इदो अज्जा गोदामी । ( इत इत आर्या गौतमी ) ।

गौतमी—( शकुन्तलामुपेत्य—-) जादे ! अवि लहुसंदावाइं दे अङ्गाइं ? । [ जाते ! अपि लघुसंतापानि तेऽङ्गानि ? ] ।

शकुन्तला—अत्थि मे विसेसो । [ अस्ति मे विशेषः ] ।

गौतमी—इमिणा दब्भोदएण णिराबाधं एव्व दे सरीरं भविस्सदि । ( शिरसि शकुन्तलामभ्युक्ष्य—-) वच्छे ! परिणदो दिअहो । एहि । उडजं एव्व

गच्छह्म। ( इति प्रस्थिताः )। [ अनेन दर्भोदकेन निराबाधमेव ते शरीरं भविष्यति। वत्से ! परिणतो दिवसः। एहि। उटजमेव गच्छामः ]।

शकुन्तला—( आत्मगतम्— ) हिअअ ! पढमं एव्व सुहोवणदे मणोरहे कादरभावं ण मुञ्चसि। साणुसअविहडिअस्स कहं दे संपदं संदावो। ( पदान्तरे स्थित्वा। प्रकाशम्-- ) लदावलअ—संदावहारअ ! आमन्तेमि तुमं भूओ वि परिभोअस्स। (—इति दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः। [ हृदय ! प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि। सानुशयविघटितस्य कथं ते साम्प्रतं संतापः ?। लतावलयसंतापहारक ! आमन्त्रये त्वां भूयोऽपि परिभोगाय]।

राजा—( पूर्वस्थानमुपेत्य, सनिःश्वासम् )। अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः। मया हि—

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं, न चुम्बितं तु ॥ २२ ॥

क्व नु खलु संप्रति गच्छामि ?। अथवा—इहैव प्रियापरिभुक्तमुक्ते लतावलये मुहूर्तं स्थास्यामि। ( सर्वतोऽवलोक्य-- )।

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्लान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि शून्यादपि ॥ २३ ॥

( आकाशे— )

राजन् !

सायन्तने सवनकर्मणि संप्रवृत्ते
वेदीं हुताशनवतीं परितः [1]प्रयस्ताः।
छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्यापयोदकपिशाः पिशिताशनानाम् ॥ २४ ॥

राजा—अयमयमागच्छामि। ( -इति निष्क्रान्तः )।

इति तृतीयोऽङ्कः।

१ 'प्रकीर्णाः'।

## अथ चतुर्थोऽङ्कः ।

( ततः प्रविशतः कुसुमावचयं नाटयन्त्यौ सख्यौ ) ।

अनसूया—पिअंवदे ! जइ वि गान्धव्वेण विहिणा णिव्वुत्तकल्लणा सउन्दला अणुरूवभत्तुगामिणा संवुत्तेति णिव्वुदं मे हिअअं, तह वि एत्तिअं चिन्तणिज्जं ।

[ प्रियंवदे ! यद्यपि गान्धर्वेण विधिना निर्वृत्तकल्याणा शकुन्तलाऽनुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम्, तथाऽप्येतावच्चिन्तनीयम् ] ।

प्रियंवदा—कहं विअ ? । [ कथमिव ? ] ।

अनसूया—अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिओ अत्तणो णअरं पविसिअ अन्तेउरसमागदो इदोगदं वुत्तन्तं सुमरदि वा ण वेत्ति ।

[ अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्याऽन्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति वा, न वेति ? ] ।

प्रियंवदा—वीसद्धा होहि । ण तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति । तादो दाणिं इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति ।

[ विस्रब्धा भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यते इति ] ।

अनसूया—जह अहं देक्खामि, तह तस्स अणुमदं भवे ।

[ यथाहं पश्यामि तथा तस्याऽनुमतं भवेत् ] ।

प्रियंवदा—कह विअ ? ।

[ कथमिव ? ] ।

अनसूया—गुणवदे कण्णआ पडिबादणिज्जे त्ति अअं दाव पढमो संकप्पो । तं जइ देव्वं एव्व संपादेदि णं अप्पआसेण किदत्थो गुरुअणो ।

[ 'गुणवते कन्यका प्रतिपादनीये'त्ययं तावत्प्रथमः संकल्पः । तं यदि दैवमेव संपादयति नन्वप्रयासेन कृतार्थो गुरुजनः ] ।

प्रियंवदा—( पुष्पभाजनं विलोक्य- ) सहि ! अवइदाइं बलिकम्मपज्जत्ताइं कुसुमाइं । [ सखि ! अवचितानि बलिकर्मपर्याप्तानि कुसुमानि ] ।

अनसूया—णं सहीए सउन्दलाए सोहग्गदेवआ अच्चणीआ ।



[ ननु सख्याः शकुन्तलायाः सौभाग्यदेवताऽर्चनीया ! ] ।

